# अथ भवभूतेरितिहासः।

दाक्षिणात्यदेशे पद्मपुरनगरे (१) नित्याग्निहोत्रिणः श्रौत-क्रियानिरताः केचित् काश्यपगोत्राः पङ्क्तिपावना (२) ब्राह्मणा निवसन्ति स्म। तत्र महाकविर्भट्टगोपालो नाम कश्चित् वाजपेय-याजीन सुगृहीतनामा बभूव। तदात्मजो नीलकण्ठनामा जातूकर्णीनामधेयायां भार्य्यायां भवभूतिमुत्पादयामास (३)। स खलु भवभूतिर्महाज्ञानिनो ज्ञाननिधिनाम्नः (४) परमहंसप्रवरस्य

---

(१) श्रूयते किल, दाक्षिणात्यबुन्देलखण्डे पाराशिन्धुनामधेययोर्नद्योः सम्मेलनस्थाने पद्मपुर (पद्मावती) नगरमद्यापि विद्यत इति।

(२) "अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः॥" मनुः।

(३) "अस्ति दक्षिणापथे पद्मपुरं नाम नगरम्। तत्र केचित् तैत्तिरीयिणः पङ्क्ति-पावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिनो ब्रह्मवादिनः प्रतिवसन्ति। तदामुष्यायणस्य ...याजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्ते- ...श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम जातूकर्णीपुत्रः।"

महावीरचरितम्।

(४) "श्रेष्ठः परमहंसानां महर्षीणामिवाङ्गिराः।
यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः॥"

महावीरचरितस्थानामेतच्छ्लोकदर्शनात् ज्ञाननिधिनामैव भवभूतेर्गुरुरिति मन्तव्यम्। केचित्तु प्रसिद्धवार्त्तिककारकुमारिलभट्टस्य शिष्यो भवभूतिरिति वदन्ति। यदि तु तत्र मतान्तरमुपपद्यते, [illegible] उपाधिरिति मन्तव्यम्। गुरुद्वयं वा।

शिष्यत्वमधिगतो वेद-वेदान्त-दर्शन-स्मृति-पुराणेतिहासादिषु परं वैचक्षण्यमापन्नः 'श्रीकण्ठ' इत्युपाधिमवाप (१)।

यदा च भवभूतेरसाधारणधीशक्ति-विद्या-ब्राह्मण्य-कवित्व-प्रभृतिसद्गुणजातजनितं यशो दिशि विदिशि च क्रमशो विस्तीर्णमासीत्, तदा नितान्तविद्योत्साही परमपरगुणग्राही कान्यकुब्जेश्वरो यशोवर्म्मदेवः स्वसभायां समादरसमानीतेन भवभूतिना सभासदः पदमलञ्चकार (२)।

तत्र च भवभूतेरसाधारणी परमचमत्कारिणी कवित्वशक्ति-

(१) अत्र महावीरचरितप्रभृतिग्रन्थव्याख्याता दाक्षिणात्यो वीरराघवः, आर्य्यासप्तशती-टीकाकृदनन्तपण्डितश्च मन्यते स्म ; यत्, अस्य कवेः 'श्रीकण्ठ' इति पितृकृतं नाम। परन्तु

"साऽम्बा पुनातु भवभूतिपवित्रमूर्त्तिः।"

"तपस्वी कां गतोऽवस्थामिति स्मेराननाविव।
गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ॥"

इत्थं श्रीकनिर्म्माणात् भवभूतिरिति नाम समभवदिति। अपरे तु श्रीकण्ठ इति नाम, भवभूतिरित्युपाधिरिति वदन्ति। तदुभयमप्यलीकमिव प्रतिभाति, "श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम" इति कविना स्वयमभिहिते 'काव्यतीर्थपदलाञ्छनो रामदासो नाम' इत्यादाविव श्रीकण्ठपदस्योपाधित्वेन प्रतीतेः सार्वजनीनत्वात्।

(२) काश्मीरराजतरङ्गिण्यामिदमितिवृत्तं दृश्यते। तत्र वृत्तान्तान्तरमपि परिलक्ष्यते यथा—वाक्पतिराजो नाम यशोवर्म्मदेवस्यापरः कश्चन सभासदासीदिति। सम्भाव्यते च तत्; येन खल्वसौ वाक्पतिराजो यशोवर्म्मदेवस्य विक्रमातिशयं गौड़विजयञ्चोपजीव्य "गौड़वहो" नामिकं प्राकृतकाव्यं विरचयामास। तत्र चात्मानं भवभूतेः शिष्यतया परिचाययन् येन प्राकृतेन भवभूतिं प्रशशंस ; तस्यायं संस्कृतानुवादः—

"भवभूति-जलधि-निर्गत-काव्यामृतरसकणा इव स्फुरन्ति।
यस्य विशेषा अद्यापि विकटेषु कथानिवेशेषु॥"

वसुधाधिपतेरासौधशिखरात् दीनकुटीरपर्य्यन्तं सहृदय-समुद्गीताविस्मयमादधाति स्म लोकानाम्।

तत्रान्तरे वीरधुरीणः काश्मीरेश्वरो ललितादित्यो नाम राजा यशोवर्म्मणा सह केनापि निमित्तेन महासमरे प्रवृत्तः। विजितश्च तस्मिन् यशोवर्म्मा। विजयमानश्च ललितादित्यः स्वसभायां भवभूतेः सकन्मात्रपदार्पणरूपेणैव पणेन सन्धिबन्धनं विधाय विरराम; न पुनरिदानीन्तन इव कोटिशो धनराशिं क्षतिमापूरयितुमङ्गीचकार।

हन्त भोः! "ते हि नो दिवसा गताः" भारतवर्षस्य। यत्र खल्वीदृक् परगुणमुग्धमानसो विजेता, तादृशश्च कविकुलरत्नम्, युगपदेव जगदुच्चासने निवेशयामास भारतवर्षम्। इदानीन्तनीं दशामनुभवन्तस्तच्च समयं चिन्तयन्तः किं नाम स्वतो विगलन्तीमश्रुधारां संवरीतुमर्हन्ति सहृदयाः?।

ललितादित्यः किल ६८३ खृष्टाब्दादारभ्य ७२८ खृष्टाब्दपर्य्यन्तं काश्मीरराज्यं परिपालयामास (१)। तेन सह सम्पादितसमरो यशोवर्म्मदेवोऽपि तस्मिन् समय एव कान्यकुब्जप्रदेशं शशासेति यथार्था खलु सम्भावना; सुतरां तदीयसभासदामन्यतमो महाकविर्भवभूतिरपि यशोवर्म्मणो राजत्वसमयात् किञ्चित् पूर्वं प्रादुर्बभूवेति समीचीनमवधारणम्।

अतः सिद्धं खृष्टीयसप्तमशताब्दीशेषभाग एव भवभूतेराविर्भावकाल इति।

---

(१) जेनाराल-क्यानिंहामनिर्द्देशानुसारादयं निर्द्देशः। किन्तु यावदतः समीचीनं प्रमाणान्तरं नोपलभ्यते, तावदिदमेव विश्वसनीयम्।

## अथ स्वरूपनायकनायिकादिनिरूपणम् ।

मालतीमाधवं नामेदं प्रकरणम् । यथा साहित्यदर्पणे—

"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ॥
सापायधर्म्मकामार्थपरो धीरप्रशान्तकः ।"

तथा चात्र वृत्तान्तावली कविकल्पितैव, नैतिहासिकी, न वा पौराणिकी ।

अत्रानुकूलो धीरप्रशान्तलक्षणो ब्राह्मणकुमारो माधवो नायकः । तदुक्तं दर्पणे—

"सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात् ।"
"अनुकूल एकनिरतः ।"

पञ्चमाङ्के माधवं प्रति "अरे ब्राह्मणडिम्भ !" इत्यघोरघण्टकृतसम्बोधनादस्य ब्राह्मणत्वमवगम्यते । एवञ्च मालत्यपि ब्राह्मणकन्येवेत्यवधेयम् ; सति सम्भवे सजातीयपरिणयस्यैवौचित्यात् । मालतीमाधवजनकयोर्भूरिवसुदेवरातयोरेकजातीयतयैव, प्रागपत्योत्पत्तेः "अवश्यमावाभ्यामपत्यसम्बन्धः कर्त्तव्य" इति प्रतिज्ञोपपत्तेः । अन्यथा भूरिवसोः क्षत्रियत्वे देवरातस्य च ब्राह्मणत्वे वस्तुवैपरीत्येन भूरिवसोः पुत्रे भाविनि देवरातस्य च कन्यायां भविष्यन्त्यां प्रतिलोमविवाहनिषेधेन तयोर्विवाहासम्भवात् प्रागपत्यसम्बन्धकरणप्रतिज्ञानुपपत्तिः । एवञ्च मदयन्तिका-मकरन्द-नन्दना अपि ब्राह्मणजातीया एवेति युक्त्या विवेचनीयम् । यत्तु दर्पणकृता "अमात्यनायकं मालतीमाधव-"

मित्यभिहितम्, तदुपदर्शिताघोरघण्टकृतसम्बोधनमनालोच्यैवेति प्रतीयते। अथवा माधवस्यामात्यपुत्रत्वादमात्यत्वमभिप्रेतम्।

मालती तु ब्राह्मणजातीया परकीया कन्यारूपा नायिका। तथा च दर्पणे—

"परकीया द्विधा प्रोक्ता परोढ़ा कन्यका तथा।"

"कन्यात्वजातोपयमा सलज्जा नवयौवना।"

पूर्वरागरूपो विप्रलम्भशृङ्गारः प्रधानरसः। अन्ये तदङ्गभूता हास्यव्यतिरिक्ता वीरादयः सर्व एव रसाः सन्तीति यथास्थानमनुसन्धेयम्। यथा दर्पणे—

"श्रवणाद्दर्शनाद्वापि मिथः संरूढ़रागयोः।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते॥"

अत्र तु मदनोद्याने साक्षादेव परस्परदर्शनम्।

प्राधान्येन माधुर्य्यगुणः। ओजःप्रसादावप्यल्पाधिकभावेन परिलक्ष्येते। यथा दर्पणे—

"चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते।"

बाहुल्येन वैदर्भी रीतिः। यथा दर्पणे—

"माधुर्य्यव्यञ्जकैर्वर्णै रचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते॥"

किन्तु श्लोकविस्तरतः सर्वा एव रीतयो लक्ष्यन्ते।

तदयं संग्रहश्लोकः—

विप्रो धीरप्रशान्तो गुणभृदनुगुणो माधवो नायकोऽस्मिन्<br>
कन्याऽसावन्यदीया परमगुणवती मालती नायिका च ।<br>
वैदर्भी नाम रीतिर्विविधरसयुतः पूर्वरागो रसोऽङ्गी<br>
माधुर्य्याख्यो गुणो वा कविकुलतिलकस्यान्त्यकाव्यं किलेदम् ॥



# मालतीमाधवम्।

—०:※:०-

## प्रथमोऽङ्कः।

:०:-

सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः॥१॥

नमो गणेशाय।

यस्यासावुदयास्तवानपि विधुर्भाले सदा भासते
वेगात् पर्व्वतभेदिनी सुरधुनी बभ्राम यन्मूर्द्धनि।
विभ्राण: कुसुमोपमं त्रिभुवनं यस्याप्यनन्तस्तनौ
विश्वेशं तमचिन्त्यवैभवगुणं शश्वन्नमामीश्वरम्॥१॥

सुगभीरभावमधुरा मनोहरा रसनात् सकृच्चिररसस्मृतिप्रदा।
भवभूतिभाषितसुधा बुधाः! सदा प्रकृतिप्रिया प्रियतमेव सेव्यताम्॥२॥

विकृता मम टीकया भवेद् यदि सा नास्ति ततो निवृत्तिमान्।
नलिनं मलिनं भवेदतो मधुपः किं न पतेत्तदङ्कके?॥३॥

अथ तत्र भवान् महाकविर्भवभूतिर्मालतीमाधवं नाम प्रकरणं विधित्सन् विधित्सिता-विघ्नपरिसमाप्तिकामो विघ्नराजादिसहिताभीष्टदेवतास्मरणपूर्विकां च विघ्नविनाशाय सूत्र-धारादिपठनीयां नान्दीमुपनिबध्नाति—

सानन्दमिति। शूलपाणेर्महादेवस्य ताण्डवे अकाण्डनृत्ये नन्दिनः प्रमथप्रधानस्य हस्तेन पाणिना आहतौ नृत्योपयोगिवाद्यनिष्पादनार्थं ताड़ितौ यौ मुरजौ मृदङ्गः तस्य रवेण मेघगर्ज्जनसदृशशब्देन आहूत आकृष्टो यः कौमारवर्हौ कार्त्तिकेयमयूरः तस्मात् यस्माशी भक्षणभयं तस्माद्धेतोः, भोगसङ्कोचभाजि नासाविवरप्रवेशाय स्वकीयस्थूलदेहस्य आपेक्षिक-सूक्ष्मताकारिणि फणिपतौ महादेवस्यैव गलदेशस्थिते सर्पराजे नासागरन्ध्रं महादेवस्यैव नासिकाविवराग्रभागं सानन्दं सहर्षं विशति प्रविशति सति। गण्डाभ्यां तदङ्गनस्थस्य गजाननस्य कपोलद्वयात् उड्डीनाभिः निरतिशयमुखकम्पनात् तत्र स्थातुमशक्ततया आकाश-मुत्पतिताभिः अलिमालाभिः भ्रमरावलीभिः मुखरिताः शब्दयुक्ताः कृताः ककुभो दिशो याभिस्ताः। तथा चीत्कारवत्यः विकटशब्दशालिन्यः वैनायक्यः गजाननसम्बन्धिन्यः वदन-विधुतयः नृत्यवाद्ययोस्ताले ताले मुखकम्पनानि वो युष्मान् सामाजिकान् चिरं पान्तु रक्षन्तु।

यदा बालवदनासक्तस्वभावो योगीश्वरो भगवान् भूतनाथः स्वकीयपरिजनवर्गमध्ये अकाण्डताण्डवमभिनयति, तदा तदनुचरनायको नन्दी मृदङ्गं वादयति, मयूरजातेर्मेघ-गर्ज्जितानन्दिततया कार्त्तिकेयमयूरो मृदङ्गशब्दे मेघगर्ज्जितभ्रमेण तत्रागच्छति। अथ महादेवगलदेशस्थः सर्पराजः सर्पभोजिनं तं मयूरमागतमवलोक्य भयेन स्वकीयपीवर-शरीरं श्वासनिःसारणात् शिवनासाविवरप्रवेशोपयोगि सूक्ष्मं विधाय सहर्षं सन्निहितं शिव-नासाविवरं प्रविशति। इतश्च गणेशो विकटशब्दं कुर्व्वन् स्वकीयगजाननं नृत्यवाद्ययोस्ताले ताले कम्पयति, तदा च गजाननगण्डस्थमदजलसौरभेण तत्रोपविष्टा भ्रमरपङ्क्तयो भृशस्वाश्रयकम्पनात् स्थातुमशक्ततया आकाशे समुड्डीय गुञ्जन्ति। तानि च विघ्नराज-मुखकम्पनानि विपद्भ्यो युष्मान् रक्षन्तु इति सरलार्थः।

प्राणनाशाशङ्कायां तत्क्षणात् तद्रक्षणोपायलाभे प्राणिनामानन्दः स्वाभाविक एवेति मयूरतः प्राणनाशाशङ्कायां सत्यामेव सहसा तद्रक्षणोपायभूतशिवनासाविवरलाभात् फणि-पतेरानन्द इति भावः। नासाविवरस्य सान्निध्यसूचनाय अग्रपदमुपात्तम्।

अत्र फणिपतेर्नासाविवरप्रवेशासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। तथा 'नन्दे नन्दी'ति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रासः, प्रथमे पादे हकाराणा-मसकृत्, द्वितीयतृतीययोः सकारलकारयोः सकृत्, चतुर्थे च वकाराणामसकृत् साम्यमिति

अपि च, (१) (क)

चूड़ापीड़कपालसङ्कुलगलन्मन्दाकिनीवारयो-
विद्युत्प्रायललाटलोचनशिखिज्वाला-(२) विमिश्रत्विषः ।

वृत्त्यनुप्रासश्चेति संसृष्टिः । मृदङ्गशब्दे मयूरस्य मेघगर्ज्जितभ्रमात् भ्रान्तिमानलङ्कारो व्यज्यते ।

"भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः ।

रन्ध्रस्याग्रमिति अग्ररन्ध्रं राजदन्तादित्वात् रन्ध्रपदस्य परनिपातः । मुखराः कृता इति मुखरिताः, करोत्यर्थे णिजन्तात् मुखरशब्दात् कर्म्मणि क्तः । वदनविधुतीनामचेतनत्वेन कर्त्तृत्वासम्भवेऽपि देवसम्बन्धितया देववत्प्रभाववत्त्वाङ्गीकारात् रक्षणकर्त्तृत्वम् ।

स्रग्धरा वृत्तम्—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात् ॥१॥

(क) विघ्नप्राचुर्य्यमाशङ्कमानस्तन्नाशोपायभूतेष्टदेवतास्मरणप्राचुर्य्यप्रतिपादनायाह अपि चेति । अपि च अन्यत्र आशीर्वादात्मकं वाक्यमित्यर्थः ।

মহাদেবের নৃত্যের সময় নন্দী মৃদঙ্গ বাজাইতেছিলেন ; তাহাতে আকৃষ্ট হইয়া কার্ত্তিকেয়ের ময়ূর সেই স্থানে উপস্থিত হইয়াছিল ; তাহার ভয়ে সর্পরাজ ( মহাদেবেরই গলদেশে স্থিত ) শরীর সঙ্কুচিত করিয়া আনন্দের সহিত মহাদেবের নাসিকারন্ধ্রের অগ্রদেশে প্রবেশ করিলে পর গণেশ, বিকট শব্দ করিয়া যে মুখ কম্পন করিতেছিলেন এবং যে মুখ-কম্পনের সময় ভ্রমরগণ গণেশের গণ্ডদেশ হইতে উড্ডীন হইয়া সমস্ত দিক্ মুখরিত করিয়াছিল ; গণেশের সেই মুখকম্পন চিরকাল তোমাদিগকে রক্ষা করুক ॥১॥

(ক) অপি চ, ( আরও পাঠ করিতেছি )

(१) एतच्चेति पाठान्तरम् । (२) शोचनपुटज्योतिरिति पाठभेदः ।

पान्तु त्वामकठोरकेतकशिखासन्दिग्धमुग्धेन्दवो
भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटा जटाः ॥२॥ (१)

किं तद्वाक्यमित्याह चूडे ति। चूडायां शिरोमध्यबद्धजुटिकायां य आपीडः समन्ताद्वेष्टनमाला तज्जुटिकावेष्टनकारिणी सूत्रग्रथितनरशिरोऽस्थिमालेत्यर्थः। तस्य कपालेषु शुष्कनरशिरोऽस्थिषु सङ्कुलम् आकीर्णं परिपूर्णं सत् गलत् निपतत् मन्दाकिनीवारि गङ्गाजलं यासु ताः। विद्युत्प्रायाः तड़ित्तुल्यपिङ्गलवर्णा या ललाटलोचनशिखिज्वाला भालदेशस्थनयनाग्निशिखाः ताभिर्विमिश्रा मिलिताः त्विषी दीप्तयो यासां ताः। अकठोरा

(१) कस्मिंश्चित् पुस्तके, प्रथमं 'चूडापीडे'त्यादिश्लोकः, परञ्च 'सानन्द'मित्यादिश्लोक इति विन्यासवैषम्यं दृश्यते। पुस्तकान्तरे तु—

"अपि च। पश्चालीपिङ्गलिम्नः कण इव तड़ितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव।
अर्चिर्निष्टप्तचूडाशशिगलितसुधासारभृङ्गारिकीणं
तार्त्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः॥"

इति श्लोकान्तरमपि लिखितं दृश्यते। तत्तु न समीचीनम्, येन हि तथात्वे नान्द्या यावान् विस्तरः सम्भवति तावत एव कृतत्वात् "अलमतिविस्तरेण" इत्युक्तेरनुपपत्तिः।

अपरपुस्तके तु—प्रथमं 'चूडापीडे'त्यादिः, ततः 'सानन्द'मित्यादिः, ततः

"अपि च। दन्ताग्रेषु संगलत् कलकलव्यावर्त्तनव्याकुला
नासालोचनकर्णकुम्भकुहरेषूद्गद्गदध्वानिनः।
गण्डग्रन्थ्यभिघातशीर्णकणिकाचूडावन्त्यूर्म्मयः
शम्भोर्ब्रह्मकपालकन्दरपरिस्पन्दीलयाः पान्तु वः॥"

इति श्लोकः, ततश्च 'पश्चाली'त्यादिश्लोको लिखितः। तदपि न समीचीनं—तथा च वृद्धश्लोकचतुष्टयात्मकनान्द्यां "नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृताम्" इति नान्दीलक्षणायोगादव्याप्तिदोषः। अन्यतमटीकाकारस्त्रिपुरारिरपि 'दन्ताग्रेष्वि'त्यादिश्लोकं 'पश्चाली'त्यादिश्लोकञ्च प्रक्षिप्तं मन्यते स्म। अतएव टीकाकारविशेषजगद्धरविन्यासानुसारिणी उक्तरूपा श्लोकद्वयात्मिका नान्द्येव मौलिकीति सुधीभिर्विभावनीयम्।

कोमला या केतकशिखा केतकीकुसुमाग्रभागः तया सन्दिग्धः 'किमियं केतकीकुसुमशिखा उत शशिरेखा' इत्यं केतकीकुसुमशिखात्वेन संशयविषय इत्यर्थः, मुग्धो मनोहर इन्दुश्चन्द्रो यासु ताः। तथा भुजङ्गः सर्प एव वल्लिः लता सैव वलयस्रक् मण्डलाकारेण स्थिता माला तया नद्धो बद्धो जूटः समूहो यासां तास्तथोक्ताः। भूतेशस्य शिवस्य जटाः त्वां सानुचरं सभानायकं पान्तु रक्षन्तु।

शिवस्य शिरोमध्यभागे कुसुमसदृशप्रचुरदेहचिक्कणशालिना अतएव पुष्पमालासदृशेन लतावत् कोमलेन केनचित् सर्पेण जटानां जूटिका बद्धा, सा च सूत्रग्रथितनरशिरोऽस्थि-मालयापि वेष्टिता। तदुपरिवर्त्तिन्या गङ्गाया जलेन तानि शिरोऽस्थीनि परिपूर्य्य प्लाविताः, अग्निमयललाटलोचनप्रभया भृशपिङ्गलीकृताः, तथा ललाटलोचनतेजसा ईषत्पिङ्गलीकृतया अतएव कोमलकेतकीकुसुमशिखावत्प्रतीयमानया शशिरेखया च संयुक्तास्ता जटाः सभापतिं रक्षन्त्विति सरलार्थः।

अत्र स्वभावोक्तिरलङ्कारः। तथा विद्युत्प्रायेति आर्थी समासगतोपमा, तृतीयपादे शुद्धसन्देहः, चतुर्थे साधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करः, इत्यर्थालङ्काराणां परस्पराङ्गाङ्गिभावेन सङ्करः। तथा सन्दिग्धमुग्धेति जूटाजटा इति छेकानुप्रासः, अन्यत्र तु वृत्त्यनुप्रास इति समुदाये संसृष्टिः। आपीड़शब्देनैव शिरःसंयुक्तावपि चूड़ाशब्दस्तदा-रूढ़त्वप्रतीत्यर्थः कर्णकुण्डलादिवत्, अतएव न पुनरुक्ततादोषः। यथा साहित्यदर्पणः—

"धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः।
आरूढ़त्वादिबोधाय न दोषः पुनरुक्तता॥"

"शिखा चूड़ा केशपाशो जूटिका जुटिकेत्यपि। शिरोमध्यबद्धचूड़े भवेदेतत्तु पञ्चकम्॥" इति शब्दरत्नावली। "आपीड़शेखरोत्तंसाऽवतंसाः शिरसि स्रजः।" इति हलायुधः। "कपालः (पुंक्ली) शिरोऽस्थि। माथार खुलि इति भाषे"ति शब्दकल्पद्रुमः।

अत्रापि देवतासम्बन्धितया तत्तत्प्रभाववत्त्वाङ्गीकारात् जटानां रक्षणकर्त्तृत्वं बोध्यम्। स्रग्धरा वृत्तम्॥२॥

চূড়ার চারিদিকে যে সকল মানুষের মাথার খুলি আছে, সেগুলিকে পরিপূর্ণ করিয়া গঙ্গার জল, যে জটাসমূহের উপর পতিত হইতেছে, যে

नान्द्यन्ते सूत्रधारः (ख)। अलमतिविस्तरेण (ग)। पुरतोऽवलोक्य।

(ख) नान्द्यन्त इति। स्तुत्याशीरन्यतरपरा वाक् नान्दी। तथा च नन्दयति आनन्दयति स्तवेन देवादीन् आशिषा वा सभ्यानिति इनन्तनन्दधातोः पचादित्वादचि नन्द इति रूपम्, ततः प्रज्ञादित्वात् स्वार्थे अणि कृते स्त्रियामीप्रत्यय इति नान्दी। नान्दीलक्षणमाह भरतः—

"देवद्विजनृपादीनामाशीर्वादपरायणा।
नान्दी कार्य्या बुधैर्यत्नान्नमस्कारेण संयुता॥
गङ्गा नागपतिः सोमः सुधानन्दी जयाशिषः।
एभिर्नामपदैः कार्य्या नान्दी कविभिरङ्किता॥
काचिद्द्वादशपदा नान्दी काचिदष्टपदा स्मृता।
सूत्रधारः पठेदेनां मध्यमं स्वरमास्थितः॥"

अत्र तु गङ्गादीनामुल्लेखः स्फुट एव। पदञ्चात्र त्रिविधं श्लोकपादरूपम्, सुप्तिङन्तरूपम्, श्लोकान्तर्गतवाक्यरूपञ्च। यथोक्तं नाट्यप्रदीपे—

"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे॥"

तथा चेयं श्लोकद्वयात्मकत्वात् पादरूपाष्टपदा नान्दी। एतादृश्या नान्द्या अन्ते पाठावसाने, सूत्रम् अभिनेयसूचनं धारयतीति सूत्रधारः प्रधाननटः। वदतीत्यध्याहर्त्तव्यया क्रियया अस्यान्वयः। एवमन्यत्रापि ज्ञेयम्। सूत्रधारलक्षणं यथा सङ्गीतसर्वस्वे—

"वर्णनीयतया सूत्रं प्रथमं येन सूच्यते।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥"

জটাসমূহের তেজ, বিদ্যুতের ন্যায় পিঙ্গলবর্ণ ললাটনয়নের অগ্নিশিখার সহিত মিলিত হইতেছে এবং যে জটাসমূহের নিকটবর্ত্তী সুন্দর অর্দ্ধচন্দ্রকে কোমল কেতকীপুষ্পের উপরিভাগ বলিয়া সন্দেহ করা হয়, মালার ন্যায় মণ্ডলাকারে অবস্থিত সর্পলতাবদ্ধ মহাদেবের সেই জটাসমূহ আপনাকে (অনুচরবর্গের সহিত সভাপতিকে) রক্ষা করুক ॥২॥

अये ! उदितभूयिष्ठ एव (१) भगवानशेषभुवनद्वीपदीपकस्तपनः। तमुपतिष्ठे (२) (घ)। प्रणम्य।

(ग) अलमित्यादि। अतिविस्तरेण अतिबहुलेन नान्दीप्रयोगेण अलम्। सुश्लिष्टकल्प-रूपाष्टपदनान्दीप्रयोगेणैव कर्त्तव्यमङ्गलाचरणनिर्वाहे सत्यपि इहश्लोकपादरूपाष्टपदनान्दी-प्रयोगादेव किञ्चिद्विस्तरो जातः, पुनरितोऽधिकद्वादशपदनान्दीप्रयोगो निष्प्रयोजन एवेति भावः।

(घ) पुरत इत्यादि। पुरतः अग्रतः प्राचीमित्यर्थः। अये इति प्रणामार्थ-सम्भ्रमे। उदितो भूयिष्ठः बहुलांशो यस्य सः, प्रायेणोदितमण्डल इत्यर्थः। इदानीमपि सम्पूर्णोदयाभावात् सूर्य्यमण्डलस्य कियानंशो न दृष्टिगोचर इति भावः। भगवान् माहात्म्य-शाली। अशेषाणि समस्तानि भुवनानि भूर्भुवःप्रभृतीनि द्वीपानि च जम्बूशाल्मलीप्रभृतीनि दीपयति प्रकाशयति यः स तथोक्तः। तपनः सूर्य्यः। तं तपनम् उपतिष्ठे स्तवेनाराधयामि। "पथ्याराधनयोश्च"त्यात्मनेपदम्। इदमपि सूर्य्याराधनं सम्भाव्यमानविघ्नविशेषविनाशायेति बोध्यम्। एतेन तदानीं दिवसेऽप्यभिनयरीतिरासीदिति प्रतीयते।

"अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च" इति विश्वः।

ननु "नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्॥"

इति मनुना उद्यदादित्यदर्शनं निषिद्धम्, दर्शनाभावे च कथम् उदितभूयिष्ठ इति निश्चय इति चेन्न, उक्तवचनस्य स्नातकव्रतिविषयत्वेनान्येषां दर्शननिषेधाभावात् तदुपक्रम एव चास्योक्तत्वात्। तथा च मनुः—

(গ—ঘ) নান্দীপাঠের পর সূত্রধার। আর অতিবিস্তৃত নান্দীপাঠ করার প্রয়োজন নাই। (পূর্ব্বদিকে দৃষ্টিপাত করিয়া) ও! সমস্ত জগৎ এবং সমস্ত দ্বীপের প্রদীপস্বরূপ ভগবান্ সূর্য্যদেবের অনেক অংশই উদিত হইয়াছে; অতএব তাঁহার আরাধনা করি। (নমস্কার করিয়া)

(१) एष इति पाठभेदः। (२) अलमलम्। उदितभूयिष्ठ एव भगवानशेष-भुवनद्वीपदीपः। तदुपतिष्ठे। इति पाठान्तरम्।

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते !
धुर्य्यां लक्ष्मीमिह (१) मयि भृशं धेहि (२) देव ! प्रसीद ।
यद्यत् पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥३॥

"अतोऽन्यतमया वृत्त्या जीवंश्च स्नातको द्विजः ।
स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेत् ॥"

"ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् । देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्त्तते ॥" इति भरतमतमनुसृत्याभिप्रेतं स्तवमाह—कल्याणानामिति । हे विश्वमूर्त्ते ! सर्वात्मन् ! त्वं कल्याणानां मङ्गलकराणां महसां तेजसां भाजनम् आश्रयोऽसि । अतो लोकानामभिप्रेतसिद्धिरूपमङ्गलदाने त्वं सर्वथैव समर्थं इति भावः । अतएव इह मयि धुर्य्यां साङ्गाभिनयसम्पादनभारवहनयोग्यां लक्ष्मीं शक्तिसम्पत्तिं भृशं सातिशयं यथा तथा धेहि सम्पादय, हे देव ! प्रसीद प्रार्थितप्रदानेन मां प्रति प्रसन्नो भव । हे जगन्नाथ ! भुवनपते ! यत् यत् मङ्गलप्रतिबन्धकीभूतं पापमस्ति नमस्य त्वां प्रति भक्त्या अवनतस्य मे मम तत् सर्वं पापं प्रतिजहि नाशय । तथा हे भगवन् ! महामाहात्म्यशालिन् ! भूयसे मङ्गलाय प्रचुरतरशुभलाभाय भद्रं भद्रं सातिशयशुभं वितर, परमापूर्वाय कलिकापूर्ववत् विशालिकमङ्गलाय तत् प्रयोजकीभूतं सर्वविषयकं क्षुद्रं क्षुद्रं मङ्गलं वितर । अथवा मङ्गलानुबन्धीनि मङ्गलानि प्रयच्छेत्यर्थः ।

হে বিশ্বমূর্ত্তি-সূর্য্যদেব ! আপনি মঙ্গলকর তেজের আশ্রয় ; অতএব আমার প্রতি প্রসন্ন হউন এবং অভিনয় করিবার উপযুক্ত শক্তিসম্পদ অতিরিক্তরূপে সম্পাদন করুন । হে জগন্নাথ ! আমি আপনাকে ভক্তিভরে নমস্কার করিতেছি ; আমার যে যে পাপ আছে তাহা নাশ করুন এবং হে ভগবন্ ! ভাবী গুরুতর মঙ্গলের জন্য সকল বিষয়েই মঙ্গল দান করুন ॥৩॥

(१) लक्ष्मीमथेति पाठान्तरम् । (२) देहीति पाठभेदः ।

नेपथ्याभिमुखमवलोक्य। मारिष! सुविहितानि रङ्गमङ्गलानि, सन्निपतितस्य भगवतः कालप्रियनाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो महाजनसमाजः। आदिष्टश्चास्मि विद्वज्जन-

"हरिहरादीनपास्य भानीरुपस्थानेन प्रकरणनायकस्य ब्राह्मण्यं सूचितम्। अतएव देहीति ब्राह्मणोचिता प्रार्थने"ति जगद्धरः। अत यद्यत् पापं प्रतिजहीत्यनेन शार्दूलाघोरघण्टविध्वंसः सूचितः। पापध्वंसात् परञ्च भद्रं भद्रमित्यनेन माधवस्य मालतीलाभः, मकरन्दस्य च मदयन्तिकालाभः, तथा भूयसे मङ्गलायेत्यनेन च कपालकुण्डलाक्रान्तमालतीप्राप्तिश्च सूच्यते।

अत द्वितीयचरणगतप्रथमवाक्यार्थं प्रति प्रथमचरणगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः।

"लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः॥"

इति शुद्धितत्त्वधृतस्मृत्या आदित्यस्य मङ्गलत्ववचनात् तत्तेजसामपि मङ्गलत्वम्। विश्वं दृश्यमानं जगत् मूर्त्तिर्यस्येति व्युत्पत्त्या आदित्यस्य सर्वात्मत्वं सूचितम्। तथा च श्रुतिः— "सूर्य्य आत्मा जगतस्तस्थुषश्च।" एकेनैव तच्छब्देन यद्यदिति वीप्सितस्य सर्वत्वरूपेण परामर्शान्न तच्छब्दस्यापि द्विर्वचनापेक्षा।

मन्दाक्रान्ता वृत्तम्—"मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ गौ ययुग्मम्" इति लक्षणात् ॥२॥

(ङ) नेपथ्येति। नेपथ्यं वेशरचनास्थानम्। अथवा "नेपथ्यो नाम रङ्गस्थलस्य पश्चाद्यवनिकान्तरितो वर्णग्रहणादियोग्यकुशीलवकुटुम्बावस्थानदेशः। कुशीलवकुटुम्बस्य स्थली नेपथ्य इष्यते इति वचना"दिति त्रिपुरारिः। नेपथ्याभिमुखावलोकनं तत्रस्थमारिषसम्बोधनार्थम्। सम्बोधनीयाश्रयाभिमुख एव सम्बोधयतीति लोकव्यवहारः। मा रेषति

(ঙ) (বেশগৃহের প্রতি দৃষ্টিপাত করিয়া) মারিষ! (নট!) যথানিয়মে রঙ্গালয়ের মঙ্গল সম্পাদন করিয়াছি; ভগবান্ কালপ্রিয়নাথের উৎসব-উপলক্ষে নানাদিগন্তবাসী গুণবান্ লোকসমূহও উপস্থিত হইয়াছেন;

परिषदा, यथा—'केनचिदपूर्वप्रकरणेन वयं विनोदयितव्या' इति ।
तत् किमित्युदासते भरताः (१) (ङ) ।

न हिनस्ति दुष्टाभिनयादिना सभ्यानां शान्तिमिति मारिषः पारिपार्श्विकः। माशब्दोपपदात् रिषधातोर्नाम्युपधत्वात् कः। रजत्यस्मिन्निति रङ्गः अभिनयगृहं तत्र कर्त्तव्यानि मङ्गलानि ईश्वरादिस्मरणसूर्य्यनमस्काररूपाणि सुविहितानि सम्यग्भावेन सम्पादितानि। अतो नास्ति तदर्थापेक्षेति भावः। इतश्चेति चार्थः। भगवतः अणिमाद्यैश्वर्य्यशालिनः कालप्रियनाथस्य उज्जयिनीनगरस्थितस्य महाकालमूर्त्तेः शिवस्य यात्राप्रसङ्गेन बृहत्पूजाकालीनमहोत्सवव्यापारेण नानादिगन्तवास्तव्यः अनेकदिग्देशवासी महाजनसमाजः विविधविद्याविशारदलोकसमूहः सन्निपतितः समागतः। न केवलं सन्निपतितः अपि तु विद्वज्जनानां परिषदा सभया समूहेनेति तात्पर्य्यम्, अस्मि अहम् आदिष्टश्च आज्ञप्तश्च। किमादिष्ट इत्याह यथेति। अपूर्वेण नूतनेन अत्याश्चर्य्येणेति च ध्वन्यते, प्रकरणेन वक्ष्यमाणलक्षणेन रूपकविशेषेण अत्याश्चर्य्यप्रकरणविशेषाभिनयेनेत्यर्थः वयमुपस्थिताः सभ्याः विनोदयितव्याः इतिशब्दस्यादिष्टोऽस्मीत्यन्वयः। तत् तस्मात् विद्वज्जनादेशस्यानतिक्रमणीयत्वेन अपूर्वप्रकरणविशेषाभिनयस्यावश्यकर्त्तव्यत्वादित्यर्थः। किं कथम्। नाट्यशास्त्रप्रणेतुर्भरतमुनेर्मतानुयायित्वात् भरता नटाः। उदासते तदर्थमुद्यममपास्य उदासीनवत् तिष्ठन्ति। नैतदुचितं किन्त्वभिनयार्थमुद्योगः क्रियतामिति भावः।

"सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः। सूत्रधारो मारिषे"ति साहित्यदर्पणात् मारिष इति पारिपार्श्विकसम्बोधनम्।

সভ্য পণ্ডিতগণও আমাকে আদেশ করিয়াছেন যে, 'কোনও নূতন প্রকরণ অভিনয় করিয়া আমাদিগকে আনন্দিত করিবে।' অতএব অন্যান্য নটগণ উদাসীন রহিয়াছেন কেন ?।

(१)···वालब्धो जनः। तत् किमित्युदासते भरताः। आदिष्टोऽस्मि विद्वत्परिषदा, यथा—अद्य त्वयापूर्ववस्तुप्रयोगेण वयं विनोदयितव्या इति। तत्परिषदं निर्दिष्टगुणप्रबन्धेनोपतिष्ठावः। इति पाठान्तरम्।

प्रविश्य पारिपार्श्विकः। भाव ! परिषन्निर्दिष्टगुणं प्रबन्धं नाधिगच्छामः (१) (च)।

सूत्र। मारिष ! कतमे ते गुणास्तत्र, यानुदाहरन्त्यार्य्यविदग्धमिश्रा भगवन्तो भूमिदेवाश्च (२) (छ)।

उज्जयिनीस्थितस्य शिवस्य कालप्रियनाथ इति नाम, मूर्त्तिस्तु महाकालरूपा। तथा च कथासरित्सागरे—

"यस्यां वसति विश्वेशो महाकालवपुः स्वयम्।
शिथिलीकृतकैलासनिवासव्यसनी हरः॥"

"यावीत्सवे गतौ वृत्तौ" इति हेमचन्द्रः। "भरता इत्यपि नटा" इत्यमरः।

(च) प्रविश्येति। परि समन्तात् सूत्रधारस्य पार्श्वे चरतीति पारिपार्श्विकः गुणवान् कश्चिन्नटः। तथा च भरतः—

"सूत्रधारस्य पार्श्वे यः प्रचरन् कुरुतेऽर्थनाम्।
काव्यार्थसूचनालाप स भवेत् पारिपार्श्विकः॥"

भावयति विद्यानैपुण्यात् सुष्ठुभावेन प्रतिपादयति अभिनेयमिति भावो विद्वान् "भावो विद्वानथावुकः" इत्यमरः। परिषदा सभया निर्द्दिष्टा गुणा यत्र ते, प्रबन्धं प्रकरणात्मकं रूपकं "प्रबन्धो रूपकं वस्तु निबन्धस्याभिधानयम्" इति कुमारगिरिराजीयम्। परिषदा यादृशगुणोपेतं प्रकरणमभिनेतुमादिश्यते तादृशं प्रकरणमेव न विद्म इत्यर्थः। एतेन पारिपार्श्विकः परिषदो मतमवगत्यागत्य एतद्वदतीति बोध्यम्।

(छ) सूत्रेति। तत्र अभिनेयप्रकरणे। आराद्‌याता असभ्यतादुराचारादिदोषेभ्यो

(च) পারিপার্শ্বিক। (প্রবেশ করিয়া) শিক্ষকমহাশয়! সভ্যগণ যেরূপ গুণের নির্দ্দেশ করেন, সেরূপ গুণসম্পন্ন প্রকরণ আমার মনে পড়িতেছে না।

(१) नटः। (प्रविश्य) भाव ! कतमे ते गुणाः, यानुदाहरन्त्यार्य्यमिश्रा भगवन्तो भूमिदेवाः। इति पाठः क्वचित्। आर्य्या विदग्धा मिश्रा भगवन्तो भूमिदेवाश्चेति पाठभेदः।

(२) क्वचिदेष पाठो नास्ति।

नटः (१)। भूम्ना रसानां गहनाः प्रयोगाः
सौहार्द्दहृद्यानि विचेष्टितानि।
औद्धत्यमायोजितकामसूत्रं
चित्रा (२) कथा वाचि विदग्धता च ॥४

दूरं गताः, अथवा शिष्टाचारसम्यताविद्यादिभिर्देवतास्वदसमीपं गता इत्यार्य्याः पृषोदरादित्वात् साधुत्वम्। ते च वेदान्तर्गतविधिनिषेधाधीनाचारवन्तः। तथा च—

"कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्।
तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः॥"

तेष्वार्य्येषु विदग्धाः कलाविद्यादिनिपुणाः तेषां मिश्राः श्रेष्ठाः, तथा भगवन्तः तपस्तेजसा माहात्म्यवन्तः भूमिदेवा ब्राह्मणाश्च। आर्य्यविदग्धमिश्रा इत्यनेनैवोपपत्तौ पुनर्भूमिदेवानामुपादानं गौरवन्यायादार्य्येषु तेषां प्राधान्यसूचनार्थम्।

भूम्नेति। रसानां शृङ्गारादीनां भूम्ना बाहुल्येन प्रयोगा अभिनयाः, गहनाः स्थूलबुद्धीनां दुर्बोधाः, अपि तु किञ्चिच्छिन्नतया सूक्ष्मदर्शिसहृदयमात्रवेद्याः। ईषदायासेनैवानुभवनीयं वस्तु सहृदयानां चमत्कारविशेषमावहति सूक्ष्मचेलावृतकामिनीकुचकुम्भवत् चर्व्वितेक्षुरसवच्च; मूढ़ानान्तु परप्रत्ययनेयबुद्धित्वेन सहृदयानां प्रीतिदर्शनादेव अभिनयदर्शनफलनिष्पत्तिर्भविष्यतीति भावः। विचेष्टितानि नायकनायिकातन्मित्रादीनां चरित्राणि सौहार्द्देन परस्परप्रणयेन हृद्यानि प्रीतिकराणि। आयोजितम् उपस्थापितं कामस्य मनोभवस्य सूत्रं सूचनं यस्मिन् तादृशम् औद्धत्यं नायकस्य वीररौद्ररसालम्बनत्वम्। तच्च पूर्व्वभावेनैव पञ्चमाङ्के माधवस्य अघोरघण्टेन सह संघर्षे व्यक्तीभविष्यति। कथा उपाख्यानभागः चित्रा आश्चर्य्या, वाचि वाक्ये विदग्धता माधुर्य्यश्लेषादिविन्यासनैपुण्यञ्च वर्त्तन्त इति शेषः। एभिर्गुणैरन्वितं प्रकरणमभिनेतुमादिशन्ति सभ्या इति भावः।

(छ) সূত্রধার। মারিষ! আর্য্যদের মধ্যে প্রধান শিক্ষিতগণ ও প্রভাবশালী ব্রাহ্মণগণ যে গুণগুলির উল্লেখ করিয়াছেন সে গুণগুলি কি?।

(१) सूत्रधार इति पाठः पुस्तकान्तरे। (२) 'चित्राः' इति बहुवचनान्तं पाठान्तरम्।

सूत्र। स्मृतं तर्हि (१) (ज)।

नटः। भाव! किमिव (२) (झ)।

सूत्र। अस्ति दक्षिणापथे विदर्भेषु पद्मपुरं नाम नगरम्। तत्र केचित्तैत्तिरीयिणः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः

अत्र प्रबन्धोत्कर्षप्रतिपादनकार्य्यस्य प्रचुररसगहनप्रयोगत्वरूपे एकस्मिन् कारणे सत्यपि सौहार्द्दमनोहरत्वादीनां कारणान्तराणामुपन्यासात् समुच्चयोऽलङ्कारः।

इन्द्रवज्रा वृत्तम्—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात् ॥४॥

(ज) सूत्रेति। तर्हि ईदृशगुणोपेतप्रकरणाभिनयस्याभिमतत्वे सति स्मृतं तादृशप्रकरणमित्यर्थः।

(झ) नट इति। किमिवेत्येकमेवाव्ययं प्रश्ने। 'कि रकम' इति वङ्गभाषा।

(ञ) सूत्रेति। दक्षिणस्यां दिशि पन्था यस्य स दक्षिणापथो दाक्षिणात्यदेशः तस्मिन्। "पद्मपुरं पद्मावती" इति जगद्धरः। तित्तिरिप्रोक्ताः शाखा इति तैत्तिरीयाः तदध्यायिनः यजुर्वेदशाखाविशेषविद इत्यर्थः। काश्यपाः काश्यपगोत्राः। चरणेषु ऋगादिवेदशाखासु गुरवः अध्यापकाः। पङ्क्तिं सदाचारतपस्यादिना स्वस्पर्शो पावयन्तीति पङ्क्तिपावनाः मन्वादिपरिभाषितगुणोपेताः। पञ्च दाक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यलक्षणाः पञ्चसंख्यका अग्नयो येषां ते, उक्तपञ्चविधाग्निषु नित्यहोतारः। धृत-

नट। রসের প্রাচুর্য্যনিবন্ধন অভিনয়গুলি সূক্ষ্মবুদ্ধিবেদ্য হইবে, নায়ক-নায়িকাপ্রভৃতির চরিত্র পরস্পর প্রণয়বশতঃ মনোহর হইবে, কামকলার সূচনার সহিত তেজস্বিতা থাকিবে, উপাখ্যানটী আশ্চর্য্য হইবে এবং বাক্যভাগেও নৈপুণ্য থাকিবে ॥৪॥

(জ) সূত্রধার। তবে মনে পড়িয়াছে।

(ঝ) নট। শিক্ষকমহাশয়! কি মনে পড়িয়াছে?।

(१) कस्मिंश्चित् पुस्तके अयं पाठो नास्ति।

(२) भाव! कस्मिन् प्रकरणे इति पाठान्तरम्।

पञ्चाग्नयो धृतव्रताः सोमपीथिनो ब्राह्मणा ब्रह्मवादिनः प्रतिवसन्ति स्म (१) (ञ) ।

व्रताः सततचान्द्रायणाद्यन्यतमनियमवन्तः । पानं पीतम्, सोमस्य सोमरसस्य पीतमेषामस्तीति सोमपीथिनः नित्ययागानुष्ठायितया नित्यसोमरसपायिनः । ब्रह्मवादिनः वेदवक्तारः ।

पुरा किल देवरातपुत्रो यजूंषि समुद्गीर्णवान्, ततः केचिन्मुनयस्तित्तिरपक्षिणो भूत्वा तानि गृहीतवन्त इति यजुर्वेदशाखाविशेषाणां तैत्तिरीयेति नाम जातम् । तथा च श्रीमद्भागवतम्—

"देवरातसुतः सोऽपि छर्द्दित्वा यजुषां गणम् ।
ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥
यजूंषि तित्तिरा भूत्वा तल्लोलुपतया ददुः ।
तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥"

पङ्क्तिपावनमाह मनुः—

"अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥"

"चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च ।" इत्यादि मेदिनी ।

विदर्भेष्विति "बहुत्ववदस्यादेरेकाधिकरणस्य प्रायेणे"ति बहुवचनम् । सोमपीथिन इति पृषोदरादित्वात् तकारस्य थकारः । नित्यमात्मनां तैत्तिरीयाख्यशाखाध्ययनम्, अध्यापना तु बह्वृचादीनामपीति तैत्तिरीयिणः चरणगुरव इत्यनयोरुपपत्तिः ।

(ঞ) সূত্রধার। দাক্ষিণাত্যে বিদর্ভদেশে পদ্মপুরনামে একটী নগর আছে; সেখানে তৈত্তিরীয়শাখী, কাশ্যপগোত্র, বহ্বৃচাদি-বেদশাখার অধ্যাপক, পঙ্‌ক্তিপাবন, পঞ্চাগ্নিক, ব্রতী, সোমপায়ী ও বেদবক্তা কতকগুলি ব্রাহ্মণ বাস করিতেন।

(१) सूत्रधारः । ( विचिन्त्य ) स्मृतम् । अस्ति दक्षिणापथे पद्मपुरं नाम नगरम् । तत्र ब्राह्मणाः केचित्तैत्तिरीयाः पङ्क्तिपावनाः काश्यपाः पञ्चाग्नयः सोमपीथिनो धृतव्रता उदुम्बरनामानो ब्रह्मवादिनः प्रतिवसन्ति । इति पाठभेदः ।

ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरि श्रुतं शाश्वतमाद्रियन्ते ।
इष्टाय पूर्त्ताय च कर्म्मणेऽर्थान् दारानपत्याय तपोऽर्थमायुः॥५॥

त इति। ते श्रोत्रिया ब्राह्मणाः तत्त्वविनिश्चयाय ब्रह्मज्ञानलाभाय भूरि प्रचुरं श्रुतं शास्त्रज्ञानं शाश्वतं नित्यम् आद्रियन्ते श्रद्दधति। न तु जीविकानिर्वाहार्थमिति भावः। इष्टाय कर्म्मणे अग्निहोत्रातिथिसत्कारादिकर्म्मसम्पादनार्थं पूर्त्ताय कर्म्मणे च कूपादिकार्य्यानुष्ठानार्थञ्च अर्थान् धनानि आद्रियन्ते न तु भोगविलासार्थमिति भावः। अपत्याय सन्तानाय दारान् जाया आद्रियन्ते न तु केवलमिन्द्रियचरितार्थताविधानायेति भावः। तथा तपोऽर्थं तपस्योपार्जनार्थम् आयुः दीर्घजीवनम् आद्रियन्ते, न पुनः पौत्रदौहित्रादिसंसर्गजनितलौकिकसुखार्थमित्याशयः।

अत्र तात्पर्य्यतः शास्त्रज्ञानादीनां जीविकानिर्वाहार्थत्वादिनिरासादार्थी परिसंख्यालङ्कारः, तथा आद्रियन्ते इत्येकया क्रियया भूरिश्रुतादीनां कर्म्मतया अन्वयात् तुल्ययोगिता चेत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः। तपोऽर्थमित्यत्र चतुर्थीसमानार्थकार्थशब्दप्रयोगात् न भग्नप्रक्रमतादोष इत्याहुः।

श्रोत्रियमाह देवलः—"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा।
षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित्॥"

इष्टं पूर्त्तञ्चाह मलमासतत्त्वे जातूकर्णः—

"अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्।
आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते॥
वापीकूपतड़ागादिदेवतायतनानि च।
अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते॥"

इन्द्रवज्रा वृत्तम्॥५॥

সেই শ্রোত্রিয় ব্রাহ্মণগণ ব্রহ্মজ্ঞানলাভের নিমিত্ত বহুতর শাস্ত্রজ্ঞানের, অগ্নিহোত্রপ্রভৃতি ইষ্ট কার্য্য এবং কূপখননাদি পূর্ত্ত কার্য্যের নিমিত্ত ধনের, সন্তানের জন্য ভার্য্যার এবং তপস্যার জন্য আয়ুর আদর করিতেন॥৫॥

तदामुष्यायणस्य तत्रभवतः सुगृहीतनाम्नो (१) भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्यात्मसम्भवः (२) श्रीकण्ठपदलाञ्छनः (३) भवभूतिनामा (४) जातूकर्णीपुत्रः (५) कविर्निसर्गसौहृदेन भरतेषु स्वकृतिमेवंप्रायगुणभूयसीमस्माकमर्पितवान् । यत्र खल्वियं वाचो युक्तिः—(ट)

(ट) तदेति । अमुष्य कुले जात इत्यामुष्यायणस्तस्य, तत्रभवतः पूज्यस्य, सुगृहीतं प्रभाते जनैः सम्यगुच्चारितं नाम यस्य तस्य सुगृहीतनाम्नः धार्म्मिकत्वेन प्रातःस्मरणीयस्य । भट्टो वैदिकचतुःशाखाभिज्ञो यो गोपालस्तस्य । आत्मसम्भवः पुत्रः । श्रीः सरस्वती कण्ठे यस्य स श्रीकण्ठः, श्रीकण्ठपदं श्रीकण्ठेत्यानुपूर्वीकः शब्दः लाञ्छनं चिह्नम् उपाधिर्यस्य स तथोक्तः । भवभूतिरिति प्रकृतं नाम । अत्र विशेषोऽस्माकमुत्तररामचरितटीकायां द्रष्टव्यः । जातूकर्णीति मातुर्नाम । भरतेषु नटेषु निसर्गसौहृदेन स्वाभाविकप्रणयेन, एवंप्राया ईदृशाः बहुलरसगहनप्रयोगत्वादिरूपा गुणा भूयांसो बहुला यस्यां तां स्वकृतिम् आत्मरचितं प्रकरणम् अस्माकं समीपे अर्पितवान् अभिनेतुमिति शेषः । इति श्रुतमिति भावः । यत्र प्रकरणे । वाचो युक्तिर्वचोभङ्गिः ।

"श्रीर्लक्ष्मीवेशसम्पत्सु भारतीशोभयोरपि" इति त्रिकाण्डशेषः ।

(ট) সেই ব্রাহ্মণগণের বংশসম্ভূত, মাননীয় ও প্রাতঃস্মরণীয় গোপালভট্টের পৌত্র, পুণ্যকীর্ত্তি নীলকণ্ঠের পুত্র, জাতুকর্ণীদেবীর গর্ভসম্ভূত ও শ্রীকণ্ঠোপাধিক ভবভূতিনামে কবি নটসম্প্রদায়ের প্রতি স্বভাবসৌহার্দ্দবশতঃ উক্তরূপ-বহুতর-গুণসম্পন্ন স্বপ্রণীত একখানি প্রকরণ আমাদের নিকট দিয়াছেন। যে প্রকরণে এইরূপ বাক্যের ভঙ্গী রহিয়াছে—

(१) क्वचिदयं पाठो नास्ति । (२) पुत्र इति पाठभेदः । (३) भट्टश्रीकण्ठपदलाञ्छन इति, तथा अतः परं 'पदवाक्यप्रमाणज्ञ' इति च पाठान्तरम् । (४) भवभूतिर्नाम इति क्वचित् पाठः । (५) एष पाठोऽपि क्वचिन्नास्ति ।

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि, तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्म्मा (१)
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥६॥

काऽसौ वाचो युक्तिरित्याह ये इति । ये नाम केचित् निन्दनीया जना नोऽस्माकम् इह काव्ये अस्मन्निर्म्मितकाव्य इत्यर्थः अवज्ञां दुष्टतया अवहेलां प्रथयन्ति प्रकटयन्ति, ते किं जानन्ति अपि तु किमपि नेत्यर्थः । अपिशब्दः सम्भावनायाम् । इत्यहं सम्भावयामीति तात्पर्य्यम् । आत्मनामेवाज्ञत्वेन अतीवोत्कृष्टतया परमादरणीयस्यैवावज्ञानादिति भावः । अतएव तान् अज्ञान् अस्मद्विद्वेषिणो जनान् प्रति एष यत्नो न अयं मम काव्यनिर्म्माणोद्यमो न । ननु तर्हि कस्य निमित्तं तवैष यत्न इत्याह—कोऽपि भविष्यत्त्वेन अज्ञातनामलक्षणः, मम समानधर्म्मा मत्सदृशकवित्वादिगुणवान् जन उत्पत्स्यते भविष्यति, अथवा अस्ति इदानीमेव विद्यते । अथ कथमियं सम्भावनेत्याह—हि यस्मात् कालो निरवधिरसीमः पृथ्वी पृथिवी च विपुला अतीवविशालायतना । तथा च "गुणी गुणं वेत्ति न वेत्ति निर्गुणः" इति न्यायेन मदीयकाव्यगुणो मत्समानकविनैव ज्ञातुं शक्यः, किन्त्विदानीं तादृशो जनः प्रत्यक्षागोचरतया दर्शयितुं न शक्यते, कदाचिज्जायेत इति सम्भावना त्वस्त्येव कालस्यासीमत्वात् कालभेदेऽपि सुसदृशजनद्वयोत्पत्तिदर्शनाच्च ; अथवा इदानीमेव कुत्रचिदस्ति, किन्तु सुविशालायतनाया धरण्यास्तत्प्रदेशो निर्द्देष्टुमशक्यः । तेन यो जायेत यो वा निभृतदेशे वर्त्तते, ईश्वरेच्छया तस्य चेत् लोचनगोचरोभवेत् तदा स मम काव्यगुणं ज्ञास्यतीति तदर्थमेव ममायं यत्न इति सरलार्थो भावार्थश्च ।

যে হেয় ব্যক্তিরা আমার কাব্যে অবজ্ঞা প্রকাশ করে, তাহারা জানে কি ? সুতরাং তাহাদের প্রতি আমার এই উদ্যম নহে । আমার তুল্য গুণবান্ কোন লোক জন্মিবে, অথবা কোথাও আছে ; ( তাহার জন্যই এই উদ্যম ) । কারণ, এই কালও অসীম, পৃথিবীও বিশাল ॥৬॥

(१) उत्पत्स्यते मम तु कोऽपि समानधर्म्मा इति पाठान्तरम् ।

* अपि च, (१)

यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञानं तत् कथनेन किं नहि ततः कश्चिद्गुणो नाटके ।
यत् प्रौढ़त्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥७॥

---

अत उत्पत्स्यते इतः कालो निरवधिः, अस्ति वा यतो विपुला च पृथ्वीति यथासंख्येनान्वयात् यथासंख्यमलङ्कारः, वाक्यार्थहेतुकं काव्यलिङ्गञ्चेत्युभयोर्निरपेक्ष्यस्थितेः संसृष्टिः। तथा उत्पत्स्यते अस्तीत्यत्र विकल्पार्थको वाशब्दोऽथवाशब्दो वा वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानतादोषः, स च 'जायेत वाऽस्ति मम कोऽपि समानधर्म्मे'ति पाठेन समाधेयः।

"नाम प्रकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः।

वसन्ततिलका वृत्तम्—"उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥६॥

* अपि च अन्या च वाचो युक्तिरित्यर्थः।

यद्वेदेति। मम यत् वेदाध्ययनम्, उपनिषदां ब्रह्मप्रतिपादकानां वेदान्तापरपर्य्यायाणां वेदभागानाम्, सांख्यस्य कपिलप्रणीतदर्शनस्य योगस्य पातञ्जलदर्शनस्य च यत् ज्ञानम् अवबोधः, तयोः कथनेन प्रकटनेन किं फलम् अपि तु किमपि नेत्यर्थः। कथमित्याह—हि यस्मात् ततः स्वकीयनानाशास्त्रज्ञानकथनात् नाटके प्रकरण इति तात्पर्य्यं कश्चिद्गुणः कोऽप्युत्कर्षो न स्यात्। कवेः शास्त्रज्ञानं काव्यस्योत्कर्षं प्रति न कारणमन्वयव्यतिरेकव्यभिचारात् किन्तु रसाद्युत्कर्ष एव काव्यस्योत्कर्षकारणमिति भावः। वचसां काव्यगतवाक्यानां यत् प्रौढ़त्वं वाक्यार्थं पदं पदार्थं च वाक्यं तद्योजना। यथा 'अयमतीवनयनप्रीतिकर' इति

---

* আরও বাক্যের ভঙ্গী আছে—

---

(१) "तदुच्यन्तां तत्प्रख्यापनाय सर्वे कुशीलवाः, यथा स्वसङ्गीतकप्रयोगे वर्णिकापरिग्रहे च त्वर्य्यतामिति। कविवर्णनां प्रति तेनैवमुक्तम्—

गुणैः सतां न मम को गुणः प्रख्यापितो भवेत्।
यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः ॥"

अपि चेत्यतः पूर्वमयं पाठः क्वचिद्दृश्यते।

ततो यदस्माकमर्पितं प्रियसुहृदाऽत्रभवता भवभूतिनाम्ना प्रकरणं स्वकृतं मालतीमाधवं नाम तदेव तत्रभवतः कालप्रिय-

वाक्यार्थे 'असेचनकेतिपदं चन्द्र' इति पदार्थे च 'अविनयनसमुत्थं ज्योति'रिति वाक्यम्। उदारता अलङ्कारादिजनितमहत्त्वम्, यद्वा अर्थतः अभिधेयविषये गौरवं प्राशस्त्यप्रतिपादन-सामर्थ्यं देशकालोचितसुन्दरार्थप्रतिपादकत्वमित्यर्थः लोकैरुच्यत इति शेषः। चेत् यदि तदस्ति नाटके इति शेषः। ततस्तदा तदेव प्रौढत्वोदारतार्थगौरवाणामस्तित्वमेव पाण्डित्य-वैदग्ध्ययोः काव्यनिर्म्माणोपयोगिपाण्डित्यनैपुण्ययोः गमकं ज्ञापकम्। कविरयं नाना-शास्त्राभिज्ञः, प्रकरणञ्चेदं वाक्प्रौढत्वादिगुणवत्त्वादतीवोत्कृष्टमिति भावः।

अत्र गुणसमुच्चयोऽलङ्कारः। तथा कविकाव्ययोः प्रशंसनेन सभ्यानामाग्रहजननात् "भूम्ना रसानाम्" इत्याद्येतदन्तं प्ररोचना नाम भारतीवृत्तेरङ्गम्। तथा च साहित्यदर्पणे—

"भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः॥
तस्याः प्ररोचना वीथी तथा प्रहसनामुखे।
अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना॥"

प्रौढत्वमुक्तं काव्यादर्शे—"पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च॥"

"वेदान्तो नाम उपनिषत्प्रमाणं तदुपकारीणि च शारीरकसूत्रादीनी"ति वेदान्तसारः। शार्द्दूलविक्रीड़ितं वृत्तम्—"सूर्य्याश्वैर्मसजास्तताः सगुरवः शार्द्दूलविक्रीड़ितम्" इति लक्षणात्॥७॥

(ठ) तत इति। अत्रभवता महाकवित्वात् पूज्येन। प्रकरणं रूपकविशेषः। स्वकृतम् आत्मरचितम्। मालती नाम भूरिवसुनाम्नो मन्त्रिणः कन्या नायिका। माधवो

তিনি যে বেদ পড়িয়াছেন এবং বেদান্ত, সাংখ্য ও যোগদর্শনে যে তাঁহার জ্ঞান আছে, তাহা বলায় ফল কি? কারণ, তাহা হইতে নাটকে কোন গুণ হয় না। বাক্যের যে প্রৌঢ়তা ও উদারতা এবং অর্থের যে গৌরব, (টীকা দ্রষ্টব্য) তাহা যদি থাকে, তবে তাহাই পাণ্ডিত্যনৈপুণ্যের পরিচায়ক॥৭॥

नाथस्य पुरतः प्रयोगेण प्रख्यापयितुमुद्यताः, तत् सर्वे कुशीलवाः सङ्गीतप्रयोगेण मत्समीहितसम्पादनाय प्रवर्त्तन्ताम् (१)। (ठ)

नटः। स्मृत्वा। एवं क्रियते युष्मदादेशः, किन्तु या यस्य युज्यते भूमिका, तां खलु तथैव भावेन सर्वे वर्ग्याः पाठिताः, सौगत-

नाम देवरातनाम्नो मन्त्रिणः पुत्रो नायकः। तयोरिदमिति मालतीमाधवम् इदमर्थे ऽण्णा सिद्धम्। मालतीमाधवं नाम मालतीमाधवेति प्रसिद्धम्। अत्रभवतः जगत्-पूजनीयस्य। पुरतः प्रयोगेण सम्मुखेऽभिनयेन। प्रख्यापयितुं प्रकाशयितुम्। अस्माकं हस्ते भवभूतेर्मालतीमाधवार्पणप्रयोजनन्तु तदभिनय एव सुतरां तत्सम्पादनेन तं बन्धुं सभ्यांश्च सन्तोषयाम इति भावः। कुशीलवा नटाः। मत्समीहितसम्पादनाय मदभि-लषितमालतीमाधवप्रकरणाभिनयनिर्वाहाय। प्रकरणलक्षणमुक्तं साहित्यदर्पणे—

"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम्।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।
सापायधर्म्मकामार्थपरो धीरप्रशान्तकः॥"

"अमात्यनायकं मालतीमाधवम्" इति तद्वृत्तिः। तत्र अमात्यपुत्रनायकत्वादेवामात्य-नायकमित्यभिप्रायः। "नायिकानायकाख्यानां संज्ञाप्रकरणादिषु" इति लक्षणात् 'मालतीमाधव'मित्येव नामेति बोध्यम्।

(ड) नट इति। स्मृत्वा उक्तप्रायगुणोपेतं मालतीमाधवं नाम किञ्चित् प्रकरण-मस्तीति विभाव्य भ्रूसङ्कोचनादिना तत्स्मरणमभिनीयेत्यर्थः। एवं युष्मदादेश ईदृशी

(ঠ) অতএব মাননীয় প্রিয়সুহৃদ ভবভূতি, স্বরচিত মালতীমাধব-নামে যে প্রকরণ আমাদের নিকট দিয়াছেন, তাহাই আমরা ভগবান্ কালপ্রিয়নাথের সম্মুখে অভিনয়দ্বারা প্রকাশ করিতে উদ্যত হইয়াছি। অতএব সকল নটগণ সঙ্গীতের অনুষ্ঠানদ্বারা আমার অভীষ্ট সম্পাদন করিবার নিমিত্ত প্রবৃত্ত হউন।

(१) तत इत्यादिः प्रवर्त्तन्तामित्यन्तः पाठः क्वचिन्नास्ति।

जरत्परिव्राजिकायास्तु कामन्दक्याः प्रथमभूमिकां भाव एवाधीते, तदन्तेवासिन्यास्त्वहमवलोकितायाः (१)। (ड)

सूत्र। ततः किम्?। (ढ)

नटः। ततः प्रकरणनायकस्य मालतीवल्लभस्य माधवस्य वर्णिकापरिग्रहः कथम्?। (ण)

तवाज्ञा क्रियते अनुष्ठीयते। अन्यरूपेणान्यस्य प्रवेशो भूमिका वेशान्तरपरिग्रह इति यावत्। वर्गे भवा वर्ग्या नटपक्षगताः; पाठिताः शिक्षादानेन अभ्यासिताः। सौगत-जरत्परिव्राजिकाया बौद्धवृद्धसन्न्यासिन्याः कामन्दक्याः कामन्दकीनाम्न्याः प्रथमभूमिकाम् आद्यवेशभाषादिकं भावो विद्वान् भवानेवेत्यर्थः। अधीते अभ्यस्यति। तदन्तेवासिन्याः कामन्दकीशिष्यायाः, अवलोकितायाः तदाख्यायाः कस्याश्चित् स्त्रियाः। एतेन तदानीमपि नाटकाद्यभिनये पुरुषाणां स्त्रीजातीयभूमिकापरिग्रह आसीदिति प्रतीयते।

भूमिकामाह भरतः—"अन्यरूपैर्यदन्यस्य प्रवेशः स तु भूमिका।"

कामन्दकी कामन्दककृता नीतिः तां वेत्तीति कामन्दकी। एतेनास्या नीतिज्ञता सूच्यते। क्रियत इति भविष्यत्सामीप्ये वर्त्तमाना, अधीते इति तु अतीतसामीप्ये।

(ढ) सूत्रेति। ततस्तदनन्तरं किं तद्ब्रूहीति शेषः।

(ড) নট। (স্মরণ করিয়া) আপনার আদেশ এই পালন করিতেছি; কিন্তু যাহার যে পাঠ সঙ্গত হয়, তাহা সেই ভাবেই সকল নটদিগকে শিখান হইয়াছে; তন্মধ্যে বৃদ্ধ বৌদ্ধসন্ন্যাসিনী কামন্দকীর প্রথম পাঠ আপনিই অভ্যাস করিয়াছেন, আর তাহার শিষ্যা অবলোকিতার পাঠ আমি অভ্যাস করিয়াছি।

(ঢ) সূত্রধার। তাহার পর কি?।

---

(१) नटः। तावद्भूमिकास्तथैव भावेन सर्वे वर्ग्याः पाठिताः। सौगतजरत्परि-व्राजिकायाः कामन्दक्यास्तु प्रथमां भूमिकां भाव एक एवाधीते, तदन्तेवासिन्यास्त्वह-मवलोकितायाः। इति पाठभेदः।

सूत्र। मकरन्दकलहंस-(१) प्रवेशावसरे तत् सुविहितम्। (त)
नटः। तर्हि तत्प्रसिद्धप्रयोगा (२) देवात्रभवतः सामाजिकानुपास्महे। (थ)

(ण) नट इति। वर्णिकापरिग्रहः भूमिकाग्रहणं कथं केन प्रकारेण निष्पद्येतेति शेषः। माधवभूमिका कस्य निर्द्दिष्टेति न जानामीति भावः।

(त) सूत्रेति। मकरन्दो नाम माधवस्य मित्रम्, कलहंसो नाम माधवस्य दासः। तयोः प्रवेशावसरे रङ्गालये समुपस्थितिसमये, तत् माधवभूमिकाग्रहणं सुविहितं सम्यक् सम्पादितम्। मकरन्दकलहंसयोः प्रवेशानन्तरमेव कश्चिदुपयुक्तो नटः माधवभूमिकां परिगृह्य प्रवेक्ष्यतीति सर्व्वमादितः कर्त्तव्यं यथायथं मया सम्पादितं न किञ्चिदवशिष्यत इति भावः।

अत्र प्रस्तावनातः परं प्रथमं कामन्दक्यवलोकितयोः, ततः कलहंसमकरन्दयोः, ततश्च माधवस्य प्रवेशसूचनार्थं नटसूत्रधारयोः "या यस्य" इत्याद्युक्तिप्रत्युक्तय इति बोध्यम्। तथा च भरतः—

"नासूचितं विशेत् पात्रम्।"

(थ) नट इति। तर्हि सर्व्वेषां यथायथं सम्पादितत्वे सति। तत्प्रसिद्धप्रयोगादेव लोकप्रथिततत्प्रकरणाभिनयादेव। सामाजिकान् सभ्यान् उपास्महे सन्तोषयामः।

(ণ) নট। তাহার পর প্রকরণের নায়ক ও মালতীর প্রিয়তম মাধবের পাঠ কি প্রকারে সম্পন্ন হইবে?।

(ত) সূত্রধার। মকরন্দ ও কলহংসের প্রবেশের সময়ে যথানিয়মে তাহার ব্যবস্থা করিয়া রাখিয়াছি।

(থ) নট। তবে সেই প্রসিদ্ধ প্রকরণের অভিনয় করিয়াই মাননীয় সভাদিগকে সন্তুষ্ট করিব।

(१) कलहंसमकरन्दयोरिति पाठान्तरम्।

(२) तत्प्रबन्धप्रयोगादिति पाठभेदः।

सूत्र । वाढ़म् । एषोऽस्मि कामन्दकी संवृत्तः । (द)

नटः । अहमप्यवलोकिता । (ध)

इति निष्क्रान्तौ (१) ।

## प्रस्तावना । (न)

(द) सूत्रेति । वाढ़मिति प्रतिज्ञायां कर्त्तव्यावधारणस्यैव प्रतिज्ञापदार्थत्वात् तदेव कुर्म्म इत्यर्थः । एषोऽहं सूत्रधारः कामन्दकी संवृत्तोऽस्मि सूत्रधारवेशपरित्यागानन्तर-कामन्दकीवेशपरिग्रहेण कामन्दकीभवामीत्यर्थः ।

"भृशप्रतिज्ञयोर्वाढ़म्" इत्यमरः । अस्मीति भविष्यत्सामीप्ये वर्त्तमाना । कामन्दकीति विधेयप्राधान्यात् संवृत्त इत्यस्य स्त्रीत्वप्रसक्तेऽपि "उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्ये"ति काशिकाप्रामाण्यात् पुंस्त्वम् । आख्यातस्य प्रधानक्रियाया इति तदर्थः ।

(ध) नट इति । अहमप्यवलोकिता संवृत्तोऽस्मीति शेषः । तद्वत् वेशपरिवर्त्तना-दिति भावः ।

(न) प्रेति । प्रस्तावयति प्रस्तुतविषयमुत्थापयति या वाक्यावली सा प्रस्तावना । तथा च साहित्यदर्पणे—

"नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥"

सा चेयं प्रयोगातिशयरूपा एव इत्युपक्षेपात् । तथा च दशरूपके—

(দ) সূত্রধার। তাহাই করিব। এই আমি কামন্দকী হইলাম।

(ধ) নট। আমিও অবলোকিতা হইলাম।

( উভয়ের প্রস্থান। )

(ন) প্রস্তাবনা।

(१) इति परिक्रम्य निष्क्रान्तौ इति पाठः क्वचित् ।

ततः परिवृत्य रक्तपटिकानेपथ्ये कामन्दक्यवलोकिते प्रविशतः (१) (प) ।

कामन्दकी । वत्से ! अवलोकिते ! । *

अवलोकिता । आणवेदु भअवदी । (फ)

(फ) आज्ञापयतु भगवती ।

"एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः ॥"

साहित्यदर्पणमतेऽपि प्रयोगातिशय एव "या यस्य" इत्यादिप्रकृताभिनयपरिपाटीकथन-प्रयोगमतिक्रम्य "एषोऽस्मि" इत्यादिना प्रयोगेण पात्रप्रवेशस्य सूचितत्वात् । तथा च दर्पणे—

"यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥"

एतत् प्रपञ्चस्तु अस्मत्प्रणीतोत्तररामचरितटीकायां द्रष्टव्यः ।

(प) तत इति । परिवृत्य पुनरागत्य, रक्तपटिका लोहितवस्त्रं नेपथ्यं वेशो ययोस्ते । सूत्रधारनटयोरेव रक्तवस्त्रपरिधानात् परं कामन्दक्यवलोकितारूपेण प्रवेश इति सूचनार्थं परिवृत्येत्युक्तम् ।

* "संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च" इति साहित्यदर्पणात् कामन्दकी संस्कृतं पठतीति बोध्यम् ।

(फ) अवेति । भगवती तपःप्रभावात् माहात्म्यवती । तथा चोक्तमभियुक्तैः—

"देवाश्च लिङ्गिनश्चैव नानाश्रुतिधराश्च ये ।
भगवानिति ते वाच्याः पुरुषाः स्त्रिय एव च ॥"

अत्र रक्तपटलिङ्गित्वादेव कामन्दक्यां भगवत्पदप्रयोगः । एवमन्यापि बोध्यम् । "शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् ।" इत्युक्तेरवलोकिता शौरसेनीं पठति ।

(प) ( তাহার পর কামন্দকী ও অবলোকিতা রক্ত বস্ত্র পরিধান করিয়া পুনরায় আসিয়া প্রবেশ করিল। )

কামন্দকী। বৎসে! অবলোকিতে!।

(१) परिवृत्य रक्तपटिकानेपथ्यावुभावुपविष्टौ प्रविशत इति पाठान्तरम् ।

काम। अपि नाम तयोः कल्याणिनोर्भूरिवसुदेवरातापत्ययोर्मालतीमाधवयोरभिमतः पाणिग्रहः स्यात् (१)। वामाचिस्पन्दनं सूचयित्वा सहर्षम्—(ब)

विज्ञापयतीव कल्याणमान्तरङ्गेन चक्षुषा।
स्फुरता वामकेनापि दाक्षिण्यमवलम्ब्यते ॥८॥

(ब) कामेति। अपिशब्दः शङ्कायाम्। नामशब्दः सम्भावनायाम्। कल्याणिनोर्मङ्गलास्पदयोः। अभिमतः परस्पराभिप्रेतः। पाणिग्रहो विवाहः।

अत्र मालतीमाधवयोर्विवाहरूपमुख्यफलसिद्धये कामन्दक्या औत्सुक्यादारम्भो नाम अवस्था। यथा साहित्यदर्पणे—

"भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये।"

तथा तयोर्विवाहहेतुभूतः परस्परानुरागो बीजम्। (स चानुरागः प्रथमाङ्के माधवस्य, द्वितीयाङ्के च मालत्या व्यक्तिर्भविष्यति।) तथा च तत्रैव—

"अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति।
फलस्य प्रथमो हेतुर्बीजं तदभिधीयते॥"

तेन चारम्भबीजवत्त्वात् इतःप्रभृति द्वितीयाङ्कसमाप्तिपर्यन्तो मुखसन्धिः। यथा तत्रैव—

"यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्॥"

अस्याङ्गानि यथास्थानं वक्ष्यन्ते।

विज्ञापयतीति। आन्तरङ्गेनेव 'मालतीमाधवयोः पाणिग्रहणं सम्पद्येत न वा' इति

---

(फ) অবলোকিতা। আদেশ করুন ভগবতী।

(ব) কামন্দকী। ভূরিবসু ও দেবরাতের সন্তান কল্যাণভাজন সেই মালতী ও মাধবের পরস্পর অভিলষিত পরিণয় হইবে কি?। (বাম-নয়ন-স্পন্দন-অভিনয় করিয়া সহর্ষ)—

---

(१) पाणिग्रहमङ्गलं स्यात् इति पाठभेदः।

अव। महन्तो क्खु भअवदीए चित्तावक्खेओ (१)। अच्चरीअं अच्चरीअं, जं दाणिं चीरचीवरपरिच्छदं पिण्डपादमेत्तपाणउत्तिं (२) वि भअवदीं ईरिसेसु आआसेसु अमच्चभूरिवसू णिओएदि। तहिं उक्खण्डिदसंसारावग्गहो तुम्हेहिं वि अप्पा णिक्खिविअदि। (भ)

(भ) महान् खल्वेष भगवत्याश्चित्तावक्षेपः। आश्चर्य्यमाश्चर्य्यम्, यदिदानीं चीरचीवरपरिच्छदां पिण्डपातमात्रप्राणवृत्तिमपि भगवतीं ईदृशेषु आयासेषु अमात्यभूरिवसुर्नियोजयति। तस्मिन् त्वखण्डितसंसारावग्रही युष्माभिरप्यात्मा निक्षिप्यते।

मम संशयरूपामन्तःकरणवृत्तिमवगच्छतेव सता स्फुरता स्पन्दमानेन अतएव कल्याणं मालतीमाधवयोर्विवाहनिर्व्वाहरूपं भाविमङ्गलं विवृण्वता सूचयता वामकेनापि सव्येनापि पक्षे प्रतिकूलेनापि चक्षुषा दाक्षिण्यं सव्येतरत्वं पक्षे अवश्यम्भावितासूचनेन उद्यमजननादानुकूल्यम्, अवलम्ब्यते आश्रीयते। मदीयं वामं चक्षुः 'मालतीमाधवयोर्विवाहो निष्पद्येत न वा' इति संशयानाहं दुःखमनुभवामीति ज्ञात्वेव स्फुरितं सत् तस्यावश्यम्भावितां सूचयति, सुतरामाश्वस्तोऽस्मीति सरलार्थो भावार्थश्च।

अत्र श्लेषेण समाधानाद्विरोधाभासोऽलङ्कारः, भावाभिमानिनी वाच्या क्रियोत्प्रेक्षा च, अनयोरङ्गाङ्गिभावेन सङ्करः।

स्त्रीणां वामाक्षिस्पन्दनं शुभसूचकमिति सामुद्रके द्रष्टव्यम्। वामकेनेति अनुकम्पायां कः। पथ्यावक्त्रं वृत्तम् ॥८॥

(भ) अवेति। चित्तस्य अवक्षेप आकर्षणं मालतीमाधवयोर्विवाहं प्रतीति शेषः। चीरं वल्कलं तदेव चीवरं भिक्षुचितं वस्त्रं तदेव परिच्छदः आवरणं यस्यास्ताम्। पिण्डस्य भिक्षालब्धान्नग्रासस्य पातमात्रेण उदरे निक्षेपमात्रेण प्राणवृत्तिर्जीवनधारणं

আমার মনের সংশয় জানিয়াই যেন স্পন্দিত হইয়া শুভসূচনা করতঃ চক্ষু বাম হইয়াও দাক্ষিণ্য অবলম্বন করিতেছে ॥৮॥

(१) चित्तविक्खेवी इति पाठभेदः। (२) पाणधन्तीं इति क्वचित् पाठः।

काम। वत्से! मा मैवं ब्रूहि (१)।

यन्मां विधेयविषये स भवान् नियुङ्क्ते
स्नेहस्य तत्फलमसौ प्रणयस्य सारः।
प्राणैस्तपोभिरथवाऽभिमतं मदीयैः
कृत्यं घटेत सुहृदो यदि तत् कृतं स्यात् ॥८॥

यस्यास्ताम्। ईदृशेषु मालतीमाधवयोर्योजनाय नियतयातायातादिरूपेषु आयासेषु परिश्रमेषु। तस्मिन् नियोगे। उत्खण्डितः परित्यक्तः संसारः सांसारिककार्य्यरूपः अवग्रहः मुक्तिप्रतिबन्धको येन सः, तादृशोऽपि आत्मा निक्षिप्यते समर्प्यते। एतत् हयमेवाश्चर्य्यमिति भावः।

"चीरं (क्ली) वृक्षत्वक्।" "चीवरं (क्ली) भिक्षावस्त्रम्।" अवग्रहः (पुं) प्रतिबन्धकः।" इति च शब्दकल्पद्रुमः।

यदिति। स भवान् पूजनीयो भूरिवसुः विधेयविषये कर्त्तव्यविवाहायोजनविषये मां यत् नियुङ्क्ते व्यापारयति, तत् नियोजनं स्नेहस्य मां प्रति प्रीतेः फलम्, तथा असौ नियोगः प्रणयस्य मां प्रति विश्वासस्य सारः श्रेष्ठांशः। अतीवस्निग्धविश्वस्तजनं विना अन्यस्य ईदृशकार्य्ये नियोगो न श्रेयस्कर इति तन्नियोगो नाश्चर्य्यजनक इति भावः। ननु तथात्वेऽपि निवृत्तिमार्गावलम्बिनी त्वमितः स्वतः कथं न निवर्त्तसे इत्याह प्राणैरिति।

---

(ভ) অবলোকিতা। আপনার মনের বড়ই আকর্ষণ দেখিতেছি। কি আশ্চর্য্য! যে এখন আপনি বৃক্ষের বল্কলমাত্র পরিধান করেন এবং ভিক্ষালব্ধ অন্নদ্বারা জীবন ধারণ করেন, তথাপি অমাত্য ভূরিবসু আপনাকে এইরূপ পরিশ্রমে নিযুক্ত করিয়াছেন। আপনিও মুক্তির প্রতিবন্ধক-সাংসারিক-কার্য্যত্যাগী হইয়া তাহাতেই আত্মাকে নিযুক্ত করিয়াছেন।

কামন্দকী। বৎসে! না না, এরূপ বলিও না।

(१) ब्रूहीति पाठः कुत्रचिन्नास्ति।

अयि! किं न वेत्सि, यदेकत्र (१) नो विद्यापरिग्रहाय नानादिगन्तवासिनां साहचर्य्यमासीत्, (२) तदैव चास्मत् सौदामिनीसमक्षमनयोर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञा अवश्य-मावाभ्यामपत्यसम्बन्धः कर्त्तव्य इति। तदिदानीं विदर्भराज-

मदीयैः प्राणैः अथवा ततोऽप्युत्कृष्टैः तपोभिः यदि सुहृदो भूरिवसोः अभिमतम् अभिलषितं कृत्यं राज्ञोऽज्ञातभावेन मालतीमाधवयोर्विवाहरूपं कार्य्यं घटेत सम्पद्येत, तदा तत् सङ्घटनं कृतं स्यात् मया प्रशस्तमेकं कार्य्यं विहितं भवेत्। जीवनतपोभ्यामपि बन्धु-प्रयोजनसाधनमावश्यकमिति अहमपि गाढ़ोद्यमेन प्रवृत्तेति भावः।

"प्रणयः प्रेम्णि विश्रम्भे याञ्चाप्रसरयोरपि" इति विश्वः।

वसन्ततिलका वृत्तम् ॥९॥

(अ) ननु भूरिवसोरपि माधवाय सुतामर्पयितुं कथमयं निर्बन्धातिशय इत्याह— अयीति। अयीति सानुनयसम्बोधने। एकत्र एकाध्यापकसमीपे नः अस्माकं विद्यापरि-ग्रहाय अध्ययनाय नानादिगन्तवासिनां विभिन्नदेशवासिनां साहचर्य्यं सम्मेलनम्। वयञ्च अहञ्च "वास्मदश्च" इति बहुवचनम्, सौदामिनी तदाख्या काचन सन्न्यासिनी च तयोः समक्षं प्रत्यक्षम्। वृत्ता जाता। काऽसौ प्रतिज्ञेत्याह अवश्यमिति। आवाभ्यां भूरिवसुदेवराताभ्याम् अपत्यसम्बन्धः सति सम्भवे स्वस्वकन्यापुत्रयोर्विवाहसम्बन्धः। इति प्रतिज्ञा वृत्तेत्यन्वयः।

माननीয় ভূরিবসু, কর্ত্তব্যকার্য্যে আমাকে যে নিযুক্ত করিয়াছেন, সে কেবল স্নেহের ফল ও বিশ্বাসের পরাকাষ্ঠা। অতএব প্রিয়সুহৃদ ভূরিবসুর অভীষ্ট কার্য্য, যদি আমার প্রাণ অথবা তপস্যাদ্বারাও সিদ্ধ হয়, তবে সে একটা উত্তম কার্য্য করা হয় ॥৯॥

(অ) বৎসে! তুমি কি জান না যে, আমরা নানাদেশবাসী ছিলাম; কিন্তু বিদ্যাশিক্ষার নিমিত্ত আমাদের একস্থানে সম্মিলন হইয়াছিল; তখন আমার ও সৌদামিনীর সমক্ষে ঐ ভূরিবসু ও দেবরাতের

(१) यद्देवेति पाठान्तरम्। (२) नानादिगन्तवासस्साहचर्य्यमासीदिति पाठभेदः।

मन्त्रिणा सता देवरातेन माधवं पुत्रमान्वीक्षिकीश्रवणाय कुण्डिन-
पुरादिमां पद्मावतीं प्रहिण्वता सुविहितम्। (म)

अपत्यसम्बन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः स्मृतिञ्च।
अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च ॥१०॥

देवेन रातो देवेनानुग्रहेण दत्त इति देवरातस्तेन देवरातनाम्ना सहाध्यायिना। अन्वीक्षकः सूक्ष्मदर्शी गौतमस्तस्येयमित्यान्वीक्षिकी न्यायविद्या, तस्याः श्रवणाय अध्ययनाय कुण्डिन-पुरात् कुण्डिनाख्यविदर्भराजधानीतः पद्मावतीं पद्मावतीनाम्नीमिमां राजधानीं प्रहिण्वता प्रेरयता सुविहितं सुष्ठु कृतम्।

कथं सुविहितमित्याह—अपत्येति। अपत्ययोः स्वस्वकन्यापुत्रयोर्यः सम्बन्धविधिः विवाहकार्य्यं तस्य प्रतिज्ञा प्रियस्य सुहृदः प्रियमित्रस्य भूरिवसोः स्मृतिं स्मरणं नीता प्रापिता च देवरातेनेति शेषः। भूरिवसोः सत्यामपि कन्यायां विवाहोपयोगिन्यां तदपत्योल्लेखा-भावेन तत्प्रतिज्ञाविस्मरणानुमानात् माधवप्रदर्शनद्वारा तत्प्रतिज्ञास्मरणार्थम् अध्ययनस्थानान्तर-मपहाय माधवोऽत्रैव देवरातेन प्रेषित इति भावः। अलोकसामान्या असाधारणा गुणा विद्यासौन्दर्य्योदयो यस्येति स तादृशः तनूजः स्वपुत्रो माधवः प्ररोचनार्थं माधवाव-लोकनानन्तरं कन्यायाः पतित्वेन भूरिवसोश्च जामातृत्वेन रुच्युत्पादनार्थं प्रकटीकृतः प्रकाशितश्च। माधवमवलोक्य मालत्यास्तस्मिन् पतित्वेन भूरिवसोश्च जामातृत्वेन रुचि-र्भविष्यतीत्येतदपि माधवप्रेरणे देवरातस्याभिप्रायान्तरमिति भावः।

अत्र "धुनोति चासिं तनुते च कीर्त्तिम्" इत्यादिवत् क्रियासमुच्चयोऽलङ्कारः।

"कर्त्तव्यत्वप्रकारकज्ञानानुकूलव्यापारः प्रतिज्ञा" इत्यनुमितिग्रन्थे गदाधरभट्टाचार्य्याः।

उपेन्द्रवज्रा वृत्तम्—"उपेन्द्रवज्रा प्रथमे लघौ सा" इति लक्षणात् ॥१०॥

এই প্রতিজ্ঞা হইয়াছিল যে, আমরা অবশ্যই সন্তানের সম্বন্ধ করিব। সুতরাং দেবরাত এখন বিদর্ভরাজের মন্ত্রী হইয়া পুত্র মাধবকে ন্যায়শাস্ত্র পড়িবার জন্য স্বকীয় কুণ্ডিননগর হইতে এই পদ্মাবতীনগরীতে পাঠাইয়া ভাল কাজ করিয়াছেন। (কারণ,)

अव। तदो किंत्ति मालदीं अमच्चो अप्पणा माहवस्स ण पड़िवादेदि, जेण चोरिअविवाहे भअवदीं तुवरावेदि। (य)

काम। तां याचते नरपतेर्नर्म्मसुहृन्नन्दनो नृपमुखेन।
तत्साक्षात्प्रतिषेधः कोपाय शिवस्त्वयमुपायः ॥११॥

(य) ततः किमिति मालतीममात्य आत्मना माधवस्य न प्रतिपादयति, येन चौर्य्य-विवाहे भगवतीं त्वरयति।

(य) अवेति। ततस्तदा माहशप्रतिज्ञाया जातत्वे सतीत्यर्थः। अमात्यो भूरिवसुः, आत्मना स्वयम्। प्रतिपादयति ददाति। चौर्य्येण गुप्तभावेनेत्यर्थः यो विवाहस्तस्मिन्। भगवतीं त्वां त्वरयति सत्वरीकरोति।

अवलोकितोक्तमुत्तरमाह तामिति। नरपतेः भूरिवसोरिवाश्रयीभूतस्य राज्ञः नर्म्म-सुहृत् हासपरिहासादेः सखा विदूषक इत्यर्थः नन्दनो नन्दननामा कश्चिज्जनः नृपमुखेन तन्नरपतिद्वारा तां मालतीं याचते आत्मने अर्पयितुं प्रार्थयति भूरिवसुमिति शेषः। तस्या याञ्चायाः साक्षात्प्रतिषेधः 'नन्दनाय मालतीं न ददामि' इति वाक्येन भूरिवसोर्निषेधः कोपाय अनुरोधप्रत्याख्यानेन स्वस्यैव राज्ञः क्रोधजननाय सम्पद्यत इति शेषः। तु किन्तु अयं मच्चेष्टया गुप्तभावेन विवाहरूपः उपायः राजानुरोधखण्डनोपायः शिवः कल्याणप्रदः। मालतीमाधवयोरन्योन्यनिभृतानुरागजनितोऽयं विवाहो निष्पन्नः न तु ममाभिप्रायेणेति वदन् भूरिवसुर्नरपतेः क्रोधादव्याहतिं प्राप्स्यतीति भावः।

সন্তানের পরিণয়সম্বন্ধীয় প্রতিজ্ঞাটী প্রিয়সুহৃদ ভূরিবসুকে স্মরণ করাইয়া দিয়াছেন এবং লোভ জন্মাইবার জন্য অসাধারণ গুণসম্পন্ন পুত্রকে ভূরিবসুর নিকট প্রকাশ করিয়াছেন ॥১০॥

(য) অবলোকিতা। তাহা হইলে অমাত্য ভূরিবসু, আপনিই মালতীকে মাধবের হস্তে দান করেন না কেন? যে, আপনাকে তাহাদের গুপ্তবিবাহে ত্বরিত করিতেছেন।

কামন্দকী। রাজার হাস-পরিহাসের সখা নন্দন, রাজা দ্বারাই

अव। अच्चरीअं अच्चरीअं ण क्खु अमच्चो माहवस्स णामं वि जाणादित्ति णिरवेक्खदाए (१) लक्खीअदि। (र)

काम। वत्से! संवरणं हि तत्। (ल)

(र) आश्चर्य्यमाश्चर्य्यम्। न खल्वमात्यो माधवस्य नामापि जानातीति निरपेक्ष-तया लक्ष्यते।

अत्र नरपतेरित्युक्त्वा पुनर्नृपेत्युक्तत्वात् पुनरुक्ततादोषः, स तु 'नन्मुखेन' इति पाठेन समाधेयः।

आर्य्या जातिः—"यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या॥"

इति लक्षणात्॥११॥

(र) अवेति। अमात्यो भूरिवसुः। निरपेक्षतया पूर्व्वप्रतिज्ञाया माधवस्य च उल्लेखस्याप्यभावेनेत्यर्थः।

(ल) कामेति। तत् अज्ञानं पूर्व्वप्रतिज्ञामाधवयोर्नाम्नोऽप्यनुल्लेखनमित्यर्थः संवरणं हि प्रकृताभिप्रायगोपनमेव। अन्यथा तत्प्रतिज्ञामाधवयोरुल्लेखे राजा यदि प्रतिबध्नीयादिति भावः।

मालतीকে প্রার্থনা করিতেছেন; প্রত্যক্ষভাবে সেই প্রার্থনার নিষেধ করা রাজার কোপের কারণ হইয়া দাঁড়ায়; কিন্তু এই উপায়টী মঙ্গলকর হয়॥১১॥

(র) অবলোকিতা। কি আশ্চর্য্য! অমাত্য ভূরিবসু যেন মাধবের নামও জানেন না, তাঁহার ঔদাসীন্যে ইহাই লক্ষ্য হইতেছে।

(ল) কামন্দকী। বৎসে! সে ঔদাসীন্য কেবল মনের ভাব গোপন করা।

(१) निरपेक्खदा इति पाठान्तरम्।

विशेषतस्तु बालत्वात्तयोर्विवृतभावयोः ।
तेन माधवमालत्योः कार्य्यः स्वमतिनिह्नवः ॥१२॥

अपि च, (व)

अनुरागप्रवादस्तु वत्सयोः सार्वलौकिकः ।
श्रेयो ह्यस्माकमेवं हि प्रतार्य्यौ राजनन्दनौ (१) ॥१३॥

इतोऽप्यज्ञानमभिनेतव्यमित्याह विशेषत इति। तेन भूरिवसुना, बालत्वादल्पवयस्कत्वेनापरिणतबुद्धित्वात् अमात्यबुद्धेरियत्तामजानानत्वादित्यर्थः विवृतः प्रकाशितः भावः परस्परानुरागो याभ्यां तयोः, तयोर्माधवमालत्योः सम्बन्धे विशेषतो बाहुल्येन स्वमतेः मालतीमाधवयोरन्योन्यानुरागो जात इत्यात्मबुद्धेः निह्नवो गोपनं कार्य्यः कर्त्तव्यः। अन्यथा अमात्येनावयोर्जातानुरागो ज्ञात इत्यवगत्य यदि मालतीमाधवौ लज्जावशात् भयाद्वा जातानुरागोद्यमतो विरम्य अन्यत्रानुरज्येतां तदा स्वकीयप्रतिज्ञाभङ्गप्रसङ्ग इति भावः। समासविधेरनित्यत्वात् माधवशब्दस्य पूर्वनिपातः ॥१२॥

(व) अपि चेति। अपि च अन्यच्च, अज्ञानाभिनये कारणान्तरञ्चास्तीत्यर्थः।

किन्तदित्याह अनुरागेति। वत्सयोर्मालतीमाधवयोः अनुरागप्रवादः परस्परासक्तिवृत्तान्तः सार्वलौकिकः प्रायेण नगरस्थजनेषु प्रथितः। सुतरां राज्ञोऽपि कर्णगोचरीभूत इति सम्भाव्यत इति भावः। हि यस्मात् राजनन्दनौ राजा स्वकीयो नरपतिः नन्दनस्तस्य विदूषकः तौ, प्रतार्य्यौ मालतीमाधवयोर्गान्धर्व्वविवाहसम्पादनेन वञ्चनीयौ। एवं हि अनेनैव प्रकारेण अस्माकं श्रेयो मङ्गलमभिप्रेतसिद्धिर्भवेदित्यर्थः। मालतीमाधवयोरनुरागमहं जानामीति चेदमात्यः प्रकाशयेत्तदा राजा माधवाय दानाशङ्कया नन्दनाय

মালতী ও মাধব বালক বলিয়া পরস্পর অনুরাগ প্রকাশ করিয়াছে; সুতরাং ভূরিবসুর পক্ষে বিশেষরূপে নিজের অভিপ্রায় গোপন করাই উচিত ॥১২॥

(ব) ঔদাসীন্য অবলম্বন করার প্রতি অন্য কারণও আছে।

(१) श्रेयोऽप्यस्माकमिति पाठान्तरम् ।

पश्य, (अ)

वहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्
पराभ्यूहस्थानान्यपि लघुतराणि (१) स्थगयति।
जनं विद्वानेकः सकलमभिसन्धाय (२) कपटैः
तटस्थः स्वानर्थान् घटयति च मौनञ्च भजते ॥१४॥

दातुं दृढ़तरमनुरोधमारभेत इतरथा तु राज्ञस्तादृशानुरोधाभावात् इतोऽपि गान्धर्व्वविवाहस्य निष्पत्स्यमानत्वात् परञ्च निजाज्ञातत्वप्रकाशेन राज्ञः क्रोधपरिहारसम्भवात् अभिप्रेत-सिद्धिर्भविष्यतीति भावः।

"अभिप्रेतसिद्धिर्मङ्गलम्" इति तिथितत्त्वे स्मार्त्तः ॥१३॥

(अ) पश्येति। इयमेव सङ्कटे बुद्धिमतो रीतिरिति प्रतिपादयितुमाह पश्येति। कासौ रीतिरित्याह वहिरिति। एको विद्वान् श्रेष्ठो बुद्धिमान् जनः वहिः प्रकाश्यभावे सर्वाकारेण सर्व्वेण प्रकारेण प्रगुणेन भावप्रधानोऽयं निर्द्देशः सर्वेषामनुकूल-भावेनेत्यर्थः रमणीयं सुन्दरं व्यवहरन् समाचरन् लघुतराण्यपि अल्पान्यपि परेषामन्येषाम् अभ्यूहस्थानानि वितर्कस्थलानि संशयविषयान् आत्मच्छिद्राणीति यावत् स्थगयति संवृणोति। अन्ये यथा आत्मच्छिद्राणि वेदितुं नार्हन्ति तथाचरतीति सरलार्थः। तथा कपटैः छलैः सकलं जनम् अभिसन्धाय वञ्चयित्वा स्वयं तटस्थ उदासीन इव सन् स्वानर्थान् स्वकीय-प्रयोजनानि घटयति साधयति च तथा मौनं तूष्णीम्भावं भजते अवलम्बते च वागाड़म्बरं न करोतीत्यर्थः। महाबुद्धिमान् भूरिवसुरपीदानीमीदृशेवाचरतीति भावः।

अत्राप्रस्तुतात् जनसामान्यात् प्रस्तुतस्य विशेषस्य भूरिवसोः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः। तटस्थ इति प्रतीयमानोत्प्रेक्षा, तथा स्थगयतिप्रभृतीनामनेकक्रियाणामेककर्त्तृकारकत्वा-

বৎস মালতী ও মাধবের অনুরাগের প্রবাদ সর্ব্বজন প্রসিদ্ধ ; সুতরাং রাজা ও নন্দনকে প্রতারিত করিতে হইবে, ইহাতেই আমাদের অভীষ্ট-সিদ্ধি হইবে ॥১৩॥

(१) तनुतराणीति पाठभेदः। (२) सकलमतिसन्धायेति क्वचित् पाठः।

অব। মএ বি তুম্হবঅণাদো তেণ তেণ বঅণোবন্নাসেণ (১) ভূরিবসুমন্দিরাসন্ন-(২) রাঅমগ্গেণ মাহবো সঞ্চারীঅদি। (ষ)

কাম। কথিতমেব নো মালতীধাত্রেয়্যা লবঙ্গিকয়া। (স)

(ষ) মযাপি যুষ্মদ্বচনাৎ তেন তেন বচনোপন্যাসেন ভূরিবসুমন্দিরাসন্নরাজমার্গেণ মাধবঃ সঞ্চার্য্যতে।

দ্বীপকঞ্চ ইত্যেতেষামঙ্গাঙ্গিভাবেন সঙ্করঃ। লঘুতরাণীত্যতঃ পূর্ব্বমপিশব্দস্য পাঠেঽপি সমভি-ব্যাহারান্ন অক্রমতাদোষঃ। চকারদ্বয়ং প্রত্যেকপ্রাধান্যসূচনার্থম্।

শিখরিণীবৃত্তম্—"রসৈরুদ্রৈশ্ছিন্না যমনসভলাগঃ শিখরিণী" ইতি লক্ষণাৎ॥১৪॥

(ষ) অবেতি। যুষ্মদ্বচনাৎ তবাদেশাৎ। তেন তেন ত্বদুপদিষ্টরূপেণ বহুবিধেন বচনোপন্যাসেন 'মনোহরোঽয়ং রাজপথঃ, উভয়পার্শ্বে চাস্য বহূনি সুহর্ম্ম্যাণি সন্তি অসকৃৎপর্য্যটনেন তান্যবলোকয়' এবংবিধবাক্প্রকাশেন। সঞ্চার্য্যতে যাতায়াতং কার্য্যতে। মন্দিরাসন্নেত্যনেন মালত্যা দর্শনসুযোগঃ, রাজমার্গেণেত্যনেন মাধবস্য গমনাগমনে সঙ্কোচা-ভাবঃ, অন্যেষাঞ্চ সংশয়রাহিত্যং ব্যজ্যতে।

(শ) দেখ, অদ্বিতীয় বুদ্ধিমান্ লোক, বাহিরে সকল প্রকার আনুকূল্যদ্বারা সুন্দর আচরণ করিয়া, পরের অল্পমাত্র সন্দেহ স্থলগুলিকেও আবরণ করিয়া থাকেন এবং স্বয়ং উদাসীন থাকিয়াই যেন কপট আচরণ-দ্বারা সকলকে প্রতারিত করিয়া স্বার্থসিদ্ধি করেন, অথ চ আপনি মৌন অবলম্বন করিয়া থাকেন॥১৪॥

(ষ) অবলোকিতা। আমিও আপনার আদেশ অনুসারে, সেই সেই রকম কথাদ্বারা মাধবকে ভূরিবসুর বাড়ীর নিকটবর্ত্তী রাজপথে যাতায়াত করাইতেছি।

(স) কামন্দকী। মালতীর ধাত্রীকন্যা লবঙ্গিকা তাহাই আমার নিকট বলিয়াছে যে,

(১) উবন্নাসেণ ইতি পাঠঃ ক্বচিৎ। (২) মন্দিরাসন্নতররাঅমগ্গেণ ইতি পাঠভেদঃ।

भूयो भूयः सविधनगरीरथ्यया पर्य्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।
साक्षात् कामं नवमिव रतिर्मालती माधवं यत्
गाढ़ोत्कण्ठा लुलितलुलितैरङ्गकैस्ताम्यतीति ॥१५॥

(स) कामेति। नः अस्माकम्। धात्र्या उपमातुरपत्यं स्त्रीति धात्रेयी, मालत्या-धात्रेय्या धात्रीकन्यया। एतेन वयस्यत्वेन तस्या रहस्यवेदित्वं सूच्यते। लवङ्गिकया तदाख्यया कयाचित् स्त्रिया।

किं कथितमित्याह भूय इति। यत् 'ये' इति वङ्गभाषा। भवनस्य मन्दिरस्य या वलभी उपरिस्थं गृहं तस्याः तुङ्गवातायनस्था उच्चगवाक्षद्वारगता मालती रतिः; नवं नूतनं हरनयनाग्निना दाहानन्तरोत्पन्नं साक्षात् कामं प्रत्यक्षं कन्दर्पमिव सविधा मन्दिरा-सन्ना या नगरीरथ्या राजधानीप्रधानमार्गः तया भूयो भूयः वारं वारं पर्य्यटन्तं यातायातं कुर्वन्तं माधवं दृष्ट्वा दृष्ट्वा गाढ़ोत्कण्ठा माधवार्थातीवौत्सुक्यवती सती लुलितलुलितैरति-शयेन लुलितैः मदनान्दोलितैः अङ्गकैर्देहावयवैः ताम्यति म्लाना भवति। इति कथित-मित्यन्वयः। अतएव मालती माधवानुरागिणी जातेति भावः।

अत्र नवं साक्षात्काममिवेति द्रव्योत्प्रेक्षालङ्कारः। सविधनगरीरथ्ययेत्यनेनापि मालत्या दर्शनसुयोगः माधवस्य च निःसङ्कोचेन पर्य्यटनं व्यज्यते, भवनवलभीतुङ्गवातायनस्था इत्यनेन अन्येषां दर्शनासम्भवात् मालत्या माधवस्य पर्य्याप्तावलोकनं ध्वन्यते इति वस्तुना वस्तुध्वनिः।

"शुद्धान्ते वड़भी चन्द्रशालि सौधोर्द्ध्ववेश्मनि।" इति रभसः। "प्रेङ्खोलितस्तरलितो लुलितान्दोलितावपि।" इति शब्दकल्पद्रुमः।

अङ्गकैरित्यनुकम्पायां कप्रत्ययः। मन्दाक्रान्ता वृत्तम् ॥१५॥

রতি যেমন সমক্ষে নবীন কামদেবকে দেখিয়া উৎকণ্ঠিত হইয়া-ছিলেন, সেইরূপ মালতী, বাড়ীর চিলেকোঠার উপরে গবাক্ষ দ্বারে থাকিয়া নিকটবর্ত্তী রাজপথ দিয়া বার বার গমনাগমনকারী মাধবকে দেখিয়া

अव। वाढ़ं। जदो ताएवि उक्कण्ठाविणोदणिमित्तं माहवपड़िच्छन्दश्रं आलिहिदं, तं लवङ्गिआए अज्ज मन्दारिआए हत्थे णिहिदं दाव (१)। (ङ)

काम। विचिन्त्य। सुविहितं लवङ्गिकया, यतो माधवानुचरः कलहंसस्तां विहारदासीं मन्दारिकां कामयते, इत्यनेन (२) तीर्थेन तत्प्रतिच्छन्दकमुपोद्घाताय (३) माधवान्तिकमुपेया-दित्यभिप्रायः। (च)

(ङ) वाढ़ं। यतस्तयाप्युत्कण्ठाविनोदनिमित्तं माधवप्रतिच्छन्दकम् आलिखितं तत् लवङ्गिकया अद्य मन्दारिकाया हस्ते निहितं तावत्।

(ङ) अवेति। वाढ़ं सत्यं ताम्यतीति यदुक्तं तदहमप्यनुमन्ये इत्यर्थः। तयापि मालत्यापि, उत्कण्ठाविनोदनिमित्तं माधवदर्शनविषयकनिजौत्सुक्यनिवृत्तये, माधवस्य प्रतिच्छन्दकं प्रतिरूपं प्रतिमूर्त्तिरिति यावत्, आलिखितं चित्रितम्। तत् मालतीचित्रितं माधवप्रतिच्छन्दकम्।

"वाढ़ं त्रिषु दृढ़े क्लीवम् अनुमत्यामथ त्रिषु" इति नानार्थरत्नमाला।

(च) कामेति। माधवस्य अनुचरः सेवादासः कलहंसनामाख्यः कश्चिज्जनः। विहारस्य बौद्धालयस्य दासीं परिचारिकां मन्दारिकां मन्दारकुसुमवद्दर्शनलोभनीयत्वात्

দেখিয়া অত্যন্ত উৎকণ্ঠিত হইয়া কামকম্পিত দেহে সন্তাপ অনুভব করিতেছে ॥১৫॥

(ঙ) অবলোকিতা। ঠিক্ কথা। যে হেতু, মালতী উৎকণ্ঠা-নিবৃত্তির জন্য মাধবের প্রতিমূর্ত্তি চিত্র করিয়াছেন, লবঙ্গিকা আজ তাহা মন্দারিকার হাতে রাখিয়া আসিয়াছে।

(१) वाढ़ं। तदो ताए उव्वेअविणोअणं माहवपड़िच्छन्दअं अभिलिहिअं लवङ्गिआए मन्दारिआहत्थे अज्ज णिक्खित्तं दाव। इति पाठान्तरम्।

(२) तदनेनेति पाठान्तरम्। (३) उपोद्घातेनेति पाठभेदः।

अव। अज्ज माहवोऽवि कोदूहलमुप्पादिअ मए पउत्त-मअणमहूसवं मअणुज्जाणं पहादे अणुप्पेसिदो। तहिं किल मालदी गमिस्सदि, तदो अण्णोण्णदंसणं भोदुत्ति। (क)

(क) अद्य माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मदनोद्यानं प्रभाते अनुप्रेषितः। तस्मिन् किल मालती गमिष्यति, ततोऽन्योन्यदर्शनं भवत्विति।

तदाख्यां कामयते सम्भोगाय प्रार्थयति, सुतरां तदन्तिके कलहंसस्य नित्ययातायात सम्भाव्यत एवेति भावः। तीर्थेन उपायेन। उपोद्‌घाताय चिन्तितप्रकृतिसिद्धये मालती-माधवयोरन्योन्यासक्तिवृद्धिसिद्धये इत्यर्थः। अभिप्रायः लवङ्गिकाया आशयः। तच्चित्र-फलकं मन्दारिका कलहंसहस्ते दास्यति, सोऽपि च माधवहस्ते दास्यति, माधवोऽपि तत्-प्राप्य मालत्याः कलाकौशलम् आत्मन्यनुरागबाहुल्यञ्चावगत्य तस्यां भृशानुरक्तो भविष्यति, सुतरामस्मदभिप्रेतसिद्धिरवश्यम्भाविनीति सुविहितमेव लवङ्गिकयेति भावः।

"विहारो भ्रमणे स्कन्धे लीलायां सुगतालये" इति मेदिनी। "तीर्थं शास्त्राध्वरक्षेत्रोपायो-पाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्भः स्त्रीरजःसु च विश्रुतम्॥" इति विश्वः।

"चिन्तां प्रकृतसिद्ध्यर्थामुपोद्‌घातं विदुर्बुधाः।" इत्यनुमितौ जगदीशतर्कालङ्कारः।

(क) अवेति। कौतूहलं माधवस्यैव मालतीदर्शनकौतुकम्। अनुप्रेषितः प्रेरयितु-मुपदिष्टः। इति अनेनाभिप्रायेणेत्यर्थः।

(ক্ষ) কামন্দকী। (চিন্তা করিয়া) লবঙ্গিকা ভাল করিয়াছে। কারণ, মাধবের ভৃত্য কলহংস, বৌদ্ধমঠের পরিচারিকা মন্দারিকার প্রতি আসক্ত আছে; এই উপায়ে সেই প্রতিমূর্ত্তি আমাদের অভিলাষসিদ্ধির নিমিত্ত মাধবের নিকট যাইবে, ইহাই লবঙ্গিকার অভিপ্রায়।

(ক) অবলোকিতা। আমি আজ প্রাতঃকালে মালতীকে দেখিবার নিমিত্ত মাধবের কৌতুক জন্মাইয়া, তাহাকে মদনমহোৎসবসম্পন্ন মদনোদ্যানে পাঠাইয়াছি। কারণ, সেখানে মালতী যাইবে, তাহার পর পরস্পর দেখা হইবে।

काम । साधु वत्से ! साधु, अनेन मत्प्रियाभियोगेन स्मारयसि मे पूर्व्वशिष्यां सौदामिनीम् । (ख)

अव । भअवदि ! सा सौदामिणी अहुणा (१) समासादिदअच्चरीअमन्तसिद्धिप्पहावा सिरिपव्वदे कावालिअव्वदं धारेदि । (ग)

काम । कुतः पुनरियं वार्त्ता ? । (घ)

(ग) भगवति ! सा सौदामिनी अधुना समासादिताश्चर्य्यमन्त्रसिद्धिप्रभावा श्रीपर्व्वते कापालिकव्रतं धारयति ।

(ख) कामेति । मत्प्रियाभियोगेण मम सन्तोषजनकाचरणेन । सौदामिनीं विद्युद्वत् उज्ज्वलवर्णत्वात् चञ्चलत्वाद्वा सौदामिनीनाम्नीम् । त्वं सर्व्वथैव सौदामिनीसदृशी चतुरा मत्प्रिया चेति भावः ।

(ग) अवेति । कापालिकव्रतं तन्त्रोपदिष्टवामाचाररूपं नियमं धारयति अवलम्बते । "कापालिकः (पुं)··· वामाचारिविशेषः ।" इति शब्दकल्पद्रुमः । वामाचारमाह आचारभेदतन्त्रे —

"पञ्चतत्त्वं खपुष्पञ्च पूजयेत् कुलयोषितम् ।
वामाचारी भवेत्तत्र वामा भूत्वा यजेत् पराम् ॥"

(घ) कामेति । कुतो जनात् । वार्त्ता प्राप्तेति शेषः ।

---

(ख) कामन्दकी । ভাল বাছা ভাল । আমার এইরূপ সন্তোষজনক কার্য্যদ্বারা তুমি আমার পূর্ব্বের শিষ্যা সৌদামিনীকে স্মরণ করাইয়া দিয়াছ ।

(গ) অবলোকিতা । দেবি ! সেই সৌদামিনী এখন আশ্চর্য্য মন্ত্রসিদ্ধির প্রভাব লাভ করিয়া শ্রীপর্ব্বতে কাপালিকের ব্রত অবলম্বন করিয়াছেন ।

(ঘ) কামন্দকী । এ সংবাদ কোথা হইতে পাইয়াছ ? ।

---

(१) सा दाणिं सौदामिणी इति पाठः पुस्तकान्तरे ।

अव। अत्थि एत्थ णअरे महासमाणप्पदेसे करालाचामुण्डा। (ङ)

काम। अस्ति; या किल विविधजीवोपहारप्रियेति साहसिकानां प्रवादः। (च)

(ङ) अस्ति अत्र नगरे महाश्मशानप्रदेशे करालाचामुण्डा।

(ङ) अवेति। कराला भयङ्करी। चामुण्डा चामुण्डाप्रतिमा। चामुण्डामूर्त्तिमाह कालिकापुराणे षष्टितमाध्याये—

"नीलोत्पलदलश्यामा चतुर्बाहुसमन्विता।
खट्टाङ्गं चन्द्रहासञ्च बिभ्रती दक्षिणे करे॥
वामे चर्म्मकपालञ्च ऊर्द्ध्वाधोभावतः पुनः।
दधती मुण्डमालाञ्च व्याघ्रचर्म्मधराम्बरा॥
कृशाङ्गी दीर्घदंष्ट्रा च अतिदीर्घातिभीषणा।
लोलजिह्वा निम्नरक्तनयना नादभैरवा॥
कबन्धवाहनापीनविस्तारश्रवणानना।
एषा ताराह्वया देवी चामुण्डेति च कथ्यते॥"

(च) कामेति। विविधजीवोपहारप्रिया नानाविधप्राणिबलिदानेन साधकानां कामदानात् प्रीतिकर्त्री। साहसं मनुष्यमारणं नरबलिरिति यावत्, तेन संसृष्टा इति साहसिकास्तेषाम्। साहसमाह व्यवहारतत्त्वे नारदः—

"मनुष्यमारणं स्तेयं परदाराभिमर्षणम्।
पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतम्॥"

(ঙ) অবলোকিতা। এই নগরে মহাশ্মশানে করালানামে চামুণ্ডা আছেন।

(চ) কামন্দকী। আছেন; যিনি নানাবিধ প্রাণিবলিদানের প্রিয়, এইরূপ নরবলিদাতাদিগের প্রবাদ শুনা যায়।

অব। তহিং ক্খু সিরিপব্বদাদো আঅদস্স রত্তিবিহারিণো ণাদিদূরারণ্ণবাসিণো (১) সাধঅস্স মুণ্ডধারিণো অঘোরঘণ্ট-ণামধেঅস্স অন্তেবাসিণী মহাপ্পহাবা কবালকুণ্ডলা ণাম অণুসন্ধং আঅচ্ছদি। তদো ইঅং পউত্তী। (ছ)

কাম। সর্ব্বং সৌদামিন্যাং সম্ভাব্যতে। (জ)

(ছ) তস্মিন্ খলু শ্রীপর্ব্বতাদাগতস্য রাত্রিবিহারিণো নাতিদূরারণ্যবাসিনঃ সাধকস্য মুণ্ডধারিণঃ অঘোরঘণ্টনামধেয়স্য অন্তেবাসিনী মহাপ্রভাবা কপালকুণ্ডলা নাম অনুসন্ধ্য-মাগচ্ছতি। তত ইয়ং প্রবৃত্তিঃ।

(ছ) অবেতি। রাত্রিবিহারিণঃ দিবসে ধ্যানস্তিমিতীভূত্বা রাত্রৌ পর্য্যটনকারিণঃ। মুণ্ডধারিণঃ পানপাত্ররূপনৃকপালধারিণঃ অঘোরো ভৈরববিশেষঃ তৎপূজার্থা ঘণ্টা যস্যেত্যঘোরঘণ্টস্তন্নামকস্য। "কাপালিকাস্তু ঘণ্টান্তনামানঃ সমুদাহৃতাঃ।" ইতি ভরতোক্তেরঘোরঘণ্টেতি নামেতি বোধ্যম্। অন্তেবাসিনী শিষ্যা। কপালং শিরোঽস্থি-কুণ্ডলং কর্ণভূষণং যস্যাঃ সা। সন্ধ্যায়াং সায়ংকালে ইত্যনুসন্ধ্যং বিভক্ত্যর্থেঽব্যয়ীভাবঃ। তস্মিন্ মহাশ্মশানপ্রদেশে আগচ্ছতীত্যন্বয়ঃ। ততঃ কপালকুণ্ডলায়াঃ সকাশাৎ ইয়ং সৌদামিনীসম্বন্ধিনী প্রবৃত্তির্বার্ত্তা প্রাপ্তেতি শেষঃ।

(জ) কামেতি। বার্ত্তামুপলভ্য অবলোকিতোক্তং সৌদামিন্যা আশ্চর্য্যমন্ত্রসিদ্ধিপ্রভাবা-দিকমঙ্গীকরোতি সর্ব্বমিতি। বাল্য এব তদুদ্যমক্ষমতাদর্শনাদিতি ভাবঃ।

(ছ) অবলোকিতা। রাত্রিতে বিচরণকারী এবং নরকপালের পানপাত্রধারী অঘোরঘণ্টনামে কোন সাধক শ্রীপর্ব্বত হইতে আসিয়া সেই মহাশ্মশানের অনতিদূরবর্ত্তী বনমধ্যে বাস করিতেছেন; মহাপ্রভাব-সম্পন্না কপালকুণ্ডলানামে তাঁহার শিষ্যা সেই স্থানে সন্ধ্যাবেলায় আসিয়া থাকেন। তাঁহার নিকট সৌদামিনীর সংবাদ পাইয়াছি।

(জ) কামন্দকী। সৌদামিনীতে সমস্তই সম্ভাবনা করা যায়।

(১) ইদো ণাদিদূরসসাণবাসিণো ইতি পাঠভেদঃ।

अव। अलं दाव एदिणा। भअवदि! एसो वि सहअरो (१) माहवस्स वालमित्तं मअरन्दो णाम णन्दणस्स वहिणीं मदअन्तिअां जइ समुव्वहदि, तं वि माहवस्स दुदीअं पिअं (२) होदि। (झ)

काम। नियुक्तैव तत्र मया प्रियसखी बुद्धरक्षिता (३)। (ञ)

अव। सुविहिदं भअवदीए (४)। (ट)

(झ) अलं तावदेतेन। भगवति! एषोऽपि सहचरो माधवस्य बालमित्रं मकरन्दो नाम नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति, तदपि नाम माधवस्य द्वितीयं प्रियं भवति।

(ट) सुविहितं भगवत्या।

(झ) अवेति। एतेन अनुद्देश्यविषयालोचनेन। बालमित्रम् आशैशवात् सखा। मकरन्दः पुष्परसः तद्वत् लोभनीयत्वात् मकरन्दो नाम। मदयन्तिकां रूपेण चित्तोन्माद-करत्वात् मदयन्तिकानाम्नीम्। एकमात्मनो मालतीपरिणयनं द्वितीयं मकरन्दस्य मदयन्तिकापरिणयनम्।

(ञ) कामेति। तत्र विषये मकरन्दं प्रति मदयन्तिकाया अनुरागजनकतद्गुण-वर्णनादिकार्य्ये इत्यर्थः। बुद्धेन सुगतेन रक्षितेति बुद्धरक्षिता तदाख्या काचित् स्त्री।

(ट) अवेति। भगवत्या भवत्या सुविहितं बुद्धिरक्षितायाः नियोगेन साधु कृतम्। तस्या अतीवनैपुण्येन मकरन्दं प्रति मदयन्तिकाया अनुरागस्यावश्यम्भावादिति भावः।

(ঝ) অবলোকিতা। এ প্রস্তাবে প্রয়োজন নাই। মাধবের বাল্য-সখা ও সহচর সেই মকরন্দ যদি নন্দনের ভগিনী মদয়ন্তিকাকে বিবাহ করিতে পারে, তবে তাহাও মাধবের দ্বিতীয় প্রীতিকর কার্য্য হইবে।

(ঞ) কামন্দকী। আমি সে বিষয়ে প্রিয়সখী বুদ্ধরক্ষিতাকে নিযুক্ত করিয়াই রাখিয়াছি।

(१) सोवि पासचरो इति पाठान्तरम्। (२) पिअं किदं इति क्वचित् पाठः।

(३) मत्प्रियसखीति पाठभेदः। (४) किदं इत्यधिकः पाठः कुत्रचित्।

কাম। বিচিন্ত্য। তদুত্তিষ্ঠ, মাধবপ্রবৃত্তিমুপলভ্য মালতীমেব পশ্যাবঃ। ইত্যুভে উত্তিষ্ঠতঃ। (ঠ)

কাম। বিচিন্ত্য। অত্যুদারপ্রকৃতির্মালতী, তন্নিপুণং নিসৃষ্টার্থকল্পস্তন্ত্রয়িতব্যঃ। সর্বথা—(ড)

(ঠ) কামেতি। বিচিন্ত্য তৎকালীনং কর্ত্তব্যং বিভাব্য।

(ড) কামেতি। বিচিন্ত্য মালত্যা বিষয়ে কর্ত্তব্যং মনসা সমালোচ্য। অত্যুদারা সুমহতী গভীরা প্রকৃতিঃ স্বভাবো যস্যাঃ সা। তত তস্মাৎ, নিপুণং যথা স্যাত্তথা। নিসৃষ্টার্থদূত্যা দূতীবিশেষস্য কল্পো রীতিঃ তন্ত্রয়িতব্যঃ প্রাধান্যেনাবলম্বনীয়ঃ ময়েতি শেষঃ, গভীরস্বভাবয়া মালত্যা স্বয়ং স্বাভিপ্রায়স্যাপ্রকাশ্যত্বেন মিতার্থসন্দেশহারকাখ্যদূতীরীত্যবলম্বনস্য নিষ্ফলত্বাৎ নিসৃষ্টার্থাখ্যদূতীরীতিরেব প্রাধান্যেনাবলম্বনীয়া, সতি তু সম্ভবে দূত্যন্তররীতিরপীতি ভাবঃ। সর্বথেত্যস্য শ্লোকস্থক্রিয়াভিরন্বয়ঃ। দূতীভেদং তল্লক্ষণঞ্চাহ সাহিত্যদর্পণে—

"নিসৃষ্টার্থো মিতার্থশ্চ তথা সন্দেশহারকঃ।
কার্য্যপ্রেষ্যস্ত্রিধা দূতী দূত্যশ্চাপি তথাবিধাঃ॥
উভয়োর্ভাবমুন্নীয় স্বয়ং বদতি চোত্তরম্।
সুশ্লিষ্টং কুরুতে কার্য্যং নিসৃষ্টার্থস্তু স স্মৃতঃ॥
মিতার্থভাষী কার্য্যস্য সিদ্ধিকারী মিতার্থকঃ।
যাবদ্ভাষিতসন্দেশহারঃ সন্দেশহারকঃ॥"

(ট) অবলোকিতা। আপনি ভালই করিয়াছেন।

(ঠ) কামন্দকী। (চিন্তা করিয়া) তবে উঠ, মাধবের সংবাদ লইয়া মালতীর সঙ্গেই যাইয়া সাক্ষাৎ করি। (দুই জনেই উঠিলেন)

(ড) কামন্দকী। (চিন্তা করিয়া) মালতী অত্যন্ত উদারস্বভাব; সুতরাং নিপুণভাবে প্রধানতঃ নিসৃষ্টার্থদূতীর রীতি অবলম্বন করিতে হইবে।

शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा
सुजातं कल्याणी भवतु कृतकृत्यः स च युवा।
वरीया-(१) नन्योन्यप्रगुणगुणनिर्म्माणनिपुणो
विधातुर्व्यापारः फलतु च मनोज्ञश्च भवतु ॥१६॥

इति निष्क्रान्तौ।

विष्कम्भकः। (२) (ढ)

शरज्ज्योत्स्नेति। सा कल्याणी मालती शरज्ज्योत्स्ना कान्तं मनोरमं कुमुदमिव तं सुजातं सत्कुलोत्पन्नं कान्तं दयितं माधवं नन्दयतु सद्व्यवहारेण प्रीणयतु। स युवा माधवश्च कृतकृत्यो मालतीलाभात् चरितार्थौ भवतु। वरीयानुत्कृष्टः अन्योन्यप्रगुणाः नायकनायिकयोः परस्परानुकूला ये गुणाः प्रणयानुवृत्तिप्रभृतयः तेषां निर्म्माणे सृष्टौ निपुणो दक्षः विधातुर्विधेः व्यापारः योग्ययोजनक्रिया फलतु अतीवयोग्ययोरनयोर्मालतीमाधवयोर्योजनात् साफल्यं भवतु। तथा मनोज्ञः गुणतारतम्याभावाद्विषादाभावेन सर्वेषां प्रीतिप्रदो भवतु।

अत्रोपमालङ्कारः। तथा ज्योत्स्ना कुमुदं नन्दयति, सा तु नन्दयतु इति विधिभेदात् "चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथे"ति साहित्यदर्पणोदाहृतवत् भग्नप्रक्रमतादोषः, स च 'शरज्ज्योत्स्नाभा सा कुमुदसदृशं नन्दयतु तम्' इति पाठेन समाधेयः।

शिखरिणी वृत्तम् ॥१६॥

শরৎকালের জ্যোৎস্না যেমন মনোহর কুমুদকে প্রফুল্ল করে, সেইরূপ কল্যাণী মালতী, সদ্বংশজাত প্রিয়তম মাধবকে সর্ব্বপ্রকারে আনন্দিত করুক এবং সেই যুবা মাধবও মালতীকে লাভ করিয়া কৃতকার্য্য হউক, আর পরস্পরের অনুকূল গুণ নির্ম্মাণ করিতে নিপুণ বিধাতার সেই উৎকৃষ্ট যোগ্যযোজন ব্যাপার সর্ব্বপ্রকারে সফল ও মনোহর হউক ॥১৬॥

( উভয়ের প্রস্থান। )

(ঢ) বিষ্কম্ভক।

(१) गरीयानिति पाठान्तरम्। (२) मिश्रविष्कम्भ इति पुस्तकान्तरे पाठः।

ततः प्रविशति गृहीतचित्रफलकोपकरणः (१) कलहंसः ।

कल । कहिं दाणिं तुलिदमअरद्धअरूआवलेव-(२) विब्भमावक्खित्तमालदोहिअअमाहप्पं णाहमाहवं पेक्खिस्सं । परिक्रम्य । परिस्सन्तोम्हि, जाव इमस्सिं उज्जाणे मुहुत्तं विस्समिअ मअरन्दसहअरं णाहं माहवं पेक्खिस्सं । इति प्रविश्योपविशति । (त)

(त) कस्मिन्निदानीं तुलितमकरध्वजरूपावलेपविभ्रमावक्षिप्तमालतीहृदयमाहात्म्यं नाथमाधवं प्रेक्षिष्ये । परिश्रान्तोऽस्मि, यावदिहोद्याने मुहूर्त्तं विश्रम्य मकरन्दसहचरं नाथं माधवं प्रेक्षिष्ये ।

(ढ) विष्कं ति । विष्कभ्नाति विषयविशेषमुपस्थापयति सूचयतीति विष्कम्भकः प्रबन्धविशेषः । तथा च साहित्यदर्पणे—

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥"

तथा चात्र विद्यापरिग्रहाय कामन्दक्यादीनामेकत्रावस्थानम्, भूरिवसुदेवरातयोरपत्यसम्बन्धप्रतिज्ञा, नन्दनार्थं राज्ञो मालतीयाचनम्, माधवाय मालतीं दातुं भूरिवसोः कामन्दकीनियोग इत्यादीनां वृत्तकथांशानां निदर्शनम् । तथा कलहंसहस्तदत्तचित्रस्य माधवान्तिके समुपस्थितिः, मदनोद्याने मालतीमाधवयोः परस्परसाक्षात्कारः, मदयन्तिकामकरन्दयोरनुरागप्रवृत्तिरित्यादीनां वर्त्तिष्यमाणानां कथांशानां निदर्शनञ्च बोध्यम् । स चायं कामन्दक्यवलोकिताभ्यां मध्यमनीचपात्राभ्यां सम्प्रयोजितत्वात् मिश्ररूपः । यथा दर्पणे—

"...स तु सङ्कीर्णो नीचमध्यमकल्पितः ।"

साहित्यदर्पणमते तु अङ्कमुखमिदम् । तल्लक्षणादिकन्तु तत्रैवानुसन्धेयम् ।

(त) कलेति । तुलितः सदृशीकृतः मकरध्वजस्य मदनस्य रूपावलेपः सौन्दर्य्याभि-

( তদনন্তর চিত্রফলক লইয়া কলহংসের প্রবেশ । )

(१) गृहीतचित्रोपकरण इति पाठान्तरम् ।

(२) तुलिदमअरद्धआवलेव इति पाठः क्वचित् ।

ततः प्रविशति मकरन्दः। (थ)

मक। कथितमवलोकितया, मदनोद्यानं गतो माधव इति। भवतु, तत्रैव गच्छामि। परिक्रम्यावलोक्य च (१)। दिष्ट्या अयं वयस्य इत एवाभिवर्त्तते। निरूप्य। अस्य तु—(द)

मानी येन तादृशेन विभ्रमेण विलासेन अवष्टिम्भं निरस्तं दूरीकृतं मालतीहृदयस्य माहात्म्यं माहात्म्यप्रयोजकीभूतं गाम्भीर्य्यं येन तं तथोक्तम्। नाथः प्रभुः ( मुनिव इति यस्य भाषा ) स चासौ माधवश्चेति तम्। परिश्रान्तोऽस्मि दूराद्यागमनेनेति शेषः। कलहंस-पाठ्यमर्द्धमागधी भाषा। यथा दर्पणे—

"चेटानां राजपुत्राणां श्रेष्ठिनां चार्द्धमागधी।"

(थ) तत इति। "मकरन्दसहचरम्" इत्यनेन तत्प्रवेशः सूचितः। मकरन्दः पुष्परसः तस्य तु माधवसाहचर्य्यं युक्तमेवेति मकरन्दनामस्तात्पर्य्यम्।

(द) मकेति। परिक्रम्य कियन्तं पदक्षेपं कृत्वा। दिष्ट्येति तृतीयान्तप्रतिरूपक-मव्ययं भाग्यार्थे। अस्य तु माधवस्य, श्लोकस्थगमनादिना अन्वयः।

(ত) কলহংস। কামদেবের তুল্য সৌন্দর্য্যগর্ব্ব ও বিলাসদ্বারা যিনি মালতীর হৃদয়ের গাম্ভীর্য্য দূর করিয়াছেন, সেই প্রভু মাধবকে কোথায় দেখিতে পাইব। ( পাদচারণ করিয়া ) পরিশ্রান্ত হইয়া পড়িয়াছি ; সুতরাং এই উদ্যানে কিছুকাল বিশ্রাম করিয়া পরে মকরন্দের সহিত প্রভু মাধবকে দেখিব। ( এই বলিয়া উদ্যানে প্রবেশপূর্ব্বক উপ-বেশন করিল )।

(থ) ( তাহার পর মকরন্দের প্রবেশ। )

(দ) মকরন্দ। অবলোকিতা বলিয়াছে যে, মাধব মদনোদ্যানে গিয়াছেন। যাহা হউক, সেইখানেই যাই। ( পাদচারণপূর্ব্বক দর্শন

(१) दृष्ट्वा च इत्यपि पाठः।

गमनमलसं शून्या दृष्टिः, शरीरमसौष्ठवं
श्वसितमधिकं, किं न्वेतत् स्यात्, किमन्यदितोऽथवा (१) ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं,
ललितमधुरा-(२) स्ते ते भावाः क्षिपन्ति च धीरताम् ॥१७॥

गमनमिति । गमनं अलसं लक्ष्याभावादनिच्छापूर्व्वकत्वेन जड़ं मन्थरम् । दृष्टिः अवलोकनं शून्या चिन्ताविशेषेण विषयविशेषपरिच्छेदाभावात् निष्फला । शरीरम् असौष्ठवम् अङ्गसंस्काराद्यभावादागन्तुकसौन्दर्य्यरहितम् । श्वसितं श्वासः अधिकं स्वाभाविकादतिरिक्तम् एतदलसगमनादिकं किं कथं स्यात् । नुशब्दो वितर्के । इति वितर्कयन् स्वयमेवावधारयति किमन्यदिति । अथवा इतो वक्ष्यमाणकारणादन्यत् किम् अलसगमनादेः कारणं स्यात् अपि तु किमपि नेत्यर्थः । किं तत् कारणमित्याह—भ्रमतीति । भुवने जगति सर्व्वान् जनान् प्रतीत्यर्थः, कन्दर्पस्य आज्ञा आसक्त्यादेशः भ्रमति अप्रतिहता सती विजृम्भते । इतश्च यौवनं विकारि मनोविकारजननशीलम् । तथा ललितमधुराः कोमलसुन्दराः, ते ते प्रसिद्धाः, भावाः चन्द्रचन्दनमलयमारुतोपवनादयः पदार्थाः धीरतां स्वाभाविकधैर्य्यं क्षिपन्ति निरस्यन्ति । स्वाभाविकयौवनमलयमारुताद्युद्दीपनेन च कन्दर्पावेशवशादस्य अलसगमनादिकं जातं न पुनरन्यकारणादिति भावः ।

अत्रैकं वितर्कं प्रति अलसगमनादीनामनेककारणानामुक्तत्वादेकः समुच्चयोऽलङ्कारः, पूर्वावस्थां प्रति च कन्दर्पाज्ञादीनां त्रयाणां कारणानामुक्तत्वात् द्वितीयः समुच्चय इत्यनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः । तथा किं न्वेतत् स्यादित्यत्र दुःश्रवत्वदोषः 'स्यादेतत् किम्' इति पाठे तु तत्समाधानम् । आलस्य-चिन्ता ग्लानिरूपा व्यभिचारिभावा अनुसन्धेयाः । इदञ्च नर्म्मस्फोटाख्यं कौशिकीवृत्तेरङ्गम्—"नर्म्मस्फोटो भावलेशैः सूचिताल्परसो मत" इति साहित्यदर्पणोक्तेः ।

করিয়া) ভাগ্যবশতঃ বয়স্য মাধব এই দিকেই এই আসিতেছেন।
( নিপুণভাবে দেখিয়া )

(१) किमन्यदतोऽथवा इति पाठभेदः । (२) प्रकृतिमधुरा इति पाठान्तरम् ।

ततः प्रविशति यथानिर्द्दिष्टरूपो (१) माधवः। (ध)

माधवः। स्वगतम्। (न)

तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्त्तते मे।
लज्जां विजित्य, विनयं विनिवार्य्य, धैर्य्य-
मुन्मथ्य, मन्थरविवेकमकाण्ड एव ॥१८॥

"पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मना"मिति दर्पणोक्तेरस्य माधवस्य च संस्कृतं पाठ्यम्।

हरिणीवृत्तम्—"न स मरसलागः षड् वेदैर्हयैर्हरिणी मते"ति लक्षणात् ॥१७॥

(ध) दिष्ट्या इत्यादिना सूचितं माधवप्रवेशमाह तत इति। यथानिर्द्दिष्टम् अलस-गमनादिविशिष्टं रूपमाकृतिर्यस्य सः। वसन्तकाल इवायं स्वरूपतो युवत्युन्मादकरी क्षोभनीयश्चेति माधवनामस्तात्पर्य्यम्।

(न) माधव इति। स्वगतम् अन्यैरश्राव्यमस्फुटमिति यावत्, आहेति क्रियाविशेषण-मेतत्। स्वगतलक्षणं यथा साहित्यदर्पणे—

"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्।"

तामिति। इन्दुसुन्दरमुखीं चन्द्रवत्कमनीयवदनां तां मालतीं सुचिरं बहुसमयं यावत्

বয়স্যের ধীরে ধীরে গমন, শূন্য দৃষ্টি, শরীরে সৌষ্ঠব নাই, অতিরিক্ত শ্বাস, এ সকল হইতেছে কেন? অথবা ইহা ছাড়া অন্য কি হইবে। কামদেবের আদেশ সমস্ত জগতে বিচরণ করিয়া থাকে, যৌবনও বিকার-জনক এবং কোমল ও মধুর চন্দ্রচন্দনপ্রভৃতি সেই সেই প্রসিদ্ধ পদার্থ-গুলিও ধৈর্য্য নষ্ট করে ॥১৭॥

(ধ) ( তাহার পর নির্দ্দিষ্টরূপে মাধবের প্রবেশ। )

(ন) মাধব। ( স্বগত )

---

(१) यथानिर्द्दिष्ट इति क्वचित् पाठः।

आश्चर्य्यम्, *

यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्सन्निधौ, तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥१८॥

विभाव्य विचिन्त्य वर्त्तमानं मे मम चेतः मनः कर्त्तृ अकाण्ड एव सहसैव मन्थरो मन्दः विवेकः कर्त्तव्याकर्त्तव्यज्ञानं यस्य तत् मन्थरविवेकं सत् लज्जां विजित्य निरस्य, विनयं परकन्यायां सहसासक्तिर्न विधेयेत्येतादृशीं शिक्षां विनिवार्य्य दूरीकृत्य, तथा धैर्य्यं स्वाभाविकीं धीरताम् उन्मथ्य विहाय कथं कथमपि केनचित् केनचिदपि प्रकारेण अतिकष्टेनेत्यर्थः व्यपवर्त्तते तद्भावनातः प्रत्यावर्त्तते । मालत्यामतीवासक्तं मम चित्तमिति भावः ।

अत्र इन्दुसुन्दरमुखीमिति लुप्तोपमाच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः "संसार-ध्वान्तविध्वंस" इति दर्पणोदाहृतरूपकानुप्रासयोरिव ।

"दरवक्रे च मन्थरः" इति त्रिकाण्डशेषः । "विनयः शिक्षाप्रणत्योर्विनम्रा तु वनौषधी ।" इति हेमचन्द्रः ।

वसन्ततिलका वृत्तम् ॥१८॥

* आश्चर्य्यं मम मनसोऽवस्थावैषम्यमिति शेषः ।

किन्तदित्याह यद्विस्मयेति । यत् मदीयं हृदयं मनः कर्त्तृ, तस्याः मालत्याः सन्निधौ विस्मयस्तिमितम् अलौकिकमिदं रूपं लावण्यञ्च इत्याश्चर्य्यवशात् स्तब्धं तथा अस्तमितः लोपं प्राप्तः अनुपस्थितः अन्यः मालतीव्यतिरिक्तः भावः पदार्थो यस्मिन् तत् । तथा अमृतप्लवना-

---

চন্দ্রতুল্য মনোহরবদনা মালতীকে বহুকাল যাবৎ চিন্তা করিয়া আমার চিত্ত সহসাই মন্দবিবেক হইয়া, লজ্জাকে জয় করিয়া, শিক্ষার বন্ধন ছিন্ন করিয়া এবং ধৈর্য্য নষ্ট করিয়া অতি কষ্টে তথা হইতে ফিরিয়া আসিয়াছে ॥১৮॥

* আমার মনের অবস্থাবৈষম্য কি আশ্চর্য্য !

मक। सखे! माधव! इत इतः (१)। (प)

माधवः। परिक्रम्य। कथं? प्रियवयस्यो मम मकरन्दः (२)। (फ)

दिव पीयूषे सन्तरणादिव इतौ: आनन्देन मालतीदर्शनजनितसुखेन मन्दं जड़ं विषयान्तर-परिच्छेदासमर्थम् अभूत्। अधुना तद्वियोगकाले तत् हृदयम् अङ्गारैः अग्निसमेतकाष्ठेन चुम्बितमिव संयुक्तमिव सत् व्यथमानं सन्तापीपेतम् आस्ते वर्त्तते। अतएव मालत्याः संयोगवियोगयोरानन्दसन्तापानुभवात् हृदयस्य विषममवस्थाद्वयमाश्चर्य्यमेवेति भावः। प्रियायाः संयोगवियोगाभ्यामानन्दसन्तापयोः प्रसिद्धत्वेऽपि माधवस्य प्राथमिकत्वादाश्चर्य्यज्ञानमिति बोध्यम्।

अत्रानन्दव्यथयोर्विरूपयोः सङ्घटनया विषमालङ्कारः, तथा अमृतप्लवनादिवेति वाच्या भावाभिमानिनी क्रियारूपहेतूत्प्रेक्षा, अङ्गारचुम्बितमिवेति तु तादृशी क्रियास्वरूपोत्प्रेक्षा इत्येतेषामङ्गाङ्गिभावेन सङ्करः। तत्सन्निधाविव्यस्य द्वितीयार्द्धगतत्वेऽपि पदद्वयात्मकत्वात् न अर्द्धान्तरैकपदतादोषः। अस्मिन् श्लोकद्वये नायकहृदये नायिकानुरागरूपवीजोपन्यासादुप-क्षेपो नाम मुखसन्ध्यङ्गम्। यथा भरतः—

"वीजन्यास उपक्षेपः।"

वसन्ततिलका वृत्तम् ॥१९॥

(प) मकेति। आत्मानमपश्यन्तं विमनस्कं माधवमवलोक्याभिमुखीकरणाय सम्बोधयति सख इति। इत इतः अस्यामस्यां दिशि आगच्छेति शेषः।

---

আমার যে মন, মালতীর নিকটে বিস্ময়বশতঃ স্তব্ধ হইয়া পড়িয়াছিল, অন্য পদার্থের ভাবনা শূন্য হইয়া গিয়াছিল এবং অমৃতসাগরে সন্তরণ করিয়াই যেন আনন্দে জড়ীভূত হইয়াছিল; এখন সেই মন অগ্নিময় কাষ্ঠ সংশ্লিষ্ট হইয়াই যেন সন্তপ্ত হইতেছে ॥১৯॥

(প) মকরন্দ। সখে! মাধব! এই দিক্, এই দিক্ এস।

---

(१) मकरन्दः। उपसृत्य। सखे! माधव! इत इतः ललाटन्तपस्तपति घर्म्मांशुः। तदस्मिन् उद्याने मुहूर्त्तमुपविशावः। उभौ परिक्रामतः। इति पाठान्तरम्।

(२) चिह्नितः पाठः पुस्तकान्तरे न दृश्यते।

मक। उपसृत्य। सखे! ललाटन्तपस्तपति घर्म्मांशुः (१)। तदस्मिन् उद्याने मुहूर्त्तमुपविशावः। (ब)

माधवः। यथा प्रियवयस्याय रोचते (२)। इत्युभावुपविशतः।

कल। दृष्ट्वा। कधं मअरन्दसहअरो इमं एव्व वालवउलुज्जाणं (३) अलङ्करेदि माहवो। ता दंसेमि मअणवेअणाखिज्जमाणमालदीलोअणसुहावहं अत्तणो से पडिच्छन्दअं। अहवा मुहुत्तं विस्सामसोक्खं दाव अणुहोदु। (भ)

(भ) कथं मकरन्दसहचर इदमेव बालवकुलोद्यानमलङ्करोति माधवः। तद्दर्शयामि मदनवेदनाखिद्यमानमालतीलोचनसुखावहम् आत्मनोऽस्य प्रतिच्छन्दकम्। अथवा मुहूर्त्तं विश्रामसौख्यं तावदनुभवतु।

(फ) माधव इति। कथमिति हर्षार्थकमव्ययम्। तथा च मेदिनी—"कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्च।"

(ब) मकेति। ललाटं तपतीति ललाटन्तपः "ललाटे तप" इति तपतेः खश्। आकाशमध्यवर्त्तीत्यर्थः, घर्म्मांशुः सूर्य्यः। मुहूर्त्तं कियन्तं कालमिति तात्पर्य्यम्।

(फ) মাধব। ( কতিপয় পদক্ষেপ করিয়া ) কে? আমার প্রিয় সখা মকরন্দ?।

(ব) মকরন্দ। ( মাধবের নিকটে যাইয়া ) বয়স্য! আকাশের মধ্যবর্ত্তী সূর্য্য বড়ই সন্তাপ জন্মাইতেছেন। অতএব ( আইস ) আমরা এই উদ্যানে কিছুকাল উপবেশন করি।

মাধব। প্রিয় বয়স্যের যাহা অভিরুচি। ( এই বলিয়া উভয়ে উপবেশন করিলেন )।

(१) तपन इति पाठभेदः। (२) चिह्नितः पाठः पुस्तकान्तरे न दृश्यते।
(३) बालुज्जाणं इति पाठः पुस्तकान्तरे।

मक। तदस्यैव तावदुच्छ्वसितकुसुमकेसरकषायशीतलामोदवासितोद्यानस्य काञ्चनपादपस्याधस्तादुपविशाव:। (म)

उभौ। तथा कुरुत:।

मक। वयस्य! माधव! अद्यैव तावत् (१) सकलनगराङ्गनाजनप्रवर्त्तितमहोत्सवाभिराममदनोद्यान-(२) यात्रा-

(भ) कलेति। बालं नूतनं वकुलोद्यानं वकुलोपवनम्, अलङ्करोति आत्मन उपस्थित्या शोभयति। मदनवेदनया कामपीड़या खिद्यमाना पीड्यमाना या मालती तस्या लोचनसुखावहं नेत्रप्रीतिकरम्। अस्य माधवस्य प्रतिच्छन्दकं चित्रितप्रतिमूर्त्तिं मुहूर्त्तं विश्रामसौख्यमनुभवतु, पश्चाद्दर्शयिष्यामीति भाव:।

(म) मकेति। उच्छ्वसितानां प्रस्फुटितानां कुसुमानां ये केसरा: किञ्जल्का: तै: कषाय: सुरभि: शीतलश्च य आमोदो गन्ध:, तेन वासितं सुरभीकृतम् उद्यानम् उपवनं येन तस्य तथोक्तस्य।

(य) मकेति। सकलैर्नगराङ्गनाजनै: नगरवासिभि: स्त्रीलोकै: प्रवर्त्तित: अनुष्ठित: यो महोत्सव: तेन अभिरामं पताकातोरणादिसन्निवेशै: सुन्दरं यत् मदनोद्यानं तस्मिन् यात्राया

(ভ) কলহংস। ( দর্শন করিয়া ) মকরন্দের সহিত প্রভু মাধব এই নূতন বকুল উদ্যানকেই অলঙ্কৃত করিতেছেন। অতএব কামবেদনা পরিপীড়িত মালতীর নয়নসুখকর উঁহার নিজের প্রতিমূর্ত্তিখানিকে দেখাই। অথবা কিছুকাল বিশ্রামসুখ অনুভব করুন।

(ম) মকরন্দ। এই কাঞ্চনবৃক্ষটী প্রস্ফুটিত কুসুমকেসরের মনোহর ও শীতল গন্ধে সমগ্র উদ্যানটীকে সুগন্ধি করিয়া তুলিয়াছে; অতএব আইস, উহারই তলে উপবেশন করি।

( উভয়েই তাহা করিলেন। )

(য) মকরন্দ। সখে! মাধব! সমস্ত পুরবাসিনী রমণীগণের

(१) कस्मिंश्चित् पुस्तके अयं पाठो नास्ति। (२) कामदेवोद्यान इति पाठभेद:।

प्रतिनिवृत्तमन्यादृशमिव (१) भवन्तमवधारयामि। अपि त्वमवतीर्णोऽसि रतिरमणबाणगोचरताम्? (२)। (य)

माधवः। लज्जयाऽधोमुखस्तिष्ठति (३)।

मक। विहस्य। तत् किमवनतमुग्धमुखपुण्डरीकस्तिष्ठसि (४)?। पश्य—(र)

गमनात् प्रतिनिवृत्तं विरतम्, अतएव अन्यादृशमिव पूर्व्वतो विलक्षणमिव। अवधारयामि सम्भावयामि। अपिशब्दः प्रश्ने। रतिरमणबाणगोचरतां कामबाणलक्ष्यताम्। अवतीर्णोऽसि गतोऽसि। तस्यैव सम्भावनाधिक्यादिति भावः।

(र) मकेति। लज्जया माधवस्याधोवदनतादर्शनात् कामाविष्ट एवायमिति निश्चयेन कौतुकोदयात् विहस्येत्युक्तम्। "मधुरस्वरं विहसित"मिति विहसितलक्षणम्। अवनतं मुग्धं सुन्दरं मुखपुण्डरीकं वदनसिताम्भोजं यस्य सः। वियोगवशात् श्वेततया मुखस्य सिताम्भोजसादृश्यमिति बोध्यम्। कामाविष्टवर्णनात्मनो लघुतयावमाननामाशङ्क्य तामपनेतुमाह पश्येति।

অনুষ্ঠিত মহোৎসবে মদনোদ্যানটী মনোহর হইয়াছে, সেখানে যাইয়া ফিরিয়া আসিবার পর অদ্যই তোমাকে যেন অন্যরূপ মনে করিতেছি; সুতরাং তুমি কি কামবাণের লক্ষ্য হইয়া পড়িয়াছ?।

মাধব। ( লজ্জায় অধোবদন হইয়া রহিলেন। )

(র) মকরন্দ। ( হাস্য করিয়া ) সখে! তবে মনোহর মুখপদ্ম অবনত করিয়া রহিলে কেন? দেখ—

(१) क्वचित् इवशब्दो नास्ति।

(२) अपि नाम मनागवतीर्णोऽसि रतिरमणबाणगोचरमिति पाठान्तरम्।

(३) माधवः सलज्जमधोमुखस्तिष्ठतीति पाठोऽपि दृश्यते।

(४) किमवनममुग्धमुखपुण्डरीकः स्थितोऽसीति भिन्नः पाठः।

अन्येषु जन्तुषु रजस्तमसावृतेषु (१)
विश्वस्य धातरि समः परमेश्वरे च ।
सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा
मा लज्जया तव कथञ्चिदपह्नुतिर्भूत् ॥२०॥

अन्येष्विति । रजस्तमसा रजोगुणेन तमोगुणेन च आवृतेषु प्राधान्येनाधिष्ठितेषु अन्येषु विधातृहरव्यतिरिक्तेषु जन्तुषु प्राणिषु मनुष्यपश्वादिषु तथा विश्वस्य धातरि जगतः स्रष्टरि ब्रह्मणि तथा परमेश्वरे अणिमादिमहैश्वर्य्यशालिनि महादेवे च समः समानप्रभावः, स प्रसिद्धः अयम् उल्लिख्यमानः चित्तजन्मा मनोजः कामः, प्रसिद्धः विभवः अप्रतिहतक्षमतारूपमैश्वर्य्यं यस्य स प्रसिद्धविभवः खलु निश्चितम् । मनुष्यपशुपक्ष्यादीनां का कथा, कामप्रभावात् स्वयं ब्रह्मा स्वकन्यां चकमे, महेश्वरोऽपि ध्यानहीनो मोहिनीमूर्त्तिदर्शनेन विह्वलश्च बभूव, सुतरां तदावेशवशात् लघुत्वेनात्मन्यवज्ञा त्वया सामान्यमानवेन न करणीयेति भावः । सत्यमेतत्, किन्तु लज्जया स्वावस्थां विवरीतुं न शक्नोमीति चेत् तत्राह मेति । लज्जया कथञ्चिदल्पापि तव अपह्नुतिः आत्मनोऽवस्थागोपनं माभूत् न भवतु । वयस्यस्यात्मनिर्विशेषत्वात् सति सम्भवे प्रतीकारावश्यम्भावाच्चेति भावः ।

अत्र यतः समः, अतः प्रसिद्धविभव इति परवाक्यार्थं प्रति पूर्ववाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः ।

प्राधान्येन रजसावृता मनुष्याः । तथा च सांख्यसूत्रम्—"मध्ये रजोविशाला ।"

प्राधान्येन तमसावृतास्तिर्य्यग्जातयः पश्वादयः । तथा च श्रीमद्भागवते—"अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः ।"

सात्त्विकेषु मदनप्रभावनिरासार्थं रजस्तमसावृतेष्वित्युक्तम् । तथा च भगवद्गीतायाम्—"काम एष क्रोध एष रजोगुणसमुद्भवः ।"

रजसायुक्तं तम इति रजस्तमः शाकपार्थिवादित्वान्मध्यपदलोपी समासः ।

वसन्ततिलका वृत्तम् ॥२०॥

(१) अन्येषु जन्तुषु च यत्तमसावृतेष्वित्यपि पाठः ।

माधवः। वयस्य! किं न कथयामि, श्रूयताम्—गतोऽह-मवलोकिताजनितकौतुकः कामदेवायतनम्। तत्र च (१) इतस्ततः परिक्रम्यावलोक्य च (२) परिश्रमादुल्लसितमदिरामोद-मधुर-(३)-परिमलाकृष्टसकलमिलदलिपटलसङ्कुलाकुलितवकुला-वलीमनोहराभरण-(४) रमणीयस्याङ्गनभुवो बालवकुलस्यालबाल-परिसरे स्थितः। (ल)

(ल) माधव इति। अवलोकितया तदाख्यया कामन्दकीशिष्यया जनितं कौतुकं 'मदनोद्याने मालती गमिष्यति तत्र साक्षात्कारो भविष्यति' इत्थं कौतूहलं यस्य सः। पूर्व्वविष्कम्भके सूचितमेतत्। कामदेवायतनं मदनोद्यानम्। उल्लसितः प्रसृतः यो मदिरामोदवत् सुरासौरभवत् मधुरो मनोहरः परिमलः पवनविमर्द्दजनितकुसुमगन्धः तेन आकृष्टं समीपमानीतं यत् सकलं सर्व्वविधं मिलदलीनां सम्मिलितभ्रमराणां पटलं समूहः, तेन सङ्कुला व्याप्ता आकुलिता इतस्ततो विच्छिन्नीकृता च या वकुलावली वकुल-कुसुमश्रेणी, सैव मनोहरम् आभरणं तेन रमणीयस्य, अङ्गने भवतीति अङ्गनभूस्तस्य चत्वरदेशोत्पन्नस्य बालवकुलस्य नवीनवकुलवृक्षस्य आलबालपरिसरे मूलस्थजलाधारसमीपे परिश्रमात् अध्वगमनश्रमात् स्थितः विश्रामार्थमुपविष्टः।

রজোগুণ এবং তমোগুণ-আবৃত অন্য প্রাণী, এমন কি জগতের স্রষ্টি কর্ত্তা ব্রহ্মা এবং মহেশ্বর; ইঁহাদের প্রতি যাঁহার প্রভাব সমান, ইনি সেই প্রসিদ্ধপ্রভাব কামদেব; সুতরাং লজ্জাবশতঃ তোমার একটুও যেন নিজের অবস্থা গোপন করা না হয় ॥২০॥

(ল) মাধব। সখে! বলিব না কেন, শুন—অবলোকিতা আমার কৌতূহল জন্মাইয়া দিয়াছিল, তাই আমি মদনোদ্যানে গিয়াছিলাম। সেখানে ইতস্ততঃ পরিভ্রমণ ও বনশোভা দর্শন করিয়া পরিশ্রান্ত হইয়া

(१) क्वचित् तत्र चेति नास्ति। (२) अवलोक्येति च क्वचिन्न दृश्यते।
(३) मधुरमदिरामोदेति पाठान्तरम्। (४) मनोहराभरणस्य इति पाठभेदः।

तत्र च (१) यदृच्छया निरन्तरनिपतितानि (२) कुसुमान्यादाय विदग्धरचनामनोहरां स्रजमभिनिर्म्मातुमारब्धवानस्मि। (ब)

अनन्तरञ्च सञ्चारिणीव देवस्य मकरकेतो-(३) र्जगद्विजयवैजयन्तिका, निर्गत्य गर्भभवनादुज्ज्वलविदग्ध-मुग्ध-बाल(४)नेपथ्यविरचनाविभावितकुमारीभावा महानुभावप्रकृतिरत्युदारपरिजना कापि तत्रैवागतवती (५)। (म)

(ब) तत्र चेति। यदृच्छया स्वेच्छया तद्विषयविशेषाभावेनेत्यर्थः। निरन्तरनिपतितानि पतित्वा घनभावेन स्थितानीत्यर्थः। विदग्धरचनया निपुणग्रथनेन मनोहरां रम्यां स्रजं मालाम्।

(म) अनन्तरञ्चेति। सञ्चारिणीव गमनशीलेव। मकरकेतोः कामस्य। जग-

পড়িয়াছিলাম; সুতরাং সেই বনভূমিতে সমুৎপন্ন নূতন একটী বকুলবৃক্ষের আলবালের নিকটে বিশ্রামের নিমিত্ত উপবেশন করিয়াছিলাম; মদ্যগন্ধের ন্যায় মধুর পুষ্পগন্ধ চারিদিকে ছড়াইয়া পড়িয়াছিল, তাহাতে আকৃষ্ট হইয়া অসংখ্য ভ্রমরগণ সম্মিলিত হইয়া সেই বকুলপুষ্পসমূহের উপরে পড়িয়াছিল; সেই পুষ্পসমূহরূপ অলঙ্কারে বকুলবৃক্ষটী ও বড়ই সুন্দর দেখাইয়াছিল।

(ব) সেই বকুলগাছের তলায় ঘন ঘন অসংখ্য বকুলফুল আপনা আপনি পড়িয়া রহিয়াছিল; আমি সেই ফুলগুলিকে কুড়াইয়া লইয়া একটী মালা তৈয়ার করিতে আরম্ভ করিয়াছিলাম, নৈপুণ্যসহকারে গাঁথিতে থাকায় তাহা বড়ই সুন্দর হইতেছিল।

(१) तस्य चेति भिन्नः पाठः। (२) विकसितानीत्यधिकः पाठः पुस्तकान्तरे।
(३) देवस्य सञ्चारिणी मकरकेतनस्य, ईदृशः पाठः कुत्रचित्।
(४) क्वचित् बालशब्दो नास्ति। (५) तत्र एवागतवतीति कुत्रचित् पाठः।

सा रामणीयकनिधेरधिदेवता वा
सौन्दर्य्यसारसमुदायनिकेतनं वा।
तस्याः सखे! नियतमिन्दुसुधामृणाल-
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥२१॥

---

विजयवैजयन्तिका भुवनजयसूचकपताका। गर्भभवनात् गृहमध्यात्। उज्ज्वलं यत् विदग्धं निपुणं मुग्धं मनोहरं बालनेपथ्यं शिशूचितवेशः तस्य रचनया विधानेन विभावितः सूचितः कुमारीभावः अविवाहितावस्था यस्याः सा, महानुभावप्रकृतिः अतिगभीरस्वभावा, अत्युदारः अतीवसरलः परिजनो यस्याः सा।

सेति। सा कुमारी रामणीयकनिधिः सौन्दर्य्याकरस्य अधिदेवता अधिष्ठात्री देवी वा, वा अथवा सौन्दर्य्यसारसमुदायस्य यावन्ति परमसौन्दर्य्याणि सम्भवन्ति तावतामेवेत्यर्थः निकेतनम् एकाधारः। हे सखे! नियतं निश्चितम् इन्दुसुधामृणालज्योत्स्नादि तस्याः कुमार्य्याः कारणम् उपादानकारणम् अभूत्, तथा मदनश्च वेधाः स्रष्टा कुलालादिवत् सृष्टे-र्निमित्तकारणम् अभूत्। तथा च स्वयं मदनो विधाता भूत्वा इन्दुना तस्या वदनम्, सुधया अधरम्, मृणालाभ्यां बाहुद्वयम्, ज्योत्स्नया लावण्यम् आदिपदात् कदलीस्तम्भेन ऊरुद्वयं पद्माभ्याञ्च पादद्वयं निर्म्मितवानिति सत्यम्, अन्यथा साधारणपञ्चभूतानामुपादानत्वे वेदाभ्यासजड़स्य साक्षाद्ब्रह्मणः स्रष्टृत्वे च ईदृशमसाधारणसौन्दर्य्यमसम्भवमेवेति भावः।

अत्र प्रथमार्द्धे भेदेऽभेदाध्यवसायरूपातिशयोक्तिरलङ्कारः, द्वितीयार्द्धे तु इन्द्वादीनामुपा-दानत्वासम्बन्धेऽपि तथा मदनस्य स्रष्टृत्वासम्बन्धेऽपि च तत्सम्बन्धोक्त्या अतिशयोक्तिरित्यनयो-

---

(শ) তাহার পর কামদেবের সঞ্চারিণী ভুবন-বিজয়-বৈজয়ন্তীর ন্যায় একটী রমণী গৃহমধ্য হইতে নির্গত হইয়া সেই স্থানেই আগমন করিলেন; উজ্জ্বল ও মনোহর বালিকার উপযুক্ত বেশ নিপুণভাবে পরিধান করায় তাহার কুমারী অবস্থা সূচিত হইতেছিল; তাঁহাকে অত্যন্ত ধীরস্বভাব বলিয়া বোধ হইতেছিল এবং তাঁহার পরিজনবর্গকেও অত্যন্ত সরল বলিয়া ধারণা জন্মিতেছিল।

अथ सा प्रणयिनीभिरनुचरीभिरविरलकुसुमसञ्चयावचय-लीलादोहदिनीभि-(१) रभ्यर्थ्यमाना, तमेव बालवकुलपादपोद्देश-मागतवती। तस्याश्च कस्मिंश्चिदपि महाभागधेयजन्मनि बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलब्धवानस्मि। यतस्तस्याः—(ष)

मिथो नैरपेक्ष्यात् संसृष्टिः। केचित्तु नूनशब्दसमानार्थकनियतशब्दोपादानादुत्प्रेक्षालङ्कार इत्याहुः।

रमणीयस्य भावो रामणीयकं "योपधाद्गुरूपोत्तमा"दिति वुञ्। द्वितीयार्द्धानुरूपः श्लोको यथा विक्रमोर्वश्याम्—"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः

शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजड़ः कथं नु विषयव्यावृत्तकौतूहलो
निर्म्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥"

वसन्ततिलका वृत्तम्॥२१॥

(ष) अथेति। अविरलस्य निविड़स्य कुसुमसञ्चयस्य वकुलपुष्पसमूहस्य अवचय-लीलायां चयनकेल्यां दोहदोऽभिलाष आसामस्तीति ताभिः। अभ्यर्थ्यमाना "भद्रे! कुसुमानि अवचिनु" इत्थम् अनुरुध्यमाना। महाभागधेयेन अतीवसौभाग्येन जन्म यस्य तस्मिन् पुरुषे, बहुदिवसात् उपचीयमानं वर्द्धमानम्, मन्मथव्यथाविकारं कामपीड़ाजनित-वैषम्यम्।

তিনি সৌন্দর্য্যের আকরের অধিষ্ঠাত্রী দেবী; অথবা জগতে যে কিছু উৎকৃষ্ট সৌন্দর্য্য আছে, সেই সমুদয়ের একমাত্র আধার। বয়স্য! নিশ্চয়ই চন্দ্র, অমৃত, মৃণাল ও জ্যোৎস্নাপ্রভৃতি পদার্থ সেই রমণীর উপাদান কারণ হইয়াছিল, আর কামদেব সৃষ্টিকর্ত্তা হইয়াছিলেন (কামদেব চন্দ্র-প্রভৃতি বস্তুদ্বারা তাঁহাকে সৃষ্টি করিয়াছিলেন)॥২১॥

(१) कुसुमसञ्चयावचयलीलाभिलाषवतीभिरिति पाठान्तरम्।

परिम्मृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥२२॥

परिम्मृदितेति । तस्या मालत्याः अङ्गं हस्तादिकं परिम्मृदिता आतपतापादिना विकलीकृता या मृणाली अल्पं मृणालं तद्वत् म्लानं मालिन्यमापन्नम्, तथा क्रियासु कुसुम-चयनादिकार्य्येषु परिवाराणां परिजनानाम् अनुचरीणामिति यावत्, प्रार्थनाभिः अनुरोधैः कथमपि कष्टेन प्रवृत्तिर्यत्नः उपलक्षिता इति शेषः । सुतरां कामविकारस्यैवायं स्वभाव इति भावः । ननु रोगस्वभावोऽपि भवितुमर्हतीत्याह कलयतीति । अभिनवो यः करि-दन्तच्छेदः हस्तिदन्तखण्डः तद्वत् पाण्डुः श्वेतः कपोलः तस्या गण्डः निष्कलङ्कस्य हिमांशो-श्चन्द्रस्य लक्ष्मीं शोभां च कलयति दधाति । मन्मथविकारमन्तरेण तादृशः कपोलस्थितिर्मा न सम्भवतीति भावः ।

अत्र प्रथमचरणे लुप्तोपमा, तथा अन्यस्य लक्ष्मीं कथमन्यः कलयतीति वस्तुसम्बन्धा-सम्भवात् लक्ष्मीमिव लक्ष्मीमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धरूपा निदर्शना चालङ्कारः । अनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः ।

मालिनीवृत्तम्—"न न म य य युतेयं मालिनी भोगिलोकै"रिति लक्षणात् ॥२२॥

(ঘ) তদনন্তর প্রণয়িণী সহচরীগণ, ঘন সমুৎপন্ন পুষ্পচয়ন করিতে ইচ্ছা করিয়া সেই রমণীকেও পুষ্পচয়ন করিবার নিমিত্ত অনুরোধ করিতে লাগিল; তখন তিনি সেই নূতন বকুলবৃক্ষের নিকটেই আসিলেন। তাঁহার কিন্তু মহাভাগ্যসঞ্জাত কোন পুরুষের প্রতি বহুদিন হইতে বৃদ্ধি-প্রাপ্ত কামবেদনাবিকার রহিয়াছে বলিয়া আমি বুঝিয়াছি। কারণ—

সেই রমণীর হস্ত-পদাদি অঙ্গ, মর্দ্দিত মৃণালের ন্যায় ম্লান হইয়া গিয়াছে, পরিজনবর্গের অনুরোধে কোন প্রকারে কার্য্যে প্রবৃত্তি হইয়া থাকে এবং

सा मम दर्शनात् प्रभृत्यमृत-(१) वर्त्तिरिव चक्षुषोर्निरतिशयानन्दमुत्पादयन्त्ययस्कान्तमणिशलाकेव लोहधातुमन्तःकरणमाकृष्टवती (२)। किं बहुना, (स)

सन्तापसन्ततिमहाव्यसनाय तस्या-
मासक्तमेतदनपेक्षितहेतुचेतः ।
प्रायः शुभञ्च विदधात्यशुभञ्च जन्तोः
सर्व्वङ्कषा भगवती भवितव्यतैव ॥२३॥

(स) सेति। अमृतवर्त्तिः पीयूषतूलिका। निर्न विद्यते अतिशयो यस्मात्तादृशमानन्दं सुखस्य परां काष्ठामित्यर्थः। अयस्कान्तमणिः "कान्तलौह, चुम्बक" इति च भाषा। अन्तःकरणं मम मनः।

अत्र समुत्पन्नानुरागरूपबीजार्थस्य ( काव्यार्थस्य ) बाहुल्यात् "वयस्य ! किं न कथयामि श्रयता'मित्यादि एतदन्तं परिकरो नाम मुखसन्धेरङ्गम्। यथा दर्पणे—

"समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः।"

सन्तापेति। एतत् मदीयं चेतः कर्त्तृ सन्तापसन्ततिः अविच्छिन्नधारावाही तद्विरहजनितस्तापः, सैव महाव्यसनं विशालविपत्तिः तस्मै तन्निमित्तमित्यर्थः न अपेक्षितः न

অভিনব হস্তিদন্তখণ্ডের ন্যায় পাণ্ডুবর্ণ গণ্ডদেশ, কলঙ্কবিহীন চন্দ্রের সৌন্দর্য্য ধারণ করিতেছে ॥২২॥

(স) তিনি, দেখা হওয়ার পর হইতেই অমৃতের তুলিকার ন্যায় আমার নয়নযুগলের নিরতিশয় আনন্দ জন্মাইতেছিলেন এবং অয়স্কান্তমণির শলাকা যেমন লোহাকে আকর্ষণ করে, সেইরূপ আমার চিত্তকে আকর্ষণ করিয়াছিলেন। অধিক বলিবার প্রয়োজন নাই,

(१) सा पुनर्मम प्रथमदर्शनक्षणात् प्रभृतीति पाठान्तरम्।

(२) उपसंहृतवतीति पाठभेदः।

आश्रित: हेतु: आसक्तिनिमित्तं तत्पित्रादिकर्त्तृकदानप्रस्तावादि संलापादि वाह्योपाधिरूपं वा येन तत् तादृशं सत् तस्यां प्रमदायामासक्तं लग्नम्। ननु तदासक्तिर्महाव्यसनाय इति चेदवगतं तदा तत: कथं न निवर्त्तसे इत्याह प्राय इति। सर्व्वङ्कषा स्वप्रभावेण जगन्नियमन-कारिणी सर्व्वव्यापिनी वा, भगवती स्वयमीश्वरेणाप्यपेक्षितत्वात् माहात्म्यवती भवितव्यतैव नियतिरेव प्रायो बाहुल्येन जन्तो: प्राणिमात्रस्य शुभञ्च अशुभञ्च विदधाति। यथा इष्टसाधने प्राणिनो न स्वतन्त्रास्तथा अनिष्टप्रतीकारेऽपि, सुतरां नियतिवशात् यदुपस्थितं स्यात् तदवश्यमेवानुभवितव्यमिति तदासक्तिं चिरसन्तापकारणतया जानताऽपि मया निवर्त्तितुं न शक्यमेवेति भाव:।

अत्र प्रथमे पादे सन्तापसन्ततीति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रास:, द्वितीये एकतकाराणामसकृत् साम्यात् वृत्त्यनुप्रास:, तथा सामान्येन विशेषसमर्थनरूपो-ऽर्थान्तरन्यासश्चालङ्कार इत्येतेषां संसृष्टि:। तथा तस्यामितश्चेत् आसक्तमित्यनुरागनिष्पत्ते: परिन्यासो नाम मुखसन्धेरङ्गमेतत्। तथा माधुर्य्यप्रसादगुणाभ्यां तत्तदलङ्काराणामत्र योगात् भूषणं नाम नाट्यलक्षणञ्च। क्रमशस्तयोर्लक्षणं यथा साहित्यदर्पणे—

"तन्निष्पत्ति: परिन्यास:।" "गुणै: सालङ्कारैर्योगस्तु भूषणम्।"

"भवितव्यता भाग्य"मिति शब्दकल्पद्रुम:। सर्वङ्कषेति "सर्वकूलाभ्रकरीषेषु कष" इति कषते: खप्रत्यय:।

कर्म्मण: प्राधान्यमुक्तं शान्तिशतकेऽपि—"नमस्तत्कर्म्मभ्यो विधिरपि न येभ्य: प्रभवती"ति। "ईश्वर: कारणं पुरुषकर्म्मवैकल्यदर्शना"दिति गौतमसूत्रदर्शनात् नैयायिकमते कर्म्मण: क्वचिन्निष्फलतादर्शनेन ईश्वरस्य कारणताङ्गीकारात् प्राय:पदमभिहितम्।

वसन्ततिलका वृत्तम् ॥२३॥

---

আমার এই চিত্ত, অবিচ্ছিন্ন-বিরহ-সন্তাপরূপ মহাবিপত্তির নিমিত্ত, বিনা কারণে সেই রমণীর প্রতি আসক্ত হইয়া পড়িয়াছে। কারণ, জগতের নিয়মকারিণী ভগবতী নিয়তিদেবীই প্রায়শঃ প্রাণিগণের মঙ্গল ও অমঙ্গল বিধান করিয়া থাকেন ॥২৩॥

मक। वयस्य! माधव! स्नेहस्य निमित्तसव्यपेक्ष इति (१) विप्रतिसिद्धमेतत्। पश्य—(ह)

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु वहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥२४॥

(ह) मकेति। "किञ्चेति चार्थः" इति मल्लिनाथः। किञ्चशब्दस्तु आरम्भार्थे। तथा च "किञ्चारम्भे च साकल्ये" इति मेदिनी। तेन वाक्यविशेषारम्भे चकारोऽयमिति मन्तव्यम्। निमित्तसव्यपेक्षः वाह्योपाधिसापेक्ष इत्येतत् साधारणलौकवाक्यं विप्रतिसिद्धं विरुद्धम् असमीचीनमित्यर्थः। वस्तुदृष्टिमवलम्ब्य तस्या समीचीनतां प्रतिपादयितुमाह पश्येति।

व्यतिषजतीति। आन्तरः अन्तःकरणवर्त्ती कोऽपि निर्द्दे ष्टुमशक्यः हेतुः कारणं पदार्थान् वस्तूनि व्यतिषजति परस्परं सम्मेलयति; किन्तु प्रीतयः स्नेहाः वहिरुपाधीन् वाह्यविशेषणानि भार्य्यात्व पुत्रत्वादिसर्वविदितकारणानीत्यर्थः न खलु संश्रयन्ते कारणत्वेनापेक्षन्ते। हि यस्मात्, पुण्डरीकं पद्मं कर्त्तृ पतङ्गस्य सूर्य्यस्य उदये सति विकसति, तथा चन्द्रकान्तः स्वनामप्रसिद्धो मणिश्च हिमरश्मौ चन्द्रे उद्गते उदिते सति द्रवति निष्यन्दते जललवं क्षरति। सुतरां हेतुमनपेक्ष्यापि तव चेतो यत्तस्यामासक्तं तत् सम्भवपरमेवेति भावः।

अत्र विशेषद्वयेन सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। इदमुदाहरणं नाम नाट्यलक्षणम्। यथा दर्पणे—

"यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात्।
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम्॥"

(ह) মকরন্দ। সখে! মাধব! 'স্নেহটা কোন কারণ অপেক্ষা করিয়া জন্মিবে' এ কথা সমীচীন নহে। দেখ—

(१) स्नेहस्य निमित्तसव्यपेक्षश्चेति पुस्तकान्तरे पाठः।

ततस्ततः ?

माधवः। ततश्च तत्र। (च)

सभ्रूविलासमथ सोऽयमितीरयित्वा (१)
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः।
अन्योन्यभावचतुरेण (२) सखीजनेन
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः ॥२५॥

"उपाधिर्धर्म्मचिन्तायां कुटुम्बव्यापृते छले। विशेषणं पुंसी"ति मेदिनी। उत्तर-रामचरितषष्ठाङ्के रामेण लवमवलोक्य अविकल एवायं श्लोकः पठितः।

मालिनी वृत्तम् ॥२४॥

(च) माधव इति। तत्र तस्मिन् स्थाने।

सभ्रूविलासमिति। अन्योन्यभावे आवयोः परस्परावस्थायां चतुरो निपुणस्तेन मालती-माधवयोरावयोः परस्परावस्थां सम्यग् विजानतेत्यर्थः तस्याः मालत्याः सखीजनेन मामवलोक्य सोऽयं "मालति! यदर्थं त्वमुत्कण्ठितासि, अयं सः" इति वाक्यं सप्रत्यभिज्ञमिव पुनरनु-भवेन सहेव सभ्रूविलासं भ्रुवोर्विभ्रमेण सहितम् ईरयित्वा उक्त्वा अथानन्तरं तदा तस्मिन् काले स्मितमेव सुधा स्मितं सुधेव वा तया मधुरा मनोहराः कटाक्षाः अपाङ्गेन दृष्टयः मुक्ताः परस्परं त्यक्ताः।

অভ্যন্তরবর্ত্তী কোন অনির্ব্বচনীয় কারণ, পদার্থগুলিকে পরস্পর সম্মিলিত করিয়া থাকে; কিন্তু স্নেহ, বাহিরের কোন কারণকে আশ্রয় করে না। যেহেতু, সূর্য্যের উদয় হইলে পদ্ম প্রস্ফুটিত হয়, আর চন্দ্র উদিত হইলে চন্দ্রকান্তমণি জলস্রাব করিতে থাকে ॥২৪॥

তা'র পর তা'র পর ?।

(ক) মাধব। তাহার পর সেই স্থানে—

(१) सोऽयमितीव नाम इति पाठान्तरम्।

(२) अन्योन्यमेव चतुरेण इति पाठभेदः।

मक। स्वगतम्। कथं प्रत्यभिज्ञापि नाम ?। (क)

माधवः। अथ ताः सलीलमुत्ताल-करकमल-ललित-तालिका-तरल-वलयावलोकम् उत्त्रस्त-मत्तकलहंस-विभ्रमाभिरामचरण-सञ्चरण-झणझणायमान-(१) मञ्जीरमञ्जु-शिञ्जितानुविद्ध-(२)

अत्र सप्रत्यभिज्ञमिवेति भावाभिमानिनी वाच्या गुणीतूप्रेक्षा, तथा स्मितसुधामधुरा इति उपमारूपकयोः साधकबाधकप्रमाणाभावात् सन्देहसङ्करः, इत्यनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः।

अनुभूतस्य पुनरनुभवः प्रत्यभिज्ञा। किन्तु मालत्याः सखीजनेन कदाचिदपि माधवस्याननुभूतत्वात् तदानीं दर्शनेऽपि वास्तविकप्रत्यभिज्ञा नासीत्, परन्तु चित्रदर्शनात् प्रत्यभिज्ञा-वद्व्यवहार इति प्रतिपादनाय इवशब्दप्रयोगः।

वसन्ततिलका वृत्तम् ॥२५॥

(क) मकेति। अनुभूतपुनरनुभवस्य प्रत्यभिज्ञापदार्थत्वात् किमितःपूर्व्वत एवायमुयमी जात इति भावः।

(ख) माधव इति। ता मालतीसख्यः। सलीलमित्यादिकं क्रियाविशेषणवयम्। सलीलं यथा स्यात्तथा। उत्ताला महती या करकमलयोर्ललिता मनोहरा तालिका ऊर्द्ध्वप्रसारितकरतलद्वयपरस्पराघातः तेन तरला चञ्चला वलयावली कङ्कणश्रेणी यस्मिन् कर्म्मणि तद् यथा तथा। उत्त्रस्त उद्विग्नः मत्तश्च यः कलहंसः तस्य विभ्रमवत् विशिष्ट-भ्रमणवत् अभिरामं मनोहरं यत् चरणसञ्चरणं पादक्षेपः, तेन झणझणायमानं यत् मञ्जीरं

আমাদের পরস্পরের ভাব বুঝিতে নিপুণ তাঁহার সখীগণ, আমাকে দেখিয়া 'ইনি সেই' ভ্রূভঙ্গের সহিত প্রত্যভিজ্ঞাপূর্ব্বকই যেন এই কথা বলিয়া তখন ঈষদ্ হাস্যরূপ অমৃতমধুর কটাক্ষপাত করিতে লাগিল ॥২৫॥

(ক) মকরন্দ। (স্বগত) প্রত্যভিজ্ঞা হইল কেন ?।

(খ) মাধব। তাহার পর সেই সখীগণ লীলার সহিত ফিরিয়া যাইয়া "ভর্ত্তৃদারিকে ! ভাগ্যবশতঃ আমাদের উন্নতি হইতেছে ; যেহেতু,

(१) रणरणायमान इति पाठान्तरम्। (२) मञ्जुमञ्जीररणितानुविद्धेति पाठभेदः।

মেখলাকলাপকিঙ্কিণীরণৎকারমুখরং (১) প্রতিনিবৃত্য "ভর্ত্তৃ-দারিকে! দিষ্ট্যা বর্দ্ধামহে, যদত্রৈব কোঽপি কস্যাপি (২) বল্লভ-স্তিষ্ঠতী"তি মামঙ্গুলীদলবিলাসেনাখ্যাতবত্যঃ। (খ)

মক। স্বগতম্। হন্ত, মহতঃ প্রথমানুরাগস্যোদ্ভেদঃ (৩)। (গ)

নূপুরং তস্য মঞ্জুশিঞ্জিতেন মধুররবেণ অনুবিদ্ধঃ অনুসৃতঃ মিলিত ইতি যাবৎ যঃ মেখলা-কলাপস্য কাঞ্চীদাম্নঃ কিঙ্কিণীরণৎকারঃ ক্ষুদ্রঘণ্টিকাধ্বনিঃ তেন মুখরং যথা স্যাত্তথা। প্রতিনিবৃত্য যদৃচ্ছয়া মমান্তিকমাগতাঃ পুনর্মালতীসমীপং গত্বা। ভর্ত্তৃদারিকে! স্বামিকন্যে!। দিষ্ট্যা ভাগ্যেন। অঙ্গুল্য এব দলানি তেষাং বিলাসেন বিন্যাসবিশেষেণ। আখ্যাতবত্যঃ নির্দ্দিষ্টবত্য ইত্যর্থঃ। কস্যাপি জনস্য বল্লভ ইত্যনেন মালত্যাবল্লভ ইতি ধ্বনিতম্।

(গ) মকেতি। হন্ত হর্ষে। প্রথমানুরাগস্য পূর্ব্বরাগস্য উদ্ভেদঃ প্রকাশঃ। উভয়োরপি মালতীমাধবয়োরিতি ভাবঃ।

এইস্থানেই কোন ব্যক্তির কোন প্রিয়তম অবস্থান করিতেছেন" এই কথা বলিয়া অঙ্গুলীদলসঞ্চালনদ্বারা আমাকে দেখাইয়া দিল। (তাহারা যখন আমার নিকট হইতে সেই রমণীর নিকট ফিরিয়া যায়, তখন) বিশাল ও মনোহর করতালী দিবার সময়ে তাহাদের হস্তের বলয়গুলি চলিতেছিল এবং উদ্বিগ্ন ও মত্ত কলহংসের ভ্রমণের ন্যায় মনোহর চরণ-সঞ্চরণের সময় ঝণ্ ঝণ্ শব্দকারী নূপুরের মনোহর শব্দের সহিত কাঞ্চীদামস্থিত কিঙ্কিণীর রবে তাহাদের গমনটী শব্দায়মান হইয়াছিল।

(গ) মকরন্দ। (স্বগত) বেশ, গুরুতর পূর্ব্বরাগের আবির্ভাব দেখিতেছি।

(১) রণরণৎকার ইতি ক্বচিৎ পাঠঃ। (২) কস্যা অপি ইতি ভিন্নঃ পাঠঃ।

(৩) প্রাগনুরাগস্য ইতি পুস্তকান্তরে পাঠঃ।

कल। आकर्ण्य। कथं सरसरमणीयाणुबन्धिणी इत्थीअण-कधा (१)। (घ)

मक। ततस्ततः?।

माधवः। अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः (२)।
तद्भूरिसात्त्विकविकारमपास्तधैर्य्य-
माचार्य्यकं विजयि मान्मथमाविरासीत् ॥२६॥

(घ) कथं सरसरमणीयानुबन्धिनी स्त्रीजनकथा।

(घ) कलेति। सरसं रमणीयञ्च यथा तथा अनुबन्धुम् अनुकर्त्तुं शीलं यस्याः सा। अत्रेति। अत्रान्तरे अस्मिन्नवसरे उत्पलाक्ष्याः पद्मनयनाया मालत्याः किमपि अनिर्वचनीयम्, वाग्विभवं वाक्शक्तिम् अतिवृत्तमतीतं वैचित्र्यं यस्य तत् वाक्पथातीत-वैचित्र्यम्, उल्लसितः प्रकाशितः विभ्रमो विलासः शृङ्गारचेष्टाविशेषो यत्र तत्। भूरिः प्रचुरः सात्त्विकविकारः स्तम्भादिसात्त्विकभावो यत्र तत्। अपास्तं दूरीकृतं धैर्य्यं येन तत्, अतएव विजयि जयशीलं सर्व्वत्राप्रतिहतम्, तत् प्रसिद्धम्, मान्मथं कामकृतम् आचार्य्यकम् आचार्य्यभावः मन्मथदत्तशिक्षेत्यर्थः आविरासीत् प्रादुर्भूतम्।

विभ्रममाह भरतः—"यश्चित्तवृत्तेरनवस्थितत्वं शृङ्गारजो विभ्रम उच्यतेऽसौ।"

(ঘ) কলহংস। (শ্রবণ করিয়া) এ যে স্ত্রীলোকসম্বন্ধে সরস ও সুন্দর কথোপকথন হইতেছে।

মকরন্দ। তা'র পর তা'র পর?।

মাধব। ইত্যবসরে সেই পদ্মনয়না রমণীর অনির্ব্বচনীয় ও জগদ্বিজয়ী মন্মথদত্ত শিক্ষা আবির্ভূত হইয়াছিল; তাহার বৈচিত্র্য বাক্‌শক্তির অতীত,

(१) इत्थि आकधा इत्यपि पाठः।

(२) आयताक्ष्या इति पाठान्तरम्।

ततश्च । स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किञ्चिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥२७॥

सात्त्विकमाह विश्वनाथः—"स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः ॥"

वसन्ततिलका वृत्तम् ॥२६॥

स्तिमितेति । अहम्, आदौ स्तिमितानि मयि निश्चलानि, अनन्तरञ्च विकसितानि मदङ्गानां विशेषनिर्णयाय विकचीकृतानि तेषाम्, उल्लसन्त्यौ उन्नमन्त्यौ भ्रूलते येषु तेषाम् आदौ मसृणानि अनुरागेण मनोहराणि परञ्च मुकुलितानि निरतिशयसुखास्वादात् ईषन्निमीलितानि तेषाम्, प्रान्ते अपाङ्गदेशे विस्तारं भजन्त इति तेषां सम्यगाश्लिष्टमदङ्ग-रूपविषयाणामित्यर्थः । नयननिपातं मम दृष्टिपातं प्रतीति प्रतिनयननिपातं तस्मिन् यदा मयापि दृष्टिपातः कृतस्तदेत्यर्थः किञ्चिदाकुञ्चितानां लज्जया ईषत्सङ्कुचितानाम् आलोकितानां मालत्याः सहेला दर्शनानां विविधं नानारूपं पात्रं भाजनं विषय इत्यर्थः अभूवं भूतवान् ।

केचिदनयोः परिकरालङ्कारं वदन्ति । स्तिमितदर्शनादीनां लक्षणानि त्रिपुरारि-धृतानि । यथा—

"स्वगोचरान्न चाल्येत यत्तत् स्तिमितमुच्यते ।"
"विकासितं यद्विषये विशेषमवगाहते ।"
"मसृणं तत्तु विज्ञेयमनुरागकषायितम् ।"

তাহাতে নানাবিধ বিলাস প্রকাশ পাইতেছিল এবং বহুতর সাত্ত্বিক বিকার উপস্থিত হইয়াছিল, আর তাহা আমার ধৈর্য্য বিনষ্ট করিয়াছিল ॥২৬॥

তাহার পর সেই রমণীর নয়নযুগল (আমার প্রতি) কখনও নিশ্চল, কখনও উৎফুল্ল হইতেছিল, কখনও ভ্রূযুগল উর্দ্ধে উঠিতেছিল,

ततश्च (१) । अलसवलितमुग्धस्निग्धनिष्पन्दमन्दै-(२)
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितञ्च ॥२८॥

"स्फुरिताश्लिष्टपक्ष्माग्रा मुकुलीद्धपुटोज्झिता ।
"सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते ॥"
"येनाश्लिष्टो हि विषयस्तद्विलासीति कथ्यते ।"
"अपाङ्गभागसङ्कोचो यत्र तत् कुञ्चितं भवेत् ।"

आलोकितमाह भरतः—"सहसा दर्शनं यत् स्यात्तदालोकितमुच्यते ।"

मालिनी वृत्तम् ॥२७॥

अलसेति । अलसाः लज्जया कथञ्चिन्निवृत्ताः, वलिताः पुनर्दर्शनौत्कण्ठ्या तिर्य्यगुदञ्चिताः, मुग्धाः भावगर्भा अपि छलेन स्वाभाविकाः, स्निग्धाः स्नेहस्वरूपरतिभावानुसारिणः, निष्पन्दाः स्वविषयं परिहाय अन्यत्र न चलन्तः, मन्दाः विषयान्तरगमनानुद्यताः तैः । तथा अधिकं यथा स्यात्तथा विकसन् प्रकाशमानो यः अन्तर्विस्मयः अन्तःकरणगतमाश्चर्य्यं तेन स्मेरा प्रस्फुरिता तारा कनीनिका येषु तैः पक्ष्मलाक्ष्याः पक्ष्मले अतिनिविड़पक्ष्ममाले अक्षिणी यस्यास्तस्या मालत्याः कटाक्षैः पूर्वोक्तविशेषणविशिष्टैः अपाङ्गदर्शनैः मे मम अशरणं रक्षकशून्यं हृदयम् अपहृतं बलादाकृष्य गृहीतमिव, तथा अपविद्धं स्वात्मनि विद्धमिव, पीतम् अन्यत्र गमनसामर्थ्याभावात् निगीर्णमिव, तथा

কোমল ও মুদ্রিত হইতেছিল, কখনও প্রান্তভাগ বিস্তার পাইতেছিল এবং প্রত্যেক দৃষ্টিপাতে ঈষৎ সঙ্কুচিত হইতেছিল, এইরূপে আমি তাঁহার নানাবিধ দৃষ্টির পাত্র হইয়াছিলাম ॥২৭॥

তদনন্তর নিবিড় নয়নলোমশালিনী সেই রমণী আমার প্রতি যে সকল কটাক্ষপাত করিয়াছিল, সে গুলি লজ্জায় একবার নিবৃত্তি পাইতেছিল, আবার উৎকণ্ঠায় তির্য্যগ্‌ভাবে উপরে উঠিতেছিল, কখনও বিশেষ-

(१) तेश्चेति क्वचित् पाठः । (२) निष्पन्दमन्दैरिति पाठोऽपि दृश्यते ।

अहन्तु (१) तस्याः सर्वाकारहृदयङ्गमायाः सम्भाव्यमानस्नेह-

कस्यापि विषयस्याग्रहणात् उन्मूलितमिव उत्खातमिव। तस्याः कटाक्षैरतीवविह्वलो-ऽस्मीति भावः।

अत्र अपहृतमिवेत्याद्यर्थानुसन्धानात् चतस्रो भावाभिमानिन्यः प्रतीयमानाः क्रियोत्प्रेक्षाः, तथा छेकानुप्रासो वृत्त्यनुप्रासश्चेत्य तेषां मिथो नैरपेक्ष्यात् संसृष्ट्यलङ्कारः।

अलसादीनां लक्षणानि च विपुरारिघृतानि। यथा—

"अलसं तदभीष्टार्थाद्व्रीडाद्यैर्यन्निवर्त्तते।"

"वलितं तन्निवृत्तस्य भूयस्तत्रावलोकनम्।"

"व्यस्तं तिर्य्यगुदञ्चितम्।"

"स्वभावालोकितं मुग्धं भावगर्भमपि च्छलात्।"

"स्निग्धं यद्रतिभावेन स्नेहप्रायेन संयुतम्।"

"निष्पन्दं तत् यदन्यत्र दृष्टान्न स्पन्दते क्वचित्।"

"मन्थरा मन्दसञ्चारा।"

मालिनी वृत्तम् ॥२८॥

(क) अहन्त्विति। सर्वाकारेण लावण्यसौन्दर्य्यकटाक्षहावभावादिना सर्व्वथा प्रकारेण हृदयङ्गमायाः मनोरमायाः तस्या मालत्याः, सम्भाव्यमानः कथञ्चिन्निश्चीयमानः स्नेहरसः

অভিপ্রায় সূচক হইলেও ছলক্রমে স্বাভাবিক বলিয়া বোধ হইতেছিল, মনের অনুরাগ প্রকাশ করিতেছিল, কখনও নিশ্চল, কখনও মন্থর হইয়াছিল, কখনও মনের ভিতর অতিরিক্ত মাত্রায় বিস্ময় উৎপন্ন হওয়ায় তারা দুইটী বিস্ফারিত হইতেছিল। সেই কটাক্ষগুলি আমার ধৈর্য্যবিহীন চিত্তকে যেন বলপূর্ব্বক গ্রহণ করিয়াছিল, যেন নিজের ভিতরে নিক্ষিপ্ত করিয়াছিল, যেন গিলিয়া ফেলিয়াছিল এবং যেন একেবারে উন্মূলিত করিয়াছিল ॥২৮॥

(१) एवमहन्तु इत्यपि पाठः क्वचित्।

रसेन सन्निधिना (१) विधेयोकृतोऽपि पारिप्लवत्वमात्मनो निह्नोतुकामः (२) प्राक्प्रस्तुतस्य वकुलपुष्पदाम्नो यथा कथञ्चिदवशेषं ग्रथितवानेव। ततो मिलितवेत्रपाणि (३) वर्षवरप्रायपुरुषपरिवारा गजवधूमारुह्य नगरगामिनं मार्गमिन्दुवदनाऽलङ्कृतवती। तदा च—(ङ)

याान्त्या मुहुर्वलितकन्धरमाननं तत्
आवृत्तवृन्तशतपत्रनिभं वहन्त्या।

प्रेमानुरागौ यत्र तेन, सम्भाव्यमानमत्प्रेमानुरागप्रयुक्तेनेत्यर्थः सन्निधिना मत्सामीप्येन विधेयीकृतोऽपि वशीकृतोऽपि अहम् आत्मनः स्वस्य पारिप्लवत्वं चाञ्चल्यं निह्नोतुकामः अन्येभ्यो गोपयितुमिच्छुः सन् प्राक्प्रस्तुतस्य पूर्व्वमारब्धस्य वकुलपुष्पदाम्नः वकुलकुसुममालायाः, अवशेषम् अवशिष्टमंशं यथाकथञ्चित् प्रकारेण चित्तहस्तयोर्नितान्तचाञ्चल्यादतिकष्टेनेत्यर्थः ग्रथितवानेव। अन्यथा यदि कश्चित् संशयीतेति भावः। मिलिता उपस्थिता वेत्रपाणयो वर्षवरप्रायाः नपुंसकप्राया पुरुषा एव परिवारा परिजना यस्याः सा तथोक्ता। इन्दुवदना चन्द्रानना मालती। गजवधूं काञ्चित् हस्तिनीम्। अलङ्कृतवती गमनेन शोभितवती।

"षण्ढो वर्षवरः" इत्यमरः।

(ঙ) আমি কিন্তু সর্ব্বপ্রকার সুন্দরী সেই রমণীর অনুরাগসূচক সান্নিধ্য লাভ করায় একেবারে বশীভূত হইয়াও নিজের চাঞ্চল্য গোপন করিতে ইচ্ছা করিয়া পূর্ব্বারব্ধ সেই বকুলফুলের মালার অবশিষ্ট অংশ গাঁথিতেই ছিলাম। তাহার পর সেই চন্দ্রমুখী একটী হস্তিনীর উপরে আরোহণ করিয়া সম্মিলিত বেত্রধারী নপুংসকপ্রায় পরিজনবর্গের সহিত নগরগামী রাজপথকে অলঙ্কৃত করিলেন।

(१) अभिसन्धिना इति पाठान्तरम्। (२) अपनिह्नोतुकाम इत्यपि पाठः।

(३) मिलितवेत्रशस्त्रपाणीति पाठभेदः।

दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढ़ं निखात इव मे हृदये कटाक्षः ॥२९॥

यान्त्येति । मुहुः पुनः पुनः बलिता पश्चादवस्थितं मामवलोकयितुं परिवर्त्तिता कन्धरा ग्रीवा यस्मिन् कर्म्मणि तद् यथा तथा यान्त्या गच्छन्त्या अतएव आवृत्तं पवनान्दोलनादिना परिवर्त्तितं वृन्तं यस्य तादृशं यत् शतपत्रं पद्मं तन्निभं तत्तुल्यं तत् आननं मुखं वहन्त्या धारयन्त्या पक्ष्मलाक्ष्या तया मालत्या अमृतेन च तदानीं निरतिशयानन्दजननात् इदानीमपि तेनैव जीवनाच्च सुधया, तथा विषेण च दुःसहवियोगवेदनाकारणत्वात् गरलेन च दिग्धो लिप्त इव कटाक्षः अपाङ्गेनापरमेकं दर्शनं मे मम हृदये गाढ़ं निखात इव प्रोथित इव ।

अत्र आवृत्तवृन्तशतपत्रनिभमिति लुप्तोपमा, तृतीयपादे अमृतविषयोर्विरूपयोः सङ्घटनया विषमः, तथा वस्तुतो दिग्धत्वाभावात् इवाद्यभावाच्च प्रतीयमाना भावाभिमानिनी क्रियोत्प्रेक्षा, निखात इवेति वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः । गाढ़ं निखात इव इत्यनेन कटाक्षस्य मदननाराचत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः । तथा युगपदानन्दविषादोदयात् विधानं नामेदं मुखसन्ध्यङ्गम् । तथा च दर्पणे—

"सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ।"

न च विलोभनाद्यङ्गमनिर्द्दिश्य परवर्त्ति विधानं नामाङ्गमत्र कथं निर्द्दिष्टमिति वाच्यम्, "एतानि चाङ्गानि ( उपक्षेप-परिकर-परिन्यासरूपाणि ) उक्तेनैव पौर्व्वापर्य्येण सम्भवन्ति, अङ्गान्तराणि त्वन्यथाऽपीति दर्पणकारेणैव व्यतिक्रमस्वीकारात् । एवमन्यत्रापि बोध्यम् ।

वसन्ततिलका वृत्तम् ॥२९॥

তখন তিনি বার বার গ্রীবাদেশ পরিবর্ত্তিত করিয়া যাইতে লাগিলেন, সুতরাং বায়ুসঞ্চালনে, পরিবর্ত্তিত-বৃন্ত-সংলগ্ন পদ্মের ন্যায় মুখমণ্ডল ধারণ করিতেছিলেন, এই অবস্থায় সেই নিবিড়-নয়ন-লোম-শালিনী রমণী, অমৃত ও বিষলিপ্ত আর একটী কটাক্ষ আমার হৃদয়ে গাঢ়ভাবেই যেন প্রবেশ করাইয়া দিয়াছিলেন ॥২৯॥

ततः प्रभृति—

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जड़यति च तापञ्च कुरुते (१) ॥३०॥

अपि च,

परिच्छेदव्यक्तिर्भवति न पुरःस्थेऽपि विषये
भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम् ।

परिच्छेदेति । इयान् एतावानिति निश्चयात्मकं ज्ञानं परिच्छेदः तमतीतः, इयत्तया इदृक्तया वा निर्द्देष्टुमशक्यः, सकलवचनानां वाचक-लक्षक-व्यञ्जकरूपाणां सर्वेषां शब्दानाम् अविषयः केनापि शब्देन प्रतिपादयितुमशक्यः, पुनर्जन्मनि जन्मान्तरे अस्मिंश्च जन्मनि यः, अनुभवपथं ज्ञानविषयतां न गतवान् कदाचिदपि नानुभूत इत्यर्थः । तथा विवेकस्य तात्त्विकज्ञानस्य प्रध्वंसात् संचयात् उपचितेन वृद्धिं गतेन महामोहेन विशालाज्ञानेन गहनः भीषणः कोऽपि अनिर्वचनीयः विकारः मालतीविश्लेषजनितवैषम्यम् अन्तः चित्तं जड़यति विकलीकरोति तापञ्च कुरुते सन्तापयति च । अतीवविह्वलोऽस्मीति भावः ।

अत्र जड़यति तापं कुरुते इत्यनेकक्रिययोर्विकार इत्येककर्त्तृकारकत्वात् दीपकमलङ्कारः ।

प्रत्येकप्राधान्यसूचनार्थं चकारद्वयम् । शिखरिणी वृत्तम् ॥३०॥

তদবধি, যাহার ইয়ত্তা নাই, যাহা সমস্ত বাক্যের অগোচর, যাহা পূর্ব্বজন্মে ও ইহজন্মে অনুভবের বিষয় প্রাপ্ত হয় নাই এবং যাহা বিবেক নষ্ট হওয়ায় বৃদ্ধিপ্রাপ্ত মহামোহে নিতান্ত ভীষণ, এইরূপ কোন অনির্ব্বচনীয় বিকার আমার চিত্তকে বিকল করিয়া ফেলিয়াছে এবং সন্তপ্তও করিতেছে ॥৩০॥

(१) तनुते इति पाठान्तरम् ।

न सन्तापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥२१॥

कल । दिढ़ं क्खु एसो कए वि अवहरिदो । अवि णाम मालदी ज्जेव सा भवे ? । (च)

(च) दृढ़ं खल्वेष कयापि अपहृतः । अपि नाम मालत्येव सा भवेत् ? ।

परिच्छेदेति । पुरःस्थेऽपि इन्द्रियसन्निकर्षयोग्ये अग्रतो विद्यमानेऽपि विषये वस्तुनि परिच्छेदव्यक्तिः घटोऽयं पटोऽयमिति निश्चयात्मकेन ज्ञानेन प्रकाशो न भवति मनसो विकारोपहततया बहिरिन्द्रियासम्बन्धादिति भावः । तथा अभ्यस्तेऽपि अनेकानुभवेन स्थिरीकृतसंस्कारेऽपि विषये अतथाभावेन अतथात्वेन अतद्रूपत्वेन विरसं विपर्यस्तं स्मरणं भवति शतशः परिचितोऽपि घटः पटरूपेण स्मृतावाविर्भवतीत्यर्थः, तथा हिमसरसि तुषारदीर्घिकायां वा चन्द्रमसि हिमांशुकिरणे वा सञ्चारकाल इत्यर्थः सन्तापच्छेदः तद्विरह-जनिततापापगमो न भवति । तथा निष्ठाशून्यम् अवस्थितिरहितम् अधीरमिति यावत् मनः कर्त्तृ भ्रमति च, इतस्ततो विचरति च, तथा किमपि अनिर्वचनीयं वस्तु आलिखति अवगाहते विषयीकरोति च । दुःसहेन तद्विरहेण नितान्तविधुरोऽस्मीति भावः । अनेनोन्मादावस्थाऽभिहिता ।

अत्र प्रथमार्द्धे विरहेण समाधानाद्विरोधाभासोऽलङ्कारः, तृतीयचरणे शीतलोपचाररूपहेतौ सत्यपि तत्फलसन्तापच्छेदाभावात् विशेषोक्तिः, तथा चतुर्थचरणे भ्रमत्यालिखतीत्यनेक-क्रिययोरेकमनःकर्त्तृकारकत्वात् पूर्ववत् दीपकञ्च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ।

शिखरिणी वृत्तम् ॥२१॥

আরও শুন, সম্মুখস্থিত বস্তুতেও ( সেই বিকারবশতঃ ) নিশ্চয় হইতেছে না এবং অভ্যস্ত পদার্থেও অন্যরূপ অশান্তিকর স্মরণ জন্মিতেছে। শীতল সরোবর কিংবা চন্দ্রকিরণেও সন্তাপের নিবৃত্তি হইতেছে না এবং অধীর চিত্ত সর্ব্বদাই ঘুরিতেছে এবং অনির্ব্বচনীয় কোন বিষয় কল্পনা করিতেছে ॥৩১॥

मक। स्वगतम्। अहो! अभिषङ्गः (१)। तत् किं निषेधयामि प्रियसुहृदम्। अथवा, (छ)

मा मूमुहत् खलु भवन्तमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत्।
इत्यादि नन्विह निरर्थकमेव यस्मिन् (२)
कामश्च जृम्भितगुणो नवयौवनञ्च ॥३२॥

प्रकाशम्। वयस्य! अपि विदिते (३) तदन्वयनामनी?। (ज)

---

(च) कलेति। अपहृतः सौन्दर्य्येण अनुरागप्रकाशेन वा आकृष्टः।

(छ) मकेति। अहो आश्चर्य्यः अत्यधिक इत्यर्थः अभिषङ्ग आसक्तिः।

मेति। न अन्यस्मात् चित्तव्यतिरिक्तात् जन्म यस्य स अनन्यजन्मा मन्मथः भवन्तं मा मूमुहत् न मोहयतु खल्विति निषेधे। तथा ते तव मतिः मलीमसः मलिन-तमोजन्यत्वात् मलिनो यो विकारः कामावेशः तेन घना सान्द्रा छन्ना माभूत् न भवतु इत्यादि वाक्यम् इह अस्मिन् माधवे निरर्थकमेव फलजननाभावात् व्यर्थमेव भवेत्। नन्वित्यात्म-निश्चये। कथमेतदित्याह यस्मिन्निति। यस्मिन् माधवे जृम्भितो बाहुल्येन प्रकटितो गुणः सम्मोहननैपुण्यं येन तादृशः कामः, नवयौवनञ्च वर्त्तते। मादृशां तादृशनिषेधा-पेक्षया जृम्भितगुणकामावेशस्य स्वाभाविकनवयौवनविकारस्य च शतधाप्रबलत्वमिति भावः।

अत्र निरर्थकमेवेति वाक्यार्थं प्रति यस्मिन्नित्यादिवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा तत्र कामस्य जृम्भितगुणत्वरूपे एकस्मिन् कारणे सत्यपि नवयौवन-रूपकारणान्तरोपन्यासात् समुच्चयश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः। "आत्मा जानाति यत्

---

(চ) কলহংস। কোনও রমণী ইহাকে অত্যন্ত আকর্ষণ করিয়াছে। তবে সে কি মালতীই হইবে?।

(ছ) মকরন্দ। (স্বগত) অদ্ভুত আসক্তি দেখিতেছি। তবে কি প্রিয়সখাকে নিষেধ করিব? অথবা—

---

(१) अभिष्वङ्ग इति पाठान्तरम्। (२) यस्मादित्यपि पाठः। (३) तत इति पाठभेदः।

माधवः। सखे! श्रूयताम्—अथ तस्याः करेणुकारोहणसमय एव महतः (१) सखीकदम्बकादन्यतमा वारयोषित् विलम्ब्य

पाप''मित्यादिवत् यस्मिन्निति यत्पदस्य परवाक्यगतत्वेन तच्छब्दानपेक्षणात् न वाक्यगतविधेयाविमर्षदोषः।

"कुसुमेषुरनन्यजः" इत्यमरः। वसन्ततिलका वृत्तम् ॥३२॥

(ज) प्रकाशमिति। "सर्व्वश्राव्यं प्रकाशं स्या"दिति प्रकाशलक्षणम्। अपिशब्दः प्रश्ने। तस्याः प्रमदाया अन्वयनामनी वंशनामधेये। सा चेत् नीचजातीया, तत मातृनाम्नी वा स्यात्तदा विवाहलाभावेन तस्यामासक्तिर्निष्फलैव।

"सदृशीं भार्य्यां विन्देत" इति विष्णुवचनात्

"मातुर्यन्नाम गुह्यं स्यात् सुप्रसिद्धमथापि वा।
तन्नाम्नी या भवेत् कन्या मातृनाम्नीं प्रचक्षते॥
प्रमादाद् यदि गृह्णीयात् प्रायश्चित्तं समाचरेत्।
ततश्चान्द्रायणं कृत्वा तां कन्यां परिवर्जयेत्॥"

इति मत्स्यसूक्तवचनाच्चेति भावः।

(झ) माधव इति। अहो विदिते एव तदन्वयनामनी इत्याख्यातुं तावद्वृत्तान्तमाह अथेति। करेणुका हस्तिनी। महतः विशालात् सखीकदम्बकात् वयस्यासमूहात्, अन्यतमा काचित्। विलम्ब्य यावदन्या दूरं व्रजन्ति तावत्कालं कुसुमचयनच्छलेन

---

কামদেব যেন তোমাকে মোহিত করেন না; তোমার বুদ্ধি যেন মলিন বিকারে আচ্ছন্ন হয় না; ইহার প্রতি ইত্যাদি উপদেশ নিরর্থক; কারণ, যাহার উপরে কামদেব প্রভাব বিস্তার করিয়াছেন এবং নবযৌবনও রহিয়াছে ॥৩২॥

(জ) (প্রকাশ্যে) বয়স্য! সেই রমণীর বংশ ও নাম জানিতে পারিয়াছ কি?।

---

(१) अपि वयस्येन विदिते इति पाठान्तरम्।

कुसुमावचयक्रमेण (१) नेदीयसी भूत्वा प्रणम्य कुसुमापीड़-व्याजेन मामेवमुक्तवती—(ञ)

“महाभाग! सुश्लिष्टगुणतया रमणीय एष वः सुमनसां (२) सन्निवेशः। कुतूहलिनी च नो भर्त्तृदारिकाऽस्मिन् (३) वर्त्तते।

विलम्ब्येति तात्पर्य्यम्। एकाकिन्या एव माधवसमीपे गमनार्थमिदं विलम्बनमिति बोध्यम्। कुसुमावचयक्रमेण पुष्पचयनपारम्पर्य्येण, आदौ यत्किञ्चिदेकं कुसुमं चिन्वती किञ्चिदासन्ना ततः पुनरपरं चिन्वती ततोऽप्यासन्ना, इत्येवं क्रमेणेत्यर्थः, नेदीयसी भूत्वा मम अत्यन्त-निकटवर्त्तिनी भूत्वा। कुसुमस्य य आपीड़ः शिरसि तिर्य्यग्बद्धमाला तस्य व्याजेन शिरसि तिर्य्यग्बद्धा या कुसुममाला, तस्याः सुसङ्गलास्थापनच्छलेनेत्यर्थः प्रणम्य मां नमस्कृत्य। अत्र प्रणामेन त्वमेवास्मद्भर्त्तृदारिकाया भर्त्तेति तया सूचितम्।

अथवा कुसुमापीड़व्याजेन मया ग्रथ्यमानवकुलकुसुममालाप्रार्थनाच्छलेन। एवं वक्ष्यमाणम्।

(ञ) तद्वाक्यमनुवदति महाभागेति। हे महाभाग! परमरमणीयाकृतिमत्तया महा-भाग्यशालिन्! एष दृश्यमानः वो युष्माकं सुमनसां वकुलकुसुमानां सन्निवेशः ग्रथनं सुश्लिष्टगुणतया सम्यक्संलग्नसूत्रत्वेन कुसुमविवरपूरणोपयोगिपीवरसूत्रत्वेन कुसुमानां सुसमानावस्थानेनेत्यर्थः रमणीयो मनोहरः। तेन किमित्याह कुतूहलिनीति। नोऽस्माकं भर्त्तृदारिका असौ दूरे दृश्यमाना स्वामिकन्या, अस्मिन् त्वया ग्रथ्यमाने कुसुमदाम्नि

---

(ঞ) মাধব। বয়স্য! শোন—তাহার পর সেই রমণীর হস্তিনীতে আরোহণ করিবার সময়েই বৃহৎ সখীসমূহ মধ্য হইতে একটী বারাঙ্গনা, একটু বিলম্ব করিয়া, ক্রমশঃ পুষ্পচয়ন করিতে করিতে আমার অত্যন্ত নিকটবর্ত্তিনী হইয়া, মস্তকস্থিত পুষ্পের মালা যথাস্থানে রাখিবার ছলে আমাকে নমস্কার করিয়া, এইরূপ বলিল—

---

(१) बालवकुलकुसुमावचयक्रमेणेति भिन्नः पाठः। (२) क्वचित् ‘वः सुमनसाम्’ इति पाठो नास्ति। (३) कुत्रचित् ‘अस्मिन्’ इति पाठोऽपि न दृश्यते।

তস্যামভিনবো বিচিত্রঃ কুসুমেষুব্যাপারঃ। তদ্ভবতু কৃতার্থতা বৈদগ্ধ্যস্য। ফলতু নির্ম্মাণরমণীয়তা বিধাতুঃ। আসাদয়তু (১) সরস এষ ভর্ত্তৃদারিকায়াঃ (২) কণ্ঠাবলম্বনমহার্ঘতা”-মিতি।) (ঞ)

কুতূহলিনী গ্রহণায় কৌতুকবতী বর্ত্ততে। ননু শ্রমেণ গ্রথ্যমানমিদং কথং দীয়তে ইত্যাহ তস্যামিতি। তস্যাং ভর্ত্তৃদারিকায়াম্, অভিনবো নূতনঃ বিচিত্রঃ অতীবাশ্চর্য্যঃ কুসুমেষু মালানির্ম্মাণোপযোগিষু পুষ্পেষু বিষয়ে ব্যাপারঃ গ্রথনশক্তিঃ বিদ্যতে। তদস্মাৎ, বৈদগ্ধ্যস্য তবৈতন্মালারচনানৈপুণ্যস্য কৃতার্থতা তস্যৈ প্রদানেন চরিতার্থতা ভবতু। সা খলু মালা-রচনায়ামভিনববিচিত্রনৈপুণ্যবতী জাতা সুতরাং তস্যৈ প্রদানেন গুণিনি জনে নিজগুণপ্রকাশাৎ তবাস্য রচনানৈপুণ্যগুণস্য চরিতার্থকতা ভবেদিতি ভাবঃ। তথা বিধাতুর্নির্ম্মাতুস্তব নির্ম্মাণেন রমণীয়তা কুসুমদাম্নোঽপি সৌন্দর্য্যং ফলতু। রমণীয়হস্তসংসর্গাৎ কুসুমদাম্নো-ঽপি সৌন্দর্য্যং সার্থকং ভবতু, সুতরাং শ্রমনির্ম্মিতামপীমাং তস্যৈ দাতুমর্হসীতি ভাবঃ। ননু তথাপি কথং গৃহ্যত ইত্যাহ আসাদয়ত্বিতি। সরসঃ সদ্যঃপতিতকুসুমৈর্নির্ম্মীয়মানত্বাৎ অম্লানঃ অশুষ্কঃ, এষ মাল্যগুচ্ছঃ ভর্ত্তৃদারিকায়াঃ অস্মৎস্বামিকন্যায়াঃ কণ্ঠাবলম্বনেন গলদেশাশ্রয়ণেন মহার্ঘতাং মুক্তামালাস্পদলাভান্মহামূল্যতাম্ আসাদয়তু প্রাপ্নোতু অস্মাকং ভর্ত্তৃদারিকা খলু কণ্ঠে দাতুমেবেমাং যাচত ইত্যর্থঃ।

(ঞ) “মহাশয়! সূত্রটী সুন্দররূপে সংলগ্ন হইয়াছে বলিয়া আপনার এই ফুলের মালাটী বড়ই সুন্দর হইয়াছে; আমাদের স্বামিকন্যার এই মালাটীর প্রতি কৌতুক জন্মিয়াছে; কারণ, তাঁহারও নূতন আশ্চর্য্য পুষ্পমালা নির্ম্মাণ করিবার সামর্থ্য জন্মিয়াছে। অতএব (তাঁহাকে এই মালাটী দান করায়) আপনার এই নৈপুণ্যের চরিতার্থতা হউক, আপনার নির্ম্মাণসৌন্দর্য্য সফল হউক। নবপুষ্পনির্ম্মিত এই মালাটীও স্বামিকন্যার কণ্ঠাবলম্বন করিয়া মহামূল্যতা লাভ করুক।”

(১) সমাসাদয়তু ইতি পাঠান্তরম্। (২) ভর্ত্তৃদারিকায়াং ইতি সপ্তম্যন্তঃ পাঠভেদঃ।

अनेनेदमप्यर्थान्तरं ध्वनयति। यथा—एष: अस्माभि: सखीजनैश्च सहृदयै: अभिलष्यमाण:, सुमनसां योग्ययोरिव परस्परयोरनुरागेणाकर्षणात् प्रशस्तमनसां वो युष्माकं गौरवाद्बहुवचनं मालतीमाधवयोर्युवयोरित्यर्थ: सन्निवेश: आवेश: परस्परासक्तिसम्बन्ध:, सुश्लिष्टगुणतया रूपलावण्यादिसुयोग्यगुणकतया रमणीय:। विशेषतस्तु नोऽस्माकं भर्तृदारिका अस्मिन् सन्निवेशे कुतूहलिनी आपेक्षिकबालत्वात् कौतुकवती च वर्त्तते। पुनश्च, तस्यां भर्तृदारिकायाम् अभिनव: प्राथमिक: विचित्र: नानाविधभावप्रकाशादतीवाश्चर्य: कुसुमेषो: कामस्य व्यापार: भवन्तं लक्ष्यीकृत्य प्रादुर्भावो वर्त्तते तत्तस्मात् वैदग्ध्यस्य युवयो: सकलकलानैपुण्यस्य कृतार्थता परस्परयो: परस्परानुभवात् सार्थकता भवतु। तथा विधातु: स्रष्टुर्ब्रह्मण: निर्म्माणरमणीयता युवयो: सृष्टिसौन्दर्य्यमपि फलतु योग्यसमागमादिति भाव:। मुख्यं प्रतिपाद्यमाह आसादयत्विति। सरसो रसिक:, एष भवान्, भर्तृदारिकाया: कण्ठावलम्बनेन कण्ठालिङ्गनेन महार्घताम् अन्ययुवतीनां दुर्लभत्वात् महामूल्यताम् आसादयतु प्राप्नोतु। इति इत्थम् उक्तवतीत्यन्वय:।

अत्र मालत्यासक्तिज्ञापनरूपप्रधानार्थसूचनादिदमेकं पताकास्थानम्। तथा च दर्पणे—

"द्व्यर्थो वचनविन्यास: सुश्लिष्ट: काव्ययोजित:।
प्रधानार्थान्तरापेक्षी पताकास्थानकं परम्॥"

अत्र याच्ञा नाम नाट्यालङ्कारश्च। यथा तत्रैव—

"याच्ञा तु क्वापि याच्ञा या स्वयं दूतमुखेन वा।"

तथा मालत्यनुरागरूपवीजस्य सम्यगाहितत्वादिदं समाधानं नाम मुखसन्ध्यङ्गम्। तथा च तत्रैव—

"वीजस्यागमनं यत्तु तत् समाधानमुच्यते।"

कादम्बर्य्यामपीदृशी चन्द्रापीडोक्तिर्यथा—"अनवरतकृताश्रुविन्दुपातेन वर्त्तते मुक्ताभरणता, गृहाण स्वयंवराहाणि मङ्गलप्रसाधनानि, सकुसुमशिलीमुखा हि शोभते नवालते"ति।

দ্বিতীয় অর্থ—"মহাশয়! আপনারা পরস্পর সমানগুণসম্পন্ন ও

मक। अहो! वैदग्ध्यम्। (ट)

माधवः। तया च मदनुयुक्तया समाख्यातम्-"इयममात्य-भूरिवसोः प्रसूतिर्मालती नाम, अहञ्च प्रसादभूमिर्भर्त्तृदारिकाया धात्रेयिका लवङ्गिकानामे"ति। (ठ)

कल। सहर्षम्। किं णाम मालदीत्ति। दिट्ठिआ विलसिदं क्खु भअवदा देवेण कुसुमाउहेण, ता जिदं अम्हेहिं। (ड)

(ड) किं नाम मालतीति। दिष्ट्या विलसितं खलु भगवता देवेन कुसुमायुधेन, तज्जितमस्माभिः।

---

(ट) मकेति। अहो आश्चर्य्यम्, वैदग्ध्यं तत्परिचारिकायाः आगमनप्रणामवाक्यानां चातुर्य्यम्।

(ठ) माधव इति। मदनुयुक्तया मया पृष्टया। प्रसूतिः कन्या। प्रसादभूमिरनु-ग्रहपात्रम्। भूरिवसुकन्यात्वेनेयं तव विवाहयोग्या। तस्या धात्रीकन्यात्वात् विश्वस्तत्वेन प्रसादभूमित्वाच्च ममान्तिके अभिप्रेतं सर्वमेव त्वं वक्तुमर्हसीति भावः।

---

প্রশস্তহৃদয় বলিয়া আপনাদের ( মালতী ও মাধবের ) এই পরস্পরানুরাগ বড়ই সুন্দর; আমাদের প্রভুকন্যা কিন্তু এই অনুরাগে বিশেষ কৌতুকবতী; কারণ, তাহাতে নূতন ও আশ্চর্য্য কামবিকার উপস্থিত হইয়াছে। অতএব আপনাদের এই নৈপুণ্য (পরস্পর সম্মেলনে) চরিতার্থ হউক, ( যোগ্য-সম্মেলনবশতঃ ) বিধাতার নির্ম্মাণ-সৌন্দর্য্য সফল হউক এবং এই রসিক পুরুষ ( আপনি ) আমাদের প্রভুকন্যার কণ্ঠাবলম্বন করিয়া অন্য রমণীর পক্ষে দুর্ল্লভ হউন।"

(ট) মকরন্দ। ( এই বারাঙ্গনার ) অদ্ভুত চাতুর্য্য ?

(ঠ) মাধব। আমি জিজ্ঞাসা করিলে সেই বারাঙ্গনা বলিল—"ইনি মন্ত্রী ভূরিবসুর কন্যা, ইঁহার নাম মালতী; আর আমি এই প্রভু-কন্যার ধাত্রীর কন্যা ও অনুগ্রহের পাত্রী, আমার নাম লবঙ্গিকা।"

मक। अमात्यभूरिवसोरात्मजेत्यपर्य्याप्तिर्बहुमानस्य। अपि च मालती मालतीति मोदते भगवती कामन्दकी, तां च किल राजा नन्दनाय प्रार्थयते (१) इति किंवदन्ती श्रूयते। ततः ? (२)। (ढ)

माधवः। तया चाहमभ्यर्थ्यमानस्तां वकुलमालामात्मनः कण्ठादवतार्य्य दत्तवान्। असौ पुनरभिनिविष्टया दृशा मालती-

(ड) कलेति। किं नाम मालती, यामुद्दिश्य कथा प्रवृत्ता सा किं मालतीत्यर्थः। तर्हीति शेषः विलसितम् उभयत्रैव विजृम्भितम्। जितम् उत्कर्षेण वृत्तम्। कामेन स्वामिनः प्राणसङ्कटे समुपस्थिते तत्त्राणोपायभूतमालतीलिखिततच्चित्रानयनादिति भावः।

(ढ) मकेति। अमात्यभूरिवसोरात्मजा, इति, एतावन्मात्रं बहुमानस्य मालत्या गौरवस्य अपर्य्याप्तिः असमाप्तिः। अमात्यभूरिवसोः कन्यात्वेनैव तस्या गौरवमिति न, किन्तु रूपलावण्यादीन्यपि गौरवकारणानि सन्तीति भावः। किंवदन्ती जनश्रुतिः। संसारविरागिण्याः कामन्दक्या अपि प्रमोदहेतुत्वात् अन्याः शतशो युवतीरपहाय स्वयं राज्ञा सुहृदे नन्दनाय प्रार्थ्यमानत्वाच्च सा मालती परमश्लाघनीयेति भावः। ततः तदनन्तरं किं जातं तद्ब्रूहीत्यर्थः।

(ण) माधव इति। अभ्यर्थ्यमानो याच्यमानः। आत्मनः कण्ठादवतार्य्य स्वकण्ठे दत्त्वा पुनरुन्मोच्य। प्रियोपभुक्तस्य आदरातिशयार्थं स्वकण्ठे समर्पणं कृतमिति बोध्यम्।

(ড) কলহংস। ( সহর্ষ ) এ কি মালতী ? ভাল, ভগবান্ কামদেব উভয়ের উপরই প্রভাব বিস্তার করিয়াছেন ; সুতরাং আমাদেরই জয়।

(ঢ) মকরন্দ। মন্ত্রী ভূরিবসুর কন্যা ! এ যে আদরের পরিসীমা নাই। বিশেষতঃ ভগবতী কামন্দকী 'মালতী' 'মালতী' করিয়া বড়ই আমোদিত হন। কিন্তু রাজা, নন্দনের জন্য সেই মালতীকে প্রার্থনা করিয়াছেন, এইরূপ জনশ্রুতি শুনিতেছি। তা'র পর ?

(१) याचते इति भिन्नः पाठः। (२) तत इति पाठः क्वचिन्नास्ति।

मुखावलोकनविह्वलतया विषमविरचितैकभागामपि तामेव बहुमन्यमानां "महानयं प्रसाद" इति व्याहृत्य गृहीतवती (१) अनन्तरञ्च यात्राभङ्गप्रचलितस्य महतः पौरजनस्य (२) सङ्कुलेन विघटितायां तस्यामागतोऽस्मि। (ग)

सखी मालत्याः सा सखी अभिनिविष्टया तदेकलग्नया दृशा चक्षुषा। मालतीमुखावलोकनेन या विह्वलता मम व्याकुलता तया हेतुना। "विह्वलव्याकुलौ समा"वित्यमरः। विषमम् असमानं यथा स्यात्तथा विरचित एकभागो यस्यास्ताम्, मालतीदर्शनेन व्याकुलतया तादृगभिनिवेशाभावात् पूर्वं ग्रथितकुसुमानां विपरीतमुखकुसुमैर्ग्रथितैकदेशामित्यर्थः। यात्राभङ्गेन उत्सवनिवृत्त्या प्रचलितस्य नगरं प्रति प्रस्थितस्य, महतो विशालस्य, पौरजनस्य पुरवासिजनसमूहस्य सङ्कुलेन गहनेन व्याप्त्या तस्यां मालत्यां विघटितायां तिरोहितायां सत्याम्।

अत्र निरुक्तिर्नाम नाट्यलक्षणम्। यथा साहित्यदर्पणे—

"पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्तितम्।"

(গ) মাধব। লবঙ্গিকা প্রার্থনা করিলে আমি সেই বকুলফুলের মালাটী নিজের কণ্ঠদেশ হইতে নামাইয়া তাহার হস্তে সমর্পণ করিলাম। আমি সাগ্রহ দৃষ্টিতে মালতীর মুখ দর্শন করিতে থাকায় একেবারে ব্যগ্র হইয়া পড়িয়াছিলাম, তাই এই মালাটীর একদিক বিপরীতভাবে গাঁথিয়াছিলাম; তথাপি লবঙ্গিকা সেই মালাটীকেই বিশেষ আদর করিয়া, "এটী বড়ই অনুগ্রহ করিলেন" এই কথা বলিয়া গ্রহণ করিল। তাহার পর মহোৎসব ভঙ্গ হওয়ায় পুরবাসী অসংখ্য লোক যাইতে লাগিল; মালতী তাহাদের মধ্যে তিরোহিত হইলে আমি চলিয়া আসিয়াছি।

(१) मुहुर्मुहुर्बहुमन्यमाना 'महानयं प्रसाद' इति प्रतिगृहीतवतीति पाठान्तरम्।

(२) पौरनैगमजनस्य इति पाठभेदः।

मक। वयस्य! मालत्या अपि स्नेहदर्शनात् सुश्लिष्टमेतत्। योऽपि हि कपोलपाण्डुतादिचिह्नसूचितः प्राक्प्रवृद्धस्तस्याः कामाभिषङ्गः, (१) सोऽपि त्वन्निबन्धन इत्यभिव्यक्तमेवैतत्। एतत्तु न ज्ञायते, क्व दृष्टपूर्वस्तया (२) वयस्य इति। न खलु तादृश्यो महाभागधेयाः (३) कुमार्य्योऽन्यत्रासक्तमनसो भूत्वा अन्यत्र (४) चक्षूरागिण्यो भवन्ति। अपि च, (त)

(त) मकेति। एतत् परस्परावलोकनवकुलमालाप्रदानादिकं कार्य्यं सुश्लिष्टम्. उभयोः समागमनिदानत्वेन साधु सङ्घटितम्। प्रवृद्धो वृद्धिं प्राप्तः। कामाभिषङ्गः मदनावेशः। त्वमेव निबन्धनं कारणं यस्य सः, त्वामुद्दिश्येत्यर्थः। इत्येतत् अभिव्यक्तमेव प्रकाशितमेव इति ज्ञायत इति शेषः। तु किन्तु। तया मालत्या, वयस्यस्त्वम्। इत्येतत् न ज्ञायते मयेत्यर्थः। ननु अन्यस्मिन्नपि यूनि कामाभिषङ्गेण तस्याः कपोल-पाण्डुतादिसम्भवात् कथं मन्निबन्धन एव कामाभिषङ्ग इति त्वया ज्ञायत इत्याह न खल्विति। चक्षूरागिण्यः नयनप्रीतिमत्यः। तथा च—

"यद्यन्यासक्तचित्ता सा न चक्षुस्त्वयि पातयेत्।
मनोऽन्यत्र दृगन्यत्र चेटीनां नीत्तमस्त्रियाः॥"

अपि च अन्यच्च त्वन्निबन्धने तस्याः कामाभिषङ्गे लिङ्गमस्तीत्यर्थः।

(ত) মকরন্দ। সখে! মালতীরও অনুরাগ দেখা গিয়াছে বলিয়া এ ঘটনাটী বেশ ঘটিয়াছে। তা'র পর মালতীর বৃদ্ধিপ্রাপ্ত যে কামাবেশ তাহার গণ্ডপাণ্ডুতাপ্রভৃতি চিহ্নদ্বারা সূচিত হইয়াছিল, তাহাও তোমার জন্যই ইহা সুস্পষ্টই হইয়াছে। কিন্তু ইহা বুঝিতেছি না যে, মালতী তোমাকে পূর্ব্বে কোথায় দেখিয়াছিলেন। তাঁহার ন্যায় মহাভাগ্যবতী কুমারীগণ

(१) कामाभिष्वङ्ग इति क्वचित् पाठः। (२) तस्या इति भिन्नः पाठः।

(३) महाभागधेयजन्मान इति पुस्तकान्तरे पाठः।

(४) परत्र इति पाठोऽपि दृश्यते।

অন্যোন্যসম্ভিন্নদৃশাং সখীনাং
তস্যাস্ত্বয়ি প্রাগনুরাগলিঙ্গম্ (১)।
কস্যাপি কোঽপীতি নিবেদিতঞ্চ

মাধবঃ। কিঞ্চান্যৎ (২)। (থ)

মক। ধাত্রেয়িকায়াশ্চতুরং বচশ্চ ॥২২॥

কিন্তদিত্যাহ অন্যোন্যেতি। অন্যোন্যসম্ভিন্নদৃশাং পরস্পরসম্মিলিতচক্ষুষাং সোঽয়মিতি সপ্রত্যভিজ্ঞমিব মাং নির্দ্দিশ্য কৃতপরস্পরমুখাবলোকনানামিত্যর্থঃ, তস্যা মালত্যাঃ সখীনাং ‘কস্যাপি কোঽপী’তি “ভর্ত্তৃদারিকে! দিষ্ট্যা বর্দ্ধামহে, যদত্রৈব কোঽপি কস্যাপি, তিষ্ঠতি” ইতি পূর্ব্বোক্তরূপং নিবেদিতঞ্চ বিজ্ঞাপিতঞ্চ ত্বয়ি তস্যা মালত্যা অনুরাগস্য অনুরাগসত্তায়া ইত্যর্থঃ লিঙ্গম্ অনুমিতিসাধকো হেতুঃ।

(থ) মাধব ইতি। উৎকণ্ঠয়া চতুর্থচরণোচ্চারণমাত্রবিলম্বমপ্যসহমানঃ নিবেদিতঞ্চেতি চকারসমুচ্চিতং পৃচ্ছতি কিঞ্চান্যদিতি। চকারেণ কিং সমুচ্চিতমিত্যর্থঃ।

মকেতি। ধাত্রেয়িকায়া ধাত্রীকন্যায়া লবঙ্গিকায়াঃ চতুরং নিপুণং “মহাভাগ! সুশ্লিষ্টগুণতয়া” ইত্যাদিকং শ্লিষ্টমিত্যর্থঃ বচো বাক্যঞ্চ তস্যাস্ত্বয়ি প্রাগনুরাগলিঙ্গমিতি সম্বন্ধঃ।

অত্র মাধবে মালত্যনুরাগসত্তাঽনুমিতিং প্রতি তদুদ্দেশেন ‘কস্যাপী’ত্যাদিনিবেদিতত্বরূপে

---

অন্য পুরুষে আসক্তচিত্ত হইয়া, অন্য পুরুষের প্রতি যে চাক্ষুষ অনুরাগ প্রকাশ করিবেন ইহাও সম্ভব নহে। আরও দেখ—

সখীগণ পরস্পর পরস্পরের মুখাবলোকন করিয়া যে বলিয়াছিল—“এই স্থানে কাহারও কোন প্রিয়তম অবস্থান করিতেছেন” এই কথাটীও, মালতীর যে তোমার প্রতি পূর্ব্বেই অনুরাগ জন্মিয়াছিল তাহার সূচক—

(থ) মাধব। আর কি?

মকরন্দ। ধাত্রীকন্যা লবঙ্গিকার সেই (“মহাভাগ! সুশ্লিষ্টগুণতয়া”

---

(১) চিহ্নমিত্যপি পাঠঃ। (২) ক্বচিৎ কিঞ্চান্যদিতি পাঠো নাস্তি।

कल। उपसृत्य। एदं अ (१)। इति चित्रं दर्शयति। (द)

उभौ पश्यतः।

मक। कलहंसक! केनैतन्माधवस्य प्रतिबिम्बमभिलिखितम्। (ध)

कल। जेण एव्व से हिअअं अवहरिदं। (न)

मक। अपि मालत्या?।

कल। अधइं। (प)

(द) एतच्च। (न) येनैवास्य हृदयमपहृतम्। (प) अथकिम्।

एकस्मिन् हेतौ सत्यपि 'धार्त्तिकायास्तरं वचश्चे'ति हेत्वन्तरनिर्द्देशात् समुच्चयः, तन्मूलतविच्छित्तिवशादनुमानालङ्कारः। इन्द्रवज्रा वृत्तम् ॥३२॥

(द) कलेति। एतच्च एतच्चित्रञ्च तस्यास्त्वयि प्रागनुरागलिङ्गमिति सम्बन्धः।

(ध) मकेति। केन जनेन। प्रतिबिम्बं प्रतिमूर्त्तिः अभिलिखितं चित्रितम्।

(न) कलेति। येनैव जनेन। अस्य स्वामिनो माधवस्य।

(प) कलेति। अथकिमिति स्वीकारार्थमेकमव्ययम्। "अङ्गीकारेऽपि चाथकि"मिति हारावली।

---

ইত্যাদি) সুনিপুণ কথাগুলিও (তোমার প্রতি মালতীর অনুরাগের সূচক।) ॥৩৩॥

(দ) কলহংস। (নিকটে যাইয়া) ইহাও। (মালতীর অনুরাগের সূচক)। (এই বলিয়া চিত্র দেখাইল)

(মাধব ও মকরন্দ সেই চিত্র দেখিতে লাগিলেন।)

(ধ) মকরন্দ। কলহংস! মাধবের এই প্রতিমূর্ত্তিটী কে চিত্র করিয়াছে?

(ন) কলহংস। যিনি ইহার চিত্ত অপহরণ করিয়াছেন।

মকরন্দ। তবে কি মালতী?

---

(१) एदं चित्तफलअं इति पाठान्तरम्। रूपमिति पाठभेदः।

माधवः । वयस्य ! मकरन्द ! प्रसन्नप्रायस्ते तर्कः । (फ)

मक । कलहंसक ! (१) कुतोऽस्याधिगमस्ते ? । (ब)

कल । मह दाव मन्दारिआहत्थादो, ताए वि लवङ्गिआ सआसादो । (भ)

मक । कथम्, (२) किमाह मन्दारिका माधवालेख्यप्रयोजनं मालत्याः ।

कल । उक्कण्ठाविणोअणं (३) त्ति । (म)

(भ) मम तावन्मन्दारिकाहस्तात्, तस्या अपि लवङ्गिकासकाशात् ।

(म) कलेति । उत्कण्ठाविनोदनं माधववियोगविधुरतया तच्चित्रदर्शनेन आत्मन उत्कण्ठानिवारणमेव मालत्या एतदालेख्यनिर्म्माणोद्देश्यमित्यर्थः ।

(फ) माधव इति । प्रसन्नप्रायः, संशयरूपमालिन्यापगमात् सा मय्येवानुरक्तेति निश्चयोदयात् निर्म्मलीभूतः । तर्क ऊहः, सहर्षोक्तिरियम् । अतएवात्र प्राप्तिर्नाम सन्ध्यङ्गम् । "प्राप्तिः सुखागम" इति दर्पणलक्षणात् ।

(ब) मकेति । कुतः कस्मात् जनात् । अस्य चित्रस्य, अधिगमः प्राप्तिः ।

(প) কলহংস। হাঁ।

(ফ) মাধব। সখে! মকরন্দ! তোমার অনুমান প্রায় ঠিক্ হইয়া উঠিয়াছে।

(ব) মকরন্দ। কলহংস! তুমি ইহা কোথা হইতে পাইয়াছ ?

(ভ) কলহংস। আমি পাইয়াছি মন্দারিকার হাত হইতে, মন্দারিকা পাইয়াছে লবঙ্গিকার নিকট হইতে।

মকরন্দ। মাধবের চিত্র নির্ম্মাণ করিতে মালতীর কি প্রয়োজন ছিল, এ বিষয়ে মন্দারিকা কি বলিয়াছে, বল।

(१) क्वचित् कलहंसकेति सम्बोधनं न दृश्यते । (२) अथ इति भिन्नः पाठः ।

(३) उक्कण्ठाविणोदो इति पाठान्तरम् ।

. मक। वयस्य! माधव! सर्वथा समाश्वसिहि (१)।
या कौमुदी नयनयोर्भवतः सुजन्मा
तस्या भवानपि मनोरथबन्धबन्धुः।
तत्सङ्गमं प्रति सखे! नहि संशयोऽस्ति
यस्मिन् विधिश्च मदनश्च कृताभियोगः ॥३४॥

(म) उत्कण्ठाविनोदनमिति।

येति। या मालती भवतो नयनयोः कौमुदी चन्द्रिकारूपा परमाह्लादजनिकेत्यर्थः। सुजन्मा श्लाघ्योत्पत्तिः भवानपि तस्या मालत्या मनोरथबन्धात् चित्तासक्तेर्हेतोः बन्धुर्बान्धवः दयित इति यावत्। अतएव हे सखे! तत्सङ्गमं प्रति मालत्या सह सम्मिलनविषये नहि संशयोऽस्ति। विशेषतश्च, यस्मिन् सङ्गमविषये विधिः परस्परासम्भावनीयसाक्षात्कार-प्रयोजकं दैवञ्च मदनश्च कृताभियोगः विहिताभिनिवेशो वर्त्तते। अतएव सर्वथा समाश्वसिहीति भावः।

अत्र तृतीयचरणगतवाक्यार्थं प्रति पूर्वार्द्धगतवाक्यार्थयोः चतुर्थचरणगतवाक्यार्थस्य च हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा कौमुदी कौमुदीरूपेति निरङ्गं केवलरूपकञ्च इत्यनयोरङ्गाङ्गिभावेन सङ्करः। तथा युक्तिर्नाम सन्ध्यङ्गम्। "सम्प्रधारणमर्थानां युक्ति"रिति दर्पणलक्षणात्। विचारो नाम नाट्यलक्षणञ्च "विचारो युक्तवाक्यैर्यदप्रत्यक्षार्थसाधन"मिति लक्षणात्। वसन्ततिलका वृत्तम् ॥३४॥

(ম) কলহংস। উৎকণ্ঠানিবৃত্তিই (মালতীর এই চিত্রনির্ম্মাণের প্রয়োজন ইহা মন্দারিকা বলিয়াছে)।

মকরন্দ। সখে! মাধব! সকল প্রকারে আশ্বস্ত হও।

যিনি তোমার নয়নযুগলের কৌমুদীস্বরূপা, প্রশস্তজন্মা, তুমিও তাঁহার চিত্তের আসক্তিবশতঃ প্রাণবল্লভ। অতএব সখে! তোমাদের সম্মিলনে

(१) वयस्य! समाश्वसिहि इत्येतावन्मात्रः पाठः क्वचित्।

द्रष्टव्यरूपा च (१) भवती विकारहेतुः, तदत्रैव लिख्यतां मालती। (य)

माधवः। यदभिरुचितं वयस्याय, तदुपनय चित्रफलकं चित्रवर्त्तिकाश्च (२)। (र)

मक। उपनयति।

माधवः। लिखन्। सखे! मकरन्द!

वारं वारं तिरयति दृशावुद्गतो (३) वाष्पपूर-
स्तत्सङ्कल्पोपहितजड़िमस्तम्भमभ्येति गात्रम्।

(य) द्रष्टव्येति। द्रष्टव्यरूपा अतीवमनोहरत्वात् दर्शनीयाकृतिः। विकारहेतुः मदनप्रयुक्तावैसम्यकारिणीभूता। अत्रैव तत्र चित्रस्य वामपार्श्वे एव।

(र) माधव इति। चित्रस्य वर्त्तिकाः तूलिकाः।

वारं वारमिति। उद्गतः मालत्या भ्रूनेत्रादिस्मरणेन विरहानुतापोदयादुपस्थितः वाष्पपूरः अश्रुप्रवाहः वारं वारम् उन्मृज्यमानोऽपि पुनः पुनः दृशौ चक्षुषी तिरयति आवृणोति। सुतरां सम्यगवलोकनाभावात् चित्रयितुमिदानीमशक्तोऽस्मीति भावः। तथा

কোনও সংশয় নাই, যে বিষয়ে স্বয়ং বিধাতা ও কামদেব পূর্ব্বেই আগ্রহ করিয়াছেন ॥৩৪॥

(য) যিনি তোমার বিকারের হেতু, তাঁহার আকৃতি অবশ্য দ্রষ্টব্য; অতএব এই চিত্রেরই পার্শ্বে মালতীকে চিত্রিত কর।

(র) মাধব। বয়স্যের যাহা অভিরুচি। তবে চিত্রফলক ও চিত্রের তুলি আনয়ন কর।

মকরন্দ। (চিত্রফলক ও তুলি আনয়ন করিলেন।)

(१) द्रष्टव्यस्वरूपा चेति पाठान्तरम्। (२) क्वचित् तदुपनय चित्रफलकं चित्रवर्त्तिकाश्चेति। मकरन्दः। उपनयति, एतौ पाठौ न दृश्येते।

(३) दृशोरुद्गममितिपाठान्तरम्।

सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां (१) वर्त्तते किं करोमि ॥३५॥
तथापि व्यवसितोऽस्मि (२)। चिरादभिलिख्य दर्शयति। (ल)

तस्या मालत्याः सङ्कल्पेन चिन्तया उपहित उपस्थापितः जड़िमा कार्य्याक्षमत्वं यस्य तत् तथोक्तं गात्रं मम देहः स्तम्भं निस्पन्दताम् अभ्येति प्राप्नोति। तथा सद्यः तच्चिन्ताक्षण एव स्विद्यन् घर्म्माक्तः सन् अविरतोत्कम्पेन अनवरतस्पन्दनेन लोलाश्चञ्चला अङ्गुल्यो यस्य तादृशः, अयं मदीयः पाणिः लेखाविधिषु चित्रकार्य्येषु नितराम् अतिशयेन वर्त्तते स्थिरीभवती चित्रणाय चाल्यमानोऽपि स्वयं न चलतीत्यर्थः। अथवा लेखाविधिषु अविरतोत्कम्पलोलाङ्गुलीको वर्त्तते अस्वाभाविकचाञ्चल्यवान् भवतीत्यर्थः। नितरां सुतराम् अतएवेत्यर्थः किं करोमि। ईदृशावस्थायां नैपुण्येनाविकलचित्रनिर्म्माणसम्भवमेवेति भावः।

अत्र चित्रकार्य्याक्षमत्वं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः, तथा किं करोमीति वाक्यार्थं प्रति पूर्ववाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः। तथात्र अश्रु-जाड्य स्तम्भ-स्वेद कम्पाद्याः पञ्च सात्त्विकभावा अभिहिताः। मन्दाक्रान्ता वृत्तम् ॥३५॥

(ल) तथापीति। तथापि सम्यगवलोकनाभावात् जड़त्वादिप्रतिबन्धकत्वाच्च अविकलचित्रनिर्म्माणासम्भवेऽपि, व्यवसितोऽस्मि चित्रयितुमुद्यतोऽस्मि। सुहृद्वाक्यस्यालङ्घनीयत्वादिति भावः। अभिलिख्य चित्रयित्वा। एतेन तदानीमपि चित्रविद्यायां प्रायेण सर्व्वेषामपि नैपुण्यमासीदिति प्रतीयते।

মাধব। ( চিত্র করিতে করিতে ) সখে! মকরন্দ!

অশ্রুপ্রবাহ উপস্থিত হইয়া বারংবার আমার নয়নযুগলকে আবৃত করিতেছে; মালতীর চিন্তা কার্য্যে অক্ষমতা জন্মাইয়া দিয়াছে, তাহাতে শরীর স্তব্ধ হইয়া পড়িয়াছে, পাণিতল হঠাৎ ঘর্ম্মাক্ত হইয়াছে এবং অবিশ্রান্ত কম্পন উপস্থিত হওয়ায় অঙ্গুলীসমূহও কাঁপিতেছে; সুতরাং আমার হস্ত চিত্রকার্য্যে অসমর্থ হইয়া পড়িয়াছে; অতএব কি করি ॥৩৫॥

(१) न तरामिति क्वचित् पाठः। (२) अवस्थितोऽस्मीति पाठभेदः।

मक । विलोक्य । उपपन्नस्तावदत्र भवतोऽभिषङ्गः (१) । सकौतुकम् । कथमचिरेणैव निर्म्माय लिखितः श्लोकः । वाचयति । (व)

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥३६॥

(व) मकेति । अत्र मालत्याम् । अभिषङ्ग आसक्तिः, उपपन्नः युक्तः । अतीवरमणीयाकृतिमत्त्वादिति भावः । कथंशब्दोऽत्र हर्षे । अचिरेणैव सद्य एव । सद्यःश्लोकनिर्म्माणं प्रायेण दुष्करत्वादतीवाश्चर्य्यमिति भावः ।

एतेन सद्यःश्लोकनिर्म्माणस्य विस्मयजनकतामङ्गीकुर्वन् भवभूतिरपि विलम्बकविरासीदिति प्रतीयते । प्रायेण दुरूहशब्दविन्यासादपि भवभूतिर्विलम्बकवित्वमुद्घोषयन्ति काव्यनिष्णाताः ।

जगतीति । जगति भुवने जयिनः जयशीलाः विरहिजनवशीकरणस्वभावा इत्यर्थः, प्रकृतिमधुराः स्वभावसुन्दराः, ते ते प्रसिद्धाः, अन्ये मालतीभिन्नाः, नवेन्दुकलादयः नवोदितचन्द्रलेखादयः, भावाः पदार्थाः सन्त्येव, न तत्र काचित् विप्रतिपत्तिरिति भावः । ये भावाः, मनो मदयन्ति स्वभावत एव सर्व्वेषां चित्तं प्रीणयन्ति । ननु सत्सु तादृशेषु कथं तव मालत्यामेवानुराग इत्याह मम त्विति । तु किन्तु इयं विलोचनचन्द्रिका नेत्रकौमुदी चन्द्रिकेव नयनाह्लादकारिणी मालती लोके जगत्प्रपञ्चमध्ये मम यत् नयनविषयं भावप्रधाननिर्द्देशात् नेत्रगोचरतां याता प्राप्ता ; जन्मनि मम जीवनमध्ये इत्यर्थः, स एव, एकः

(ল) তথাপি চিত্র করিতে প্রবৃত্ত হইতেছি। (বহুকাল চিত্র করিয়া পরে দেখাইলেন।)

(ব) মকরন্দ। (দর্শন করিয়া) ইহার প্রতি তোমার আসক্তি যুক্তিসঙ্গতই হইয়াছে। (কৌতুকের সহিত) সত্বই একটী শ্লোক রচনা করিয়া লিখিয়া দিয়াছ (দেখিতেছি)। (পড়িতে লাগিলেন)

(१) अभिव्यङ्ग इति भिन्नः पाठः ।

प्रविश्य सत्वरं मन्दारिका। कलहंसअ! पदाणुसारेण उअलद्धोसि।
माधवमकरन्दौ दृष्ट्वा सलज्जम्। कहं दे वि महाणुहावा एत्थ एव्व।
उपसृत्य प्रणमति (१)। (अ)

(अ) कलहंसक! पदानुसारेण उपलब्धोऽसि। कथं तावपि महानुभावौ अत्रैव।

---

सर्वातिशायी, महोत्सवः प्रमोदहेतुः। सन्तु नाम परेषामामोदकरा नवेन्दुकलादिपदार्थाः किन्त्वहं मालतीमेव तेभ्यो बहुमन्यमानस्तस्यामनुरक्तोऽस्मीति भावः।

अत्र नवेन्दुकलादिभ्यो मालत्याः प्राधान्यप्रतिपादनात् व्यतिरेकालङ्कारः, विलोचन-चन्द्रिकेति निरङ्गं केवलरूपकञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः। ते त इति प्रसिद्धबहुवस्तु-परामर्शात् यच्छब्दस्य चोत्तरवाक्यगतत्वेन तत्तच्छब्दानपेक्षणात् न साकाङ्क्षतो विधेयाविमर्श-दोषः। किन्तु माधवपक्षे मालत्यपेक्षया चन्द्रिकादेस्तुच्छत्वं प्रतिपादितं पुनर्माधवपक्ष एव तस्यां मालत्यामुत्कर्षप्रतिपादनाय तच्चन्द्रिकात्वमारोपितमिति स्ववचनस्यैव विरोधेन व्याहत-त्वात् व्याहतत्वदोषः "हरन्ति हृदयं यूना"मित्यादिदर्पणोदाहृतवत्। स च 'विलोचन-कौमुदी' इति पाठेन समाधेयः। हरिणी वृत्तम् ॥३६॥

(अ) प्रविश्येति। सत्वरं प्रविश्येति सम्बन्धः। पदानुसारेण चरणचिह्नानुसरणेन उपलब्धोऽसि प्राप्तोऽसि। चौरोऽपि चरणचिह्नानुसरणेनैव ध्रियत इति साधर्म्यादुपहासपरं वाक्यमेतत्। अज्ञानतो विशेषव्यक्त्यन्तरसमीपे उपपतेरुपहासकरणात् सलज्जमित्युक्तम्। महानुभावौ विद्यादिना विशेषप्रभावशालिनौ।

---

জগতে নূতন চন্দ্রকলাপ্রভৃতি সর্ব্বোৎকৃষ্ট ও স্বভাবসুন্দর সেই সেই অন্য পদার্থ রহিয়াছে বটে; যেগুলি স্বভাবতই চিত্তকে আমোদিত করে। কিন্তু জগতের মধ্যে নয়নের চন্দ্রিকাস্বরূপা এই রমণী যে আমার নয়নের গোচর হইয়াছেন, এই জন্মে সেই একমাত্র মহোৎসব ॥৩৬॥

(१) प्रविश्य मन्दारिका। कलहंस! कलहंस! चोर! चोर! पदाणुसरणेण लद्धोऽसि। सलज्जम्। कहं दे वि महाणुहावा एत्थ एव्व। उपसृत्य। प्रणमामि। इति पाठभेदः।

उभौ। मन्दारिके! इहास्यताम् (१)। (ष)

मन्दा। उपविश्य (२)। कलहंसअ! उवणेहि मे चित्तफलअं। (स)

कल। गृहीत्वा। गेह्ण एदं। (ह)

मन्दा। विलोक्य। कलहंसअ! केण उण किं णिमित्तं वा एत्थ मालदी आलिहिदा?। (क्ष)

कल। जा (३) जेण णिमित्तेण मालदीए। (क)

(स) कलहंसक! उपनय मे चित्रफलकम्। (ह) गृहाणेदम्।

(क्ष) कलहंसक! केन पुनः किं निमित्तं वा अत्र मालती आलिखिता?

(क) यो येन निमित्तेन मालत्या।

(ष) उभाविति। आस्यताम् उपविश्यताम्। ज्ञातव्यसंग्रहार्थमेवायं सामान्य-परिचारिकाया अपि समादरः कृत इति बोध्यम्।

(ह) कलेति गृहीत्वा चित्रफलकमिति शेषः।

(क) कलेति। मालत्या येन निमित्तेन स्वकीयोत्कण्ठानिवृत्त्यर्थमित्यर्थः यो

(ষ) (সত্বর প্রবেশ করিয়া) মন্দারিকা। কলহংস! তোমার পদচিহ্ন অনুসারে আসিয়া তোমাকে পাইয়াছি। (মাধব ও মকরন্দকে দেখিয়া লজ্জার সহিত) সেই মহাশয়রা দুইজনই যে এইখানেই। (নিকটে যাইয়া প্রণাম করিল)।

(ষ) মাধব ও মকরন্দ। মন্দারিকে! এইখানে ব’স।

(স) মন্দারিকা। (বসিয়া) কলহংস! আমার চিত্রফলক দাও।

(হ) কলহংস। (চিত্রফলক লইয়া) এই লও।

(ক্ষ) মন্দারিকা। (দর্শন করিয়া) কলহংস! কে, কি নিমিত্তই বা এখানে মালতীকে চিত্র করিয়াছে?

(१) इत आगम्यतामिति पाठान्तरम्। (२) क्वचित् उपविश्येति पाठो नास्ति।

(३) जो एव्व इति क्वचित् पाठः।

मन्दा। सहर्षम्। दिट्ठिआ दंसिदफलं दाणिं विण्णाणं पआवइणो। (ख)

मक। सखि! (१) मन्दारिके! यदत्र वस्तुन्येष ते वल्लभः कथयति, अपि तथा तत्?। (ग)

मन्दा। महाभाअ! अधइं (२)। (घ)

मक। क्व पुनर्मालती माधवं प्रागदृष्टवती?। *

(ख) दिष्ट्या दर्शितफलमिदानीं विज्ञानं प्रजापतेः।

(घ) महाभाग! अथकिम्।

माधवः आलिखितः, तेनैव माधवेन तेनैव निमित्तेन मालती आलिखितेत्यर्थः। उभयोरेव समानं वौत्कण्ठ्यमिति भावः।

(ख) मन्देति। प्रजापतेर्विधातुः। विज्ञानं समानसुन्दरयोर्मालतीमाधवयोर्निर्म्माणनैपुण्यम्। दर्शितं प्रकटितम्, फलं परस्परं प्रति परस्परासक्तिरूपम् उद्देश्यं येन तादृशं जातमिति शेषः। अतीवाह्लादकारणमेतदस्माकमिति भावः।

(ग) मकेति। गूढ़ार्थोद्भेदनाय सखीति स्नेहसूचकं सम्बोधनम्। एष ते वल्लभः प्रियः कलहंसः, अत्र वस्तुनि माधवाकृतिचित्रणविषये यत् कथयति 'स्वकीयौत्कण्ठ्यानिवृत्तये मालत्या चित्रितमेतत्' इति यत् ब्रवीति, अपि तथा तत् सत्यं किम्।

* मकेति। क्व कुत्र स्थिता।

(क) কলহংস। মালতী যে নিমিত্ত যাঁহাকে চিত্র করিয়াছিলেন।

(খ) মন্দারিকা। (আনন্দের সহিত) ভাগ্যবশতঃ বিধাতার নির্ম্মাণ-নৈপুণ্য এখন ফল দেখাইয়াছে।

(গ) মকরন্দ। সখি! মন্দারিকে! এবিষয়ে তোমার প্রিয়তম কলহংস যাহা বলে, তাহা কি সেইরূপই?

(ঘ) মন্দারিকা। হাঁ, মহাশয়!।

(१) क्वचित् सखीति पाठो नास्ति। (२) तत्तह्मा इति पाठभेदः।

मन्दा । लवङ्गिआ भणादि, वादाअणगदेत्ति । (ङ)

मक । वयस्य ! (१) नन्वमात्यभवनासन्नरथ्ययैव बहुशः सञ्चरावहे, तदुपपन्नमेतत् । (च)

मन्दा । अणुमसन्तुमं महाणुभाआ, जाव एदं भअवदो देवस्स मअणस्स सुचरिदं पिअसहीए लवङ्गिआए णिवेदेमि । (छ)

मक । प्राप्तावसरमेतद्भवत्याः । (ज)

मन्दारिका चित्रफलकं गृहीत्वा निष्क्रान्ता ।

(ङ) लवङ्गिका भणति, वातायनगतेति ।

(छ) अनुमन्येतां मां महानुभावौ, यावदिदं भगवतो देवस्य मदनस्य सुचरितं प्रियसख्यै लवङ्गिकायै निवेदयामि ।

(च) मकेति । नन्विथवधारणं । उपपन्नं युक्तम् । सञ्चरावहे इति "समस्तृतीयया युक्त" इत्यात्मनेपदम् ।

(छ) मन्देति । अनुमन्येतां गन्तुमिति शेषः । सुचरितं विजृम्भितं तज्जनितां मालतीं प्रति माधवस्याप्यासक्तिमित्यर्थः । निवेदयामि एतदर्थमेव पूर्वमादुद्यतायास्तस्या उद्यमस्य कियत्साफल्यज्ञापनेन सन्तोषविधानायेति भावः ।

মকরন্দ। মালতী পূর্ব্বে কোথায় মাধবকে দেখিয়াছিলেন ?

(ঙ) মন্দারিকা। লবঙ্গিকা বলিয়াছে যে, বাড়ীর গবাক্ষদ্বারে থাকিয়া ( মালতী মাধবকে দেখিয়াছেন )।

(চ) মকরন্দ । বয়স্য ! আমরা মন্ত্রীর বাড়ীর নিকটবর্ত্তী রাস্তা দিয়াই বহুবার যাতায়াত করিয়া থাকি ; সুতরাং ইহা হইতে পারে।

(ছ) মন্দারিকা। মহাশয়! আমাকে অনুমতি দিন। ভগবান্ কামদেবের এই সদনুষ্ঠানটী যাইয়া প্রিয়সখী লবঙ্গিকাকে জানাই।

(१) वयस्य इत्यपि क्वचित्पाठः ।

मक। वयस्य! खरतरकिरणोऽयं भगवान् सहस्रदीधिति-रलङ्करोति मध्यमङ्कः, (१) तदेहि, संस्त्यायमेव गच्छावः। (झ)

इत्युत्थाय परिक्रामतः।

माधवः। एवं हि मन्ये।

घर्म्माम्भो विसरविवर्त्तनैरिदानीं
मुग्धाक्ष्याः परिजनवारसुन्दरीणाम्।
तत् प्रातर्विहितविचित्रपत्रलेखा
वैदग्ध्यं जहति कपोलकुङ्कुमानि ॥२७॥

(ज) मकेति। एतन्निवेदनं प्रस्तावसरं नत्तत्त्वस्थानां साफल्यात् उपस्थितावकाशम्। सुतरां गन्तुमर्हसीति भावः।

(झ) मकेति। संस्त्यायं गृहम्। "संस्त्यायौ विस्तृतौ गृहे।" इति हेमचन्द्रः।

घर्म्माम्भ इति। इदानीं मध्याह्नकाले, मुग्धे सुन्दरे अक्षिणी चक्षुषी यस्याः तस्याः मालत्याः परिजनवारसुन्दरीणां परिचारिकाभूतगणिकानां कपोलकुङ्कुमानि गण्डयोरनुलिप्तानि कुङ्कुमानि कर्त्तॄणि घर्म्माम्भसां स्वेदजलानां विसरस्य विन्दुसमूहस्य विवर्त्तनैः प्रसरणैः, तत् तदा मया दृष्टम्, प्रातः प्रातःकाले विहिता विरचिता या विचित्रा आश्चर्य्या पत्रलेखा चित्रविशेषः तस्याः वैदग्ध्यं सौन्दर्य्यं जहति प्रक्षालनात् परित्यजन्ति। अस्मिन् मध्याह्न-

---

(জ) মকরন্দ। তোমার ইহা জানাইবার অবসর উপস্থিত হইয়াছে বটে। ( অতএব তুমি যাইতে পার)।

( মন্দারিকা চিত্রফলক লইয়া প্রস্থান করিল। )

(ঝ) মকরন্দ। বয়স্য! ঐ প্রখররশ্মি ভগবান্ সূর্য্যদেব দিনের মধ্যভাগ অলঙ্কৃত করিতেছেন, অতএব আইস, বাড়ীতে যাই।

( এই কথার পর উভয়েই উঠিয়া পদক্ষেপ করিতে লাগিলেন। )

---

(१) मध्याह्नोऽतिवर्त्तते इति पाठान्तरम्।

अपि च, उन्मीलन्मुकुलकरालकुन्दकोश-
प्रश्च्योतद्घनमकरन्दगन्धबन्धो !।
तामीषत्प्रचलविलोचनां नताङ्गी
मालिङ्गन् पवन ! मम स्पृशाङ्गमङ्गम् ॥३८॥

क्लान्ति प्रखररविताापात् मालतीपरिचारिकाभूतवारनारीणां कपोलयोः पत्रावलीरूपेण विन्यस्तानि कुङ्कुमानि स्वेदजलविन्दुभिः प्रक्षाल्यन्ते, इत्येवं मन्ये इति सरलार्थः।

अत्र ग्लानिर्नाम नाट्यलक्षणम्। यथा साहित्यदर्पणे—

"ग्लानिः केनचिदंशेन किञ्चिद्यत्रानुमीयते।"

प्रहर्षिणी वृत्तम्—"त्र्याशाभिर्मनजरगाः प्रहर्षिणीय"मिति लक्षणात् ॥३७॥

उन्मीलन्मुकुलेति। उन्मीलद्भिः विकसद्भिः मुकुलैः कुड्मलैः करालः दन्तुरः विषम इति यावत् यः कुन्दकोशः कुन्दस्तवकः, तस्मात् प्रश्च्योततां क्षरतां घनानां गाढानां मकरन्दानां पुष्परसानां गन्धेन सौरभेण बन्धुः प्रायेण सुखदत्वात् प्रियः, तत्सम्बोधनम्। हे पवन ! वायो ! ईषत्प्रचले सखीनामवगतिभयेन अधिकचाञ्चल्यासम्भवात् भावावेशेन किञ्चिच्चले विलोचने चक्षुषी यस्याः तां नताङ्गीं स्वभावतः किञ्चिदवनतस्कन्धाद्यवयवां तां मालतीं स्पृशन् सन् मम अङ्गमङ्गं प्रत्यवयवं स्पृश। एतेनातीवोत्कण्ठा व्यज्यते।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिरलङ्कारः। प्रहर्षिणी वृत्तम् ॥३८॥

মাধব। আমি এইরূপ মনে করি—

মনোহরনয়না মালতীর পরিজনস্থ বেশ্যাগণের গণ্ডদেশের কুঙ্কুমগুলি এখন ঘর্ম্মবিন্দুসমূহের সঞ্চালনবশতঃ প্রাতঃকালে নির্ম্মিত সেই সুন্দর পত্রাবলীর সৌন্দর্য্য পরিত্যাগ করিতেছে ॥৩৭॥

আরও (ইচ্ছা করি যে,) হে পবন! কলিকাগুলি প্রস্ফুটিত হওয়ায় অসমান কুন্দপুষ্পের স্তবক হইতে বিগলিত গাঢ় মধুর সৌরভে তুমি সকলেরই প্রিয়; এই অবস্থায় তুমি ঈষচ্চঞ্চলনয়না এবং অবনতাঙ্গী মালতীকে আলিঙ্গন করিয়া আমার প্রত্যেক অঙ্গ স্পর্শ কর ॥৩৮॥

मक। स्वगतम्।

अभिहन्ति हन्त! कथमेष माधवं
सुकुमारकायमनवग्रहः स्मरः।
अचिरेण वैकृतविवर्त्तदारुणः
कलभं कठोर इव कूटपाकलः ॥३८॥

तदत्र भगवती (१) कामन्दकी नः शरणम्। (ञ)

अभिहन्तीति। अनवग्रहः दुर्निवारः, एष स्मरो मन्मथः सुकुमारकायं कोमलकलेवरं माधवम्, विकृतिः वातपित्तकफानां विकारस्तस्यायमिति वैकृतः, यो विवर्त्तः परिणामः सन्निपात इति तात्पर्य्यम्। तेन दारुणो भयङ्करः, पक्षे स्वविकारकृतभावान्तरभीषणः, अतएव कठोरः कठिनः चिकित्सादुरपनेयः कूटेन कपटेनागत्य पातयति इति कूटपाकलः पित्तज्वरः कलभं करिशावकमिव अचिरेण सद्य उत्पत्तिक्षण एवेत्यर्थः कथम् अभिहन्ति अभिघातं करोति पीड़यति। हन्तेत्यनुकम्पायाम्। अतीवशोचनीया माधवस्येयमवस्थेति भावः।

अत्र पूर्णोपमालङ्कारः। हन्ति हन्तेति च्छेकानुप्रासश्चेत्यनयोः संसृष्टिः।

"पित्तज्वरे कुलालस्य पवने कूटपाकलः" इति हारावली।

वैद्यशास्त्रे च—"यथाभिहन्यात् कूटेन मृगयूथं वनेचरः।
तथा पातात्मको नागं हन्ति वै कूटपाकलः॥"

कूटपाकल इति पृषोदरादित्वात् साधुः।

मञ्जुभाषिणी वृत्तम्—"स जसा जगौ च यदि मञ्जुभाषिणी"ति लक्षणात् ॥३८॥

(ञ) तदत्रेति। अत्र उपस्थितायां विपत्तौ। शरणं रक्षिका।

মকরন্দ। (স্বগত) বায়ু, পিত্ত ও কফের বিকারসঞ্জাত সান্নিপাতিক ভীষণ ও কঠিন পিত্তজ্বর যেমন হস্তিশাবককে হঠাৎ পরিপীড়িত করে, হায়! সেইরূপ দুর্নিবার এই কামাবেশ কোমলদেহ মাধবকে পরিপীড়িত করিতেছে ॥৩৯॥

(१) तदत्रभवतीति क्वचित् पाठः।

माधवः। स्वगतम्। आश्चर्य्यम्! (१)

पश्यामि तामित इतः पुरतश्च पश्चा-
दन्तर्वहिः परित एव विवर्त्तमानाम्।
उद्बुद्ध-मुग्ध-कनकाब्जनिभं वहन्ती-
मासक्ति-(२) तिर्य्यगपवर्त्तितदृष्टि वक्त्रम् ॥४०॥

पश्यामीति। उद्बुद्धं प्रस्फुटितं मुग्धं सुन्दरं यत् कनकाब्जं स्वर्णपद्मं तन्निभं तत्तुल्यम्, तथा आसक्त्या मय्यनुरागेण तिर्य्यगपवर्त्तिता तिर्य्यग्भावेन प्रवर्त्तिता दृष्टिर्यत्र तत् तथोक्तं वक्त्रं वदनं वहन्तीं धारयन्तीं तां मालतीम्, इतो वामपार्श्वे विवर्त्तमानामिति सर्व्वत्र योज्यम्, इतो दक्षिणपार्श्वे, पुरतः अग्रतः सम्मुखदेशे, पश्चात् पृष्ठदेशे, अन्तः हृदयमध्ये, वहिश्च वक्षःप्रभृति वहिरङ्गेषु च; किं बहुना परित एव सर्व्वत्र एव सर्व्वास्वेव दिक्षु विवर्त्तमानां विद्यमानां पश्यामि अवलोकयामि। तन्मयमेव भुवनं पश्यामीत्याश्चर्य्यमेवेति भावः। इयमुन्मादावस्था।

अत्र वास्तविकदर्शनाभावेऽपि दर्शनसम्भावनाकरणात् इवाद्यभावाच्च प्रतीयमाना भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः समासगतोपमया सङ्कीर्य्यते।

वसन्ततिलका वृत्तम् ॥४०॥

(এ) অতএব এই বিপদে ভগবতী কামন্দকীই আমাদের রক্ষক।

মাধব। (স্বগত) কি আশ্চর্য্য!

প্রস্ফুটিত মনোহর স্বর্ণপদ্মের তুল্য এবং অনুরাগবশতঃ তির্য্যগ্‌ভাবে দৃষ্টিকারী মুখখানি যিনি বহন করিতেছিলেন, সেই মালতীকে আমি বামপার্শ্বে, দক্ষিণপার্শ্বে, সম্মুখে, পশ্চাদ্ভাগে, ভিতরে, বাহিরে, এমন কি সকল দিকেই বর্ত্তমান দেখিতেছি ॥৪০॥

(१) कुत्रचित् आश्चर्य्यमिति पाठो नास्ति।

(२) आसक्तेति पाठान्तरम्।

प्रकाशम् । वयस्य ! मम हि सम्प्रति

प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः ।
रणरणकविवृद्धिं बिभ्रदावर्त्तमानं (१)
ज्वलति हृदयमन्तस्तन्मयत्वञ्च धत्ते ॥४१॥

प्रसरतीति । परिमाथी परिमथनशीलः कष्टकरः कोऽपि अनिर्व्वचनीयः, अयम् अनुभूयमानः मम देहदाहः शरीरतापः मदनज्वर इति यावत् प्रसरति सर्व्वतो व्याप्नोति । प्रमोहो मालतीविरहदुःखजनितं वैचित्त्यं करणानां चक्षुरादीनाम् इन्द्रियाणां ग्राहकत्वं रूपादिस्वस्वविषयग्रहणयोग्यतां तिरयति पिदधाति विलुम्पति । आवर्त्तमानं कामानलेन पच्यमानं हृदयं कर्त्तृ, रणरणकविवृद्धिम् उद्वेगोपचयं बिभ्रत् धारयत् सत् अन्तर्मध्ये ज्वलति सन्तप्तं भवति । ननु तदा कथं जीवसीत्याह तन्मयत्वमिति । तन्मयत्वम् अविरतभावनया मालतीतादात्म्यञ्च धत्ते अवलम्बते । इत्थमनङ्गेन समाकुलीक्रियमाणोऽपि हृदयस्य सञ्जीवनौषधिरूपमालतीमयतया जीवामीति भावः ।

अत्र ज्वलति धत्ते इत्यनेकक्रिययोः हृदयमित्येककर्त्तृकारकत्वात् दीपकमलङ्कारः । तथा अपराणि परस्मैपदान्यभिधाय धत्ते इत्यात्मनेपदस्याभिहितत्वात् भग्नप्रक्रमतादोषः, स च 'ज्वलति हृदयमेवं तन्मयत्वं दधाति' इति पाठेन समाधेयः । न चैतत्पाठे समुच्चयार्थकचकारानभिधानात् न्यूनपदतादोष इति वाच्यं चकारप्रतिपाद्यसमुच्चयस्य एवशब्देनैव निर्व्वाहात् ।

"करणं साधकतमं चेत्रगात्रेन्द्रियेष्वपि ।" इत्यमरः । "रणरणक उद्वेगः ।" "आवर्त्तनं क्राथनं स्या"दिति च हेमचन्द्रः ।

मालिनी वृत्तम् ॥४१॥

( প্রকাশ্যে ) সখে ! বর্ত্তমান সময়ে আমার—

অত্যন্ত কষ্টকর অনির্ব্বচনীয় একপ্রকার শরীরের সন্তাপ ক্রমেই বৃদ্ধি

(১) বিভ্রদাবর্ত্তিগাত্রমিতি পাঠান্তরম্ ।

ইতি নিষ্ক্রান্তাঃ সর্ব্বে। (ট)

# ইতি বকুলবীথী নাম (১) প্রথমোঽঙ্কঃ। (ঠ)

(ট) ইতীতি। কলহংসেন সহ মাধবমকরন্দয়োর্বহুত্বাৎ নিষ্ক্রান্তা ইতি বহুবচনম্, প্রায়েণ কবিভিরঙ্কসমাপ্তৌ নিষ্ক্রান্তা ইত্যুক্তাবপি সর্ব্বশব্দস্যোপাত্তত্বাৎ কবিরীতিসিদ্ধতয়া সর্ব্বশব্দোপাদানঞ্চ সঙ্গচ্ছত ইতি ভাব্যম্।

(ঠ) ইতীতি। বকুলানাং বকুলকুসুমানাং বীথী পঙ্ক্তিঃ মালেতি যাবৎ। সা নাম অস্যাঙ্কস্য বকুলমালায়া এব প্রাধান্যেনোপকরণত্বাৎ বকুলবীথীতি নাম্না প্রসিদ্ধঃ। অঙ্কঃ পরিচ্ছেদঃ সমাপ্ত ইতি শেষঃ। এবমন্যত্রাপি ব্যাখ্যেয়ম্।

"প্রত্যক্ষনেতৃচরিতো রসভাবসমুজ্জ্বলঃ।" ইত্যাদি—

"অন্তনিষ্ক্রান্তনিখিলপাত্রোঽঙ্ক ইতি কীর্ত্তিতঃ॥"

ইত্যঙ্কলক্ষণং সাহিত্যদর্পণাদাবনুসন্ধেয়ম্।

"বীথী পঙ্ক্তৌ গৃহাঙ্গে চ রূপকান্তরকর্ম্মণোঃ।" ইতি মেদিনী। "নাম প্রাকাশ্য-সম্ভাব্য ক্রোধোপগমকুৎসনে।" ইত্যমরঃ।

ইতি মহামহোপাধ্যায়-শ্রীহরিদাসসিদ্ধান্তবাগীশভট্টাচার্য্যবিরচিতায়াং মালতীমাধবটীকায়াং ভাবমনোহরায়াং প্রথমাঙ্কবিবরণং সমাপ্তম্॥০॥

পাইতেছে, মোহ আসিয়া ইন্দ্রিয়ের বিষয়গ্রহণশক্তিকে তিরোহিত করিতেছে ; আর কামানলে দহ্যমান হৃদয় অত্যন্ত উদ্বেগ বহন করিয়া ভিতরে জ্বলিতেছে এবং তন্ময়তা অবলম্বন করিতেছে॥৪১॥

(ট) (ইহার পর সকলের প্রস্থান।)

## (ঠ) বকুলবীথীনামে প্রথম অঙ্ক সমাপ্ত।

(১) কুত্রচিৎ 'বকুলবীথী'তি পাঠো নাস্তি।

# द्वितीयोऽङ्कः ।

ततः प्रविशतश्चेट्यौ ।

एका । हला ! सङ्गीदसालापरिसरे अवलोइदादुदीआ तुमं (१) किं मन्तअन्ती आसि । (क)

द्वितीया । सहि ! तेण किल माहवप्पिअवअस्सेण मअरन्देण सअलो ज्जेव मअणुज्जाणवुत्तन्तो भअवदीए णिवेदिदो । (ख)

प्रथमा । तदो किं (२) । (ग)

(क) हला ! सङ्गीतशालापरिसरे अवलोकिताद्वितीया त्वं किं मन्त्रयन्ती आसीः ।

(ख) सखि ! तेन किल माधवप्रियवयस्येन मकरन्देन सकल एव मदनोद्यानवृत्तान्तो भगवत्यै निवेदितः ।

(ग) ततः किम् ।

(क) एकेति । सङ्गीतशालायाः परिसरे पर्य्यन्तभुवि प्रान्तभागे ।

(ख) द्वितीयेति । मदनोद्यानवृत्तान्तः परस्परावलोकनवकुलमालाप्रदानादिः ।

(ग) प्रथमेति । एका इत्युक्तम् अन्यतरार्थकतया । अतो द्वितीयापि प्रतीयेत, सुतरामुक्तं प्रथमेति ।

তাহার পর দুইটী দাসীর প্রবেশ ।

(ক) প্রথমা দাসী । ওলো ! সঙ্গীতঘরের একদিকে দাঁড়াইয়া তুই অবলোকিতার সঙ্গে কি আলোচনা করিতেছিলি ?

(খ) দ্বিতীয়া দাসী । সই ! মাধবের সখা সেই মকরন্দ, মদনোদ্যানের সকল বৃত্তান্তই কামন্দকীকে জানাইয়াছে ।

---

(१) भअवदी कामन्दई इति पाठभेदः । (२) क्वचित् पाठोऽयं नास्ति ।

দ্বিতীয়া। তদো ভট্টিদারিঅং দট্ঠুকামাএ ভঅবদীএ পউত্তিণিমিত্তং অবলোইদা অণুপ্পেসিদা মএবি তাএ কধিদং, জধা লবঙ্গিআদুদীআ বিবিত্তে ভট্টিদারিআ বট্টদিত্তি। (ঘ)

প্রথমা। সহি! (১) লবঙ্গিআ কৃখু কেসরকুসুমাইং অবচিণোমি ত্তি গদা মঅণুজ্জাণং কিং সম্পদং ণিউত্তা? (২)। (ঙ)

দ্বিতীয়া। অধই, তং কৃখু পরাবট্টন্তীং (৩) জ্জেব হত্থে

(ঘ) ততো ভর্তৃদারিকাং দ্রষ্টুকাময়া ভগবত্যা প্রবৃত্তিনিমিত্তম্ অবলোকিতা অনুপ্রেষিতা। ময়াপি তস্যৈ কথিতম্, যথা লবঙ্গিকাদ্বিতীয়া বিবিক্তে ভর্তৃদারিকা বর্ত্তত ইতি।

(ঙ) সখি! লবঙ্গিকা খলু কেসরকুসুমানি অবচিনোমীতি গতা মদনোদ্যানং কিং সাম্প্রতং নিবৃত্তা।

(ঘ) দ্বিতীয়েতি। প্রবৃত্তিনিমিত্তং কীদৃশী বর্ত্ততে কুত্র বর্ত্ততে ইতি বৃত্তান্ত-জ্ঞানার্থম্। বিবিক্তে বিজনস্থানে। "বিবিক্তৌ পূতবিজনা"বিত্যমরঃ।

(গ) প্র-দা। তা'র পর কি হইয়াছে।

(ঘ) দ্বি-দা। তা'র পর কামন্দকী মালতীকে দেখিতে ইচ্ছা করিয়া তাঁহার খবর লইবার জন্য অবলোকিতাকে পাঠাইয়াছেন। আমিও তাহার নিকট বলিয়া দিয়াছি যে, মালতী নির্জ্জন স্থানে লবঙ্গিকার সহিত অবস্থান করিতেছেন।

(ঙ) প্র-দা। সই! "নাগকেসর ফুল তুলিতে যাই" এই কথা বলিয়া লবঙ্গিকা মদনোদ্যানে গিয়াছিল, এখন কি ফিরিয়া আসিয়াছে?

(১) হলা ইতি ভিন্নঃ পাঠঃ।

(২) মঅণুজ্জাণাদো জ্জেব ণাগদা, তা কিং সম্পদং সম্পত্তা ইতি পাঠান্তরম্।

(৩) আপতন্তীং ইত্যপি পাঠঃ।

গেহ্নিঅ পড়িসিদ্ধপরিঅণা (১) ভট্টিদারিআ উঅরিঅলিন্দঅং সমারূঢ়া। (চ)

প্রথমা। ণূণং তস্স মহাণুভাবস্স সঙ্কধাএ অত্তাণং বিণোদেদি। (ছ)

দ্বিতীয়া। নিশ্বস্য। কুদো সে আস্সাসো। এদিণা অজ্জ সবিসেসদংসণেণ অদিভূমিং কব্ তাএ অহিণিবেসো গমিস্সদি। অণ্ণং চ, (২) ণন্দণস্স কারণাদো মহারাএ ভট্টিদারিঅং পত্থঅন্তো অমচ্চেণ বিস্সত্তো। (জ)

(চ) অথ কিং, তাং খলু পরাবর্ত্তমানামিব হস্তে গৃহীত্বা প্রতিষিদ্ধপরিজনা ভর্ত্তৃদারিকা উপর্য্যলিন্দং সমারূঢ়া।

(ছ) নূনং তস্য মহানুভাবস্য সঙ্কথয়া আত্মানং বিনোদয়তি।

---

(চ) দ্বিতীয়েতি। পরাবর্ত্তমানামিব মদনোদ্যানাদাগচ্ছন্তীমিব। "অলিন্দঃ (পুং) বহির্দ্বারসংলগ্নচতুরস্রকৃত্রিমভূমি"রিতি শব্দকল্পদ্রুমঃ, উপরিস্থিতমলিন্দম্ উপর্য্যলিন্দম্।

(ছ) প্রথমেতি। তস্য মহানুভাবস্য মাধবস্য। সঙ্কথয়া ত্বয়া কিমুক্তং তেন চ কিমুক্তমিতি কথোপকথনেন।

(চ) দ্বি-দা। হাঁ। আসিবামাত্রই লবঙ্গিকার হাত ধরিয়া এবং পরিজনদিগকে ( সঙ্গে যাইতে ) নিষেধ করিয়া, মালতীদেবী উপরের ঘরে গিয়াছেন।

(ছ) প্র-দা। নিশ্চয়ই মহানুভাব মাধবের সম্বন্ধে কথোপকথন করিয়া আপনাকে আশ্বস্ত করিতেছেন।

(১) অপরিঅণা ইতি পাঠোঽপি দৃশ্যতে।

(২) অণ্ণং চ। কল্লি এব্ব ণন্দণস্স কারণাদো ইতি ভিন্নঃ পাঠঃ।

প্রথমা। কিং ত্তি। (ঝ)

দ্বিতীয়া। “পহবদি ণিঅস্স কস্সআজণস্স মহারাও” ত্তি। তা (১) জাদং আমরণং কখু হিঅঅসল্লং মালদীএ মাহবাণুরাওত্তি তক্কেমি। (ঞ)

(জ) কুতঃ অস্যা আশ্বাসঃ। এতেন অদ্য সবিশেষদর্শনেনাতিভূমিং খলু তস্যাঃ অভিনিবেশো গমিষ্যতি। অন্যচ্চ নন্দনস্য কারণাৎ মহারাজো ভর্ত্তৃদারিকাং প্রার্থয়ন্ অমাত্যেন বিজ্ঞপ্তঃ।

(ঝ) কিমিতি।

(ঞ) “প্রভবতি নিজস্য কন্যকাজনস্য মহারাজ” ইতি। তৎ জাতম্ আমরণং খলু হৃদয়শল্যং মালত্যা মাধবানুরাগ ইতি তর্কয়ামি।

(জ) দ্বিতীয়েতি। অস্যা মালত্যাঃ। সবিশেষদর্শনেন মদনোদ্যানে বিশেষরূপেণ পরস্পরসাক্ষাৎকারেণ। অতিভূমিম্ আধিক্যম্। “অতিভূমিঃ (স্ত্রী) আধিক্য”মিতি শব্দকল্পদ্রুমঃ। অভিনিবেশঃ মাধবে অনুরাগঃ।

(ঞ) দ্বিতীয়েতি। আমরণং হৃদয়শল্যং জাতমিতি বিধেয়প্রাধান্যবিবক্ষয়া নপুংসকত্বম্। প্রভবতীত্যাদিপ্রত্যুত্তরেণ নন্দনায় মালতীদানস্যাঙ্গীকৃতত্বেন তস্যাবশ্য-ম্ভাবিত্বাদিতি ভাবঃ।

(জ) দ্বি-দা। (নিশ্বাস ত্যাগ করিয়া) মালতীর আশ্বাস কোথায়। আজ বিশেষভাবে দেখা হইয়াছে, ইহাতে মালতীর আগ্রহ বাড়িয়া গিয়াছে; এদিকে আবার মহারাজ নন্দনের জন্য মালতীকে প্রার্থনা করিলে মন্ত্রীমহাশয় তাঁহাকে জানাইয়াছেন।

(ঝ) প্র-দা। কি জানাইয়াছেন?

(ঞ) দ্বি-দা। “নিজের কন্যার প্রতি মহারাজের প্রভুত্বই

(১) অদো ইতি পাঠান্তরম্।

प्रथमा। अवि णाम भअवदी किं वि एत्थ भअवदीत्तणं दंसइस्सदि। (ट)

द्वितीया। अइ! असंवद्धमणोरहे! एहि गच्छम्ह। (ठ)

इति परिक्रम्य (१) निष्क्रान्ते।

## प्रवेशकः। (ड)

(ट) अपि नाम भगवती किमपि अत्र भगवतीत्वं दर्शयिष्यति।

(ठ) अयि असम्बद्धमनोरथे! एहि गच्छाव।

(ट) प्रथमेति। भगवती कामन्दकी। अत्र मालत्यभिलाषपूरणविषये। भगवतीत्वम् ऐश्वर्य्यशालित्वरूपं माहात्म्यं प्राकाम्यनामकेन स्वकीयैश्वर्य्यविशेषेण किं नाम राजामात्यनन्दनानां मतिं परिवर्त्तयिष्यति, अथवा मालत्यभिप्रायसम्पादने सदुपायान्तरं घटयिष्यतीत्यर्थः। भगवतीत्वमिति भगवतीत्यस्य संज्ञात्वविवक्षया "त्वतलोर्गुणवचनस्ये"ति न पुंवद्भावः।

(ठ) द्वितीयेति। असम्बद्धमनोरथे! विषयेणासंश्लिष्टाभिलाषे! परमसन्न्यासिनी खलु कामन्दकी, सुतरां सा कथं मालत्यभिलाषपूरणं महीयांसमीदृशमायाममङ्गीकरिष्यतीति भावः।

রহিয়াছে" এইরূপ জানাইয়াছেন। অতএব মাধবের প্রতি মালতীর অনুরাগ, মরণসময়পর্য্যন্ত হৃদয়ের শল্য হইয়া রহিল ইহা আমি মনে করি।

(ট) প্র-দা। এবিষয়ে ভগবতী কামন্দকী নিজের ভগবতীত্ব কিছু দেখাইবেন কি?

(ঠ) দ্বি-দা। ওরে! অসম্ভব বিষয়ে তোর অভিলাষ দেখিতেছি। আয়, এখন যাই।

(ইহার পর কতিপয় পদক্ষেপ করিয়া দুই জনই প্রস্থান করিল)।

(ড) প্রবেশক।

(१) कुत्रचित् परिक्रम्येति पाठो नास्ति।

ततः प्रविशत्युपविष्टा सोत्कण्ठा मालती लवङ्गिका च । (ढ)

मालती । हुं सहि ! तदो तदो (१) । (ण)

लवङ्गिका । तदो तेण महाणुभाएण उवणीदा मे इयं वउलमाला । इति मालामर्पयति । (त)

(ण) हुं, सखि ! ततस्ततः ।

(ड) प्रवेशक इति । प्रवेशयति पात्रविशेषमिति प्रवेशकः अर्थोपक्षेपकविशेषः । तथा च दर्पणे—

"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥"

शेषं विष्कम्भके यथेति विष्कम्भकवत् वृत्तवर्त्तिष्यमाणकथांशानां निदर्शनमावश्यकमित्यर्थः । तथा चात्र "तेण किल माहवप्पिअवअस्सेण" इत्यादिना वृत्तकथांशानां निदर्शनम् । तथा—"लवङ्गिआदुदीआ विवित्ते भट्टदारिआ वट्टदि" इत्यादिना वर्त्तिष्यमाणकथांशानां निदर्शनमनुसन्धेयम् ।

(ढ) तत इति । सोत्कण्ठा इति मालत्या एव विशेषणम्, अत्र रूढिमूलया जहत्-स्वार्थलक्षणया सभ्यदृष्टिगोचरत्वं विशधातोरर्थः तत्रश्च प्रविशति सभ्यानां दृष्टिगोचरी-भवतीत्यर्थः । तेनोपविष्टायाः स्वयंप्रवेशो न विरुद्ध इति बोध्यम् । नन्वस्मिन्नङ्के नायक-प्रवेशाभावात् कथं "प्रत्यक्षनेतृचरित" इत्याद्यङ्कलक्षणसङ्गतिरिति चेन्न तत्र नेता च नेत्री चेत्येकशेषात् नेतृपदेनैव नायिकाया अप्यभिहितत्वात् तस्याश्चात्र प्रवेशात् ।

(ण) मालतीति । हुंशब्दः प्रश्ने । लवङ्गिकया कथितं वकुलमालाप्रार्थनापर्य्यन्त-माकर्ण्य समुत्कण्ठिता मालती पृच्छति 'तदो तदो' इति ।

(ढ) ( তদনন্তর উৎকণ্ঠিত মালতী ও লবঙ্গিকার উপবিষ্ট অবস্থায় প্রবেশ । )

(ণ) মালতী । হুঁ, সখি ! তা'র পর, তা'র পর ?

(१) क्वचित् हुमिति पाठो नास्ति ।

लव। जनान्तिकम् (१)। सहि! अवि णाम माहवो भवे?। (ञ)

काम। असौ विद्याधारः (२) शिशुरपि विनिर्गत्य भवनात्
इहायातः सम्प्रत्यविकलशरच्चन्द्रवदनः (३)।
यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥११॥

(ञ) सखि! अपि नाम माधवो भवेत्।

समास एव न्याय्यः, न तु बाल एव चन्द्र इति रूपकसमास इति तेन न रूपकम्, एक एवेत्यनेन स बालको मातापित्रोरात्मीयानाञ्चातीव प्रेमास्पदमिति ध्वनितम्।

पुष्पिताग्रा वृत्तम् ॥१०॥

(ञ) लवेति। माधवो भवेत्, भगवत्याभिधीयमानोऽसौ बालक इति शेषः।

असाविति। अविकलशरच्चन्द्रवदनः पूर्णशरच्चन्द्रतुल्यमुखः, शिशुरपि बालकोऽपि सन् विद्याधारः आन्वीक्षिकीभिन्नविद्यानामाश्रयः असौ देवरातनन्दनः भवनात् स्वगृहात् विनिर्गत्य सम्प्रति इह अस्मिन् नगरे आयातः आगतः। यस्य आलोकस्थाने दर्शनप्रदेशे यत्र स्थित्वा सोऽवलोक्यते तस्मिन् स्थान इत्यर्थः पुरं नगरं कर्त्तृ उन्मादतरलैः तदवलोकन-व्यग्रतावशात् चञ्चलैः नारीणां कटाक्षैः अपाङ्गदृष्टिपातैः कुवलयितानि जातकुवलयानि

কামন্দকী। উদয়াচল হইতে চন্দ্রের ন্যায় সেই দেবরাত হইতে একটী মাত্র বালক জন্মিয়াছিল; সে প্রকাশিত রূপের শোভায় পরমসুন্দর, কলাযুক্ত এবং এই জগতে চক্ষুষ্মান্ লোকমাত্রেরই আনন্দের কারণ ॥১০॥

(ঞ) লবঙ্গিকা। (মালতীর নিকট চুপি চুপি) সখি! এই বালকটীই কি মাধব হইবেন?

(१) अपवार्य्य इति पाठभेदः। (२) विद्याशाली इति भिन्नः पाठः।

(३) शरच्चन्द्रमधुर इति पाठोऽपि दृश्यते।

तदत्र च बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकीमधीते। स एष माधवो नाम (१)। (ट)

वातायनानि गवाक्षजालानि यत्र तत् तथोक्तमिव भवति। यस्यावलोकनाय गवाक्षद्वारे समागतानां विहितकटाक्षाणां रमणीनां नयनानि प्रस्फुटितकुवलयानीव प्रतीयन्त इति सरलार्थः।

अत्र शरच्चन्द्रवदन इति लुप्तोपमा, तथा कुवलयितवातायनमिवेति वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, अनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः। उत्प्रेक्षया च तस्य लोकोत्तरसौन्दर्यं व्यज्यते। कुवलयशब्देन नीलोत्पलस्याप्यभिधानान्न विशेषे अविशेषाख्यदोषः। तथा च शब्दकल्पद्रुमः—"कुवलयं (क्लौ)···नीलोत्पलम्।"

शिखरिणी वृत्तम्॥११॥

(ट) तदत्रेति। "वेदार्थस्य अनु पश्चादीक्षणमन्वीक्षा, सा प्रयोजनमस्या इति ठक्‌ण्" इति रघुनाथः। आन्वीक्षिकीं विद्यां न्यायवैशेषिकादितर्कशास्त्रम्। "आन्वीक्षिकी दण्डनीती तर्कविद्यार्थशास्त्रयो"रित्यमरः। अत्र माधवं प्रति मालत्याः स्वाभिप्रेतविशेषानुरागसाधनाय बहुविधकीर्त्तनात्। "अस्ति विदर्भाधिपते"रित्यादि "स एष माधवो नाम" इत्यन्तसन्दर्भे सिद्धिर्नाम नाट्यलक्षणम्। तथा च दर्पणे—

"बहूनां कीर्त्तनं सिद्धिरभिप्रेतार्थसिद्धये।"

---

কামন্দকী। শরৎকালের পূর্ণচন্দ্রের ন্যায় মুখমণ্ডলসম্পন্ন সেই দেবরাতের পুত্র বালক হইয়াও সমস্ত বিদ্যার আধার হইয়াছেন এবং নিজগৃহ হইতে নির্গত হইয়া সম্প্রতি এখানে আসিয়াছেন; যাঁহার দর্শনযোগ্যস্থানে রমণীগণের মদনোন্মাদবশতঃ চঞ্চল কটাক্ষপাতে নগরের গবাক্ষগুলি যেন নীলোৎপলযুক্ত হইয়া থাকে॥১১॥

(ট) এই নগরে তিনি বাল্যসখা মকরন্দের সহিত ন্যায়শাস্ত্র অধ্যয়ন করিতেছেন। ইনি সেই মাধব।

---

(१) विद्यामान्वीक्षिकीमधिगच्छति, स एव माधवो नामेति इति पाठान्तरम्।

मालती। सानन्दं जनान्तिकम्। सहि! लवङ्गिए! सुदं महाउलप्पसूदो महाभाओ त्ति (१)। (ठ)

लव। जनान्तिकम्। सहि! कुदो वा महोदहिं वज्जिय पारिजादस्स उग्गमो त्ति। (ड)

नेपथ्ये शङ्खध्वनिः।

काम। अहो! कालातिपातः। सम्प्रति हि—(ढ)

(ठ) सखि! लवङ्गिके! श्रुतं महाकुलप्रसूतो महाभाग इति।

(ड) सखि! कुतो वा महोदधिं वर्जयित्वा पारिजातस्य उद्गम इति।

(ठ) मालतीति। महाभागो माधव इत्यर्थः। अत्र पुनर्माधवं प्रति विशेषानुरागोदयात् उद्भेदो नाम मुखसन्ध्यङ्गम्। यथा दर्पणे—

"बीजार्थस्य प्ररोहः स्यादुद्भेदः।"

(ड) लवेति। महोदधिं वर्जयित्वा विद्यमानात् कुतोऽन्यस्मात् पदार्थादित्यर्थः, तेन नैककर्त्तृकत्वहानिरिति भाव्यम्। यथा महोदधेरन्यत्र पारिजातस्योत्पत्तिर्न सम्भवति तथा देवरातादन्यस्मान्माधवस्याप्युत्पत्तिर्न सम्भवतीति भावः। अत्रैवात्र समादप्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः।

(ढ) कामेति। कालातिपातः विश्रम्भकथाप्रसङ्गादतीतोऽपि कालो नावगत इत्यर्थः। नायमुचितः क्रम इति भावः।

(ঠ) মালতী। ( আনন্দের সহিত লবঙ্গিকার প্রতি চুপি চুপি ) সখি! লবঙ্গিকে! শুনিলে? সেই মহাত্মা উচ্চবংশেই জন্মিয়াছেন।

(ড) লবঙ্গিকা। ( মালতীর প্রতি চুপি চুপি ) সখি! মহাসমুদ্র ত্যাগ করিয়া অন্য কোথা হইতেই বা পারিজাতের উৎপত্তি হইবে?

( নেপথ্যে শঙ্খধ্বনি হইল। )

(ঢ) কামন্দকী। ওহে! বড়ই কালক্ষেপ হইয়া গিয়াছে। এখন—

(१) सहि! सुदं तुए इतिमात्रः पाठः क्वचित्।

क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुलभा-(१)
मवाप्तोत्कण्ठानां विहगमिथुनानां प्रथमतः।
दधानः सौधानामलघुषु निकुञ्जेषु घनता-
मसौ सन्ध्याशङ्खध्वनिरनिभृतः खे विचरति ॥१२॥

क्षिपन्निति। असौ श्रूयमाणः, अनिभृतः अगुप्तः विशालभावेन प्रकाशितः इत्यर्थः सन्ध्याशङ्खध्वनिः प्रतिदिननियतः सन्ध्यासूचकः शङ्खनिनादः प्रथमतः आदौ अवाप्ता प्राप्ता उत्कण्ठा भाविविरहावधारणादौत्सुक्यं यैस्तेषां विहगमिथुनानां चक्रवाकदम्पतीनां मदनकलहच्छेदेन कन्दर्पजनितोद्दामव्यापारपरिसमाप्त्या सुरतपरिसमापनेनेत्यर्थः सुलभाम् अनायासलभ्यां निद्रामुद्रां स्वापसङ्कोचं निद्रया स्तब्धीभावमिति तात्पर्य्यं क्षिपन् रजनीसान्निध्यज्ञापनेन भाविदुःसहविरहसूचनात् अपसारयन्। तथा अलघुषु विशालेषु सौधानां राजसदनानां निकुञ्जेषु अभ्यन्तरेषु घनतां प्रतिध्वनिना गाढतां विशालतामित्यर्थः दधानो वहन् खे गगने विचरति प्रसरति। सुतरामिदानीमस्माकमितो गमनमावश्यकमिति भावः।

अत्रैकस्य शङ्खध्वनेः क्रमेण चक्रवाकदम्पतीकर्णेषु, सौधाभ्यन्तरेषु गगने च विचरणात् पर्य्यायनामालङ्कारः। तथा चक्रवाकमिथुनानामिति विशेषे वक्तव्ये विहगमिथुनानामिति सामान्योक्तेः विशेषेऽविशेषाख्यदोषः, स च 'रथाङ्गद्वन्द्वानां प्रथममुदितोत्कण्ठमनसा'मिति पाठेन समाधेयः। निकुञ्जशब्देन लतादिपिहितोदराभिधानेऽपि तद्वत् सौधाभ्यन्तरस्य नानाविधवस्तुविन्यासेन निविड़ताप्रतिपादनप्रयोजनवशेन तत्र लक्षणाश्रयणात् न नेयार्थत्वदोषः।

विहगमिथुनानामिति व्यक्तिभेदाद्बहुवचनम्। शिखरिणी वृत्तम् ॥१२॥

সন্ধ্যাকালের এই শঙ্খধ্বনি প্রকাশিত হইয়া প্রথমে উৎকণ্ঠিত চক্রবাকদম্পতিগণের মদনকলহ সমাপ্তির পর সুলভনিদ্রাজনিত স্তব্ধতা দূর করিয়া, পরে বৃহৎ অট্টালিকার ভিতরে (প্রতিধ্বনিবশতঃ) নিবিড়তা প্রাপ্ত হইয়া আকাশে বিচরণ করিতেছে ॥১২॥

(१) सुभगामिति पाठभेदः।

वत्से! सुखं स्थीयताम् (१)। इत्युत्तिष्ठति।

मालती। अपवार्य्य। कधं उवहारीकिदह्मि राइणो तादेण, राआराहणं क्खु तादस्स गुरुअं ण उण मालदी। सास्रम्। हा ताद! तुमं वि णाम मम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए। सानन्दम्। कधं महाउलप्पभवो वि (२) सो महाणुभाओ (३) सुट्ठु भणिदं (४) पिअसहीए "कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमो" त्ति। अवि णाम तं पुणोवि पेक्खिस्सं। (ग)

(ग) कथमुपहारीकृतास्मि राज्ञस्तातेन, राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती। हा तात! त्वमपि नाम ममैवमिति सर्वथा जितं भोगतृष्णया। कथं महाकुलप्रभवोऽपि स महानुभावः, सुष्ठु भणितं प्रियसख्या, "कुतो वा महोदधिं वर्जयित्वा पारिजातस्य उद्गम" इति। अपि नाम तं पुनरपि प्रेक्षिष्ये।

(ग) मालतीति। महाकुलप्रभवोऽपि न केवलमशेषविद्यारूपलावण्यशालीत्यपेरर्थः। स महानुभावो माधवः। तं माधवम्।

বৎসে! সুখে থাক। ( এই কথা বলিয়া গাত্রোত্থান করিলেন )।

(গ) মালতী। ( চুপি চুপি ) হায়! পিতা আমাকে রাজার উপহারের বস্তু করিলেন; সুতরাং রাজার সন্তোষ করাই পিতার বেশী হইল, কিন্তু মালতী নয়। ( অশ্রুমোচন করিয়া ) হা পিতঃ! আপনিও আমার পক্ষে এইরূপ ( নিষ্ঠুর ) হইলেন। ( অতএব বলিতে হইবে যে ) জগতে ভোগলালসারই সর্ব্বপ্রকার জয়। ( আনন্দের সহিত ) সেই

(१) तदुत्तिष्ठाम इति पाठान्तरम्। (२) महाउलप्पसूदो सो इति पाठभेदः।
(३) महाभाओ इत्यपि पाठः। (४) सुभणिदं इति कुत्रचित् पाठः।

लव। अवलोइदे! इदो एहि, एदिणा सोवाणेण ओदरह्म (१)। (त)

काम। अपवार्य्य। अवलोकिते! (२) साधु सम्प्रति मया तटस्थयैव मालतीं प्रति निसृष्टार्थदूतीकृत्यस्य (३) लघूकृतो भारः। तथाहि—(४) (थ)

(त) अवलोकिते! इत एहि, एतेन सोपानेनावतराव:।

(त) लवंलि। इत: अस्यां दिशि। अत्र केवलावलोकिताया: सम्बोधनेन तया सार्द्धं लवङ्गिकाया: कोऽपि निभृतालापो व्यज्यते।

(थ) कामेति। तटस्थयैव उदासीनया सत्यैव उदासीनभावमवलम्ब्यैव न तु माधवपक्षपातलेशमपि प्रकाश्य इत्येवमस्यार्थ:। अन्यथा यदि संशयीतेति भाव:। निसृष्टार्थदूतीकृत्यस्य "निसृष्टार्थदूतीकल्पस्तत्कथितव्य" इति यत् प्राक् प्रतिपादितं तादृश-दूतीकार्य्यस्य। लघूकृत: माधवं प्रति मालत्या गाढ़ानुरागोत्कर्षजननादल्पीकृत:। बहुतर एव कर्त्तव्यांश: सुसम्पादित:, इदानीमल्पमात्रमवशिष्यत इति भाव:। निसृष्टार्थदूतीलक्षण-मुक्तम्। आशङ्कितकर्त्तव्यांशसम्पादनसङ्कलनाभिधानपूर्वकमवशिष्टं कर्त्तव्यांशमभिधातु-माह तथाहीति।

মহাত্মা উচ্চবংশজাত বটেন; অতএব প্রিয়সখী ভালই বলিয়াছেন যে, "মহাসমুদ্র ত্যাগ করিয়া অন্য কোথা হইতেই বা পারিজাতের উৎপত্তি হইবে।" আরও কি তাঁহাকে দেখিতে পাইব?

(ত) লবঙ্গিকা। অবলোকিতা! এ দিকে আয়, সিঁড়ি দিয়া নামি।

(থ) কামন্দকী। (অবলোকিতার প্রতি চুপি চুপি) অবলোকিতা!

(१) अवलोइदे! इदो एदिणा संजमणेण ओदरह्म इति पुस्तकान्तरे पाठ:।

(२) क्वचित् 'अवलोकिते' इति सम्बोधनं नास्ति।

(३) निसृष्टार्थदूत्यस्य, निसृष्टार्थदूतीव्रतस्य इति पाठभेदौ।

(४) कुत इति पाठान्तरम्।

वरेऽन्यस्मिन् द्वेषः (१) पितरि विचिकित्सा च जनिता
पुरावृत्तोद्गारैरपि च कथिता कार्य्यपदवी।
स्तुतं माहाभाग्यं (२) यदभिजनतो यच्च गुणतः
प्रसङ्गाद्वत्सस्येत्यथ खलु विधेयः (३) परिचयः ॥१३॥

वर इति। अन्यस्मिन् वरे नन्दने द्वेषो जनितः मालत्या वैतृष्ण्यमुत्पादितम्, तथा पितरि जनके भूरिवसौ विचिकित्सा च 'भोगलालसायाः प्रबलतया मत्सुखशान्तिनैरपेक्ष्येण नन्दनाय मां प्रतिपादयेत्, किंवा तनयौचितवात्सल्यात् मम सुखशान्तिसापेक्षतयैव माधवाय मां समर्पयेत्' इत्यं संशयश्च। जनिता मया कौशलेन उत्पादिता। अपि च तथा, पुरावृत्तानां शकुन्तलोर्वश्यादिवृत्तान्तानाम् उद्गारैः प्रकाशैः कार्य्यपदवी कर्त्तव्यमार्गः पितृनैरपेक्ष्येणाभिमतवराय स्वयमात्मदानानुकूला रीतिरित्यर्थः कथिता मयेति शेषः। प्रसङ्गात् अन्यप्रसङ्गात् लवङ्गिकाया जिज्ञासाप्रसङ्गेनेत्यर्थः वत्सस्य माधवस्य माहाभाग्यं महाभाग्यवत्त्वं स्तुतं प्रशंसितम्। प्रसङ्गं विना अकस्मात्तन्महाभाग्यप्रशंसायां यदि मम माधवपक्षपातमासङ्केतेति भावः। किन्तन्माहाभाग्यमित्याह यदिति। अभिजनतो वंशतः महामात्यदेवरातादुत्पत्तेर्हेतोरित्यर्थः यन्माहाभाग्यम्, तथा गुणतो रूपलावण्यविद्यादिगुणवशात् यच्च माहाभाग्यं वत्सस्य वर्त्तत इति शेषः। कृतमभिधाय इदानीमवशिष्टं कर्त्तव्यांशमाह अथेति। अथ इति इतः परम्, परिचयः, समागमवशात् उभयोरेव मालतीमाधवयोरौदृशतया परस्परविशेषज्ञानम्, विधेयः अस्माभिः कर्त्तव्यः। एतन्मात्रमवशिष्यत इति भावः।

अत्र भारलघूकरणकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः। यच्छब्दद्वयस्योत्तरवाक्यगतत्वेन तच्छब्दैरपेक्ष्यात् 'स्तुतं माहाभाग्य'मिति वाक्यस्य प्रथममभिधाने-

ভাল, আমি উদাসীন থাকিয়াই মালতীর নিকট এখন নিসৃষ্টার্থদূতীর কর্ত্তব্য ভার লঘু করিয়াছি। দেখ—

(१) दोष इत्यपि पाठः। (२) तन्माहात्म्यमिति पाठोऽपि दृश्यते।
(३) विधिविधेय इति कुत्रचित् पाठः।

इति निष्क्रान्ताः सर्वे । (द)

# इति मालतीमाधवे धवलगृहो नाम द्वितीयोऽङ्कः ।

ऽपि न विधेयाविमर्शदोषः । अत्र प्रकृतसमागमाय उद्यमाभिधानात् करणं नाम मुखसन्ध्यङ्गम् । तथा च साहित्यदर्पणे—

"···करणं पुनः । प्रकृतार्थसमारम्भः ।"

अनेन कामन्दक्या वात्स्यायनकामशास्त्राभिज्ञत्वं प्रतिपादितम् । तथा च वात्स्यायनकामशास्त्रे कन्यासम्प्रयुक्तकाधिकरणे निसृष्टार्थदूतीकर्त्तव्यनिरूपणप्रकरणे सूत्राणि—

"अन्यवरपितृणाञ्च दोषानभिप्रायविरुद्धान् प्रतिपादयेत् ।" "मातापित्रोश्च गुणानभिज्ञतामनपेक्षतां लुब्धतां शठतां चपलतां बान्धवानाम् ।" "याश्चान्या अपि समानजातीयाः कन्याः शकुन्तलाद्याः स्वबुद्ध्या भर्त्तारं प्राप्य मोदन्ते स्म ताश्चास्याः प्रदर्शयेत् ।"

शिखरिणी वृत्तम् ॥१३॥

(द) इतीति । जना इत्यध्याहार्य्यस्य विशेषणत्वात् सर्वे इति पुंस्त्वस्य नानुपपत्तिः ।

इति महामहोपाध्याय-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां मालतीमाधवटीकायां भावमनोहरायां द्वितीयाङ्कविवरणं समाप्तम् ॥०॥

---

অন্য বরের ( নন্দনের ) প্রতি মালতীর বিদ্বেষ এবং পিতার প্রতি সন্দেহ জন্মাইয়া দিয়াছি ; প্রাচীন উপাখ্যানগুলি বলিয়া কর্ত্তব্যের পথ বলিয়াছি এবং বৎস মাধবের কুলগত ও গুণগত যে মহত্ত্ব রহিয়াছে, প্রসঙ্গক্রমে তাহার প্রশংসা করিয়াছি ; ইহার পর কেবল সম্মিলনটী করিয়া দিতে হইবে ॥১৩॥

(দ) ( ইহার পর সকলের প্রস্থান । )

## ধবলগৃহনামে দ্বিতীয় অঙ্ক সমাপ্ত ।

# तृतीयोऽङ्कः ।

—०:*:०—

ततः प्रविशति बुद्धरक्षिता ।

बुद्ध । परिक्रम्य । आकाशे । अवलोइदे ! अवि जाणासि कहिं भअवदीत्ति (१) । (क)

(क) अवलोकिते ! अपि जानासि कस्मिन् भगवतीति ।

(क) बुद्धेति । परिक्रम्य कियन्तं पादक्षेपं कृत्वा । आकाशे शून्ये वदतीति शेषः । आकाशभाषितलक्षणं यथा त्रिपुरारिधृतम्—

"अप्रविष्टैः सहालापो भवेदाकाशभाषितम् ।"

इतःप्रभृति चतुर्थाङ्कसमाप्तिपर्य्यन्तः प्रतिमुखसन्धिः । यथा साहित्यदर्पणे—

"फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत् ॥"

तथा च "तत्सर्व्वथा सङ्गमनाय यत्नः प्राणव्ययेनापि मया विधेय" इत्यनेन प्रयत्नावस्था, "तदास्यताम्, किञ्चिदाख्यातुकामास्मि" इत्यादिना "यदि तद्विषयोऽनुरागबन्ध" इत्यन्तेन लवङ्गिकया कामन्दक्या च मालतीमाधवयोर्मदनविकारवर्णनात् तयोः परस्परसमागमरूप-फलविषयकप्रधानोपायभूतानुरागस्य लक्ष्यता, पुनश्च तस्य नन्दनविवाहनिश्चयेनालक्ष्यता, तथा "आविर्भवन्ती"त्यादिवक्ष्यमाणश्लोकेन विन्दुर्नामार्थप्रकृतिश्च निरूपितेति तत्र तत्रानु-सन्धेयम् । प्रयत्नावस्थादीनां लक्षणानि तु तत्र तत्र वक्ष्यन्ते । एवमस्य विलासादीनि त्रयोदशाङ्गानि यथास्थानं सन्निवेश्य सलक्षणानि प्रदर्शयिष्यन्ते ।

তদনন্তর বুদ্ধরক্ষিতার প্রবেশ ।

(ক) বুদ্ধরক্ষিতা । ( কতিপয় পাদক্ষেপ করিয়া অপ্রবিষ্ট পাত্রকে লক্ষ্য করিয়া ) অবলোকিতা ! জানিস্ কি ভগবতী কামন্দকী কোথায় ?

(१) क्वचित् 'त्ति' इति पाठो नास्ति ।

प्रविश्य अवलोकिता। वुद्धरक्खिदे ! किं पमुद्धासि (१)। कोवि अ कालो भअवदीए पिण्डवादवेलं वज्जिअ (२) मालदीं अणुवत्तमाणाए। (ख)

वुद्ध। हुं, तुमं उण कहिं पत्थिदासि। (ग)

अव। अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा। सद्दिट्ठं अ तस्स, जधा सङ्करघरसम्बद्धं कुसुमाअरं णाम (३) उज्जाणं गदुअ कुजअ-णिउञ्ज-(४) पेरन्तरत्तासोअगहणे चिट्ठन्ति। गदो अ तत्थ माहवो। (घ)

(ख) बुद्धरक्षिते ! किं प्रमुग्धासि। कोऽपि च कालो भगवत्याः पिण्डपातवेलां वर्ज्जयित्वा मालतीमनुवर्त्तमानायाः।

(ग) हुं, त्वं पुनः कुत्र प्रस्थितासि।

(ख) प्रविश्येति। प्रमुग्धासि मोहं प्राप्तासि। कथमन्यथा सम्यगवगतविषयेऽपि पुनर्जिज्ञासीति भावः। तथापि तवाग्रहादब्रवीमीत्यभिप्रायेणाह कोऽपि चेति। पिण्ड-पातवेलां निर्द्दिष्टमाहारसमयम्, वर्ज्जयित्वा अतिक्रम्य, मालतीमनुवर्त्तमानायाः केवलं मालतीमेवानुसरन्त्याः। कोऽपि च अनिर्व्वचनीयः अतिदीर्घ इत्यर्थः, कालः समयः। इदानीं गच्छतीति शेषः। इदानीमपि मालत्यर्थमेव गतेति भावः।

(খ) অবলোকিতা। (প্রবেশ করিয়া) বুদ্ধরক্ষিতা! তুই কি মূর্চ্ছিত হইয়াছিস্? আহারের নির্দ্দিষ্ট সময় পরিত্যাগ করিয়া ভগবতী কামন্দকী মালতীর নিকট গিয়াছেন; সে যে বহুকাল হইল।

(গ) বুদ্ধরক্ষিতা। হুঁ। তুই আবার কোথায় চলিয়াছিস্?।

(१) विस्मृतासीति पाठान्तरम्।

(२) जो कोवि कालो भअवदीए पिण्डपारणवेलं विअज्जिअ इति पाठभेदः।

(३) सङ्करउरसंबन्धि कुसुमाउरुज्जाणं इत्यपि पाठः।

(४) कुञ्जणिउञ्ज इति पाठोऽपि दृश्यते।

बुद्ध । (१) किंत्ति तहिं माहवो अणुप्पेसिदो ? । (ङ)

अव । अज्ज कसणचउद्दसीत्ति (२) भअवदीए (३) समं मालदी सङ्करघरं (४) गमिस्सदि । तदो एव्वं किल सोहग्गं वड्ढदित्ति देवदाराहणणिमित्तं सहत्थकुसुमावअअं उद्दिसिअ लवङ्गिआदुदीआं मालदीं भअवदी ज्जेव (५) कुसुमाअरुज्जाणं आणइस्सदि । तदो अस्सोस्सदंसणं भविस्सदित्ति (६) । तुमं उण कहिं पत्थिदा ? । (च)

(घ) अहं खलु भगवत्या माधवमकाशमनुप्रेषिता । सन्दिष्टश्च तस्य, यथा शङ्कर-गृहसम्बद्धं कुसुमाकरं नाम उद्यानं गत्वा कुब्जकनिकुञ्जपर्यन्त-रक्ताशोकगहने तिष्ठेति । गतश्च तत्र माधवः ।

(ङ) किमिति तस्मिन् माधवोऽनुप्रेषितः ?

(घ) अवेति । शङ्करगृहसम्बद्धं प्रतिष्ठितशिववाटीसंलग्नम् । "कुब्जकः (पुं) पुष्प-वृक्षविशेषः । कुजा इति ख्यात" इति शब्दकल्पद्रुमः । तस्य यो निकुञ्जः लताद्या-वृतस्थानं तस्य पर्य्यन्ते शेषभागे यत् रक्ताशोकानां गहनं वनं तत्र ।

(ङ) बुद्धेति । किमिति किमर्थं केन हेतुना । तस्मिन् कुसुमाकरोद्याने ।

(ঘ) অবলোকিতা। ভগবতী কামন্দকী আমাকে মাধবের নিকট পাঠাইয়াছিলেন এবং তাঁহার নিকট খবর দিয়াছিলেন যে, শিবের বাড়ীব সংলগ্ন কুসুমাকরনামে একটী উদ্যান আছে, সেই খানে যাইয়া কুজাগাছ-গুলির প্রান্তভাগে যে রক্তাশোকবন আছে তাহার ভিতরে থাক। মাধবও সেখানে গিয়াছেন।

(ঙ) বুদ্ধরক্ষিতা। কুসুমাকরোদ্যানে মাধবকে পাঠাইয়াছেন কেন ?।

(१) अवलोइदे इत्यधिकः कुवचित् पाठः । (२) तत्थ इत्यपि कुवचिदधिकः पाठः ।
(३) अअणीए इति पाठभेदः । (४) सङ्करउरं इति पाठान्तरम् ।
(५) तं एव इति भिन्नः पाठः । (६) भोदुत्ति इति पाठोऽपि दृश्यते ।

बुद्ध। अहं क्खु सङ्करघरं ज्जेव पत्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा। तदो भअवदीए पादवन्दणं कदुअ तहिं ज्जेव गच्छामि। (छ)

(च) अद्य कृष्णचतुर्द्दशीति भगवत्या समं मालती शङ्करगृहं गमिष्यति। तत एवं किल सौभाग्यं वर्द्धत इति देवताराधननिमित्तं स्वहस्तकुसुमावचयमुद्दिश्य लवङ्गिकाद्वितीयां मालतीं भगवत्येव कुसुमाकरोद्यानमानेष्यति। ततः अन्योन्यदर्शनं भविष्यतीति। त्वं पुनः कस्मिन् प्रस्थिता ?

(छ) अहं खलु शङ्करगृहमेव प्रस्थितया प्रियसख्या मदयन्तिकया आमन्त्रिता। ततो भगवत्याः पादवन्दनं कृत्वा तस्मिन्नेव गच्छामि।

(च) अद्येति। इति हेतोः। "शिवस्योक्ता चतुर्द्दशी"ति स्मृतेश्चतुर्द्दश्यां शिवार्च्चन-मतीवप्रशस्तमित्यभिप्रायः। भगवत्या कामन्दक्या। ततः परम्। एवं किल इत्यमनुष्ठिते खलु, स्वहस्तावचितैः कुसुमैः शिवार्च्चने कृते इत्यर्थः। इति इत्थं बोधयित्वेत्यर्थः। "कुश-पुष्पसमिदादि ब्राह्मणः स्वयमाहरे"दिति शास्त्रात् ब्राह्मणपदस्य चोपलक्षणत्वादिति भावः। अन्योन्यदर्शनं मालतीमाधवयोः परस्परसाक्षात्कारः भविष्यति, इति हेतोर्माधवस्तवानु-प्रेक्षित इत्यर्थः।

(চ) অবলোকিতা। আজ কৃষ্ণপক্ষের চতুর্দ্দশী; এই জন্য মালতী, ভগবতী কামন্দকীর সহিত শিবের বাড়ী যাইবেন। তাহার পর, 'এইরূপ করিলে সৌভাগ্য বৃদ্ধি পায়' এই নিমিত্ত নিজের হাতে ফুলতোলা উদ্দেশ্য করিয়া ভগবতী কামন্দকীই লবঙ্গিকার সঙ্গে মালতীকে কুসুমাকরোদ্যানে লইয়া যাইবেন। তাহার পর পরস্পর দেখা হইবে। তুই আবার কোথায় চলিয়াছিস্ ?।

(ছ) বুদ্ধরক্ষিতা। শিবের বাড়ীই যাইবেন বলিয়া প্রিয়সখী মদয়ন্তিকা আমাকে ডাকিয়াছিলেন। তাই আমি ভগবতী কামন্দকীকে নমস্কার করিয়া সেইখানেই চলিয়াছি।

अव। तुमं क्खु भअवदीए जस्सिं पओअणे णिउत्ता, तत्थ को वुत्तन्दो ?। (ज)

बुद्ध। मए क्खु भअवदीए समादेसेण तासु तासु विस्सम्भकधासु ईरिसो तारिसो त्ति मअरन्दस्स उअरि पिअसहीए परोक्खाणुराओ तहा दूरं आरोविदो जहा से मणोरहो (१) अवि णाम तं पेक्खामि त्ति। (झ)

(ज) त्वं खलु भगवत्या यस्मिन् प्रयोजने नियुक्ता, तत्र को वृत्तान्तः ?

(झ) मया खलु भगवत्याः समादेशेन तासु तासु विस्रम्भकथासु ईदृशस्तादृश इति मकरन्दस्योपरि प्रियसख्याः परोक्षानुरागस्तथा दूरमारोपितः, यथाऽस्या मनोरथः, अपि नाम तं प्रेक्षे इति।

(ज) अवेति। यस्मिन् प्रयोजने मदयन्तिकामकरन्दयोः संयोजनरूपे कार्य्ये।

(झ) बुद्धेति। विस्रम्भकथासु निभृतप्रणयालापेषु। ईदृशः शौर्य्यविद्यादि विशेषगुणवान्, तादृशः मदन इव रूपलावण्यवान् मकरन्दः। इति इत्थं वचनोपन्यासेनेत्यर्थः। प्रियसख्याः मदयन्तिकायाः। दूरमारोपितः वृद्धिं नीतः। अस्या मदयन्तिकायाः, मनोरथ इत्थमभिलाषः अभूदिति शेषः। कीदृगसावित्याह अपीति। तं मकरन्दम्। प्रेक्षे साक्षादवलोकयामि। 'साक्षान्मकरन्दमवलोकयितुमर्हामि किम्' इति मनोरथोऽभूदिति तात्पर्य्यम्। तस्मिन्नेतावान् वृत्तान्तो जात इति भावः।

(ज) অবলোকিতা। কামন্দকী তোমাকে যে উদ্দেশ্যে নিযুক্ত করিয়াছিলেন, সে বিষয়ের খবর কি ?।

(ঝ) বুদ্ধরক্ষিতা। ভগবতীর আদেশে আমি সেই সেই প্রণয়ালাপের সময় 'এই রকম' 'সেই রকম' এইরূপ বলিয়া মকরন্দের উপর

(१) पिअसहीए मदअन्तिआए दूरं आरोविदो परक्खाणुराओ एसो अ से मणोरहो इत्यपि पाठः।

अव। साहु, बुद्धरक्खिदे! साहु (१)। (ञ)

बुद्ध। एहि गच्छह्म (२)। (ट)

इति निष्क्रान्ते (३)।

## प्रवेशकः। (ठ)

प्रविश्य कामन्दकी (४)।

तथा विनयनम्राऽपि मया मालत्युपायतः।
नीता कतिपयाहोभिः (५) सखीविस्रम्भसेव्यताम् ॥१॥

---

(ञ) साधु, बुद्धरक्षिते! साधु।

(ट) एहि गच्छावः।

(ञ) अवेति। साधु अनुष्ठितमिति शेषः।

(ठ) प्रवेशक इति। तल्लक्षणमुक्तम्। अत्र "गतश्च तव माधव" इत्यादिना वृत्तकथांशानां निदर्शनम्, "मालती शङ्करगृहं गमिष्यती"त्यादिना च वर्त्तिष्यमाणकथांशानां निदर्शनं बोद्धव्यम्।

---

প্রিয়সখী মদয়ন্তিকার পরোক্ষানুরাগ সেইরূপ বাড়াইয়া দিয়াছি যে, তাহার ইচ্ছা হইয়াছে যে, তাঁহাকে দেখিতে পাইব কি ?।

(ঞ) অবলোকিতা। বেশ্, বুদ্ধরক্ষিতা! বেশ।

(ট) বুদ্ধরক্ষিতা। আয় যাই।

( এই বলিয়া উভয়ের প্রস্থান। )

(ঠ) প্রবেশক।

---

(१) साहु, बुद्धरक्खिदे! साहु। एहि गच्छह्म। इति पाठान्तरम्।

(२) क्वचिदयं पाठो नास्ति। (३) इति परिक्रम्य निष्क्रान्ते इत्यपि पाठः।

(४) ततः प्रविशति कामन्दकी इतिमात्रः पाठः क्वचित्।

(५) कतिपयाहेन इति पुस्तकान्तरे पाठः।

सम्प्रति हि—(१)

व्रजति विरहे वैचित्त्यं नः, प्रसीदति सन्निधौ,
रहसि रमते, प्रीत्या देयं (२) ददात्यनुवर्त्तते ।
गमनसमये कण्ठे लग्ना निरुध्य निरुध्य मां
सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते ॥२॥

तर्थात । मया, तथा तेन प्रकारेण सातिशयभावेनेत्यर्थः, विनयेन गुरुजनोचितभक्तियुक्तेन कुलकन्यायोग्यस्वभावेन नम्राऽपि ममान्तिके अवनताऽपि मालती, उपायतः कैश्चिदुपायैः कतिपयाहोभिः अल्पैरेव दिवसैः सखीविस्रम्भसेव्यतां सखीवदात्मनि विश्वासव्यवहारयोग्यतां नीतां प्रापिता ।

तथा च मालती पूर्वं गुरुसमीप इव मम समीपे भक्तिश्रद्धातिशयेनापरकुलकन्यकेव परममवनतासीत्, इदानीन्तु मया कबरीबन्धन-कुचद्वयपत्रलेखानिर्म्माण-रहस्यालापादिभिरुपायैः लवङ्गिकाप्रभृत्यन्यतमसखीजन इव मयि विश्वासव्यवहारकारिणी विहितेति सरलार्थः । तदियमिदानीमवश्यमेव मदुपदिष्टपथं गमिष्यतीति भावः ।

अत्र सखीविस्रम्भसेव्यतामिति लुप्तोपमालङ्कारः । कतिपयाहोभिरिति समासान्तविधेरनित्यतया न अदन्तता ॥१॥

सख्यामिवात्मनि विश्वासव्यवहारमेव विवृणोति व्रजतीति । नोऽस्माकं विरहे वैचित्त्यं दौर्म्मनस्यं व्रजति, तथा सन्निधौ प्रसीदति निर्वृतचित्ता भवति, रहसि निर्जनस्थाने, रमते मया सह नर्म्मालापादिना क्रीड़ति, तथा प्रीत्या देयं प्रणयेन दातव्यं कर्पूरादि वस्तु, ददाति मह्यमुपहरति, अनुवर्त्तते प्रियसम्भाषणासनदानादिना ममानुगत्यं करोति । तथा गमनसमये ततः प्रस्थानकाले कण्ठे लग्ना भुजाभ्यां मम गलदेशमवलम्ब्य मां निरुध्य

( প্রবেশ করিয়া ) কামন্দকী। মালতী সেইরূপ বিনয়াবনত হইলেও আমি উপযুক্ত উপায়ে উহাকে কয়েকদিনের মধ্যে সখীর ন্যায় আমার প্রতি ব্যবহার করিবার উপযুক্ত করিয়া ফেলিয়াছি ॥১॥

(१) क्वचित् 'हि' शब्दो नास्ति । (२) वाचमिति, दायमिति च पाठभेदौ ।

इदञ्च तत्र साधीयः प्रत्याशानिबन्धनम् (१)। (ड)

शाकुन्तलादीनितिहासवादान्
प्रस्तावितानन्यपरैर्वचोभिः।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी
चिराय चिन्तास्तिमितत्वमेति ॥३॥

निरुध्य अतिशयेनानुरुध्य प्रणम्य च शपथैः 'यदि त्वमिदानीमेव नागच्छसि तदा मम मस्तकं खादसि' इत्यादिभिः शपथवाक्यैः सपदि तत्क्षणात् प्रत्यावृत्तिं मम प्रत्यागमनं याचते प्रार्थयति।

अत्र व्रजतीत्यादीनामनेकक्रियाणां कण्ठे लग्नेत्यनेनोपस्थितमालतीरूपैककर्तृकारकत्वात् दीपकमलङ्कारः, तथा सख्यामिवात्मनि विश्वासव्यवहारप्रतिपादनकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयश्च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

हरिणी वृत्तम् ॥२॥

(ड) इदञ्चेति। किञ्चेति चार्थः। इदम् अनुपदमुच्यमानम्, अत्र मालतीमाधवयोः समागमविषये, साधीयो दृढतरं प्रत्याशायाः सत्यमेवासौ मदुपदिष्टमाचरिष्यतीत्येवंरूपाया आशायाः, निबन्धनं हेतुः।

किन्तदित्याह शाकुन्तलादीनिति। अन्यो मालतीभिन्नो जनः, परस्तात्पर्य्यविषयो

কারণ, এখন মালতী আমার বিচ্ছেদে দুঃখিত হয়, নিকটে প্রফুল্ল থাকে, নির্জ্জনে খেলা করে, প্রীতিবশতঃ দেয় বস্তু দান করে, অনুগত হইয়া চলে এবং যাইবার সময় আমার কণ্ঠলগ্ন হইয়া, বিশেষ অনুরোধ করিয়াও প্রণামপূর্ব্বক শপথ করিয়া আবার শীঘ্র ফিরিয়া আসা প্রার্থনা করে ॥২॥

(ড) বিশেষতঃ, সে বিষয়ে ইহাই বিশেষ প্রত্যাশার কারণ হইয়াছে যে,

(१) सम्प्रत्याशानिबन्धनमिति पाठभेदः।

तदद्य माधवसमक्षमुत्तरमुपक्रमिष्ये (१)। नेपथ्याभिमुख-मवलोक्य (२)। वत्से! इत इतः। (ढ)

तत: प्रविशति मालती लवङ्गिका च।

-शेषां तैरन्यपरैः, मुखतोऽन्योद्देशेन प्रवृत्तवदवभासमानैः वास्तविकपक्षे तु स्वोद्देशेनैव प्रवृत्तै-रित्यर्थः; वचोभिर्वाक्यैः प्रस्ताविताम् मया प्रसञ्जितान् शकुन्तलादीनां शकुन्तलावृत्तान्तादि-कान् इतिहाससंवादान् पुरावृत्तवाक्यानि श्रुत्वा मदुत्सङ्गे ममाङ्के निवेशितानि स्थापितानि अङ्गानि भुजयुगलग्रीवामस्तकानि यया सा तथोक्ता मालती, चिराय बहुकालं यावत्, चिन्तया 'कथं मया शकुन्तलादिवदाचरितव्यम्, को वा तत्रोपायः' इत्यादि भावनया स्तिमितत्वं स्तब्धीभावम् एति प्राप्नोति। इदमेव लक्षणं मम प्रत्याशायाः साधीयो निबन्धन-मिति भावः।

इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम्।

"अनन्तरोदीरित लक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।

इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम॥" इति लक्षणात्॥३॥

(ढ) तदद्येति। तत् तस्मात् अनया मदुपदिष्टस्यावश्यकर्त्तव्यत्वावधारणात् हेतो-रित्यर्थः। माधवस्य समक्षं प्रत्यक्षम् उत्तरं परकर्त्तव्यम् उपक्रमिष्ये आरप्स्ये। "प्रोपाभ्या-मारम्भे" इत्यात्मनेपदम्। नेपथ्याभिमुखमवलोक्य नेपथ्याभिमुखावलोकनेन मालत्या-गच्छतीति दृष्ट्वेत्यर्थः। वत्से! मालति! इत इत आगम्यतामिति शेषः।

---

অন্য প্রসঙ্গের বাক্যদ্বারা আমার প্রস্তাবিত শকুন্তলাপ্রভৃতির ইতিহাস শুনিয়া মালতী আমার ক্রোড়ে অঙ্গসংস্থাপনপূর্ব্বক বহুকাল যাবৎ চিন্তায় স্তব্ধভাব অবলম্বন করে॥৩॥

(ঢ) অতএব আজ মাধবের সমক্ষে পরের কর্ত্তব্য আরম্ভ করিব। (নেপথ্যের দিকে দৃষ্টিপাত করিয়া) বৎসে! এদিক্ এদিক্ এস।

তাহার পর মালতী ও লবঙ্গিকার প্রবেশ।

(১) উপক্রমিষ্যাম इति पाठान्तरम्। (२) नेपथ्याभिमुखमितिमात्रः पाठः क्वचित्।

मालती। स्वगतम्। 'कथं ववहारीकिदह्मि' इत्यादि पूर्वोक्तं पठति (१)।

लव। सहि! एसो क्खु महुर-महुरसाद्द-(२) मञ्जरी-कवलण-केलि-कल--कोइलउल-कोलाहलाकुलिद--सहआर--सिहरुड्डीण-चडुल-चञ्चरीअ-णिअर--व्वदिअरुद्दलिद--दल-कराल-चम्पआहि-वास-मणोहरो, मराल-मंसल-जहण-(३) परिणाहुव्वहण-

(ख) सखि! एष खलु मधुर-मधुरसार्द्र-मञ्जरी-कवलन-केलिकल-कोकिल-कुल-कोलाहलाकुलित-सहकारशिखरोड्डीन-चटुल--चञ्चरीकनिकर--व्यतिकरोद्दलित-दल-कराल-चम्पकाधिवास-मनोहरः, मराल-मांसल-जघन--परिणाहोद्वहन--मन्थरोरुभर-

(ख) लवेति। मारुतस्य विशेषणद्वयम्। मधुरः सुस्वादः, यो मधुरसः पुष्प-निर्यासद्रवः, तेन आर्द्रा क्लिन्ना या मञ्जरी चूतवल्लरी तस्याः कवलनं ग्रसनं मुखार्पणमेव केलिः क्रीड़ा, तया कलो मधुरास्फुटो यः कोकिलकुलस्य पिकसमूहस्य कोलाहलः कल-कलः, तेन आकुलितात् व्याप्तात् सहकारशिखरात् चूतपल्लवात् उड्डीनः वासेनोत्पतितः, चटुलः चञ्चलः, यश्चञ्चरीकनिकरः मधुकरसमूहः, तस्य व्यतिकरेण विमर्द्देन उद्दलितानि विकासितानि दलानि पत्राणि येषां तानि, अपसारितकलिकाभावानीत्यर्थः अतएव करा-लानि दन्तुराणि असमानानि यानि चम्पकानि चाम्पेयकुसुमानि तेषामधिवासेन सौरभेण

मালতী। (স্বগত 'কথং' ইত্যাদি পূর্ব্বোক্ত কথা আবার বলিল)।

(গ) লবঙ্গিকা। সখি! পুষ্পের সুমধুর রসে মঞ্জরীগুলি ভিজিয়া যাইতেছে, তাহা ভক্ষণ করায় কোকিলগণের অস্পষ্ট কণ্ঠস্বর আরও মধুর শুনা যাইতেছে, সেই কোলাহল আমবাগানটীকে আকুল করিয়া তুলিয়াছে, তাহার উপর হইতে চঞ্চল ভ্রমরগণ উড়িয়া পড়িতে থাকায় চাঁপা-ফুলের পাপ্‌ড়ীগুলি ফুটিতেছে, তাই উচু-নীচু হইতেছে, ঐ ফুলের গন্ধে

(१) 'कथं ववहारीकिदह्मि' इत्यादिः 'अविणाम सं पुणोवि पेक्खिस्सं' इत्यन्तः सकल एव सन्दर्भः कस्मिंश्चित् पुस्तके लिखितः। (२) महुरसोल्लोल्ल·· इति पाठभेदः।

(३) मरालजहणा इति पाठान्तरम्।

मन्थरोरुभर-विसंठुल-क्खलिद-चलण-संचलणोवणोद-(१) सेग्र-सोग्रर-सुहाविन्दुज्जल-(२) मुद्ध-मुह-चन्द-चन्दणाग्रमाण-सोग्रल-प्फंसो, तुमं परिस्सग्रइ कुसुमाग्ररुज्जाणमारुदो। ता सहि! इदो परिक्कमामो (३)। इति परिक्रम्य प्रविशतः। (ग)

विसंष्ठुल स्खलित-चरण-सञ्चरणोपनीत-स्वेद-शीकर-सुधा-विन्दूज्ज्वल-मुग्ध-मुखचन्द्रचन्दनायमान-शीतलस्पर्शः, त्वां परिष्वजति कुसुमाकरोद्यानमारुतः। तत् सखि! इतः परिक्रमावः।

मनोहरः चित्ताह्लादकरः। तथा मरालौ मसृणः, मांसलः स्थूलः, यो जघनपरिणाहः कट्या विस्तृतः पुरोभागः, तस्य उद्वहनेन भारवहनेन मन्थरं मन्दं तथोरुभरेण विसंष्ठुलं विषमं तथा स्खलितम् इतः कर्त्तव्ये ततः कृतमित्यर्थः यत् चरणसञ्चरणं तव पादन्यासः, तेन उपनीता उपस्थापिता जनिताः स्वेदशीकराः घर्म्मविन्दव एव सुधाविन्दवः विशदतया अमृतकणाः तैर्मुग्धो मनोहरः यो मुखचन्द्रः तव वदनचन्द्रमाः, तत्र चन्दनायमानः चन्दनवदाचरन् चन्दनतुल्य इत्यर्थः। तथा शीतलस्पर्शो यस्य स तथोक्तः। एतेन शैत्य-सौगन्ध्यमान्द्यरूपगुणत्रयवैशिष्ट्यं वायोः सूचितम्। परिष्वजति आलिङ्गति स्पृशतीत्यर्थः। तत्तस्मात् इतः अस्मिन् प्रदेशे परिक्रमावः कियन्तं पादविक्षेपं कुर्व्वः। ईदृशसुशोभनवायु-सेवनार्थमिति भावः।

"चटुलः (पुं) चञ्चलः"। "चञ्चरीकः (पुं) भ्रमरः।" "मरालः।···मसृणे त्रि"। "मांसलः (त्रि) स्थूलः।" इति च शब्दकल्पद्रुमः।

मन्ये, भवभूतिः किल दुरूहशब्दानामीदृशसमासराशिविन्यासेन सामाजिकानां मानस-रसशोषणमेव निर्म्माणनैपुण्यं मन्यते स्म।

কুসুমাকরোদ্যানের বায়ু বড়ই মনোহর হইয়াছে ; এ দিকে কোমল, স্থূল ও বিশাল উরুযুগল বহন করিতে থাকায় ধীরে ধীরে এবং এদিকে ওদিকে

(१) चलणसंचारमसिणगमणोवणोद इति भिन्नः पाठः।

(२) विन्दु इज्जल इति पुस्तकान्तरे पाठः। (३) ता पविसम्ह इत्यपि पाठः।

ततः प्रविशति माधवः।

माधवः। सहर्षम्। हन्त! परागता भगवती। इयं हि मम। (त)

आविर्भवन्ती प्रथमं प्रियायाः
सोच्छ्वासमन्तःकरणं करोति।
सन्तापदग्धस्य शिखण्डियूनो (१)
वृष्टेः पुरस्तादचिरप्रभेव ॥४॥

(त) माधव इति। हन्त हर्षे। परागता उपस्थिता। भगवती कामन्दकी। इयं कामन्दकी।

आविरिति। सन्तापदग्धस्य ग्रीष्मतापतप्तस्य शिखण्डियूनः तरुणमयूरस्य वृष्टेः पुरस्तात् अग्रतः आविर्भवन्ती अचिरप्रभा विद्युदिव इयं कामन्दकीप्रियायाः मालत्याः प्रथमं पूर्वम् आविर्भवन्ती प्रादुर्भवन्ती सती सन्तापदग्धस्य विरहानलतापतप्तस्य मम अन्तःकरणं मनः पुनर्दर्शननैराश्यान्मृतप्रायमिति भावः, सोच्छ्वासं सजीवं प्रफुल्लमित्यर्थः करोति।

তোমার পদক্ষেপ হইতেছে, তাহাতে অমৃতবিন্দুর ন্যায় ঘর্ম্মবিন্দু সকল উৎপন্ন হইয়া তোমার মুখচন্দ্রকে আরও উজ্জ্বল ও মনোহর করিয়া তুলিয়াছে; তাই তোমার মুখমণ্ডলে ঐ বায়ুর সংস্পর্শ চন্দনের ন্যায় শীতল বোধ হইতেছে এবং ঐ বায়ু তোমাকে আলিঙ্গন করিতেছে। অতএব সখি! আমরা এইখানে একটু পরিভ্রমণ করি। (ইহার পর উহারা কিছু পরিভ্রমণ করিয়া প্রবেশ করিল)।

তদনন্তর মাধবের প্রবেশ।

(ত) মাধব। (আনন্দের সহিত) ভাল, কামন্দকী উপস্থিত হইয়াছেন।

(१) निदाघसन्तप्तशिखण्डियून इति पाठान्तरम्।

दृष्ट्वा (१)। अये! लवङ्गिकाद्वितीया मालत्यपि। (थ)

आश्चर्य्यमुत्पलदृशो वदनामलेन्दु-
सान्निध्यतो मम मुहुर्जड़िमानमेत्य।
जात्येन (२) चन्द्रमणिनेव महीधरस्य
सन्धार्य्यते द्रवमयो मनसा विकारः (३) ॥५॥

---

यथा वृष्ट्यागमं सूचयन्ती विद्युत् ग्रीष्मतापतप्तस्य मयूरस्य अन्तःकरणमुच्छ्वसितं करोति, तथा प्रादुर्भवन्ती खल्वियं कामन्दकी मालत्यागमनं सूचयन्ती तद्विरहानलतप्तस्य ममान्तः-करणमुच्छ्वसितं करोतीति सरलार्थः।

अत्रोपमालङ्कारः। तेन च मयूरस्य दृष्टिरिव ममापि मालतीतापानन्तरं नितान्त-शान्तिदायिनीत्युपमा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। यौवनकाले सर्वेषामेव विशेषो-त्तापो भवतीति युवशब्देन विशेषोत्तापद्योतनात् न अपुष्टार्थत्वदोषः। द्वितीयाङ्के नन्दनाय मालतीदानवृत्तान्तेन प्रकृतकाव्यार्थविच्छेदे प्राप्ते अत्र पुनर्माधवस्य मालतीदर्शनाभिलाष-स्तस्याविच्छेदहेतुरिति बिन्दुर्नामार्थप्रकृतिः। तथा च साहित्यदर्पणे—

"अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्।"

इन्द्रवज्रा वृत्तम् ॥४॥

(थ) दृष्ट्वेति। दृष्ट्वा लवङ्गिकया सह मालतीमागच्छन्तीमवलोक्य। अये इति बलवदानन्दजनितसम्भ्रमे। न केवलं कामन्दकी मालत्यपि आविर्भूता इत्यपेरर्थः। एतेनानन्दातिशयो व्यज्यते।

---

বৃষ্টির পূর্ব্ববর্ত্তিনী বিদ্যুৎ যেমন গ্রীষ্মসন্তাপে সন্তপ্ত ময়ূরযুবকের অন্তঃ-করণ আনন্দিত করে, এই কামন্দকীও তেমন প্রিয়তমা মালতীর পূর্ব্বে আবির্ভূত হইয়া আমার অন্তঃকরণ আনন্দিত করিতেছেন ॥৪॥

(থ) (দেখিয়া) ওহে! লবঙ্গিকার সঙ্গে মালতীও।

---

(१) दिष्ट्या इति पाठभेदः। (२) जाड्येन इत्यपि पाठो दृश्यते।

(३) मनसो विकार इति भिन्नः पाठः।

सम्प्रति रमणीयतरा मालती। (द)

ज्वलयति मनोभवाग्निं मदयति हृदयं, कृतार्थयति चक्षुः।
परिमृदितचम्पकावलि-विलासलुलितालसैः-(१) रङ्गैः ॥६॥

आश्चर्यमिति। महीधरस्य अचलस्येव धीरस्येत्यर्थः मम मनसा उत्पलदृश: पद्मलोचनाया मालत्याः, वदनम् अमलेन्दुः निर्मलचन्द्र इव तस्य सान्निध्यतः सामीप्याद्धेतोः मुहुः सातिशयं जड़िमानं जड़त्वं कर्त्तव्यविमूढ़त्वमिति यावत् जलप्रकृतिकत्वञ्च एत्य प्राप्य, जातौ साधुरिति जात्यः, तेन उत्कृष्टेनेत्यर्थः चन्द्रमणिना चन्द्रकान्तमणिनेव द्रवमयः तरलतारूपः आनन्देन विगलितताखरूप इत्यर्थः, पक्षे जलमयः, विकारः अन्यथाभावः सन्धार्यते अवलम्ब्यते इत्याश्चर्यम्। अचलवद्धीरस्यापि मम मनसो यत् द्रवीभावधारणं तदाश्चर्यमेवेति भावः।

अत्र उत्पलदृश इति लुप्तोपमा, तथा चन्द्रमणिनेव इत्युपमानुसारात् 'वदनामलेन्दु' इत्यत्रापि लुप्तोपमैव न तु रूपकमित्युपमात्रयम्, तथा अन्यत् मनसो द्रवमयत्वम् अन्यच्च चन्द्रकान्तमणेरिति भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

उत्कृष्टचन्द्रकान्तमणेः प्रचुरजलनिर्गमसूचनार्थं जात्येनेत्युक्तम्। काकाक्षिगोलकन्यायेन चन्द्रकान्तमणिनेवेति इवशब्दस्य उभयत्राप्यन्वयः मन्तव्यः।

वसन्ततिलका वृत्तम् ॥५॥

(द) सम्प्रतीति। रमणीयतरा पूर्वावस्थातः समधिकसौन्दर्यशालिनी। मद्विरहेणैव ईषत्कृशत्वात् श्वेतत्वाच्चेति भावः।

---

পর্ব্বতের ন্যায় ধীরস্বভাব আমি; আমার চিত্ত, পদ্মনয়না মালতীর নির্ম্মল মুখচন্দ্রের সন্নিধানবশতঃ অত্যন্ত জড়তা প্রাপ্ত হইয়া, সুজাতীয় চন্দ্রকান্তমণির ন্যায় তরলতাময় বিকার ধারণ করিতেছে। কি আশ্চর্য্য! ॥৫॥

(দ) মালতী এখন আরও সুন্দর হইয়াছেন।

---

(१) ललितालसैरिति पाठान्तरम्।

मालती । सहि ! इमस्सिं कुज्जअणिउञ्जे (१) कुसुमाइं अवचिणुम्ह । (ध)

(ध) सखि ! अस्मिन् कुब्जकनिकुञ्जे कुसुमान्यवचिनुवः ।

ज्वलयतीति । परिमृदिता सातिशयपवनान्दोलनादिना म्लाना, या चम्पकावलिः चाम्पेयकुसुममाला, तस्या विलास इव विलासो विभ्रमो येषां तानि, तथा लुलितानि मदनेनान्दोलितानि अलसानि कार्य्यस्वपटूनि च तैस्तथोक्तैः, अङ्गैः, मनोभवाग्निं मम मदनानलं ज्वलयति उद्दीपयति, हृदयं मम मनः, मदयति आनन्दपरवशं करोति, तथा चक्षुः मम नयनं कृतार्थयति द्रष्टव्यचरमसीमादर्शनेन चरितार्थं करोति । सर्वत्र मालतीति पूर्वगद्यस्थं कर्त्तृपदं बोध्यम् । इदानीमीदृशोऽस्याः सन्दर्शनेन नितरामाकुलोऽस्मीति भावः ।

अत्र ज्वलयतीत्याद्यनेकक्रियाणामेककर्त्तृकारकत्वाद्दीपकमलङ्कारः, तथा मनोभवाग्निमिति निरङ्गं केवलरूपकं द्वितीयार्द्धे लुप्तोपमा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

"प्रेङ्खोलितस्तरलितो लुलितान्दोलितावपि" इति शब्दकल्पद्रुमः ।

ननु "अन्तर्निविष्टकर्म्मकधातोरकर्म्मकत्व"मिति नियमात् कथं कृतार्थयतीत्यस्य चक्षुरिति कर्म्मपदमिति चेत्, सत्यम्, अकर्म्मकत्वमिति कर्म्मपदेन विधेयकर्म्मैव विवक्षितम्, तेन ज्वलयति ज्वलिमिति विधेयकर्म्म न स्यात् । उद्देश्यं कर्म्म तु भवत्येव, तेन चक्षुरित्यस्य उद्देश्यीभूतकर्म्मत्वान्न दोषः । अन्यत्रापीदृशः प्रयोगो दृश्यते यथा शाकुन्तले— "अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ।" "कथं न सा मद्गिरमानिलामपि स्वसेविनीमेव पवित्रयिष्यति ।" इति नैषधेऽपि । आर्य्या जातिः ॥६॥

(ध) मालतीति । कुब्जकः पुष्पवृक्षविशेषः 'कुजा' इति ख्यातः ।

परिমর্দ্দিত চম্পককুসুমের মালার ন্যায় শোভিত, মদনান্দোলিত ও অলস অঙ্গদ্বারা আমার কামানল প্রজ্বলিত করিয়াছেন, হৃদয়কে মত্ত করিয়া তুলিয়াছেন এবং নয়নযুগলকে কৃতার্থ করিয়াছেন ॥৬॥

(ধ) মালতী। সখি! এই কুজাগাছগুলির ভিতরে ফুল তুলি।

(१) कुब्जणिउञ्जे इति क्वचित् पाठः ।

माधवः । प्रथमप्रियावचनसंश्रवस्फुरत्-(१)
पुलकेन सम्प्रति मयाऽवलम्ब्यते (२) ।
घनराजि-नूतनपयः-समुक्षण-
क्षणबद्ध कुड्मल-कदम्बडम्बरः ॥७॥

लव । सहि ! एव्वं करेह्म । (न)

पुष्पावचयं नाटयतः ।

(न) सखि ! एवं कुर्वः ।

प्रथमेति । सम्प्रति, प्रथम आदिमः यः प्रियायाः मालत्याः वचनश्रवः 'सहि' इत्यादि-वाक्यश्रवणं तेन स्फुरन्तः प्रकाशमानाः पुलकाः रोमाञ्चाः यस्य तेन तथोक्तेन मया घनराजेः मेघमालायाः यानि नूतनपयांसि नवजलानि तैः समुक्षणक्षणे सेचनसमये प्रथमवर्षाकाल इत्यर्थः बद्धानि धृतानि कुड्मलानि मुकुलानि येन तस्य तथोक्तस्य कदम्बस्य नीपवृक्षस्य डम्बरः सादृश्यम् अवलम्ब्यते आश्रीयते ।

अत्रार्थी उपमालङ्कारः छेकानुप्रासश्चेत्यनयोः संसृष्टिः । आश्चर्यमित्यादिषु त्रिषु श्लोकेषु माधवस्य रतिभोगार्थायाः समीहायाः प्रतीतेर्विलासो नाम प्रतिमुखसन्ध्यङ्गम् । तथा च दर्पणे—

"समीहा रतिभोगार्था विलास इति कथ्यते ।"

एतच्चतुर्थचरणमविकलमुत्तररामचरितषष्ठाङ्केऽपि रामेण पठितम् ।

मञ्जुभाषिणी वृत्तम ॥७॥

माधव । প্রিয়তমার প্রথম বাক্যশ্রবণে আমার রোমাঞ্চ জন্মিয়াছে ; তাই আমি এখন মেঘমালার নূতন জলসেচনের সময় কলিকাধারী কদম্ব-তরুর সাদৃশ্য ধারণ করিতেছি ॥৭॥

(ন) লবঙ্গিকা । সখি ! ইহাই করি ।

( উভয়ে ফুল তোলা অভিনয় করিতে লাগিল । )

(१) संश्रवस्फुरत् इति पाठभेदः । (२) विडम्ब्यते इति पाठोऽपि दृश्यते ।

माधवः। अपरिमेयाश्चर्य्यमाचार्य्यकं भगवत्याः। (प)

मालती। सहि! इदो वि अस्सिं अवचिणुह्म (१)। (फ)

काम। मालतीं परिष्वज्य। अयि! विरम, (२) निःसहासि जाता। तथाहि—(३) (ब)

---

(फ) सखि! इतोऽपि अन्यस्मिन् अवचिनुवः।

(प) माधव इति। भगवत्याः कामन्दक्याः, आचार्य्यस्य शिक्षयितुर्भाव इत्याचार्य्यकम् उपदेशकौशलमित्यर्थः अपरिमेयानि अस्माभिरियत्तया परिच्छेत्तुमशक्यानि आश्चर्य्याणि यत्र तादृशम्। तथा च येनाहम्, नन्दनाय प्रदाने राज्ञ एवानुरोधात् पुनरसम्भवदर्शना-मेवास्मिन् काकिनीं कुसुमचयनाय समुन्नमितभुजयुगलतया स्खलितवसनत्वात् स्पष्टलक्ष्य-माणकुचयुगलां निःशङ्कमवलोकयितुमर्हामीति भावः।

अत्र पूर्वं दृष्टायाः पश्चाददर्शनं गताया मालत्याः पुनरनुसर्पणात् परिसर्पो नाम प्रति-मुखसन्धेरङ्गम्। तथा च दशरूपके—

"परिसर्पस्तु बीजस्य दृष्टनष्टानुसर्पणम्।" "दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते" इति साहित्यदर्पणलक्षणमपि सङ्गच्छत इति द्रष्टव्यम्।

(फ) मालतीति। इतोऽपि स्थानात्, अन्यस्मिन् स्थाने, अवचिनुवः कुसुमानीति शेषः।

(ब) कामेति। विरम पुष्पचयनादित्यर्थः, येन निःसहासि श्रमेण पुनश्चेतु-मशक्तासि।

---

(প) মাধব। ভগবতী কামন্দকীর শিক্ষায় আশ্চর্য্যের ইয়ত্তা করা যায় না।

(ফ) মালতী। সখি! এ স্থান ভিন্ন অন্য স্থানেও ফুল তুলি।

(ব) কামন্দকী। (মালতীকে আলিঙ্গন করিয়া) মালতি! বিরত হও, অবসন্ন হইয়া পড়িয়াছ। দেখ—

---

(१) सहि! जेण इदो वि अवरस्सिं अवचिणुह्म इति पाठोऽपि दृश्यते।

(२) विरम विरम इति द्विरुक्तिः क्वचित्। (३) क्वचित् तथाहीति नास्ति।

स्खलयति वचनं ते, स्रंसयत्यङ्गमङ्गं (१)
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून्।
मुकुलयति च नेत्रे सर्वथा सुभ्रु! खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन ॥८॥

स्खलयतीति। हे सुभ्रु! शोभनभ्रूयुगले! खेदः कुसुमचयनजनितः परिश्रमः ते तव वचनं स्खलयति गद्गदं करोति, अङ्गमङ्गं सर्व्वानवयवान् हस्तादीन् स्रंसयति अवसादयति, मुखचन्द्रोद्भासिनः मुखचन्द्रस्य कान्तिविशेषजननशीलान् स्वेदबिन्दून् घर्म्मलवान् जनयति, तथा नेत्रे चक्षुषी मुकुलयति निमीलयति च; अतएव वल्लभस्य दयितस्य आलोकनेन दर्शनेन तुल्यं समानं वल्लभदर्शनमिवेत्यर्थः त्वयि सर्व्वथा विलसति प्रवर्त्तते प्रभावं प्रकटयतीत्यर्थः। तथा च वल्लभावलोकनमपि कर्त्तृ, युवत्या वचनं गद्गदं करोति, अङ्गावसादं जनयति मुखचन्द्रे घर्म्मबिन्दूनुत्पादयति, निरतिशयानन्दजननात् नेत्रे च निमीलयति। तवायं पुष्पचयनजनितः श्रमोऽपि तथैव दृश्यते, सुतरामितः पुष्पचयनात् विरमेति भावः।

अत्र आर्थी पूर्णोपमालङ्कारः स्खलयतीत्यादीनामनेकक्रियाणां खेद इत्येककर्त्तृ-कारकत्वाद्दीपकं वाक्यार्थहेतुकं काव्यलिङ्गञ्च, इत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः। लताकुञ्जान्तरितमाधवकर्त्तृकावलोकनं पुष्पचयनश्रमश्च, एतौ युगपत्त्वयि वर्त्तेते इति वस्तु व्यज्यते। सुभ्रु इत्यत्र भ्रूशब्दस्य उवङ्स्थानीयत्वेन "नेयङुवङ्स्थानावस्त्री"ति नदी-संज्ञाप्रतिषेधात् "अम्बार्थनद्योर्ह्रस्व" इति ह्रस्वत्वप्रसङ्गाभावेऽपि "अप्राणिजातेश्चारज्ज्वादीना"-मित्यत्र भाष्यकारेण अलाबूः कर्कन्धूरित्युदाहरणात् "ऊकारादप्युङ् प्रकृते"रिति वामनोक्तेश्च ऊकाराप्युङन्तत्वाङ्गीकारात् नदीत्वेन ह्रस्वत्वम्। कलापमते तु नदीत्वादेव ह्रस्वत्वम्। तथा च "ह्रस्वश्च ङवति" इत्यत्र टीकायां दुर्गः—"स्त्रीवचने तु सर्व्वत्र नदी-संज्ञाऽस्त्येव"। कुमारसम्भवेऽपि यथा—"विमानना सुभ्रु! कुतः पितुर्गृहे।" अन्यत्रापि—

(१) संश्रयत्यङ्गमङ्गमिति पाठान्तरम्।

मालतीं लज्जां नाटयति (१) ।

लव । सोहणं भअवदीए आणत्तं । (भ)

माधवः । हृदयङ्गमः परिहासः । (म)

काम । तदास्यताम् । किञ्चिदाख्येयमाख्यातुकामास्मि । (य)

(भ) शोभनं भगवत्या आज्ञप्तम् ।

---

"सुभ्रु ! त्वं कुपितेत्यपास्तमशनं, त्यक्ता कथा योषिताम्" इत्यादि । "जाता सुभ्रु ! मनोरमे । तदवश्ये"ति श्रीपतिनापि लिखितम् । अतएवात्र न च्युतसंस्कारतादोषः ।

अत्र नर्म्म नाम सन्ध्यङ्गम्—"परिहासवचो नर्म्म" इति दर्पणलक्षणात् ।

मालिनी वृत्तम् ॥८॥

(भ) लवेति । शोभनं साधु युक्तियुक्तम् । आज्ञप्तम् उक्तम् । यथापि श्रमस्य लक्ष्यमाणत्वादस्याः पुष्पचयनादिदानीं विराम एव सङ्गच्छत इति भावः । उक्तमिति वक्तव्ये गौरवद्योतनाय आज्ञप्तमित्युक्तमिति बोध्यम् ।

(म) माधव इति । परिहासः स्खलयतीत्यादि परिहासवाक्यं हृदयङ्गमो मनोहरः । वल्लभावलोकनपरिश्रमयोः समानानुभावयोजनादिति भावः ।

(य) कामेति । तत्तस्मात्, आस्यताम् उपविश्यताम्, आख्येयं वक्तव्यम्, आख्यातु-कामा वक्तुकामा ।

---

হে সুভ্রু ! পরিশ্রম তোমার বাক্যস্খলন জন্মাইতেছে, সমস্ত অঙ্গ অবসন্ন করিয়াছে, মুখচন্দ্রের সৌন্দর্য্যজনক ঘর্ম্মবিন্দু জন্মাইতেছে এবং নয়নযুগল মুদ্রিত করিতেছে ; সুতরাং এই পরিশ্রম তোমার প্রতি প্রিয়তমদর্শনের তুল্য ব্যবহার করিতেছে ॥৮॥

( মালতী লজ্জা অভিনয় করিলেন । )

(ভ) লবঙ্গিকা। ভগবতী বেশ্ বলিয়াছেন ।

(ম) মাধব। মনোহর পরিহাস।

---

(१) लज्जते इत्यपि पाठः ।

सर्वा उपविशन्ति ।

काम । मालत्याश्चिबुकमुन्नमय्य । शृणु, विचित्रमिदं सुभगे ! । (र)

मालती । अवहितास्मि । (ल)

काम । अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारः, यस्त्वमिव मामकीनस्य (१) मनसो द्वितीयं निबन्धनम् (२) । (व)

(ल) अवहितास्मि ।

(र) कामेति । विचित्रम् आश्चर्य्यम् । सुभगे ! सौभाग्यवति ! ।

(ल) मालतीति । अवहितास्मि श्रोतुं दत्तावधानास्मि । अत्र नर्म्मद्युतिर्नाम प्रतिमुखसन्धेरङ्गम् । यथा दर्पणे—

"…धृतिस्तु परिहासजा, नर्म्मद्युतिः ॥"

(व) कामेति । माधवाभिधानः माधवनामा, कुमारः अविवाहितावस्थः कश्चित् । मामकीनस्य मदीयस्य । द्वितीयं त्वमेकं यो द्वितीयमित्यर्थः । निबध्यते सम्बन्धेनावरुध्यते यस्मिन्निति निबन्धनम् आबद्धीकरणस्थानं परमस्नेहपात्रमित्यर्थः । "ममेदमित्यर्थे, खीनञ्-लुकि अस्मदादकत्वान्मदादेशे अस्य च ममकादेशे वृद्धौ मामकीन"मिति दुर्गादासः ।

(য) কামন্দকী। তবে ব'স। কিছু বক্তব্য বিষয় বলিতে ইচ্ছা করি।

( সকলে বসিল। )

(র) কামন্দকী। ( মালতীর চিবুক তুলিয়া ধরিয়া ) ভাগ্যবতি ! এই আশ্চর্য্য বৃত্তান্ত শোন।

(ল) মালতী। প্রস্তুত হইয়াছি।

(ব) কামন্দকী। একদিন প্রসঙ্গক্রমে আমি মাধবনামে একটী কুমারের কথা বলিয়াই ছিলাম, যিনি তোমারই মত আমার হৃদয়ের দ্বিতীয় বন্ধনস্বরূপ।

(१) मामकीयस्येति पाठान्तरम् । (२) बन्धनमिति पाठभेदः ।

लव। सुमरामो। (श)

काम। स खलु मदनोद्यानयात्रादिवसात् प्रभृति दुर्म्मनायमानः परवानिव शरीरोपतापेन। (ष)

यदिन्दावानन्दं, प्रणयिनि जने वा न भजते,
व्यनक्त्यन्तस्तापं, तदयमतिधीरोऽपि विषमम्।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डु मधुरं
वपुः क्षामं क्षामं वहति, रमणीयश्च भवति ॥८॥

(श) स्मरामः।

(श) लवेति। स्मरामः भवत्याभिहितं तं माधववृत्तान्तमिति शेषः।

(ष) कामेति। दुर्म्मनायमानः दुःखितमना इवाचरन्। शरीरोपतापेन करणेन परवानिव पराधीन इव संवृत्त इति शेषः। स्वभावानुसारेण किमपि कर्त्तुं न शक्नोतीति भावः।

विशेषयन्नाह यदिन्दाविति। यद्यस्मात् इन्दौ चन्द्रे प्रणयिनि जने वा सातिशयप्रेमभाजने जने वा विषये दृष्टे सति वा आनन्दं न भजते न प्राप्नोति, आनन्दानुभवलक्षणं न प्रकाशयतीत्यर्थः, तत्तस्मात् अतिधीरोऽपि सातिशयधैर्य्यशीलोऽपि, अयं माधवः, विषमं दुःसहम्, अन्तस्तापं व्यनक्ति प्रकटयति। चन्द्रं प्रणयिजनं वा विलोक्य आनन्दाप्रकाश एव मनस्तापलक्षणमित्यर्थः। प्रियङ्गुवत् फलिनीफलवत् श्यामा श्यामवर्णा अङ्गप्रकृतिः देहाकृतिर्यस्य सः, तथाविधोऽपि सन् आपाण्डु विरहेण ईषत्पाण्डुवर्णम् अतएव मधुरं मनोहरं क्षामं क्षामम् अतीवक्षीणं वपुः शरीरं वहति बिभर्त्ति। न चेयं रोगजनिता पाण्डुता क्षीणता वेत्याह रमणीयश्चेति। कान्तिमात्रावशेषेण सुन्दराकृतिर्भवतीत्यर्थः।

(শ) মালতী। হাঁ, স্মরণ করিতেছি।

(ষ) কামন্দকী। সেই মাধব মদনোদ্যানের মহোৎসবের দিন হইতে দুঃখিতচিত্ত হইয়া শরীরের সন্তাপে যেন পরাধীন হইয়া পড়িয়াছেন।

लव। एदं (१) वि तस्सिं अवसरे भअवदीं तुवराअन्तीए अवलोइदाए उदीरिदं आसि, जधा अस्सत्थसरीरो माहवोत्ति। (स)

काम। यावदहमशृणवं मालत्येवास्य मन्मथोन्मादहेतुरिति। ममापि स एव निश्चयः। कुतः—(२) (ह)

(स) एतदपि तस्मिन्नवसरे भगवतीं त्वरयन्त्या अवलोकितया उदीरितमासीत्, यथा अस्वस्थशरीरो माधव इति।

अत्र इन्दुप्रणयिजनदर्शनरूपहेतौ सत्यपि आनन्दरूपतत्फलाभावात् विशेषोक्तिरलङ्कारः, तथा आपाततः प्रियङ्गुश्यामाशब्दयोः पुनरुक्तताप्रतीतावपि परश्च प्रियङ्गुवत् श्यामवर्णेति पर्य्यवसानात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासः, तथा तत्रैव चरणे विरोधाभासश्चेति मिथो नैरपेक्ष्यादेषां संसृष्टिः।

"श्यामा तु महिलाह्वया। लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली"त्यमरः।

शिखरिणी वृत्तम् ॥९॥

(ह) कामेति। अशृणवं श्रीवपरम्परया श्रुतवती। ननु जनरवः कदाचित् मिथ्यापि भवेदित्याह ममापीति। तादृशनिश्चये हेतुमभिधातुमाह कुत इति।

যেহেতু তিনি চন্দ্র কিংবা প্রণয়ী লোক দেখিয়াও আনন্দ লাভ করেন না, সেই হেতু বলিতে হইবে যে, তিনি অত্যন্ত ধীরপ্রকৃতি হইয়াও বিষম মনস্তাপ প্রকাশ করেন। প্রিয়ঙ্গুর ন্যায় শ্যামবর্ণদেহ হইয়াও ঈষৎ পাণ্ডুরবর্ণ, মধুর ও অতিশয় ক্ষীণ শরীর ধারণ করিতেছেন এবং সুন্দর হইয়াছেন ॥৯॥

(স) লবঙ্গিকা। ইহাও সেই সময়ে আপনাকে বিলম্ব করিতে নিষেধ করিয়া অবলোকিতা বলিয়াছিল যে, "মাধবের শরীর অসুস্থ।"

(१) एव्वमिति क्वचित् पाठः। (२) कुत इति क्वचिन्नास्ति।

अनुभवं वदनेन्दुरुपागम-
न्नियतमेष (१) यदस्य महात्मनः।
क्षुभितमुत्कलिकातरलं मनः
पय इव स्तिमितस्य महोदधेः ॥१०॥

माधवः। अहो! उपन्यासशुद्धिः। अहो! मम च महत्त्वारोपणे यत्नः। अथवा—(ञ)

अनुभवमिति। एष इति मालत्याश्चिबुकं धृत्वा निर्द्दिशति। यद्यस्मात् एष वदनेन्दुः मालत्या मुखचन्द्रः अस्य महात्मनः धीरस्वभावस्य माधवस्य अनुभवं चाक्षुषप्रत्यक्षगोचरताम् उपागमत् प्राप्तवान्। अतएव मनो माधवस्य चित्तं स्तिमितस्य निश्चलस्य महोदधेः समुद्रस्य पयो जलमिव, उत्कलिकातरलम् उत्कण्ठया कल्लोलैश्च चञ्चलं तथा क्षुभितम् अधीरम् उद्वेलितञ्च अभूदिति शेषः। इति नियतं निश्चितम्। माधवसदृशधीरप्रकृतेः स्वसदृशतरुणीदर्शनमन्तरेणाधीरता न सम्भवति, विशेषतश्च 'मालतीमेवावलोक्य माधवोऽधीरो जात' इति जनरवश्च श्रुतः सुतरां तव मुखचन्द्रावलोकनमेव माधवस्योन्मादहेतुरित्यनुमानेन निश्चीयत इति भावः।

अतएवात्र उपमालङ्कारकृतविच्छित्तिवशात् माधवमनःक्षोभचञ्चलतारूपकार्य्येण मालतीमुखदर्शनरूपकारणानुमितेरनुमानालङ्कारः। "जानीमहेऽस्या हृदि सारसाक्ष्या" इत्यादौ जानीमह इत्यादिवत् नियतमित्यनुमानद्योतकम्।

द्रुतविलम्बितं वृत्तम्—"द्रुतविलम्बितमाह नभौ भरा"विति लक्षणात् ॥१०॥

---

(ঞ) কামন্দকী। আমি শুনিয়াছি যে, মালতীই মাধবের কামোন্মাদের কারণ। আমারও তাহাই ধারণা। তাহার কারণ এই যে, এই মুখচন্দ্রখানি যেহেতু ধীরপ্রকৃতি মাধবের প্রত্যক্ষগোচর হইয়াছিল, সেই জন্য নিশ্চল মহাসমুদ্রের জলের ন্যায় উঁহার চিত্ত উৎকণ্ঠায় চঞ্চল ও উদ্বেলিত হইয়া উঠিয়াছে ॥১০॥

---

(१) नियतमेवेति पाठान्तरम्।

शास्त्रेषु निष्ठा (१) सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी।
कालावबोधः (२) प्रतिभानवत्त्व-
मेते गुणाः कामदुघाः क्रियासु ॥११॥

(ख) माधव इति। उपन्यासस्य वाग्विन्यासस्य शुद्धिः पूर्वापरविरोधादिदोषराहित्यम्। महत्त्वारोपणे अस्य महात्मन इत्यनेन अवास्तविकप्राधान्यस्थापने।

शास्त्रेष्विति। शास्त्रेषु निष्ठा स्थितिः नीत्यादिसकलशास्त्रपर्य्यालोचनमित्यर्थः, सहजः स्वाभाविको बोधः ज्ञानञ्च अनधिगतदुरूहविषयेष्वपि स्वभावत एव प्रवेशशालिनी सूक्ष्मबुद्धिः, प्रागल्भ्यं चातुर्य्यम्, अभ्यस्ता अभ्यस्ता असकृदुपात्ता गुणाः प्रसादमाधुर्य्यादयो यया सा वाणी वाक्यञ्च। कालावबोधः समयज्ञानम् अवसरप्रतीतेति यावत्, तथा प्रतिभानवत्त्वं प्रतिभाशालित्वम् एते गुणा धर्म्माः क्रियासु कर्त्तुमभिलषितेषु कार्य्यमात्रेषु कामादुघाः अभिलाषपूरकाः। अतएव सततमेभिर्गुणैरन्विताया भगवत्या उपन्यासशुद्धिप्रभृतिकं नाश्चर्य्यमिति भावः।

अत्राप्रस्तुतात् क्रियासामान्यात् प्रस्तुतविशेषदूतीक्रियाप्रतीतेरप्रस्तुतप्रशंसालङ्कारः, गुणसमुच्चयश्च, इत्यनयोरङ्गाङ्गिभावेन सङ्करः। तेन च मदभिलषितो मालतीसमागमोऽवश्यमेव सम्पत्स्यत इति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

कामं दुहन्तीति कामदुघाः "दुहेः को घश्च" इति कप्रत्ययो घश्चान्तादेशः।

इन्द्रवज्रा वृत्तम् ॥११॥

---

(ক) মাধব। নির্দ্দোষ বাক্যবিন্যাস আশ্চর্য্য। আমার মহত্ত্ব সংস্থাপনের চেষ্টাও আশ্চর্য্য। অথবা—

সমস্ত শাস্ত্র পর্য্যালোচনা, স্বাভাবিক বুদ্ধি, চতুরতা, সকল গুণসম্পন্ন বাক্য, অবসরবোধ এবং প্রতিভাশালিতা এই সকল গুণ কার্য্যমাত্রেই অভিলাষ পূরণ করে ॥১১॥

(१) शास्त्रे प्रतिष्ठा इत्यपि पाठः। (२) कालानुरोध इति पाठोऽपि दृश्यते।

काम०। अत-(१) स्तेन जीविताटुद्विजमानेन दुष्करमपि न किञ्चिन्न क्रियते। असौ हि, (२) (क)

धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति वकुलामोदगर्भस्य वायोः।
दावप्रेम्णा (३) सरसविसिनीपत्रमात्रोत्तरीय-(४)
स्ताम्यन्मूर्त्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥१२॥

(क) कामेति। अतः मनसो धीरत्वात्, तेन माधवेन जीवितात् जीवनात् उद्विज-मानेन बिभ्यता। दुष्करमपि किञ्चित् कार्य्यं न क्रियत इति न अपि तु क्रियत एव। तथा च मम जीवनमेवेदानीमीदृशदुःसहदुःखकारणमिति मत्वा जीवनाद्बिभ्यता तत् परित्यागे-च्छया दुष्करमपि कार्य्यं क्रियत इति सरलार्थः। हि तथाहि, असौ माधवः।

धत्त इति। मुकुलिनि कोरकिते, रणन्तः शब्दायमानाः कोकिला यत्र तादृशे बालचूते बालत्वेन स्निग्धत्वान्मनोहरे सहकारतरौ चक्षुः मृत्यवे बहुशो धत्ते स्थापयति। कोकिलरूपमदनसैन्यकोलाहलविशिष्टादस्मात् सहकारान्निर्गतेन कोरकरूपमदनबाणेन मम मृत्युर्भवतु इत्यभिप्रायेणेति भावः। वकुलामोदः वकुलकुसुमसौरभं गर्भे मध्ये यस्य तस्य वायोर्दक्षिणसमीरणस्य मार्गे सञ्चारपथे गात्रं देहं मृत्यवे बहुशः क्षिपति न्यस्यति। मदन-नाराचनिक्षेपवायुरयमिति मत्वेति भावः। तथा सरसमार्द्रं यत् विसिनीपत्रं सन्तापशमनाय परिजनानीतं पद्मपत्रं तन्मात्रम् उत्तरीयं प्रावरणं यस्य सः, ताम्यन्ती ग्लानिं प्राप्नुवती मूर्त्तिर्देहो यस्य सः, दावप्रेम्णा दावानलपक्षपातेन इमे चन्द्रपादा दावानला एव इति ज्ञानेनेत्यर्थः मृत्यवे मरणाय बहुशो वारं वारं चन्द्रस्य पादान् किरणान् श्रयति अवलम्बते। एभिर्मम देहदाहो भवतु इत्याशयेनेति भावः।

(क) কামন্দকী। অতএব মাধব জীবনের ভয় করিয়া যে কোন দুষ্কর কার্য্য করিতেছেন না এমন নহে। যেহেতু উনি—

(१) यत इति पाठभेदः। (२) तथाहीति पाठान्तरम्।
(३) दाहप्रेम्णा इति क्वचित् पाठः। (४) मात्रान्तराय इति पाठोऽपि दृश्यते।

माधवः। अन्य एवाक्षुण्णः कथाप्रकारो भगवत्याः (१)। (ख)

मालती। स्वगतम्। एव्वं दुक्करं करेदि सो (२)। (ग)

काम। तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदप्यन्यथा-परिक्लिष्टपूर्वस्तपस्वी। यतोऽधुना (३) शक्यमनेन मरणमप्यनु-भवितुम्। (घ)

(ग) एवं दुष्करं करोति सः।

---

अत्र मुकुलिनीत्यादीनां विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः, तथा मृत्यु-साधिकानां धत्त इत्यादिबहुक्रियाणामुपादानात् समुच्चयश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः।

"दवो दाव इति ख्यातौ वनाग्निवनयोरपि।" इति विश्वः। "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः।

मन्दाक्रान्ता वृत्तम् ॥१२॥

(ख) माधव इति। अन्य एव साधारणीकृतकथाप्रकाराद्भिन्न एव अलौकिक एवेत्यर्थः अक्षुण्णः अदुष्टः।

(ग) मालतीति। स माधवः।

যাহাতে কলিকা জন্মিয়াছে এবং কোকিল রব করিতেছে, মরিবার জন্য সেই নবীন আম্রতরুর প্রতি বার বার দৃষ্টিপাত করেন, বকুলপুষ্পের সৌরভবাহী বায়ুর পথে মরিবার জন্য অনেকবার দেহ স্থাপন করেন এবং সন্তপ্তদেহে কেবল আর্দ্র পদ্মপত্রের উত্তরীয় ধারণ করিয়া, দাবানল মনে করিয়া মৃত্যুর জন্য বহু সময় চন্দ্রের কিরণ আশ্রয় করেন ॥১২॥

(খ) মাধব। ভগবতী কামন্দকীর কথার রকমই আলাদা ও নিখুঁত

(গ) মালতী। ( স্বগত ) এইরূপ দুষ্কর কার্য্য করিতেছেন তিনি!

(१) क्वचिदयं पाठो नास्ति। (२) अदिदुक्करं करेदि इति पाठान्तरम्।

(३) क्वचिदधुनाशब्दो नास्ति।

मालती। जनान्तिकम्। सहि! अत्तणो कारणादो मच्च-लोआलङ्कारभूदस्स तस्स किं वि आसङ्कमाणा भूदाविट्टा विअ ण आणामि किं पड़िवज्जदि त्ति (१)। (ङ)

(ङ) सखि! आत्मनः कारणात् मर्त्यलोकालङ्कारभूतस्य तस्य किमपि आशङ्कमाना भूताविष्टेव न जानामि किं प्रतिपद्यत इति।

(घ) कामेति। प्रकृत्या स्वभावेन सुकुमारः कोमलः कुमारो माधवः। अन्यत्र अन्यस्यां तरुण्यां विषये अपरिक्लिष्टपूर्वः ईदृशकामवेदनया पूर्वं क्लेशं न प्राप्तः। अतएव तपस्वी अनुकम्पनीयः। यतः सौकुमार्य्यात्। अनेन माधवेन। अतस्त्वमप्यनुरक्ता सती एनमासन्नविपत्तेः परित्रायस्वेति भावः। कुमार इत्यनेन जीवत्पितृकत्वम् अविवाहितत्व-स्यात्वञ्च व्यज्यते, अन्यत्रेत्यनेन च त्वमेव प्रथमानुरागविषय इति ध्वन्यते।

"तपस्वी तापसे चानुकम्प्ये विष्वथ योषिति। मांसिकाकटुरोहिण्यो"रिति मेदिनी।

(ङ) मालतीति। आत्मनः स्वस्याः। किमपि मत्पक्षे विषमविपत्तिरूपत्वेन वक्तुमशक्यं मरणमित्यर्थः। भूतेन रुद्रानुचरदेवयोनिविशेषेण आविष्टा ग्रस्ता। प्रति-पद्यते अत्र किमुत्तरं दीयते, इति न जानामीत्यन्वयः। अतस्त्वमेवोत्तरं देहीति भावः।

(घ) कामन्दकी। স্বভাবকোমল কুমার মাধব পূর্ব্বে কখনও এরূপ ক্লেশ অন্যত্র পান নাই; সুতরাং উঁহার প্রতি দয়া করা উচিত; যে হেতু, উনি এখন মরণদুঃখও অনুভব করিতে পারেন।

(ঙ) মালতী। (লবঙ্গিকার প্রতি চুপি চুপি) সখি! আমার জন্য মর্ত্ত্যলোকের অলঙ্কারস্বরূপ সেই মহাত্মার কোন অনিষ্ট আশঙ্কা করিয়া আমি যেন ভূতাবিষ্টা হইয়া পড়িয়াছি; তাই কি উত্তর দিব তাহা বুঝিতে পারিতেছি না।

(१) भीदाविदाम्हि तां किं दाणिं एत्थ पड़िवज्जिस्सं इति पाठान्तरम्।

माधवः। दिष्ट्या अनुकम्पितोऽस्मि भगवत्या। (च)

लव। भअवदी एव्वंवादिणी त्ति आअक्खीअदि। अह्माणं वि भट्टिदारिआ, भवणासण्णरच्छामुहमुहुत्तमण्डणस्स तस्स ज्जेव बहुसो अणुभूददंसणा भविअ रविकिरणासिलिट्ठ-मुद्धकमलिणी-कन्दसुन्दरावअवसोहाविभाविदाणङ्गवेअणाधिअदर-(१) रमणीआवि परिअणं दूणेदि। (छ)

(छ) भगवती एवंवादिनीति आख्यायते। अस्माकमपि भर्तृदारिका, भवनासन्नरथ्यामुखमुहूर्त्तमण्डनस्य तस्यैव बहुशोऽनुभूतदर्शना भूत्वा रविकिरणाश्लिष्टमुग्धकमलिनी-कन्दसुन्दरावयवशोभाविभावितानङ्गवेदनाधिकतररमणीयापि परिजनं दुनोति।

(च) माधव इति। अनुकम्पितोऽस्मि, ईदृशोपन्यासेन मालत्या अप्यनुरागसम्भवादिति भावः।

(छ) लवेति। एवंवादिनी माधवस्य मदनावस्थाप्रकाशिनी, इति हेतोः, आख्यायते मालत्या अप्यवस्था मयोच्यते। यथा शिष्यजनस्य गुरुजनान्तिके कस्यापि मदनावस्थावर्णनं लज्जावशादसम्भवं तथा शिष्यजनान्तिकेऽपि गुरुजनस्य, किन्तु माधवस्य विपत्तिमाशङ्कमानैव भवती तं भावमपहाय माधवस्य मदनावस्थां वर्णितवती, सुतरां मयापि तथैव मालत्यवस्था समाख्यायते, इति न मे धृष्टतादोषो मन्तव्य इति भावः। भर्तृदारिका स्वामिकन्या मालती। तस्यैव माधवस्य। अनुभूतदर्शना प्राप्तदर्शना। रविकिरणैः आश्लिष्टं स्पृष्टं मुग्धं मनोहरं यत् कमलिनीकन्दं पद्मिनीमूलं मृणालमित्यर्थः तद्वत् सुन्दर्य्या श्वेतत्वेन मनोरमया अवयवशोभया देहकान्त्या विभाविता सूचिता या अनङ्गवेदना तया अधिकतरं यथा स्यात्तथा रमणीयापि सती परिजनं मादृशं

(च) माधव। ভাগ্যবশতঃ ভগবতী আমার প্রতি দয়া করিতেছেন।

(ছ) লবঙ্গিকা। আপনি এইরূপ বলিতেছেন বলিয়া বলিতেছি। আমাদের প্রভুকন্যা মালতীও কিছুকালের জন্য বাড়ীর নিকটবর্ত্তী রাস্তার

(१) व्यदिघर इत्यपि पाठः।

णाभिणन्ददि कलाकीलाओ (१)। केवलं कमलाअमाण-(२) कन्तहत्थपल्लत्थगण्डमण्डला दिअसाइं गमेदि। (ज)

अवि अ, विअसिदारविन्द-मअरन्द-णिस्सन्दसुन्दरेण दर-दलिअकुन्दमाअन्द-महुविन्दुसन्दोहवाहिणा भवणुज्जाण-(३) पेरन्तमारुदेण उत्तम्मदि। (झ)

(ज) नाभिनन्दति कलाक्रीड़ाः। केवलं कमलायमान-कान्त-हस्त-पर्यस्त-गण्ड-मण्डला दिवसानि गमयति।

(झ) अपि च, विकसितारविन्द-मकरन्द-निष्यन्दसुन्दरेण दर-दलित-कुन्द-माकन्द-मधुविन्दु-सन्दोहवाहिना भवनोद्यानपर्यन्तमारुतेन उत्ताम्यति।

सेवकजनं दुर्नीति सन्तापयति। क्षं यद्दर्शनेऽपि सहसा तत्प्रतिकारोपायकरणासम्भवादिति भावः। "कन्दोऽस्त्री सूरणे मूले" इति त्रिकाण्डशेषः।

(ज) नाभिनन्दतीति। कलाः नृत्यगीतादीः, क्रीड़ाः कन्दुकादिखेलाः, नाभिनन्दति न आद्रियते। एतेनारतिरुक्ता। कमलायमानः पद्मवदाचरन् कान्तः सुन्दरः यो हस्तः पद्ममिव सुन्दरं यत् पाणितलमित्यर्थः, तत्र पर्यस्तं न्यस्तं गण्डस्य मण्डलं यया सा। एतेनचिन्ताऽभिहिता।

(झ) अपि चेति। विकसितारविन्दस्य मकरन्दनिष्यन्देन रससवेण तत्सम्पर्केणेत्यर्थः सुन्दरः सौरभान्मनोहरः, तेन, तथा दरदलितौ ईषद्विकसितौ यौ कुन्दमाकन्दौ कुन्दकुसुम-चूतकुसुमे तयोर्मधुविन्दुसन्दोहं रसविन्दुसमूहं वहतीति तेन तथोक्तेन, परमसौरभविशिष्टे-

অলঙ্কার স্বরূপ সেই মাধবেরই বার বার দর্শন পাইয়া, সূর্য্যকিরণস্পৃষ্ট মৃণালের ন্যায় সুন্দর অঙ্গশোভায় কামবেদনা সূচিত হওয়ায় অধিকতর সুন্দর হইয়াও পরিজনদিগকে সন্তপ্ত করিয়া থাকেন।

(জ) খেলা বা নৃত্য-গীতপ্রভৃতির আদর করেন না; কেবল পদ্মের ন্যায় সুন্দর হস্তের উপরে গণ্ডদেশ সংস্থাপন করিয়া দিন অতিবাহিত করেন।

(१) कीलिकलाओ इत्यपि पाठः। (२) णिआणण इति पाठोऽपि दृश्यते।

(३) भवणुज्जाण इति पाठान्तरम्।

अस्सं अ, जदो प्पहुदि (१) तस्सिं जत्तादिअहे णिअमहूसव-वुभुदअदंसणत्थं (२) पडिवस्सरूवस्स भअवदो कामस्स (३) विअ कामकाणणालङ्कारकारिणो तस्स विविहविब्भमाहिरामं अणु-रूआणुराआणुबन्ध-महग्घीकिद-जोव्वणारम्भं (४) अस्सोअ-

(अ) अन्यच्च, यतः प्रभृति तस्मिन् यात्रादिवसे निजमहोत्सवाभ्युदयदर्शनार्थं प्रतिपन्न-रूपस्य भगवतः कामस्येव, कामकाननालङ्कारकारिणः तस्य विविधविभ्रमाभिरामम्, अनुरूपानु-

नेत्यर्थः। भवनोद्यानस्य अमात्यपुरसंलग्नोपवनस्य पर्य्यन्तमारुतेन भवनासन्नसीमासञ्चारिणा वायुना, उत्ताम्यति अधीरा भवति। एतेनोद्दीपनविभावविहितवेदनाऽभिहिता।

"दराऽव्ययं मनागर्थे।" "माकन्दः सहकारेऽस्त्री धात्रीनगरभेदयोः।" इति च मेदिनी।

(अ) अन्यच्चेति। निजः स्वकीयो महोत्सव एवाभ्युदयस्तस्य दर्शनार्थं प्रतिपन्न-रूपस्य अनङ्गत्वे सत्यपि स्वकीयदैवप्रभावेण गृहीतमूर्त्तेः। कामकाननालङ्कारकारिणः स्वसौन्दर्य्यप्रकाशेन तन्मदनोद्यानशोभाविधायिनः, तस्य माधवस्य, विविधविभ्रमैर्नानाप्रकार-विलासैः अभिरामं मनोरमं तथा अनुरूपो योग्यो योऽनुरागस्तस्य अनुबन्धेन अनुसरणेन द्वारा महार्घीकृतः दुर्लभीकृतः श्लाघनीयः कृतः यौवनारम्भो येन तत् तथोक्तम्। तथा

(ঋ) আরও শুনুন—প্রস্ফুটিত পদ্মের মধু পতিত হইতে থাকায় মনোহর এবং ঈষদ্বিকসিত কুন্দ ও আম্রপুষ্পের মধুবিন্দুসমূহবাহী বাটীর নিকটবর্ত্তী উপবনের প্রান্তভাগের বায়ু সেবন করিয়া অধীর হইয়া উঠেন।

(ঞ) আর এক কথা; সেই যাত্রার দিন যে অবধি প্রিয়সখী মালতী, নিজের মহোৎসবসমৃদ্ধি দর্শন করিবার জন্য রূপধারী ভগবান্ কামদেবের ন্যায় মদনোদ্যানের শোভাসম্পাদক সেই মাধবের সহিত

(१) जत्ते तिमात्रः पाठः पुस्तकान्तरे। (२) दंसणपडिवण्णरूवस्स इति कृतसमासः पाठभेदः। (३) मम्महस्स इति भिन्नः पाठः। (४) विविहविब्भमाणुराआणुबन्ध-इति पाठान्तरम्।

दिट्ठिविणिवाद-वञ्चणावसर-जुवरिद-(१) चित्त-तुवरन्तकोदूहलं, (२) समुल्लसिद-सद्धस-त्थम्भमन्थरावअवपड़िलग्ग-सेद-पुलअ वक्कम्प-सुन्दरं (३) आणन्दिदसहीअणं पिअसहीए (४) परप्परावलोअण-सुहं समासादिदं । (अ)

रागानुबन्धमहार्घीकृतयौवनारम्भम्, अन्योन्यदृष्टिविनिपातवञ्चनावसरज्वरितचित्त-त्वरमाण-कौतूहलम्, समुल्लसित-साध्वसस्तम्भ-मन्थरावयव-प्रतिलग्नस्वेद-पुलकोत्कम्पसुन्दरम्, आनन्दितसखिजनं प्रियसख्या परस्परावलोकनसुखं समासादितम् ।

अन्योन्यदृष्टिविनिपात एव वञ्चना परस्मिन् काले दुःखकरत्वात् प्रतारणा तस्या अवसरे समये ज्वरितं कामावेशेन सन्तप्तं यच्चित्तं तस्मिन् त्वरमाणं सत्वरं जायमानं कौतूहलं दर्शनस्यैव कौतुकं यस्मिन् तत् । तथा समुल्लसितम् उत्पन्नं यत् साध्वसं भयं तेन यः स्तम्भो निश्चेष्टता, तेन मन्थरेषु मन्देषु कार्य्याक्षमेषु अवयवेषु हस्तपदाद्यङ्गेषु प्रतिलग्ना उत्पद्य स्थिताः, ये स्वेदपुलकोत्कम्पा घर्म्मरोमाञ्चकम्पाख्याः सात्त्विकभावाः, तैः सुन्दरम्, अतएव आनन्दिताः स्वयोग्यजनस्यैव दर्शनेनानुरागादियमवस्थेत्यामोदिताः सखीजना येन तत् । प्रियसख्या मालत्या । समासादितं प्राप्तम् ।

পরস্পর দর্শনসুখ লাভ করিয়াছিলেন, সে দর্শনটী কিন্তু নানাবিধ হাবভাবে বড়ই সুন্দর হইতেছিল, সঙ্গে সঙ্গে উপযুক্ত অনুরাগ চলিতে থাকায় সেই সেই সন্দর্শন যৌবনারম্ভকে মহামূল্য করিয়া তুলিয়াছিল, পরস্পর দৃষ্টিপাত-রূপ প্রতারণার সময়ে কামসন্তপ্তচিত্তে তাড়াতাড়ি কৌতূহল জন্মিতেছিল, ভয়ে স্তব্ধতা উৎপন্ন হওয়ায় নিশ্চেষ্ট অঙ্গসমূহে ঘর্ম্ম, রোমাঞ্চ ও কম্পের আবির্ভাবে সে সন্দর্শনটী মনোহর হইয়াছিল এবং সখীজনকে আনন্দিত করিয়াছিল।

(१) खिज्जमाण इति पाठोऽपि दृश्यते । (२) कुत्रचिदत्रापि समासो न कृतः ।
(३) आणन्दिअ सहीअणं इत्यपि पाठः पुस्तकान्तरे ।
(४) कुत्रचित् पिअसहीए इति पाठो नास्ति ।

तदो प्पहुदि सविसेसदूसहाआस-विजिम्भमाणुद्दाम-देहदाह-दारुणं (१) दसापरिणामं अणुभवन्ती, मुहुत्तमेत्तसंपत्तपुण्णचन्दो-दआ वालकमलिणी विअ पम्मलाअदि (२)। (ट)

तह विअ (३) मुहुत्तमेत्तहिअअ-विणिहिद-वल्लहसमागमा, (४) णिव्भरसलिलासार-सिच्चमाणा विअ मेदिणी सीदलाअदि त्ति जाणामि। (ठ)

(ट) ततः प्रभृति सविशेषदुःसहायासविजृम्भमाणोद्दामदेहदाहदारुणं दशापरिणामम् अनुभवन्ती, मुहूर्त्तमात्रसम्प्राप्तपूर्णचन्द्रोदया बालकमलिनीव प्रम्लायति।

(ठ) तथापि च, मुहूर्त्तमात्र-हृदयविनिहितवल्लभसमागमा, निर्भरसलिलासारसिच्यमानेव मेदिनी शीतलायत इति जानामि।

(ट) तत इति। सविशेषः सातिशयः अतएव दुःसहो य आयासः कष्टं मदनवेदनेति यावत् तेन विजृम्भमाणो वर्द्धमान उद्दामो महान् यो देहदाहः शरीरसन्तापः तेन दारुणं दशापरिणामम् अवस्थापरिणतिं कामविकारमित्यर्थः। मुहूर्त्तमात्रम् अत्यल्पकालमात्रं सम्प्राप्तः चक्षुषा लब्धः दृष्ट इत्यर्थः पूर्णचन्द्रोदये उदितपूर्णचन्द्रो यथा सा, विशेषणमेतत् कमलिनीपक्षेऽपि योज्यम्। बालकमलिनी बालत्वेन नितान्तकोमला पद्मिनीव प्रम्लायति विशेषकामावेशेन अवसीदति, पक्षे सङ्कुचिता भवति। अत्राप्युद्दीपनविभावजनितवेदना सूचिता।

(ট) তদবধি মালতী, অত্যন্ত দুঃসহ ক্লেশে, অতিশয় বৃদ্ধিপ্রাপ্ত, গুরুতর শরীরসন্তাপে, দারুণ অবস্থা অনুভব করিতে থাকিয়া, একটু কালমাত্র পূর্ণচন্দ্রের উদয় দর্শন করিয়া, নবপ্রস্ফুটিত পদ্মিনীর ন্যায় ম্লান হইয়া থাকেন।

(१) विसव भणुद्दामदारुणं इति पाठान्तरम्। (२) परिमिलाअदि इति पाठभेदः।

(३) तह वि इत्येतन्मात्रः पाठोऽपि दृश्यते।

(४) विणिहिदणिम्माअन्तवल्लहसमागमा इति क्वचित् पाठः।

जेण पप्फुरिद-रदणच्छदुज्जलन्त-दन्तमोत्तिम-पन्ति-(१) कन्ति-सविसेससोहिदं, णिरन्तरुल्लसिद-पुलम-पम्हल-कवोल-घोलन्त-संददाणन्द-वाहत्थवम्, ईसि-विमसिद-णिप्फन्द-मन्द-

(ड) येन प्रस्फुरित-रदनच्छदोज्ज्वलद्दन्तमौक्तिकपङ्क्ति-कान्ति-सविशेषशोभितम्, निरन्तरोल्लसित पुलक-पक्ष्मल-कपोल-घूर्णमान-सन्ततानन्दवाष्पस्तवकम्, ईषद्विकसितनिस्पन्द-

(ठ) नन्वीदृशवेदनानुभवे कथं जीवतीत्याह तथापि चेति। तादृशमदनवेदनाऽवसादे सत्यपीत्यर्थः। मुहूर्त्तमात्रं कियन्तं कालं हृदये विनिहितः स्थापितः केवलमनःसङ्कल्पेनानुभूत इत्यर्थः वल्लभस्य प्रियस्य माधवस्य समागमो यया सा, अतएव निर्भरेण अतिमात्रेण सलिलासारेण वृष्टिधारासम्पातेन सिच्यमाना आर्द्रीक्रियमाणा मेदिनीव शीतलायते उपरतमदनतापतया शीतलेवाचरति। इति जानामि अनुमिनोमि। अतएव जीवतीति भावः। एतेन सङ्कल्प उक्तः।

(ड) कथमीदृशमनुमानमित्याह येनेति। सङ्कल्पोपनीतप्रियचुम्बनानुभावमाह प्रस्फुरितेत्यादि। प्रस्फुरिताभ्यां स्पन्दमानाभ्यां रदनच्छदाभ्याम् ओष्ठाभ्याम् उज्ज्वलन्ती दीप्यमाना या दन्तमौक्तिकपङ्क्तिः दन्तरूपमुक्तावली तस्याः कान्त्या शोभया सविशेषं सातिशयं शोभितं तथा निरन्तरोल्लसितैः अतिनिविड़भावेनोत्पन्नैः पुलकैः रोमाञ्चैः पक्ष्मलौ असमौ यौ कपोलौ गण्डौ तयोरुपरीत्यर्थः घूर्णमानः पतित्वा इतस्ततोऽभिष्यन्दमानः सन्ततः अविच्छिन्नधारः आनन्दवाष्पस्तवकः चुम्बनानन्दानुभवादश्रुजलपुञ्जो यत्र तत् तथोक्तम्।

(ঠ) তথাপি, ক্ষণকাল মাত্র মনে মনে প্রিয়তমের সঙ্গমসুখ অনুভব করিয়া, প্রবল বৃষ্টিধারাসিক্ত ভূমির ন্যায় শীতল হইয়া থাকেন ইহা বুঝিতে পারি।

(ড) যেহেতু, স্পন্দিত ওষ্ঠযুগলের অভ্যন্তর হইতে উজ্জ্বল দন্তময় মুক্তাশ্রেণীর শোভাতে মুখকমল অত্যন্ত শোভিত হয়, অতিশয় ঘনভাবে উৎপন্ন রোমাঞ্চে গণ্ডযুগল অসমান হইয়া যায়, তাহার উপরে অবিচ্ছিন্ন

(१) पप्फुरिद-कन्त-दसणच्छदुज्जलन्त-मुत्तिआवलि इति पाठान्तरम्।

**तारत्ताण-(१) मसिण-मउलाअन्त-णेत्तणीलुप्पलं, अविरलुब्भिस-सेअजलविन्दु-सुन्दर-ललाड़पट्टं (२) णवचन्दलेहामणोहरं, मुद्ध-मुहपुण्डरीअं उव्वहन्ती, विअड्ढसहचरीचित्त-संसइद-कोमार-भावा भोदि। (ड)**

मन्दतारोत्ताण-मसृण-मुकुलायमान-नेत्रनीलोत्पलम्, अविरलोद्भिन्नस्वेदजलविन्दु-सुन्दर-ललाटपट्टम्, नवचन्द्रलेखामनोहरम्, मुग्धमुखपुण्डरीकम् उद्वहन्ती, विदग्धसहचरीचित्त-संशयितकौमारभावा भवति।

---

सङ्कल्पोपस्थापितवल्लभं प्रति दृष्टिप्रकारानाह ईषदित्यादि। ईषद्विकसिते लज्जादि-हेत्ववशात् कदाचित् किञ्चित् प्रकाशिते, निष्पन्दे परमसौन्दर्य्यात् क्वचित् निश्चले, मन्दतारे कौतुकोद्दीपणात् कदापि स्तोकविकसिततारायुग्ये, उत्ताने उन्नतमुखदर्शनाय कदाचि-दुन्नमिते, मसृणे अतुलनीयप्रेमानुभवात् कदापि कोमले, मुकुलायमाने च आलिङ्गनाद्य-लौकिकसुखास्वादनात् कदापि मुद्रितप्राये च नेत्रनीलोत्पले नयनेन्दीवरद्वयं यत्र तत्।

सङ्कल्पोपनीतदयितेन सह रतेः श्रमानुभावमाह अविरलोद्भिन्नेत्यादि। अविरलं घनं यथा स्यात्तथा उद्भिन्ना उत्पन्ना ये स्वेदजलविन्दवस्तैः सुन्दरं ललाटपट्टं भालदेशो यस्मिन् तत्।

नवचन्द्रलेखामनोहरं नवोदितचन्द्रकलासुन्दरं मुग्धं मूढं सङ्कल्पोपस्थापितप्रिय-तमाश्लिष्टे सरलताव्यञ्जकमित्यर्थः तत् मुखपुण्डरीकं वदनसिताम्भोजं तत् उद्वहन्ती धारयन्ती मालती, विदग्धाभिः सुचतुराभिः सहचरीभिः सखीभिः चित्ते स्वस्वमनसि संशयितः सन्देह-विषयीकृतः कौमारभावः अविवाहिताऽवस्थत्वं यस्याः सा तथोक्ता भवति, यादृशी खल्वियं मकरात् कामातुरा सञ्जाता, ततः किं स्वयमेव पतिं वृणुयात् नवेति सखीनां संशयविषय-भूता भवतीत्यर्थः। एभिर्लक्षणैस्तथानुमानमिति भावः।

---

ধারায় আনন্দবাষ্প পতিত হইয়া ঘুরিতে থাকে; নীলোৎপলতুল্য নয়ন-যুগল কখনও কিঞ্চিৎ প্রকাশিত হয়, কখনও নিশ্চল হয়, কখনও তারা

---

(१) ईसविसमणिप्पन्दइन्थरतारुत्ताण इति पाठभेदः।

(२) सुन्दरविउलचन्दलेहामणोहरं इत्यपि पाठः।

কিং অ, উদ্দাম-সসিমঊহ-নিউরুম্ব-চুম্বিদ-পউত্তণিস্সন্দ-চন্দমণিহারধারিণী, পউর-কপ্পূর-সবিসেস-সিসির-চন্দণরস-চ্ছড়াসারণিঅর-দন্তুরিদ-বালকদলীপত্তসঅণা, (১) পাদসংবা-

(ঢ) কিঞ্চ, উদ্দামশশিময়ূখ-নিকুরম্ব-চুম্বিত-প্রবৃত্তনিস্যন্দ-চন্দ্রমণিহারধারিণী, প্রচুর কর্পূর-সবিশেষ শিশির-চন্দনরস-চ্ছটাসারনিকর-দন্তুরিত-বালকদলীপত্রশয়না, পাদ-

(ঢ) রজন্যবস্থামাহ কিঞ্চেতি। উদ্দামেন মহতা সান্দ্রেণেত্যর্থঃ শশিময়ূখানাং চন্দ্রকিরণানাং নিকুরম্বেণ সমূহেন চুম্বিতঃ স্পৃষ্টঃ, অতএব প্রবৃত্তঃ সঞ্জাতো নিস্যন্দো জলস্রাবো যস্মাৎ স প্রবৃত্তনিস্যন্দঃ, যশ্চন্দ্রমণিহারঃ চন্দ্রকান্তমণিনির্ম্মিতহারঃ তং ধারয়তি কণ্ঠে দধাতীতি সা।

প্রচুরেণ কর্পূরেণ সবিশেষশিশিরা সাতিশয়শীতলা যা চন্দনরসচ্ছটা চন্দনদ্রবসমূহঃ, তস্যা আসারনিকরেণ ধারাসম্পাতসমূহেন প্রবাহপ্রদানেনেত্যর্থঃ দন্তুরিতম্ অসমীকৃতং বালকদলীপত্রমিব শয়নং শয্যা যস্যাঃ সা।

তথা পাদসংবাহনাদিব্যাপারে ত্বরমাণঃ সত্বরীভূতঃ যঃ সহচরীসার্থঃ সখীসমূহঃ,

দুইটী একটু প্রকাশ পায়, কখনও উপরে উঠে, কখনও কোমল হয় এবং কখনও প্রায় মুদ্রিত হইয়া পড়ে; ঘনভাবে উৎপন্ন ঘর্ম্মবিন্দুতে ললাট-দেশ মনোহর হয়; নূতন চন্দ্রলেখার ন্যায় সুন্দর দেখা যায়—এইরূপ সুন্দর মুখকমল ধারণ করেন; তাহাতে চতুর সহচরীগণের চিত্তে তাঁহার কৌমারাবস্থার সংশয় উপস্থিত হয়।

(ঢ) আরও (শুনুন), চন্দ্রের নিবিড় কিরণস্পর্শে জলস্রাবকারী চন্দ্রকান্তমণির হার ধারণ করিয়া মালতী, অতিরিক্ত পরিমাণে কর্পূর থাকায় অত্যন্ত শীতল চন্দনের জল সিক্ত হওয়ায় উচু-নীচু নূতন কদলী-পত্রের উপরে শয়ন করেন, তখন সহচরীগণ তাড়াতাড়ি পাদসংবাহন-

(১) অথবা, পাদ, ইতি পদদ্বয়মপি কুত্রচিন্নাস্তি।

संवाहणादिवावार-तुवरन्त-सहअरीसत्थ-विरइदोवणीद-कमलिणीदल-जलद्द-तालवन्ता (१) उण्णिद्दा एव्व (२) रअणीओ गमेदि। (ढ)

कधं वि उवलद्धणिद्दासुहा, सेदप्पसिद-(३) पादपल्लवुव्वन्त-पिण्डालत्तअरसा, (४) थरथराअन्तपीवरोरुमूलपास-(५) विसं-

संवाहनादिव्यापार-त्वरमाण सहचरीसार्थ-विरचितोपनीत-कमलिनीदलजलार्द्र-तालवृन्ता, उन्निद्रैव रजनीर्गमयति।

(ण) कथमपि उपलब्धनिद्रासुखा, स्वेदप्रसृतपादपल्लवोद्वान्त पिण्डालक्तकरसा,

तेन विरचितम् आदौ निर्म्मितम् उपनीतम् अनन्तरमानीतं कमलिनीदलमेव जलार्द्रं तालवृन्तं व्यजनं यस्याः सा। आदौ सखीजनाः पादसंवाहनगात्रस्फोटनादिकर्म्मणि व्यापृता आसन्, परन्तु तापातिशयमवलोक्य झटिति जलार्द्रकमलिनीदलेन व्यजनं विरचय्य तेन वीज्यमानेत्यर्थः। उन्निद्रैव उत्सृष्टनिद्रेव जागरितेव रजनीर्गमयति बहुतरा रात्रीरतिवाहयति। एतेन जागरावस्था प्रतिपादिता।

अत्र नित्यसमासवादिनां मते अवयवार्थाननुसन्धानात् समुदायेनैव विशेषार्थप्रत्यायनात् तालवृन्तपदेन व्यजनमात्रमेवाभिधीयते, अतएव "व्यजनं तालवृन्तक"मित्यमरेण व्यजनमात्र एव तालवृन्तपदं पर्य्यायीकृतम्। तथा च शाकुन्तलेऽपि—"सञ्चालयामि नलिनीदलतालवृन्तम्।"

(ण) कथमिति। कथमपि अतिकष्टेनेत्यर्थः, उपलब्धं निद्रासुखं निद्राकालीनस्वप्नजनितप्रियतमसम्भोगानन्दो यया सा, अतएव स्वेदप्रसृतेन स्वप्नजसुरतश्रमजनित-

প্রভৃতি কার্য্য করিতে থাকে এবং পদ্মপত্রের ব্যজন নির্ম্মাণ করিয়া আনিয়া সঞ্চালন করিতে থাকে, তথাপি মালতী (কামসন্তাপবশতঃ) বিনা নিদ্রাতেই রাত্রি অতিবাহিত করেন।

(१) जलद्दासवणीये इति कुत्रचित् पाठः। (२) कुत्रचित् एव्वशब्दो नास्ति।
(३) पक्खालिद पाद, सेदपप्फुरिद पाद इति पाठभेदौ।
(४) पल्लवुव्वमन्त इति पाठान्तरम्। (५) वाध इति भिन्नः पाठः।

वादि-णीविवन्धणा, उक्खुव्भन्त-(१) हिअअन्तरुत्तरङ्गणिस्सास-विसम-समुच्छसन्त-पुलअ-(२) पह्मल-पओहरोवरि-णिहिद-वेवन्त-भुअलदा वेट्टणवन्धणा, (३) झत्ति पड़िवोध-वेला-विसज्जि-

थरथरायमाण पीवरोरुमूलपार्श्व-विसंवादि-नीविबन्धना, उत्क्षुभ्यमानहृदयान्तरुत्तरङ्ग-निश्वास-विषम-समुच्छ्वसत्पुलक-पक्ष्मल-पयोधरोपरिनिहित-वेपमान-भुजलता--वेष्टनबन्धना,

वास्तविक-घर्म्मजलस्रावेण पादपल्लवाभ्यां चरणकिसलयद्वयात् उद्दाम उद्‌गीर्णः विधौत इत्यर्थः पिण्डालक्तकरसः कालान्तरे शुष्कत्वात् पिण्डीभूतो लाक्षाद्रवो यस्याः सा ।

पुनश्च थरथरायमाणं स्वप्ने वल्लभस्योरुद्वयेनाक्रमणानुभवात् कम्पमानं यत् पीवरोरु-मूलं तस्य पार्श्वात् समीपात् विसंवादि अवस्रंसि स्खलितमित्यर्थः नीविबन्धनं यस्याः सा । एतेन पुनः सम्भोगानुभवो दर्शितः । थरथरायमाणमिति देशीयपदम् ।

पुनरपि स्वप्नालिङ्गनानुभवमाह उत्क्षुभ्यमानेति । उत्क्षुभ्यमानं मदनवेदनया क्षुब्धीक्रियमाणं यत् हृदयं तस्य अन्तर्मध्ये उत्तरङ्गा निरोधवशात् उद्वेलिता ये निश्वासाः, तैर्विषमं सातिशयं यथा स्यात्तथा समुच्छ्वसद्भिः उत्पद्यमानैः पुलकैः रोमाञ्चैः पक्ष्मलयोः असमीकृतयोः पयोधरयोः स्वकुचयोरुपरि निहिताभ्यां वल्लभधारणेच्छया स्थापिताभ्यां भुजलताभ्यां स्वकीयबाहुलताभ्याम् आवेष्टनबन्धनं परिवेष्टनेन वल्लभस्यालिङ्गनं यस्याः सा ।

जागरणकालीनावस्थामाह झटितीति । झटिति शीघ्रम्, प्रतिबोधवेलायां जागरण-

(ণ) অতিকষ্টে নিদ্রাসুখ লাভ করেন ; তাহার পর ঘর্ম্মজল নির্গত হওয়ায় চরণপল্লব হইতে গাঢ় অলক্তকরস প্রক্ষালিত হইয়া যায়। স্থূল উরুযুগল থর থর করিয়া কাঁপিতে থাকে, তখন তাঁহার পার্শ্ব হইতে বস্ত্রের বন্ধন খুলিয়া যায়। হৃদয় উদ্বেলিত হইয়া উঠে, তাঁহার ভিতরে নিশ্বাস অবরুদ্ধ থাকে এবং অত্যন্ত রোমাঞ্চ উৎপন্ন হওয়ায় স্তনযুগল উচু-নীচু হইয়া পড়ে, তাহার উপরে কম্পিতবাহুযুগল রাখিয়া কাহাকেও যেন

(१) उक्खुडन्त इति पाठोऽपि दृश्यते । (२) क्वचित् पुलअशब्दो न दृश्यते ।

(३) वेट्टबन्धण इति पाठभेदः ।

दुव्विग्ग-दिट्ठिविणिवाद-विसाद-(१) सुस-सअणिज्ज-सञ्जाद-मोहमीलन्तलोअणा, ससम्भम-सहीअण-पअत्त-पड़िवस-मुच्छा-विच्छेअ-समअ-संगलिद-दीहणीसास-जणिद-जीविदासा, (२) किंकादव्वदामूढ़ं (३) पढ़मपत्थिद-णिअजीविदावसाणं दुव्वार-देव्वविलसिदोवालम्भमेत्तव्वावारं अह्मारिसं जणं (४) करेदि। (ण)

झटिति प्रतिबोधवेला विसर्जितोद्विग्न-दृष्टिविनिपात-विस्रात-शून्य-शयनीय-सञ्जातमोहमीललोचना, ससम्भ्रम-सखीजन-प्रयत्न प्रतिपन्न-मूर्च्छाविच्छेदसमय-सङ्कलितदीर्घनिश्वास-जनित-जीविताशा, किंकर्त्तव्यतामूढ़ं प्रथमप्रार्थित-निज जीवितावसानम्, दुर्वार-दैवविलसितोपालम्भमात्रव्यापारम् अस्मादृशं जनं करोति।

---

समये विसर्जिता त्यक्ता उद्विग्ना वल्लभस्याविद्यमानत्वशङ्कया सभया या दृष्टिः, तस्या विनिपातेन सम्पर्केण विस्रातम् अवगतं शून्यं वल्लभरहितं यत् शयनीयं शय्या, तस्मिन् सञ्जातः वल्लभशून्यतादर्शनात् तत्रैव शयनीये उत्पन्नो यो मोहो मूर्च्छा तेन मीलती मुद्रिते लोचने यस्याः सा।

ससम्भ्रमा मूर्च्छापनोदनाय सत्वरा ये सखीजनाः तेषां प्रयत्नेन शीतलजलसेकादिना व्यापारेण प्रतिपन्नः सम्पन्नः, यो मूर्च्छाविच्छेदः तस्य समये सङ्कलितेन निःसृतेन दीर्घनिश्वासेन जनिता सखीजनानामुत्पादिता जीविताशा जीवनमस्तीत्याशा यस्यां सा तथोक्ता मालती, अस्मादृशं जनं सखीजनमित्यर्थः किंकर्त्तव्यतामूढ़ं प्रथमप्रार्थितं निजजीवितस्य, स्वस्व-जीवनस्य अवसानं विनाशो येन तम्, तथा दुर्वारं मनुष्यैरशक्यबाधं यत् दैवं नियतिः तस्य यत् विलसितं कार्य्यं तस्य उपालम्भमात्रः निन्दामात्रः व्यापारः कार्य्यं यस्य तं तथोक्तं करोति। मालत्यास्तादृशीं दशामवलोक्य वयं सर्वाः किंकर्त्तव्यतामूढ़ा भवामः, तथा मालत्या अचिरेण विषमां विपत्तिं विभाव्य तद्दुःखस्य सोढ़ुमशक्यत्वात् तत्पूर्वं स्वस्वमरण-

---

(१) विउव्विआपड्ढदिट्ठि विणिवाद विसाण इत्यपि पाठः।

(२) णीसास सेस जीविदा इति पाठान्तरम्। (३) मूढ़दाए इति कुत्रचित् पाठः।

(४) सहीजणं इति पाठोऽपि दृश्यते।

তা পেক্খদু ভঅবদী, ইমেসু দাব-লাবণ্ণভূইট্ঠণিম্মাণপরিপেসলেসু (১) অঙ্গেসু দারুণবিজ্ম্ভিদস্স কিঅচ্চিরং কুসলাবসাণদা মম্মহস্স ভবিস্সদি (২)। (ত)

(ত) তৎ প্রেক্ষতাং ভগবতী, এষু তাবল্লাবণ্যভূয়িষ্ঠনির্ম্মাণপরিপেশলেষু অঙ্গেষু দারুণবিজৃম্ভিতস্য কিয়চ্চিরং কুশলাবসানতা মন্মথস্য ভবিষ্যতি ।

মেব প্রার্থয়ামঃ, তথা অনর্থোপায়বশাৎ তদ্দুঃখজনকীভূতদুর্নিবারদৈবচরিতমেব কেবলং নিন্দাম ইতি সরলার্থঃ ।

(ত) তদিতি । তস্মাৎ, প্রেক্ষতাং যোগলব্ধস্বকীয়জ্ঞাননয়নেন নিরূপয়তু । লাবণ্যমেব ভূয়িষ্ঠং বহুলং যেষু তানি, তথা নির্ম্মাণেনৈব সৃষ্টিমাত্রেণৈব পরিপেশলানি সর্ব্বতঃ শোভনানি চ তেষু, অঙ্গেষু মালত্যা দেহাবয়বেষু দারুণবিজৃম্ভিতস্য ভয়ঙ্করভাবেন বৃদ্ধিং গতস্য মন্মথস্য কিয়চ্চিরং কিয়ন্তং কালমতীত্যেত্যর্থঃ কুশলেন মালতীজীবনরক্ষারূপমঙ্গলেন অবসানং যস্য তস্য ভাবঃ সা । মালত্যা জীবনে তিষ্ঠতি সতি অয়ং মদনাবেগো নিবৃত্তিং যাস্যতি নবেতি জ্ঞাননয়নেন নিরূপ্য অস্মান্ ব্রবীত্বিতি সরলার্থঃ ।

বেষ্টনপূর্ব্বক আলিঙ্গন করিতে থাকেন । সহসা জাগরণের সময়ে আতঙ্কের সহিত দৃষ্টিপাত করিয়া শয্যা শূন্য দেখায় মূর্চ্ছা উপস্থিত হয়, তাহাতে নয়নযুগল আবার মুদ্রিত হইয়া যায় ; তখন সখীগণের চেষ্টায় মূর্চ্ছাভঙ্গ হয়, সেই সময়ে যে দীর্ঘনিশ্বাস ত্যাগ করেন, তাহাতে জীবিত আছেন বলিয়া আমাদের ভরসা হয় । ইহাতে উনি আমাদের মত লোককে কিংকর্ত্তব্যমূঢ় করিয়া ফেলেন, আমরা উঁহার পূর্ব্বে নিজের জীবনাবসান প্রার্থনা করিতে থাকি এবং অনিবার্য্য দৈবের কার্য্যগুলিকে কেবল নিন্দা করিতে থাকি ।

(ত) অতএব আপনি দেখুন দেখি—লাবণ্যপরিপূর্ণ এবং বিধাতার সৃষ্টিমাত্রেই সর্ব্বপ্রকারে সুন্দর এই অঙ্গে কামদেব ভয়ঙ্করভাবে বৃদ্ধি পাইয়াছেন, কতকাল পরে মঙ্গলে মঙ্গলে ইহার নিবৃত্তি হইবে ।

(১)···পরিবেলবেসু ইতি ভিন্নঃ পাঠঃ । (২) ক্বচিৎ ভবিস্সদি ইতি পাঠো নাস্তি ।

कधं अ, इमाइं रमणकेलि-कलह-कोवोवराअ-पल्लविदकेरली-कवोल-कोमलुव्वेल्लन्त-विमल-चन्दिओद्दाम-(१) दलिदतिमिरा-वरणाइं विहावरीमुखाइं इमे अ, उल्लसिद-दुद्ध-सिन्धु-(२) पूर-धवलुज्जल-(३) जोण्हा-पक्खालिअ णहोङ्गणा, (४) परिमलिद-

(घ) कथञ्च, इमानि रमणकेलि-कलह-कोपोपराग-पल्लवित-केरली-कपोलकोमलो-द्वेल्लद्विमलचन्द्रिकोद्दाम-दलित-तिमिरावरणानि विभावरीमुखानि, इमे च उल्लसित-दुग्ध-

(घ) कथञ्चेति। इमानि आसन्नप्रायाणि, रमणकेलिकलहेन रतिक्रीड़ाविषयक-विवादेन यः कोपस्तेन य उपरागो रक्तिमा तेन पल्लवितौ पल्लववदारक्तीकृतौ यौ केरली-कपोलौ केरलदेशीयस्त्रिया गण्डद्वयं तद्वत् कोमला मृदुला उद्वेल्लन्ती उल्लसन्ती विमला च या चन्द्रिका ज्योत्स्ना, तया उद्दामं सातिशयं यथा स्यात्तथा दलितानि नाशितानि तिमिरा-वरणानि अन्धकाररूपावरणानि येषाम्, तानि तथोक्तानि, विभावरीमुखानि प्रदोषकालाः, कथं कीदृशानीत्यर्थः अनर्थकारीणि भविष्यन्तीति परेणान्वयः। तदपि प्रेक्षतां भगवतीति भावः। अनिर्वचनीयदुःखदायीन्येव भविष्यन्तीति व्यज्यते।

रजनीपरिणाहा इति सामान्यत उक्तेऽपि प्रदोषे विशेषकामोद्दीपनासूचनार्थं विभावरीमुखानीति विशेषेणोक्तम्। केरलदेशीयस्त्रीकपोलस्यातिकोमलत्वात्तदुपादानम्, तत्सादृश्यञ्च कोमलत्वांश एवेति च बोध्यम्।

इमे च अदूरवर्त्तिनः, उल्लसिता उद्दीप्ता दुग्धसिन्धुपूरवत् क्षीरोदसागरप्रवाहवत् धवला उज्ज्वला च या ज्योत्स्ना, तया प्रक्षालितं विधौतं तिमिरापसारणेन परिष्कृतमित्यर्थः

(थ) রতিক্রীড়া কলহের কোপে কেরলদেশীয় রমণীগণের কপোল-যুগল পল্লবের ন্যায় আরক্তবর্ণ হয়, তাহার তুল্য কোমল ও নির্ম্মল জ্যোৎস্না প্রকাশ পাইয়া সম্পূর্ণরূপে অন্ধকারাবরণ দূর করিলে পর এই সকল প্রদোষকাল প্রিয়সখীর পক্ষে কিরূপ অনর্থকারী হইবে এবং ক্ষীরোদ-

(१) चन्दचन्दिओद्दाम इति पाठोऽपि दृश्यते। (२) दुद्धधारा इति पाठोऽपि दृश्यते। (३) धवलुज्ज्वलन्त इत्यपि पाठः। (४) गअणङ्गणा इति पाठान्तरम्।

पाड़ला-वउल-(१) णिम्महण-बहुल-(२) परिमलुग्गार सम्बलण-मसिण-मंसलाअन्त-( ३ ) मलअमारुदुद्धुमाविददसदिसामहा, वसन्तरअणोपरिणाहा अणत्थकारिणो भविस्सन्ति पिअसहो एत्ति (४) । (थ)

सिन्धु-पुरधवलोज्ज्वल-ज्योत्स्ना प्रक्षालित-नभोऽङ्गनाः, परिमलित पाटला वकुल-निर्म्मथन-बहुल परिमलोद्गार-संवलन-मसृण-मांसलायमान--मलयमारुतोद्धूमायित--दशदिशामुखाः, वसन्तरजनीपरिणाहाः, अनर्थकारिणी भविष्यन्ति प्रियसख्या इति ।

नभोऽङ्गनं गगनप्रदेशो येषु ते । तथा परिमलितानि सञ्जातपरिमलानि यानि पाटला-वकुलानि पुष्पविशेषाः तेषां निर्म्मथनेन विमर्द्दनेन ये बहुलपरिमलोद्गाराः प्रभूतसौरभ-निर्गमाः तैः संवलनेन मिश्रणेन मसृणः कोमलः मांसलायमानः बलवानिवाचरत् प्रबली यो मलयमारुतः दक्षिणसमीरणः, तेन धूमायितानि उद्गतधूमायमानानि कृतानि दश-दिशामुखानि सकलदिङ्मुखानि येषु ते तथोक्ताः । वसन्तरजनीपरिणाहाः वसन्तरात्रि-विशालताः विरहेणातिदीर्घवत् प्रतीयमाना वसन्तकालरजन्य इत्यर्थः प्रियसख्या मालत्याः कथं कीदृशा अनर्थकारिणः विपत्तिविधायिनी भविष्यन्ति । इति च भगवती प्रेक्षता-मिति भावः ।

कथं वि उवलद्धणिद्दासुहा इत्याद्यतदन्तवाक्येषु मालत्यास्तादृशदारुणक्लेशनिवारण-स्योपायादर्शनात् तापनं नाम प्रतिमुखसन्ध्यङ्गम् । तथा च दर्पणे—

"उपायादर्शनं यत्तु तापनं नाम तद्भवेत् ।"

परिमलितेति तारकादित्वादितच् । उद्गता धूमा येषु तानि उद्धूमानि, तानीव आचरन्तीति उद्धूमायानि आचारक्यन्तात् कर्त्तरि पचादित्वादच्, तानि कृतानीति पुनः करोत्यर्थे-ण्यन्तात् कर्म्मणि क्त इति उद्धूमायितानि । दिशा इति क्षुधाशब्दवत् टाबन्तः ।

(१) मुउल इति क्वचित् पाठः ।

(२) बहल इति पाठभेदः । (३) मंसल इतिमात्रः पाठः क्वचित् ।

(४) अणत्थआरिणी होन्ति रअणीपरिणामा अ पिअसहीए इति भिन्नः पाठः ।

काम। लवङ्गिके!

यदि तद्विषयोऽनुरागबन्धः
स्फुटमेतद्धि फलं गुणज्ञतायाः।
इति नन्दितमप्यवस्थयाऽस्या
हृदयं दारुणया विदार्य्यते मे ॥१३॥

---

अहो! सौभाग्याद्भवभूतिरिदानीं किञ्चिद्विरतः, यावत् समासराध्यन्तरं नारभते, तावद्भवन्तः खल्वध्यापयितारोऽध्येतारः श्रोतारश्च निःश्वासमुन्मुच्य किञ्चिज्जीवन्तु।

यदीति। अनुरागबन्धः मालत्या गाढानुरागः यदि तद्विषयः माधवालम्बनः अभवदिति शेषः। तदा एतद्धि एतदेव गुणज्ञतायाः स्फुटं स्पष्टं फलम्। माधवोऽतीवगुणवानिति तवानुरागः सर्वेषामेवानन्दकरत्वादभिमत इति भावः। इति हेतोः नन्दितमपि आह्लादितमपि मे मम हृदयं दारुणया अस्या मालत्या अवस्थया मदनात्याचारपीडितत्वया विदार्य्यते।

अत्र भङ्गीविशेषेण माधवस्य गुणवत्ताभिधानात् पर्य्यायोक्तमलङ्कारः, तथा कारणभूताऽवस्था मालतीगता, तत्कार्य्यभूतं विदारणन्तु कामन्दकीहृदयगतमिति कार्य्यकारणयोर्वैयधिकरण्यादसङ्गतिर्नामालङ्कारश्चेत्यनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः।

मालभारिणी नाम वृत्तम्—"विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्।" इति लक्षणात् ॥१२॥

---

সাগরের প্রবাহের ন্যায় ধবল ও উজ্জ্বল জ্যোৎস্না প্রকাশিত হইয়া যখন আকাশমণ্ডল পরিষ্কৃত করিয়া ফেলিবে, আর সুগন্ধি পাটলা ও বকুলপুষ্প আন্দোলিত করায় প্রচুর পরিমাণে সৌরভ নির্গত হইতে থাকিবে, সেই সৌরভ বহন করিয়া কোমল ও প্রবল মলয়বায়ু যখন দশদিক্ ধূম্রবর্ণ করিবে, তখন এই সকল বিশাল বসন্তকালের রাত্রি প্রিয়সখীর পক্ষে কিরূপ অনর্থকরী হইবে ( ভগবতী তাহাও একবার দেখুন )!

কামন্দকী। লবঙ্গিকে! মালতীর এই অনুরাগ যদি মাধবের বিষয়ে

माधवः। अहो! स्थान एवाभ्युल्लासो (१) भगवत्याः। (द)

काम। अहो! प्रमादः। (ध)

प्रकृतिललितमेतत् सौकुमार्य्यैकसारं
वपुरयमपि सत्यं दारुणः पञ्चवाणः।
चलितमलयवातोद्धूतचूतप्रसूनः
कथमयमपि कालश्चारुचन्द्रावतंसः ॥१४॥

(द) माधव इति। अभ्युल्लासः दारुणोद्वेगः। स्थान एव युक्त एव। अस्याः शरीरस्य कृशतादिदर्शनेनाचिरेणैवानिष्टसम्भावनादिति भावः। उल्लासस्य आनन्दस्य अभिधर्षणं विमर्द्दक इत्यभ्युल्लास। "अभि (अ) धर्षण"मिति शब्दकल्पद्रुमः।

(ध) कामेति। प्रमादः अस्माकमनवधानता। इतोऽपि यदविमृश्यैवानयोः समागमस्याविहितत्वादिति भावः।

प्रमादेन सम्भावनीयं दोषमुपपादयितु माह प्रकृतीति। एतत् वपुः मालत्याः शरीरं प्रकृतिललितं स्वभावसुन्दरम्, तथा सौकुमार्य्यं कोमलत्वं एक अद्वितीयः सारः स्थिरांश उत्कृष्टांशो यस्मिन् तत्, अतीवकोमलमित्यर्थः। तथा अयं पञ्चवाणः कामोऽपि दारुणः। एकवाणत्वेऽपि नास्त्यव्याहतिः, अयन्तु पञ्चवाण इति भावः। ईदृशकोमलशरीरे दारुणपञ्चवाणस्याक्रमणमतीवदुःसहमिति भावः। इत्यवधारणं सत्यमित्यर्थः। विशिनष्टि चलितेति। चलितेन प्रवहता मलयवातेन चन्दनस्पर्शिवायुनेत्याशयः उद्धूतानि कम्पितानि चूतप्रसूनानि सहकारकुसुमानि यस्मिन् स तथोक्तः, तथा चारुः तुषारमेघाभ्यामावरणाभावात् कालान्तरीयापेक्षया सुन्दरः चन्द्रः अवतंसो भूषणं यस्य स तादृशः, अयं कालः वसन्त-

হইয়া থাকে, তবে ইহা নিশ্চয়ই গুণজ্ঞতার সুস্পষ্ট ফল। এইজন্য আমার মন আনন্দিত হইলেও ইহার এই দারুণ অবস্থায় বিদীর্ণ হইতেছে ॥১৩॥

(দ) মাধব। ভগবতী কামন্দকীর গুরুতর উদ্বেগ সঙ্গতই বটে।

(ধ) কামন্দকী। হায়! আমাদের কি অনবধানতা!

(१) उल्लास इति पाठान्तरम्।

लव। अस्सञ्च जाणिदं भोदु भअवदोए। एदं माहव-पड़िच्छन्दअसणाहं चित्तफलअं। मालत्याः स्तनांशुकमपनीय। एसा वि तस्स ज्जेव सहत्थविरइदेत्ति कण्ठावलम्बिदा वउलमाला जीवणं पिअसहीए त्ति। इति वकुलमालां दर्शयति (१)। (न)

(न) अन्यच्च ज्ञातं भवतु भगवत्या। एतन्माधवप्रतिच्छन्दकसनाथं चित्रफलकम्। एषापि तस्यैव स्वहस्तविरचितेति कण्ठावलम्बिता वकुलमाला जीवनं प्रियसख्या इति।

---

समयोऽपि वर्त्तत इति शेषः। विषादे कथंशब्दः। सुतरामस्माकमीदृशप्रमादेन विलम्बनं मालत्या अनिर्वचनीयानर्थकारणमिति भावः।

अत्र स्वभावसुन्दरं नितान्तकोमलञ्च वपुः, दारुणः पञ्चबाणश्च इत्यनयोर्विरूपयोः सङ्घटनया विषमालङ्कारः, तथा अप्रस्तुतात् दारुणपञ्चबाणतादृशवसन्तकालरूपकारणात् मालत्या अनिर्वचनीयदुःखरूपप्रस्तुतकार्य्यप्रतीतेरप्रस्तुतप्रशंसा च, अनयोरङ्गाङ्गिभावेन सङ्करः।

मालिनी वृत्तम् ॥१४॥

(न) लवेति। माधवस्य प्रतिच्छन्दकेन चित्रितप्रतिकृत्या सनाथं सहितम्। वकुलमालाप्रदर्शनार्थं स्तनांशुकापनयनमिति बोध्यम्। तस्यैव माधवस्यैव, स्वहस्ताभ्यां रचिता निर्म्मितेति हेतोः आदरप्रदर्शनार्थमिति शेषः। जीवनं जीवनस्वरूपा। एतेन माधवं प्रति मालत्या अपि सुमहाननुरागो जात इत्यवधार्य्य भवत्या यत्नातिशयेन सत्वरं कर्त्तव्यं क्रियतामिति भावः।

---

স্বভাবসুন্দর মালতীর এই দেহখানিতে একমাত্র কোমলতাই সার ; এদিকে পঞ্চবাণ কামদেবও দারুণ—ইহা সত্য। হায়! আবার ইহা বসন্তকাল ; তাই মলয়বায়ু বহিতেছে, আম্রকুসুম কম্পিত হইতেছে এবং সুন্দর চন্দ্র ইহার অলঙ্কার হইয়াছে ॥১৪॥

(ন) লবঙ্গিকা। আর একটী বিষয় আপনি জানুন। মাধবের প্রতিমূর্ত্তির সহিত এই চিত্রফলকখানি, ( মালতীর স্তনের কাপড় সরাইয়া )

---

(१) अयं पाठः क्वचिन्नास्ति।

माधवः। सस्पृहम् (१)।

जितमिह (२) भुवने त्वया यदस्याः
सखि! वकुलावलि! वल्लभासि जाता।
परिणतबिसकान्तपाण्डुमुग्ध-(३)
स्तनपरिणाहविलासवैजयन्ती ॥१५॥

जितमिति। हे सखि! वयस्याभूते! मालत्याहृतत्वादनुरागजनकत्वेनानुकूल्यकरणात् तत्कुचमण्डलगतत्वेन मत्स्थानपातित्वाच्चेति भावः। वकुलावलि! वकुलमालि! त्वया इह भुवने जितम् उत्कर्षेण वृत्तं सर्वेभ्य एवोत्कर्षो लब्ध इत्यर्थः यत् यस्मात् त्वम्, परिणतः परिपूर्णावयवः, यो बिसकाण्डः मृणालदण्डः तद्वत् पाण्डुः श्वेतः मुग्धः सुन्दरश्च यः स्तनयोः परिणाहो विशालता विशालौ स्तनावित्यर्थः, तस्य विलासस्य सौन्दर्य्यस्य वैजयन्ती पताकारूपा सती संसूचिका सतीत्यर्थः अस्या मालत्या वल्लभा वक्षसि स्थापनरूपेणादरातिशयेन प्रिया जाता असि, 'अहं कथमस्याः सस्पृहलोचनगोचरीभवेयम्, कथं वा कुचमण्डलाश्रयचरितार्थो भूयास'मित्यादिना सर्वदा मया यदाशास्यते; तदेतत् सर्वदा कुचमण्डलस्थितया सततसमादृतया त्वया अनायासेनैव लब्धमित्यहो सौभाग्यं तवेति भावः।

अत्र त्वयैव जितं न तु मया इति प्रतीतेरार्थी परिसंख्यालङ्कारः, विलासवैजयन्तीति निरङ्गं केवलरूपकम्, तृतीयचरणे छेकानुप्रासश्च इत्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः। यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणात् न विधेयाविमर्शदोषः।

अत्र पुष्पं नाम प्रतिमुखसन्धेरङ्गम्। तथा च साहित्यदर्पणे—

"पुष्पं विशेषवचनं मतम्।"

আর মাধবেরই নিজ হাতে তৈয়ারী করা কণ্ঠসংলগ্ন এই বকুলফুলের মালা; এই দুইটী বস্তুই প্রিয়সখীর জীবন। (এই বলিয়া বকুলের মালা দেখাইল)।

(१) अयमपि पाठः क्वचिन्न दृश्यते। (२) जितमिवेति पाठान्तरम्।
(३) बिसदण्डकाण्डपाण्डु इति पाठभेदः।

नेपथ्ये कलकलः। सर्वे आकर्णयन्ति।

पुनर्नेपथ्ये (१)। रे रे सङ्करपुरवासिजाणवदा! (२) एसो क्खु जोव्वणारम्भ-गव्व-सम्भरिद-(३) दुव्विसहामरिस-रोस-व्वदिअर-वलामोडि-विहडिदुग्गाडिद--लोहपञ्जर--पडिलग्गसंगलिअ-

(प) रे रे शङ्करपुरवासिजानपदाः! एष खलु यौवनारम्भ गर्व्व-सम्भृत-दुर्विषहा-मर्ष-रोष व्यतिकर -बलात्कार-- विघटितोद्घाटित--लौहपञ्जर--प्रतिलग्न--सङ्कलितनिगलः,

तथा रमणीयत्वेन मालतीकुचमण्डलस्थाश्रयाकाङ्क्षाप्रतीतिः स्पृहा नाम नाट्यालङ्कारश्च। यथा तत्रैव—

"आकाङ्क्षा रमणीयत्वात् वस्तुनो या स्पृहा तु सा।"

"चलापाङ्गां दृष्टि"मित्यादि, "वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती" इत्यन्तं शाकुन्तलीयपद्यं स्मरतैव भवभूतिना पद्यमिदं रचितमितीव प्रतीयते।

पुष्पिताग्रा वृत्तम् ॥१५॥

(प) रे रे शङ्करेति। यौवनारम्भेण यो गर्व्वः बलदर्पः तेन सम्भृतौ पूर्णौ दुर्विषहौ अन्यैरसह्यौ यौ अमर्षरोषौ अक्षमाकोपौ तयोर्व्यतिकरेण संमिश्रणेन यो बलात्कारः बलप्रवृत्तिः, तेन विघटितम् आदौ भग्नम् उद्घाटितं पश्चादपसारितं यत् लौहपञ्जरं तत्र प्रतिलग्नः संसक्तः, सङ्कलितः स्वपादद्वयात् स्खलितः निगलः शृङ्खला यस्य सः।

माधव। (অভিলাষের সহিত) সখি! বকুলমালে! এই জগতে তোমারই জয়; যেহেতু পরিপক্ক মৃণালের ন্যায় পাণ্ডুরবর্ণ ও মনোহর বিশাল স্তনযুগলের উপরে বিলাসের পতাকারূপে থাকিয়া তুমি ইঁহার প্রিয়তমা হইয়াছ ॥১৫॥

(নেপথ্যে কোলাহল; সকলে তাহা শুনিতে লাগিল।)

(প) (আবার) নেপথ্যে। হে শিববাটীস্থ দেশবাসিগণ! এই ভয়ঙ্কর ব্যাঘ্র ক্রুদ্ধ যমের ন্যায় আচরণ করিতেছে। প্রথম যৌবনের গর্ব্বে দুঃসহ

(१) अयं पाठः क्वचिन्नास्ति। (२) सङ्करघराधिवासिणो जाणवदा इति पाठभेदः।

(३) जोव्वणारम्भभरिददुव्विसहा इति पाठः क्वचित्।

णिअलो, (१) णिअलीला-विलासुव्वेल्लिअ-वल्लह-तुङ्गलङ्गूल-(२) विअड़-वेजअन्तिआ-विसम-डामरुद्दाम-(३) सरीरसण्णिवेसो, मढ़ादो अवक्कमिअ, तक्खण-सतिसम-कवलिदाणेअ-देहिदेहावअव-मज्झ-णिट्ठुरत्थिखण्ड--खण्डण--टङ्कार--कड़कड़ाअन्त--करवत्त-

निजलीला-विलासोद्वेल्लितवल्लभ-तुङ्ग-लाङ्गूल विकट-वैजयन्तिका-विषम-डामरोद्दाम-शरीर-सन्निवेशः, मठादपक्रम्य, तत्क्षण-सतृष्ण कवलितानेक-देहि-देहावयव-मध्य-निष्ठुरास्थिखण्ड-

निजः स्वकीयो यो लीलाविलासः स्वच्छन्दतया विहारः चिरात् परं पञ्जरशृङ्खल-बन्धापगमात् इच्छानुरूपं विचरणं तेन उद्वेल्लितम् ऊर्द्धं सञ्चालितं वल्लभं प्रियम्, तुङ्गम् उच्चं लाङ्गूलमेव विकटा भीषणा वैजयन्तिका पताका, तया विषमो दुर्द्धर्षः, डामरो भीषणः, उद्दामो विशालः, शरीरसन्निवेशो देहसंस्थानं यस्य सः।

मठादपक्रम्य स्वकीयबन्धनमन्दिरान्निर्गत्य। तत्क्षणे अपक्रमणस्यैव समये सतृष्णं यथा स्यात्तथा कवलितानां ग्रस्तानां मुखमध्ये प्रवेशितानाम् अनेकेषां देहि-देहावयवानां प्राणिशरीरस्थहस्तपदाद्यङ्गानां मध्ये निष्ठुराः कठिना ये अस्थिखण्डाः तेषां खण्डनस्य दन्तैश्चर्वणस्य यष्टङ्कारः शब्दविशेषः, तेन कटकटायमानाः कटकटशब्दं कुर्वाणाः याः करपत्रवत् क्रकचवत् (करात इति यस्य वङ्गभाषा) कठिनाः दंष्ट्रा दन्ताः ताभिः करालो भयङ्कर मुखकन्दरः वदनविवरं यस्य सः।

অসহিষ্ণুতা ও ক্রোধ সম্মিলিত হইয়াছে; সুতরাং বলপূর্ব্বক লৌহপিঞ্জরের দ্বার ভাঙ্গিয়া তাহা সরাইয়া ফেলিয়াছে, পায়ের শিকল খসিয়া তাহাতেই লাগিয়া রহিয়াছে। ভয়ঙ্কর পতাকাস্বরূপ প্রিয় লাঙ্গুলটা নিজের ইচ্ছানুসারে উর্দ্ধে সঞ্চালিত করিতেছে, তাহাতে ভয়ঙ্কর ও বিশাল শরীর দুর্দ্দর্শনীয় হইয়াছে। বন্ধনগৃহ হইতে নির্গত হইয়া সেই সময়েই ক্ষুধায় অনেক প্রাণীর দেহ গ্রাস করিয়াছে, সেই দেহগুলির কঠিন অস্থি চর্ব্বণ

(१) पड़िवड्ढ-सिङ्खला-णिरोह-पड़िभङ्ग-सङ्कलिद इति पाठान्तरम्। (२) विलासुप्पेरन्तुव्वेल्लन्त-वहलतुङ्ग इत्यपि पाठः। (३) डमरुद्दाम इति भिन्नपाठः।

कठिण-दाढ़ाकराल-मुहकन्दरो, पअण्डवज्जणिग्घाद-(१) दारुण-चवेढ़ामोड़िद-कवलिदाणेअ-( २ ) णरतुरङ्ग-जंगलुग्गार-भरिद-गलगुहागव्भ-गम्भीर-घग्घरो, रल्लिगल्लूरण-सद्द-संदव्भ-परिपूरिद-णहत्थलो, णिहद-णिप्पेसिद-णट्ट-णिद्दाविदासेस-जण-णिवहो,

खण्डन टङ्कार कटकटायमान-करपत्र कठिन दंष्ट्राकराल मुखकन्दरः, प्रचण्ड वज्र-निर्घात-दारुण-चपेटामोटित कवलितानेक-नरतुरङ्ग--जाङ्गलोद्गार--भरित-गल-गुहागर्भ--गम्भीर-घर्घरः रल्लिगल्लूरणशब्दसन्दर्भ परिपूरित-नभस्तलः, निहत निष्पेषित-नष्ट-निद्रापिताशेषजन-

तथा प्रचण्डवज्रनिर्घातवत् दारुणो यश्चपेटः चपेटाघातः तेन आमोटितानि आदौ मर्द्दितानि पश्चात् कवलितानि ग्रस्तानि गलाधःकृतानीत्यर्थः यानि अनेकनरतुरङ्गजाङ्गलानि बहुतरमनुष्यघोटकमांसानि, तेषाम् उद्गारेण उदरात् पुनरुत्थापनेन भरितः परिपूर्णः यो गलगुहागर्भः गलविवरमध्यः तत्र गम्भीरः घर्घरः तद्रूपः शब्दो यस्य सः ।

"जाङ्गलं (क्ली) मांसम्"। "घर्घरः (पुं)···ध्वनिः"। इति च शब्दकल्पद्रुमः । "रल्लीति देशीयपदं दीर्घमधुरवाचि । गल्लूरणशब्दो मांसभक्षणसमय कुपित-शार्दूल-जाति-प्रयुक्तं कण्ठगर्जित"मिति त्रिपुरारिः । तेन रल्लिर्दीर्घमधुरः गल्लूरणशब्दः मांसभक्षण-कालीनध्वनिविशेषः तस्य सन्दर्भेण परम्परया परिपूरितं नभस्तलं गगनदेशो येन सः ।

করিবার সময়ে করাতের ন্যায় দাঁতগুলি 'ঠং ঠং' 'কট্ কট্' শব্দ করিতেছে, তাহাতে মুখের ভিতরটা ভীষণ দেখা যাইতেছে। প্রচণ্ড বজ্রাঘাতের ন্যায় দারুণ চপেটাঘাতে নিহত করিয়া অনেক মনুষ্য ও ঘোটকের মাংস ভক্ষণ করিয়াছে, সেই মাংসগুলি পুনরায় উদ্‌গিরণ করায় গুহাতুল্য গলগহ্বর পূর্ণ হইয়া গিয়াছে; তাহাতে গম্ভীর 'ঘর্ ঘর্' শব্দ হইতেছে। ঐ মাংস ভক্ষণের সময় ভয়ঙ্কর শব্দে গগনতল পরিপূর্ণ হইতেছে। কতকগুলি লোককে মারিয়া ফেলিয়াছে, অনেককে নিষ্পেষিত করিয়াছে, বহুলোক

(१) विषम-विषमप्रगुहामदारुण इति पाठोऽपि दृश्यते ।

(२) परिमिलिय इति पुस्तकान्तरे पाठः ।

माधवः। स्वगतम्। हन्त! पुण्यवानस्मि, यदहमतर्कितोपनतदर्शनोल्लसितलोचनया (१) अनया—(म)

अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसा निर्भरेण (२)।
कवलित इव कृत्स्नश्चक्षुषा स्फारितेन
प्रसभममृतवर्षेणेव (३) सान्द्रेण सिक्तः॥१६॥

(भ) मालतीति। दृष्ट्वा माधवमिति शेषः। सहसा सतताभिलषितप्रियतमदर्शनात् हर्षः, निर्जने माममुं दृष्ट्वा यदि कश्चित् पितरं निवेदयेदित्याशङ्कया साध्वसं भयं ताभ्यां सहेति सहर्षसाध्वसम्। अम्महे इति शौरसेन्यादिभाषायां सप्रमादचिन्ताद्योतकमव्ययम्। तथा चोक्तम्—

"चिन्तायां सप्रमादायाम् अम्महे इति कल्पितम्।
शब्दरूपं विशेषेण प्रयोक्तव्यं प्रयोक्तृभिः॥"

संस्कृते तु तादृशशब्दाभावात् यथाकथञ्चिदहोशब्देनानुवादः कृतः। एष माधवः।

(म) माधव इति। हन्त हर्षे। अतर्कितं पूर्वमचिन्तितम् अथ च उपनतम् उपस्थितं यत् दर्शनं ममावलोकनं तेन उल्लसिते उत्फुल्ले लोचने यस्यास्तया, अनया मालत्या। नद्ध इत्यादिश्लोकस्थक्रियाणां कर्तृपदमेतत्। अहमिति तु तत्कर्मपदम्।

अविरलमिति। अनया मालत्या, कर्त्र्या स्फारितेन प्रीतिप्रफुल्लेन चक्षुषा करणेन पुण्डरीकाणां सिताम्भोजानामिदमिति पौण्डरीकं तेन, दाम्ना माल्येन अविरलं घनं

(ভ) মালতী। ( মাধবকে দেখিয়া হর্ষ ও ভয়ের সহিত স্বগত ) ও মা! ইনিও এখানেই।

(ম) মাধব। ( স্বগত ) হায়! আমি ধন্য হইলাম; যেহেতু অতর্কিত দর্শন হওয়ায় উৎফুল্লনয়না মালতী—

(१) दर्शनोल्लसितया इति पाठभेदः। (२) दुग्धस्रोतसां निर्भरैण इति पाठोऽपि दृश्यते। (३) प्रसभममृतमेघेनेव इत्यपि पाठः।

बुद्ध। महाभाअ! (१) उज्जाणवाहिरत्थामुहे। (य)

माधवः साटोपं परिक्रामति (२)। (र)

काम। वत्स! अप्रमत्तो भूत्वा विक्रमस्व (३)। (ल)

(य) महाभाग! उद्यानबाह्यरथ्यामुखे।

सर्वाङ्गेषु निविड़ं यथा स्यात्तथा नद्धो बद्ध एव। निर्भरेण अतिमात्रेण दुग्धस्रोतसा च स्नपित इव। कृत्स्नः सकलोऽहं सर्वाणि ममाङ्गानीत्यर्थः कवलित इव चिरस्थानन्तर-लाभात् सतृष्णतया ग्रस्त इव। तथा सान्द्रेण घनेन अमृतवर्षेण सुधावृष्ट्या प्रसभं बलेन सिक्त इव। सर्वत्र स्मितसमेतत्वात् प्रीतिनिर्म्मलधवलत्वाच्चे ति भावः।

अत्र भावाभिमानि-वाच्य-क्रियोत्प्रेक्षाचतुष्टयस्य परस्परनिरपेक्षतया संसृष्टिरलङ्कारः। समुच्चयनीयेन दुग्धस्रोतसेत्यनेनैव समभिव्याहारात् चकारस्य तत्पूर्वपाठेऽपि न अक्रमता-दोष इति वदन्ति। मालिनी वृत्तम्॥१६॥

(य) बुद्धे ति। मालतीमाधवयोरुक्तिद्वयस्य स्वगतत्वात् 'क्वासौ' इति माधवेन पूर्वं पृष्टस्योत्तरमाह महाभागेति। उद्यानबाह्यरथ्यामुखे शार्दूलेनाभिभूयमाना मदयन्तिका वर्त्तत इत्यर्थः।

(र) माधव इति। साटोपं सदर्पम्, परिक्रामति तत्र गन्तुं पदक्षेपं करोति।

(ल) कामेति। अप्रमत्तः सावधानः सन्। विक्रमस्व मदयन्तिकोद्धाराय उत्-सहस्व शक्तिं प्रकाशयेत्यर्थः। "वृत्त्युत्साहतायनेषु क्रम" इति वचनादिह्वादात्मनेपदम्।

---

পদ্মের মালাদ্বারা যেন ঘনভাবে বন্ধন করিলেন, প্রচুর দুগ্ধস্রোতে যেন স্নান করাইলেন, প্রীতিপ্রফুল্লনেত্রে যেন আমার সমস্ত অঙ্গ কবলিত করিলেন এবং গাঢ় অমৃতবৃষ্টিদ্বারাই যেন আমাকে বলপূর্ব্বক সিক্ত করিলেন ॥১৬॥

(য) বুদ্ধরক্ষিতা। মহাশয়! উদ্যানের বাহিরে রাস্তার উপরে।

(র) ( মাধব সদর্পে পদক্ষেপ করিতে লাগিলেন )।

---

(१) एसो क्खु, इत्यधिकः पाठः क्वचित्। (२) माधवः। (साटोपं) अप्रमत्तोऽस्मि इति भिन्नः पाठः। (३) अयं पाठः क्वचिन्नास्ति।

**मालती।** जनान्तिकम्। **लवङ्गिए! हद्धी हद्धी! (१) संसओ क्खु जादो।** (व)

सर्व्वाः त्वरितं परिक्रामन्ति (२)। (श)

**माधवः।** अग्रे दृष्ट्वा (३) सबीभत्सम्। **अहह!।** (ष)

**संसक्तत्रुटितविवर्त्तितान्त्रजाल-**
**व्याकीर्णस्फुरदपवृत्तकण्ठखण्डः।**
**कीलालव्यतिकरगुल्फदघ्नपङ्कः**
**प्राचण्ड्यं वहति नखायुधस्य मार्गः॥१७॥**

(व) लवङ्गिके! हा धिक् हा धिक्! संशयः खलु जातः।

(व) मालतीति। संशयः, मदयन्तिका शार्दूलाक्रमणात् मुक्तिं प्राप्स्यति न वेति सन्देहः।

(श) सर्वा इति। परिक्रामन्ति मदयन्तिकाया अवस्थामवलोकयितुमित्यर्थः।

(ष) माधव इति। सबीभत्सं सघृणम्। अहहेत्यद्भुते खेदे वा।

संसक्तेति। संसक्तानि पथिपार्श्वस्थस्तम्भादौ प्रथमं संलग्नानि, पश्चात् त्रुटितानि महाकर्षणेन छिन्नानि, विवर्त्तितानि तत्क्षणात् कण्ठेष्वेव सशब्दं परावर्त्तितानि पथिपार्श्वस्थस्तम्भादौ दृढलग्नांशानपहाय आनीतानीत्यर्थः यानि अन्त्रजालानि नाड़ीविशेषसमूहाः (अन्त्रं आँत्री, आँत् इति यस्य वङ्गभाषा) तैर्व्याकीर्णो व्याप्तः, स्फुरतां सद्योव्यापादितत्वात् स्पन्दमानानाम् अपवृत्तानां विपर्य्यस्तानां कण्ठानां कबन्धानां खण्डा यस्मिन् सः।

(ল) কামন্দকী। বৎস! সাবধান হইয়া বীরত্ব প্রকাশ কর।

(ব) মালতী। (লবঙ্গিকার প্রতি চুপি চুপি) হায় হায় লবঙ্গিকে! মদয়ন্তিকার জীবনে সংশয়ই হইয়াছে।

(শ) (সকলে তাড়াতাড়ি পদক্ষেপ করিতে লাগিল)।

(ষ) মাধব। (সম্মুখে দৃষ্টিপাত করিয়া ঘৃণার সহিত) অহহ!

---

(१) कुत्रचित् 'हद्धी हद्धी' इति पाठो नास्ति।

(२) अयं पाठोऽपि कुत्रचित् नास्ति। (३) एष पाठोऽपि क्वचित् न दृश्यते।

अहो! प्रमादः। (स)

वयं बत विदूरतः क्रमगता पशोः कन्यका

सर्व्वाः। हा मदअन्तिए!। (ह)

(ह) हा मदयन्तिके!।

तथा कीलालानां शोणितानां व्यतिकरेण सम्मिश्रणेन गुल्फदघ्नः गुल्फपरिमाणः पङ्कः कर्द्दमो यत्र स तथोक्तः, नखा एवायुधानि यस्य तस्य शार्द्दूलस्य मार्गः तत्स्वल्पातिक्रान्तपथः प्राचण्ड्यम् अतिभयङ्करतां वहति धारयति।

अत्र स्वभावोक्तिरलङ्कारः, तथा प्राचण्ड्यवहनं प्रति प्रथमोक्तपदद्वयार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

"कवन्ध: (पुं) कबन्धः।" "कीलाल (क्ली)···रक्तम्" इति च शब्दकल्पद्रुमः।

गुल्फदघ्नेति "प्रमाणे मात्रट्द्वयसट्दघ्नट्" इति दघ्नट्प्रत्ययः। पृथ्वी वृत्तम्॥१७॥

(स) अहो इति। प्रमादोऽनवधानता रक्षिवर्गस्येति शेषः। यदस्यां विपदि कोऽपि रक्षिपुरुषो नास्तीति भावः। अथवा प्रमादो विपत्।

विपदमेवाह वयमिति। बत खेदे। वयं विदूरतः विशेषदूरे तिष्ठाम इति शेषः, कन्यका मदयन्तिका तु पशोः शार्द्दूलस्य क्रमम् एकमेव पादक्षेपं गता एकेनैव पादक्षेपेण लभ्ये स्थाने वर्त्तत इत्यर्थः। अतएवास्माभिरस्या रक्षणस्यासम्भवात् अप्रतिकार्य्याविपदिति भावः।

এই বাঘ যে পথে আসিয়াছে, সেই পথটা অতি ভয়ঙ্করভাব ধারণ করিয়াছে; মানুষের দেহগুলি উল্‌টিয়া পড়িয়া ছাটাইতেছে, উহার নাড়ীগুলি কিছুতে বাধিয়াছিল, তাহা জোরে আকর্ষণ করায় ছিঁড়িয়া ফিরিয়া আসিয়া ঐ দেহগুলিতেই আবার ব্যাপ্ত রহিয়াছে, এবং রক্তের স্রোতে গোরালি পরিমাণ কাদা হইয়াছে॥১৭॥

(স) হায়! বড়ই বিপদ্।

হায়! আমরা অতিদূরে আছি, কন্যাটী বাঘের নিকটে পড়িয়াছে।

(হ) সকলে। হা মদয়ন্তিকে!।

कामन्दकीमाधवौ। सहर्षाकूतम्। (ख)

कथं तदवपातिता-(१) दधिगतायुधः पूरुषात् (२)।

कुतोऽपि मकरन्द एत्य सहसैव मध्ये स्थितः

इतराः। साहु, महाभाअ! साहु। (क)

कामन्दकीमाधवौ। सभयम्। दृढ़ञ्च पशुना हतो

(क) साधु, महाभाग! साधु।

(ख) कामेति। विपन्नाया उपयुक्तरक्षकापगमादुभयोरेव हर्षः। अनेन रक्षार्थमागमनेन मकरन्दश्चेत् तदा मदयन्तिकामकरन्दयोर्जातानुरागः सहसैव वृद्धिमुपयास्यतीति कामन्दक्या आकूतमभिप्रायः, एतेन शूरम्मन्यस्य मकरन्दस्य पूर्णपरीक्षा भवेदिति माधवस्याकूतम्, ताभ्यां सहेति सहर्षाकूतम्।

कथमिति। हर्षे कथंशब्दः। तेन शार्दूलेन अवपातितात् निहतात् पूरुषात् कस्माच्चित् नरात् अधिगतं लब्धम् आयुधम् असिर्येन सः अधिगतायुधः मकरन्दः कुतोऽपि अस्माभिरज्ञातदेशात् एत्य आगत्य सहसैव कियन्तमपि विवेचनविलम्बमकृत्वैव मध्ये मदयन्तिकाशार्दूलयोरन्तराले स्थितः, मदयन्तिकारक्षणाय शार्दूलं निहन्तुमिति भावः।

(क) इतरा इति। साधु महापौरुषं कृतमिति शेषः। हर्षे साधुशब्दस्य द्विरुक्तिः।

दृढ़मिति। किञ्चेति चार्थः। पशुना शार्दूलेन दृढ़ं तीव्रम् आहतः नखैरेव क्षतिप्रहतः मकरन्द इत्यर्थः। अतएवोक्तं सभयमिति।

(ক) কামন্দকী ও মাধব। ( হর্ষ ও ভিন্ন ভিন্ন অভিপ্রায়ের সহিত )

ব্যাঘ্রনিহত কোন পুরুষের নিকট হইতে একখানি তরবারি লইয়া মকরন্দ, কোথাও হইতে আসিয়া হঠাৎ উভয়ের মধ্যে উপস্থিত হইয়াছে।

(ক) অপর সকলে: সাধু, মহাশয়! সাধু।

কামন্দকী ও মাধব। ( ভয়ের সহিত ) হায়! ব্যাঘ্র তীব্র প্রহার করিল।

(१) तदभिपातितादिति पाठान्तरम्। (२) सत्त्वादिति पाठभेदः।

इतराः। अत्याहितं अत्याहितं (१)। (ख)

कामन्दकीमाधवौ। सहर्षम्। व्यसुरसौ कृतस्त्वामुना (२) ॥१८॥

(ख) अत्याहितम् अत्याहितम्।

(ख) इतरा इति। अत्याहितं महाभयमुपस्थितम्। अमुना व्याघ्रकृतप्रहारेणेति भावः।

व्यसुरिति। अमुना मकरन्देन असौ शार्दूलः विगता असवः प्राणा यस्येति व्यसुः, सः कृतश्च। प्रहारानन्तरमेव असिप्रहारेण शार्दूलो व्यापादितश्चेत्यर्थः। अतएवोक्तं सहर्षमिति। चकारोऽयं तात्कालिकत्वसूचनार्थः। अन्योऽयं महावीरो मकरन्द इति भावः।

अत्र रौद्ररसस्य वासहर्षाख्यभावयोरङ्गत्वेन रसवदलङ्कारः। तथात्र पृथ्वीवृत्ते अष्टमाक्षरे यतेर्नियमात् 'कुतोऽपि मकरन्द एत्य' इत्यत्र तदभावात् काव्यादर्श-सरस्वतीकण्ठाभरणयोर्मते यतिभङ्गदोषः। तथा च काव्यादर्शे—

"श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः।

तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ॥"

सरस्वतीकण्ठाभरणे—"अस्थाने विरतिर्यस्य तत्तु भग्नयतीष्यते।"

किन्तूपजीव्यसाहित्यदर्पणकारमते तद्दोषानुल्लेखेनानङ्गीकारात् पुरुषोत्तमादिमते यतेरेवास्वीकारात् भगवच्छङ्कर-कालिदास-मुरारि-जयदेवप्रभृतिभिर्बहुतर-यत्यभावव्यवहाराच्च, नोक्तदोषः। किन्तु प्रथमे पादे शार्दूलरूपपशुविशेषे मदयन्तिकारूपे कन्याविशेषे च वक्तव्ये 'पशोरिति कन्यके'ति च सामान्यद्वयमुक्तम्, द्वितीये असिरूपायुधविशेषे वाच्ये 'अधिगतायुध' इति सामान्यम्, तथा चतुर्थेऽपि शार्दूलरूपपशुविशेषे वक्तव्ये 'पशुने'ति सामान्यमुक्तमिति चत्वार एव विशेषे अविशेषाख्यदोषाः, किञ्च प्रथमे पादे भेदबोधकः किन्तुशब्दस्तुशब्दो वा वक्तव्यः किन्तु नोक्त इति वाच्यानभिधानतादोषश्च। तेन श्लोकोऽयमेवं पठनीयः। यथा—

(খ) অপর সকলে। অত্যাহিত হইল! অত্যাহিত হইল!।

কামন্দকী ও মাধব। (আনন্দের সহিত) মকরন্দও বাঘটাকে মারিয়া ফেলিল ॥১৮॥

(१) कुत्रचित् पाठोऽयं नास्ति। (२) प्रमथितश्च दंष्ट्रायुध इति भिन्नः पाठः।

इतराः। सानन्दम्। दिट्ठिआ पड़िहदं दुज्जादं (१)। (ग)

काम। साकूतम्। कथं व्यालनखरप्रहारनिःसृतरक्तप्रवाहः (२)

(ग) दिष्ट्या प्रतिहतं दुर्जातम्।

अमुष्य मदयन्तिका क्रमगता, त्वहं दूरतः
कथं तदभिपातितादधिगतासिकः पूरुषात्।
कुतोऽपि सहसाऽन्तरेऽव मकरन्द एत्य स्थितः
दृढ़श्च प्रहतोऽमुना, व्यसुरसौ च सख्या कृतः॥

इति पाठे तु यतिभङ्गदोषोऽप्यपास्तः। तथा च अमुष्येति शार्दूलस्यैव निर्द्देशः। किन्तुशब्दार्थे तुशब्दः। वयमिति प्रकृतपाठे "वाऽस्मदश्चे"ति बहुवचनमासीत्, एतत्पाठे तु अहमिति तद्वैकल्पिकमेवपदम्। अधिगतः असिर्येनेति अधिगतासिकः बहुव्रीहौ कप्रत्ययः। सहसैवेति प्रकृतपाठे एवशब्दस्य न तादृश्यावश्यकता, सुतरां सहसेतिमात्रोक्तावपि न पुनर्नियमेऽनियमाख्यदोषप्रसङ्गः। अव, दृश्यमाने अन्तरे इत्यर्थः। प्रहत इत्यत्र प्रशब्दस्य संयुक्तत्वेऽपि तत्पूर्वस्य "प्रह्रे वे"ति विकल्पेन दीर्घत्वाङ्गीकारात् "झटिति प्रविश गेह" मित्यादिवत् न छन्दोभङ्गः। अमुनेति पुनः शार्दूलस्यैव निर्द्देशः। सख्येति स्वसखित्वेनैवोपस्थितेः स्ववयस्येन मकरन्देनेत्यर्थः। इति सर्वमवदातमिति सुधीभिर्विवेचनीयम्।

"कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्चे"ति मेदिनी।

एकस्यैव पदस्य अन्तराऽन्तरा जनान्तरवाक्यान्तरवती भवभूतेरियमतीवचमत्कारिणी रचनाचातुरीति काव्यरसिकाः परिमोदन्ते।

पृथ्वी वृत्तम्॥१८॥

(ग) इतरा इति। दुर्जातं व्यसनं विपदिति यावत्, प्रतिहतं मकरन्देन नाशितं शार्दूलवधादिति भावः। "दुर्जातं व्यसने क्लीवमसम्यग्जातवस्तुनि" इति केशवः।

(घ) कामेति। अयं मदयन्तिकामकरन्दयोः परस्परसंस्पर्श एव भाविमहानुराग-

(গ) অপর সকলে। (আনন্দের সহিত) ভাগ্যবশতঃ বিপদ্ নষ্ট হইয়াছে।

(१) इतराः। अव्वाहिदं इति पाठान्तरम्। (२) रक्तनिवह इति क्वचित् पाठः।

क्षितितलनिषन्न-(१) खड्गलतावष्टम्भनिश्चलः, सम्भ्रान्तमदयन्तिकावलम्बितस्ताम्यतीव वत्सो मे मकरन्दः (२)। (घ)

इतराः। हद्धी हद्धी! गाढ़प्पहारदाए किलम्मदि महाभाओ। (ङ)

माधवः। कथं प्रमुग्ध एव। कामन्दकीं प्रति (३)। भगवति! परित्रायस्व माम्। (च)

(ङ) हा धिक् हा धिक्! गाढप्रहारतया क्लाम्यति महाभागः।

निदानमित्यभिप्राय आकूतं तेन सहेति साकूतम्। सम्भ्रमे कथं शब्दः। व्यालस्य हिंस्रपशोः शार्दूलस्य, नखरप्रहारेण निःसृतो रक्तप्रवाहो यस्य सः। क्षितितले निषन्ना लग्ना या खड्गलता तस्या अवष्टम्भेन आश्रयेण निश्चलो निस्पन्दः। सम्भ्रान्तया त्वरान्वितया मदयन्तिकया अवलम्बितो धृतः। ताम्यति ग्लायति मुह्यतीति यावत्।

"अथ व्यसद्दे व्यालस्तथा हिंस्रपशौ स्मृत" इति हलायुधः।

(ङ) इतरा इति। गाढ़स्तीव्रः प्रहारो यस्य तस्य भावः, तया। क्लाम्यति मुह्यति।

(च) माधव इति। कथं शब्दः सम्भावनायाम्। प्रमुग्धो मूर्च्छितः। मां मित्रविपत्तिं विपन्नमिति भावः। अत्र विरोधो नाम प्रतिमुखसन्धेरङ्गम्। तथा च साहित्यदर्पणे—

"विरोधो व्यसनप्राप्तिः।"

(घ) কামন্দকী। ( বিশেষ অভিপ্রায়ের সহিত ) হায়! ব্যাঘ্রের নখপ্রহারে রক্ত নির্গত হইতেছে, তাই ভূতলসংলগ্ন তরবারি আশ্রয় করিয়া মকরন্দ নিস্পন্দ রহিয়াছে, মদয়ন্তিকা তাড়াতাড়ি আসিয়া উহাকে ধারণ করিয়াছে; আমার বাছা মকরন্দ যেন মূর্চ্ছিত হইতেছে।

(ঙ) অন্য সকলে। হায়! হায়! গুরুতর প্রহারে মহাত্মা ক্লান্ত হইয়া পড়িয়াছেন।

(१) विषक्त इत्यपि पाठः। (२) ताम्यति वत्सो मकरन्द इति पाठभेदः।

(३) क्वचिदयं पाठो नास्ति।

काम । वत्स ! अतिकातरोऽसि । नन्वेहि पश्यावस्तावत् (१) । (छ)

इति निष्क्रान्ताः सर्वे (२) ।

## इति मालतीमाधवे शार्दूलविद्रावणो नाम (३) तृतीयोऽङ्कः ।

(छ) कामेति । आमन्त्रणे ननुशब्दः । अस्य हि तृतीयाङ्कान्ते बुद्धरक्षितादिभिः पात्रैस्तु तृतीयाङ्कस्याविच्छेदेन सूचितत्वात्, चतुर्थाङ्कस्य च एतदङ्कस्याङ्गविशेषवदवतीर्णत्वाच्च 'प्रविश्य सम्भ्रान्ता बुद्धरक्षिता । परित्तायध, एसा णो पियसही' इत्यादि 'नन्वेहि पश्यावस्ताव'दित्यन्तः अङ्कावतारो नामार्थोपक्षेपकविशेषः । तथा च साहित्यदर्पणे—

"अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥"

इति महामहोपाध्याय श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां मालतीमाधवटीकायां भावमनोहरायां तृतीयाङ्कविवरणं समाप्तम् ॥०॥

(চ) মাধব। হায় ! মূর্চ্ছিতই হইল। (কামন্দকীর প্রতি) ভগবতি ! আমাকে রক্ষা করুন।

(ছ) কামন্দকী। বৎস ! তুমি বড়ই কাতর হইয়াছ। অতএব আইস, দেখি যাইয়া।

( ইহার পর সকলের প্রস্থান। )

শার্দ্দূলবিদ্রাবণনামে তৃতীয় অঙ্ক সমাপ্ত।

(१) तदेहि तावत् पश्याव इति भिन्नः पाठः । (२) परिक्रम्य निष्क्रान्ताः सर्वे इति पाठः क्वचित् । (३) क्वचिदेष पाठो नास्ति ।

# चतुर्थोऽङ्कः ।

—०:*:०—

ततः प्रविशतो मदयन्तिकामालतीभ्यामवलम्ब्यमानौ मुग्धौ मकरन्दमाधवौ, सम्भ्रान्ता कामन्दकी बुद्धरक्षिता लवङ्गिका च (१)। (क)

**मद। पसोद भअवदि! परित्ताहि (२) मदअन्तिआणिमित्तं संसइदजीविदं विवसाणुकम्पिणं (३) महाभाअं। (ख)**

(ख) प्रसीद भगवति! परित्रायस्व मदयन्तिकानिमित्तं संशयितजीवितं विपन्नानुकम्पिनं महाभागम्।

(क) तत इति। मदयन्तिकया अवलम्ब्यमानो मकरन्दः, मालत्या च माधव इति यथासंख्येनान्वयः। न चानयोरीतेन प्रागल्भ्यमाशङ्कनीयं कस्यचिदपि विपदागमे तत्प्रतिकारचेष्टाया दयाप्रणोदितोपकाररूपत्वात् सहृदयमात्रस्यैव तत्सम्भवात्।

(ख) मदेति। महाभागं मकरन्दम्। सर्वेषामेव जीवनदानहननयोः कामन्दक्याः सामर्थ्यमस्तीति मन्यमानाया इयमनुनयोक्तिरिति ज्ञेयम्।

(क) তদনন্তর মদয়ন্তিকাধৃত মূচ্ছিত মকরন্দ, মালতীধৃত মূর্চ্ছিত মাধব এবং ব্যস্তভাবে কামন্দকী, বুদ্ধরক্ষিতা ও লবঙ্গিকার প্রবেশ।

(খ) মদয়ন্তিকা। ভগবতি! আপনি প্রসন্ন হউন, মদয়ন্তিকার জন্য যাঁহার জীবন সংশয় হইয়াছে এবং যিনি বিপন্নের প্রতি দয়া করিয়া থাকেন, সেই মহাত্মাকে রক্ষা করুন।

(१) ततः प्रविशतो मदयन्तिकालवङ्गिकाभ्यामवलम्बितौ प्रमुग्धौ माधवमकरन्दौ, सम्भ्रान्ता कामन्दकी मालती बुद्धरक्षिता च। इति पाठान्तरम्।

(२) परित्ताहि परित्ताहि इति द्विरुक्तिः क्वचित्।

(३) आवण्णजणाणुकम्पिणं इति पाठभेदः।

इतराः। हद्धी हद्धी! किं दाणिं अम्हेहिं एत्थ पेक्खिदव्वं। (ग)

काम। उभौ कमण्डलूदकेन सिक्त्वा। ननु भवत्यः! पटाञ्चलैर्वीजयध्वम् (१)।

मालत्यादयस्तथा कुर्वन्ति।

मक। समाश्वस्यावलोक्य च। वयस्य! अतिकातरोऽसि, किमेतत्, ननु स्वस्थ एवास्मि। (घ)

मद। सहर्षम्। अम्महे! पडिवुद्धं दाणिं मअरन्दपुण्णिमाचन्देण (२)। (ङ)

(ग) हा धिक् हा धिक्! किमिदानीमस्माभिरत्र प्रेक्षितव्यम्।

(ङ) अहो! प्रतिबुद्धमिदानीं मकरन्दपूर्णिमाचन्द्रेण।

(ग) इतरा इति। माधवमकरन्दयोर्जीवनापायमाशङ्क्य शोककार्य्यादियमुक्तिः। अत्र कामन्दक्याः कृतेऽप्यनुनये माधवमकरन्दयोर्मूर्च्छापनोदनोपायानवलम्बनदर्शनेन तदनुनयस्यापरिग्रहसम्भावनात् विधुतं नाम प्रतिमुखसन्धेरङ्गम्। "कृतस्यानुनयस्यादौ विधुतं त्वपरिग्रहः।" इति साहित्यदर्पणलक्षणात्।

(घ) मकेति। स्वस्मिन् स्वभावे तिष्ठतीति स्वस्थः प्रकृतिस्थः।

(গ) অন্য সকলে। হায়! হায়! এখন আমাদের এখানে কি দেখিতে হইবে।

কামন্দকী। ( মাধব ও মকরন্দকে কমণ্ডলুর জলে সিক্ত করিয়া ) ওহে! তোমরা কাপড়ের অাঁচল দিয়া বাতাস কর।

( মালতীপ্রভৃতি তাহাই করিতে লাগিলেন। )

(ঘ) মকরন্দ। ( চৈতন্যলাভ করিয়া ও দর্শন করিয়া ) বয়স্য! তুমি বড়ই কাতর হইয়াছ, এ কি, আমি সুস্থই আছি।

(१) पटाञ्चलेन वत्सौ वीजयन्तु इत्यपि पाठः। (२) पुण्णचन्देण इति भिन्नः पाठः।

मालती। माधवस्य ललाटे हस्तं दत्त्वा। महाभाग! दिट्टिआ वड्ढसि, णं भणामि पड़िवस्सचेदणो महाभाओ त्ति (१)। (च)

माधवः। आश्वस्य। वयस्य! साहसिक! एह्येहि। इत्यालिङ्गति। *

काम। उभौ शिरस्याघ्राय। दिष्ट्या जीवितवत्साऽस्मि (२)। (छ)

(च) महाभाग! दिष्ट्या वर्द्धसे, ननु भणामि प्रतिपन्नचेतनो महाभाग इति।

(ङ) मदेति। प्रतिबुद्धं चैतन्यं लब्धम्। मकरन्दपूर्णिमाचन्द्र इत्यनेन नयनाह्लादकत्वसूचनात् महानतुरागो व्यज्यते।

(च) मालतीति। मूर्च्छायाः शीतक्रियापनेयत्वात् तदर्थमेव माधवललाटे हस्तार्पणम्। अवधारणे ननुशब्दः। प्रतिपन्नचेतनः लब्धसंज्ञः, महाभागो मकरन्दः। यस्य मूर्च्छादर्शनात् वात्सल्येन त्वं मूर्च्छितोऽसि, स मकरन्दो लब्धसंज्ञो जातः, सुतरामिदानीमाश्वसिहीति भावः। पूर्वोक्तहेतोरेवात्रापि प्रागल्भ्यं नाशङ्कनीयम्।

* माधव इति। आश्वस्य लब्धसंज्ञो भूत्वा।

(छ) कामेति। शिरस्याघ्राणमतीवस्नेहद्योतकम्। जीवितो वत्सो वत्सकल्यो

(ঙ) মদয়ন্তিকা। (আনন্দের সহিত) বেশ! মকরন্দরূপ পূর্ণিমার চন্দ্র এখন চৈতন্যলাভ করিয়াছেন।

(চ) মালতী। (মাধবের কপালে হাত দিয়া) মহাত্মন্! ভাগ্যবশতঃ আপনার উন্নতি হইয়াছে। আমি সত্য বলিতেছি, মহাত্মা মকরন্দ চৈতন্য লাভ করিয়াছেন।

* মাধব। (চৈতন্য লাভ করিয়া) সখে! সাহসিক! এস এস। (এই বলিয়া আলিঙ্গন করিলেন)।

(१) ढहि लवङ्गिए! दिट्टिआ वड्ढसि, णं भणामि पड़िबुद्धो ज्जेव ट्टे पिअवअस्सो पड़िवस्सचेअणो महाभाओ मअरन्दो त्ति, क्वचिदीदृशः पाठो दृश्यते।

(२) जीववत्साऽस्मि इति पाठान्तरम्।

इतरा:। पिअं पिअं (१) णो संवुत्तं। (ज)

सर्व्वा: हर्षं नाटयन्ति।

बुद्ध। जनान्तिकम्। हला (२) मदअन्तिए! एसो ज्जेव सो। (झ)

मद। तदा ज्जेव जाणिदं मए, (३) जह एसो माहवो, अअं वि सो जणो त्ति। (ञ)

(ज) प्रियं प्रियं न: संवृत्तम्।

(झ) हला मदयन्तिके! एष: एव स:।

(ञ) तदैव ज्ञातं मया, यथा एष माधव:, अयमपि स जन इति।

पुत्रतुल्यौ माधवमकरन्दौ यस्या: सा। अद्य युवयोर्जीवनं सौभाग्यादेव मया लब्धमिति भाव:।

"वत्सस्तर्णकपुत्रादि वर्षे वत्समन्तु वक्षसि।" इति विश्व:।

(ज) इतरा इति। प्रियं प्रियमित्यतिशये द्विरुक्ति:। उभयोर्जीवनमिति शेष:।

(झ) बुद्धेति। एष एव दृश्यमानो मकरन्द एव स:। यस्तवान्तिके रूपौदार्य्य-शौर्य्यादिगुणवत्तया बहुशो मया कथित इति शेषवाक्यं बोद्धव्यम्।

(ञ) मदेति। यदैव शार्दूलप्रहारेण मूर्च्छितमेनमवलोक्य 'हा वयस्य!' इत्यादि विलपन् माधवोऽस्यान्तिकमुपगत: तदैवेत्यर्थ:। अस्तकृद्दर्शनान्माधवस्तु परिचित एव,

(छ) कामन्दकी। (माधव ও মকরন্দের মস্তক আঘ্রাণ করিয়া) ভাগ্যে আমার বাচারা বাঁচিয়াছে।

(জ) অন্য সকলে। আমাদের অভীষ্টসিদ্ধ হইয়াছে।

(সকলে আনন্দ অভিনয় করিতে লাগিল।)

(ঝ) বুদ্ধরক্ষিতা। (মদয়ন্তিকার নিকট চুপি চুপি) ওলো মদয়ন্তিকা! ইনিই সেই।

(१) क्वचित् द्विरुक्तिर्नास्ति। (२) सहि! इति क्वचित् पाठ:।

(३) सहि! जाणीदं एव्व मए इति पाठभेद:।

बुद्ध । अवि सच्चवादिणी अहं ? । (ट)

मद । ण क्खु अह्मारिसेसु (१) तुह्मारिसीओ पक्खवादिणीओ होन्ति । माधवमवलोक्य । सहि ! मालदीए वि रमणिज्जो इमस्सिं महाणुहावे अणुराअप्पवादो । इति (२) मकरन्दमिव सस्पृहमवलोकयति । (ठ)

(ट) अपि सत्यवादिनी अहम् ? ।

(ठ) न खलु अस्मादृशेषु युष्मादृश्यः पक्षपातिन्यो भवन्ति । सखि ! मालत्या अपि रमणीयः अस्मिन् महानुभावे अनुरागप्रवादः ।

श्रुतश्च एष एव तस्यै कमार्तो वयस्य इति, सुतरां माधवस्यान्तोऽद्दिश्य वयस्येत्यादिविलापासम्भवात् मत्परित्राणाय शार्दूलप्रहारविकलोऽयमपि स जन इति ज्ञातमिति भावः । मकरन्द इति नामाग्रहणात् मनसा मकरन्दः पतितेनावधृत इति व्यज्यते ।

(ट) बुद्धेति । अपि प्रश्ने । मदुक्त रूपौदार्य्यशौर्य्यादिगुणवत्त्वमस्य प्रत्यक्षीकृतं न वेत्यर्थः ।

(ठ) मदेति । अस्मादृशेषु सरलस्निग्धसखीजनेषु, युष्मादृश्यः कामन्दकीसहचारिण्यः, पक्षपातिन्यः कस्यापि जनस्य असत्यपि गुणे पक्षपातेन तत्सत्ताप्रतिपादिन्यः न भवन्ति । अनृतवादित्वेन कामन्दकीप्रियत्वानुपपत्तेः सुतरां त्वदुक्तसर्व्वगुणवानयमिति भावः ।

अस्मिन् महानुभावे माधवे । रमणीयो मनोहरः, परस्परसुयोग्यत्वेन सर्व्वेषामेव मनोमतत्वादिति भावः । अनुरागप्रवादस्यापि रमणीयत्वे अनुरागस्यातिरमणीयत्वमर्थादायातम् । एतेन नन्दनस्य मालतीप्राप्तिरसम्भवैवेति व्यज्यते ।

(ঞ) মদয়ন্তিকা। আমি তখনই জানিয়াছি যে, ইনি মাধব, আর ইনি সেই ব্যক্তি।

(ট) বুদ্ধরক্ষিতা। কেমন আমি সত্যবাদিনী ত ?।

(ঠ) মদয়ন্তিকা। তোমাদের মত ব্যক্তিরা আমাদের মত ব্যক্তির বিষয়ে অন্যের পক্ষপাতী হয় না। ( মাধবকে দেখিয়া ) সখি ! এই

(१) अम्हारिसेसु इति भिन्नः पाठः । (२) पुनर्मकरन्दमेवेति पाठोऽपि दृश्यते ।

काम। स्वगतम्। रमणीयोर्जितं हि मदयन्तिकामकरन्दयोर्दैवादद्य दर्शनम्। प्रकाशम्। वत्स! मकरन्द! कथं पुनरायुष्मानस्मिन्नवसरे मदयन्तिकाजीवितपरित्राणहेतोर्भगवता दैवेन सन्निधापितः। (ड)

मक। अद्याहमन्तर्नगर एव (१) काञ्चिद्वार्त्तामुपश्रुत्य माधवस्य चित्तोद्वेगमधिकमाशङ्कमानस्त्वरितमवलोकिता-निवेदितकुसुमाकरोद्यानवृत्तान्तः परापतन्नेव शार्दूलावस्कन्द-गोचरगतामेता-(२) मभिजातकन्यकामभ्युपपन्नवानस्मि। (ढ)

(ड) कामेति। दर्शनं साक्षात्कारः। रमणीयं मनोहरम्। उद्देश्यविशेषाभावेन निर्द्दोषत्वात् दर्शीपनतत्वेन केनाप्यनाशङ्कनीयत्वाच्चे ति भावः। ऊर्जितं शार्दूलव्यापादनेन बलप्रकाशसहितम्। अनयोः कर्म्मधारयः। आयुष्मान् दीर्घायुर्वि शिष्टत्वम्। मदयन्तिकाया जीवितपरित्राणहेतोः जीवनरक्षार्थम्। सन्निधापितः आसन्नीकृतः। "आयुष्मानिति वृद्धेन वाच्यो बालः शुभाशयः।" इति भरतोक्तेरायुष्मानित्युक्तम्।

(ढ) मकेति। अन्तर्नगर एव नगरमध्य एव माधवस्य चित्तोद्वेगं लोकपरम्परया तद्वार्त्ताश्रवणेनेति भावः। अवलोकितया निवेदितः कुसुमाकरोद्यानस्य वृत्तान्तो मालती-

মহাত্মার উপর মালতীর অনুরাগের প্রবাদও মনোহর বটে! (এই বলিয়া মকরন্দকে ইচ্ছার সহিত দেখিতে লাগিল)।

(ড) কামন্দকী। (স্বগত) আজ দৈববশতঃ মদয়ন্তিকা ও মকরন্দের এই পরস্পর সন্দর্শনটী ভালই হইয়াছে, ইহার ভিতরে তেজস্বিতাও আছে। (প্রকাশ্যে) বৎস! মকরন্দ! মদয়ন্তিকার জীবনরক্ষার জন্য ভগবান্ বিধাতা এই সময়ে তোমাকে কি প্রকারে উপস্থিত করাইলেন?।

(१) अन्तर्नगरमेव इति पाठान्तरम्।

(२) शार्दूलावस्कन्दगोचरामिमामिति पाठभेदः।

मालतीमाधवौ विमृशतः। (ण)

काम। स्वगतम्। वृत्तान्तेन (१) खलु मालतीप्रदानेन भवितव्यम्। प्रकाशम्। वत्स! माधव! दिष्ट्या सुहृद्बुद्ध्या (२) वर्द्धितोऽसि मालत्या, तदयमवसरः प्रीतिदानस्य (३)। (त)

माधवसन्निधानादिवार्त्ता यस्मै सः। त्वरितं परापतन्निव सत्वरमवागच्छन्निव। शार्दूलस्य अवस्कन्दगोचरगताम् आक्रमणविषयताप्राप्ताम् आक्रमणयोग्यामिति यावत्। अभिजातकन्यकां कुलीनकुमारीम्। अस्याः सौन्दर्य्यादिदर्शनेन कौलीन्यम्, सीमन्तसिन्दूरादिदर्शनाभावेन च कौमार्य्यमनुमितमिति भावः। अभ्युपपन्नवान् प्राप्तवान्।

"अभिजातः कुलीने स्यात् न्याय्यपण्डितयोस्त्रिषु।" इति मेदिनी।

(ण) मालतीति। विमृशतः 'का नाम सा वार्त्ते'ति विचिन्तयतः ऊर्द्धनयनभ्रू-सङ्कोचनादिना तच्चिन्तामभिनयत इत्यर्थः।

(त) कामेति। मालतीप्रदानेन नन्दनाय मालतीदानविषयकेण। सा खलु वार्त्ता नन्दनाय मालतीदानविषयिका भवेदित्यनुमीयत इत्यर्थः। अस्माभिरपि यथाकथञ्चित्तथैव श्रुतत्वात् तथैव च माधवस्योद्वेगसम्भवादिति भावः। सुहृद्बुद्ध्या बन्धुज्ञानेन, वर्द्धितोऽसि, ललाटे हस्तस्पर्शादिना सचैतन्यीकृतोऽसि।

(ঢ) মকরন্দ। আজ আমি এই নগরের ভিতরেই কোন বৃত্তান্ত শুনিয়া 'ইহাতে মাধবের মনে অত্যন্ত উদ্বেগ হইবে' এইরূপ আশঙ্কা করিতেছিলাম, এমন সময়ে অবলোকিতা আমাকে কুসুমাকরোদ্যানের বৃত্তান্ত জানাইয়াছিল, তাই আমি আসিতেছিলাম; এমন সময়েই এই সদ্বংশজাত কন্যাটীকে ব্যাঘ্রের আক্রমণের বিষয় হইতে দেখিয়া উপস্থিত হইয়াছি।

(ণ) ( মালতী ও মাধব চিন্তা করিতে লাগিলেন। )

(१) वृत्तेन इत्यपि पाठः। (२) क्वचिदेष पाठो नास्ति।

(३) प्रीतिदायस्य इति भिन्नः पाठः।

माधवः। भगवति! इयं हि—(१)

यद्व्यालव्रणितसुहृत्प्रमोहमुग्धं
कारुण्याद् (२) विहितवती गतव्यथं माम्।
तत् कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्त्तुं मम हृदयञ्च जीवितञ्च ॥१॥

यदिति। इयं हि एषैव मालती, यत् यस्माद्धेतोः, व्यालेन हिंस्रजन्तुना शार्दूलेन व्रणितस्य नखरप्रहारेण वक्षसि विक्षतस्य सुहृदः सख्युर्मकरन्दस्य प्रमोहेण मूर्च्छया मूर्च्छादर्शनजनितनिरतिशयदुःखेनेत्यर्थः मुग्धं मूर्च्छितं मां कारुण्यात् सदयत्वात् गतव्यथं मोहजनकीभूत-सुहृच्छोकरहितं विहितवती कृतवती। "पड़िवज्जचेदणो महाभाओ" इत्युक्ति हस्तस्पर्शादिनेत्यर्थः। तत् तस्मात् कामं यथेष्टं पूर्णपात्रवृत्त्या उत्सवकाले प्रियनिवेदकजनेन बलादाकृष्य गृह्यमाणमाभरणवसनादिकं पूर्णपात्रं तस्य वृत्त्या प्रकारेण पूर्णपात्रमिवेत्यर्थः मम हृदयञ्च जीवितञ्च स्वीकर्त्तुं प्रतिग्रहीतुं प्रभवति शक्नोति। यतः खल्वियं मालती शुश्रूषापरिश्रमेण मूर्च्छितं मां सचेतनमकरोत्, अतः पूर्णपात्रमिव मया दीयमानं मम हृदयं जीवितञ्च यथेष्टविनियोगयोग्यं कर्त्तुमर्हतीति सरलार्थः।

अत्र आर्थी उपमालङ्कारः। हिंस्रविशेषे शार्दूले वक्तव्ये सामान्यहिंस्रवाचकव्यालपदाभिधानात् विशेषेऽविशेषाख्यदोषः 'यद्व्याघ्रव्रणितसुहृत्प्रमोहमुग्ध'मिति पाठे तु तत्समाधानम्।

इदञ्च उत्तरोत्तरकृष्टतरोत्तररूपत्वात् प्रगमनं नाम प्रतिमुखसन्ध्यङ्गम्। तथा च दर्पणे—

"प्रगमनं वाक्यं स्यादुत्तरोत्तरम्।"

(ত) কামন্দকী। (স্বগত) উহা নন্দনকে মালতীদানের বৃত্তান্তই হইবে। (প্রকাশ্যে) বৎস! মাধব! ভাগ্যবশতঃ মালতী, বন্ধুজ্ঞানে তোমার এই উপকার করিয়াছেন; অতএব তোমারও প্রীতিদানের এই অবসর।

(१) इयं मालती इति पाठोऽपि दृश्यते। (२) सौजन्यादिति पाठोऽपि दृश्यते।

लव। पडिच्छिदो क्खु णो पिअसहीए अअं पसादो। (थ)

मद। स्वगतम्। जाणादि महाभाअधेओ जणो अवसरे गुरुअरमणिज्जं मन्तिदुं (१)। (द)

(थ) प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः।

(द) जानाति महाभागधेयो जनः अवसरं गुरुकरमणीयं मन्त्रयितुम्।

"हर्षादुत्सवकाले यदलङ्कारांशुकादिकम्।
आकृष्य गृह्यते पूर्णपात्रं पूर्णानकञ्च तत्॥" इति जटाधरः।

तत्: सञ्जातोऽस्येति तपित: तारकादित्वादितच्। प्रहर्षिणी वृत्तम्॥१॥

(थ) लवेति। प्रियसख्या मालत्या। अयं प्रसादः तवानुग्रहदानम्। प्रतीष्टः प्रतिगृहीतः। मालत्या एतदुक्तौ धृष्टता स्यादिति लवङ्गिकयेदमुक्तमिति बोध्यम्।

(द) मदेति। महाभागधेयो जनः महाभागो माधवः। अवसरं उपयुक्तसमये गुरुकरमणीयम् अतीवमनोज्ञं मन्त्रयितुं वक्तुम्। उपयुक्तसमये उपयुक्तमिदमुत्तरं कृतमित्यर्थः।

माधव। ভগবতি! আমার সখা ব্যাঘ্রের প্রহারে মূর্চ্ছিত হইয়াছিলেন, তাহাতে আমিও মূর্চ্ছিত হইয়াছিলাম; এই অবস্থায় যেহেতু ইনিই দয়া করিয়া আমাকে বেদনাবিহীন করিয়াছেন, অতএব ইনি পূর্ণপাত্রের ন্যায় (টীকা দ্রষ্টব্য) আমার হৃদয় ও জীবন উভয়ই ইচ্ছানুসারে গ্রহণ করিতে পারেন॥১॥

(থ) লবঙ্গিকা। আমাদের প্রিয়সখী, এই অনুগ্রহপূর্ব্বক দান অবশ্যই গ্রহণ করিলেন।

(দ) মদয়ন্তিকা। (স্বগত) এই ভাগ্যবান্ ব্যক্তি উপযুক্ত সময়ে সুন্দর বলিতে জানেন।

(१) जाणादि महाणुहावो अअं जणो रमणिज्जं मन्तेदुं इति पाठान्तरम्।

मालती। स्वगतम्। किं णाम मअरन्देण उव्वेअकारणं सुदं भविस्सदि। (ध)

माधवः। वयस्य! का पुनर्ममाधिकोद्वेगहेतुर्वार्त्ता?। (न)

प्रविश्य पुरुषः। वत्से! मदयन्तिके! भ्राता ते ज्यायानमात्यनन्दनः समादिशति—"अद्य परमेश्वरेणास्मद्भवनमागत्य भूरिवसोरुपरि परं विश्वासमस्मासु च प्रसादमाविष्कुर्वता स्वयमेव मालती प्रतिपादिता। तदेहि, सम्भावयामः प्रसाद"-मिति (१)। (प)

(ध) किं नाम मकरन्देन उद्वेगकारणं श्रुतं भविष्यति।

(न) माधव इति। यामुपश्रुत्य त्वं त्वरितमवागत इति शेषवाक्यं बोद्धव्यम्।

(प) प्रविश्येति। पुरुषः कश्चिदिति शेषः। ज्यायान् अग्रजः। परमेश्वरेण स्वयं महाराजेन। एतेनानतिक्रमणीयवचनत्वं तस्य सूचितम्। परम् अत्यन्तम्, विश्वासं 'भूरिवसुर्न मे वचनमुल्लङ्घये'दिति विस्रम्भम्। कथमन्यथा अन्यस्य कन्यामन्यः प्रतिपादयितुमर्हतीति भावः। प्रसादमनुग्रहम्। प्रतिपादिता मह्यं दत्ता। प्रसादं राज्ञःस्वमनुग्रहम्, सम्भावयाम उत्सवेन बहुमन्यामहे।

(ध) মালতী। (স্বগত) কি উদ্বেগের কারণ মকরন্দের শ্রুত হইবার সম্ভাবনা করা যায়?।

(ন) মাধব। সখে! আমার অত্যন্ত উদ্বেগজনক বৃত্তান্তটা কি?।

(প) (প্রবেশ করিয়া) একটী লোক। বৎসে! মদয়ন্তিকে! তোমার জ্যেষ্ঠভ্রাতা মন্ত্রিনন্দন, আদেশ করিতেছেন—"আজ মহারাজ আমাদের বাড়ী আসিয়া, ভূরিবসুর উপরে অত্যন্ত বিশ্বাস এবং আমার উপরে অত্যন্ত অনুগ্রহ প্রকাশ করিয়া, নিজেই মালতীকে দান করিয়াছেন। অতএব আইস, মহারাজের অনুগ্রহের সংবর্দ্ধনা করি।

(१) सम्भावयामः, प्रसीदमिति च पाठभेदः।

मक। वयस्य! इयं सा वार्त्ता। (फ)

मालतीमाधवौ वैवर्ण्यं नाटयतः। (ब)

मद। मालतीं सहर्षमालिङ्ग्य (१)। सहि! मालदि! तुमं क्खु एक्कणअरणिवासेण सहपंसुक्कीलणादो पहुदि (२) मे पिअसही आसि (३) बहिणिआ अ, संपदं उण णो घरस्स मण्डणं जादासि। (भ)

(भ) सखि! मालति! त्वं खलु एकनगरनिवासेन सहपांशुक्रीड़नात् प्रभृति मे प्रियसखी आसीर्भगिनिका च, साम्प्रतं पुनर्नौ गृहस्य मण्डनं जातासि।

(फ) मकेति। यामुपश्रुत्य त्वरितमहमवागतः, सा इत्यर्थः। सुतरां मम पुनः कथनं निष्प्रयोजनमिति भावः।

(ब) मालतीति। वैवर्ण्यम् उक्तवार्त्ताश्रवणेन दारुणसन्तापात् मुखमालिन्या-दिकम्।

(भ) मदेति। सहपांशुक्रीड़नात् प्रभृति, शैशवे मिलित्वा धूलिखेलात् आरभ्य। नौऽस्माकम्। मण्डनं भूषणम्। राज्ञोऽनुग्रहेण मदयन्तनन्दनस्य भार्य्यात्वादिति भावः।

(फ) মকরন্দ। সখে! এই সেই বৃত্তান্ত।

(ব) (মালতী ও মাধব মুখমালিন্যপ্রভৃতি অভিনয় করিতে লাগিলেন)।

(ভ) মদয়ন্তিকা। (আনন্দের সহিত মালতীকে আলিঙ্গন করিয়া) সখি! মালতি! তুমি এক নগরে বাস করায় একত্র ধূলিখেলা হইতে আরম্ভ করিয়া, আমার প্রিয়সখী ও ভগিনী ছিলে; এখন আবার আমাদের ঘরের অলঙ্কার হইলে।

(१) सहर्षं मालतीमाश्लिष्य इति क्वचित् पाठः।

(२) पंसुकीलणादो पहुदि इति पाठोऽपि दृश्यते।

(३) क्वचित् आसि इति पाठो नास्ति।

काम। वत्से! मदयन्तिके! दिष्ट्या (१) वर्द्धसे भ्रातुर्मालतीलाभेन। (म)

मद। भअवदि! तुम्हाणं आसिसां पहावेण (२)। सहि! लवङ्गिए! फलिदा (३) णो मणोरहा तुम्हाणं लाहेण। (य)

(य) भगवति! युष्माकमाशिषां प्रभावेण। सखि! लवङ्गिके! फलिता नो मनोरथा युष्माकं लाभेन।

(म) कामेति। भ्रातुरग्रजस्य नन्दनस्य। सोल्लुण्ठनीयमुक्तिः।

(य) मदेति। प्रभावेण माहात्म्येन। मालत्या लाभो जात इति भावः।

अत्र प्रियोक्तिर्नाम नाट्यलक्षणम्। तथा च साहित्यदर्पणे—

"स्यात् प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम्।"

तथा, नोऽस्माकम्, पक्षान्तरे तु नो इत्येव निषेधार्थे, तेन कामन्दक्यादीनां चातुर्य्यात् युष्माकं लाभेन मनोरथा नो फलिताः अस्माकमभिलाषा न सफला जाताः मदग्रजस्य नन्दनस्य लाभाभावेन माधवस्य च लाभेन विफलाभूता इति भविष्यत्प्रधानार्थान्तरसूचनादिदमेकं पताकास्थानम्। यथा दर्पणे—

"द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तरापेक्षी पताकास्थानकं परम्॥"

मालतीलाभेन तत्परिजनानामपि लाभावश्यम्भावात् युष्माकमिति बहुवचनम्।

(म) कামন্দকী। বৎসে! মদয়ন্তিকে! ভাগ্যবশতঃ ভ্রাতার মালতীলাভে তোমার ভাল হইয়াছে।

(য) মদয়ন্তিকা। ভগবতি! আপনাদের আশীর্ব্বাদের প্রভাবে। সখি! লবঙ্গিকে! তোমাদের লাভ করায় আমাদের সমস্ত অভিলাষ সফল হইয়াছে।

(१) क्वचित् दिष्ट्या इत्यपि नास्ति।

(२) पसादेण इति पाठान्तरम्। (३) भरिआ इति पाठभेदः।

लव। सहि! किं अह्माणं वि अत्थि मन्तिदव्वं?(१)। (र)

मद। सहि! बुद्धरक्खिदे! दाणिं विवाहमहूसवं (२) सम्भावेह्म। (ल)

बुद्ध। सहि! एहि गच्छह्म (३)। इत्युत्तिष्ठतः। (व)

लव। जनान्तिकम्। भअवदि! जह एदे (४) छिम्मअभरिदु-

(र) सखि! किमस्माकमप्यस्ति मन्त्रयितव्यम्?।

(ल) सखि! बुद्धरक्षिते! इदानीं विवाहमहोत्सवं सम्भावयामः।

(व) सखि! एहि गच्छावः।

---

(र) लवेति। अस्माकमपि मन्त्रयितव्यम् अस्मिन् विषये किञ्चित् वक्तव्यमस्ति किम्, अपि तु किमपि नेत्यर्थः। युष्माभिर्लब्धत्वात् वयमपि चिरात् पूर्णमनोरथा जाता इति भावः। इयमपि सोल्लुण्ठनोक्तिः। तथा च युष्माकं मालतीलाभोऽसम्भव एवेति व्यज्यते।

(ल) मदेति। विवाहमहोत्सवं मालतीनन्दनयोरिति शेषः। सम्भावयामः, तत्र योगदानेन सम्पादयामः।

अत्र उद्यमो नाम नाट्यालङ्कारः। यथा दर्पणे—"कार्य्यस्यारम्भ उद्यमः।"

(व) बुद्धेति। उत्तिष्ठतः मदयन्तिका-बुद्धरक्षिते इति शेषः।

(র) লবঙ্গিকা। সখি! এ বিষয়ে আমাদেরও আবার কিছু বক্তব্য আছে কি?।

(ল) মদয়ন্তিকা। সখি! বুদ্ধরক্ষিতে! এখন আমরা বিবাহ-মহোৎসব সম্পাদন করিব।

(ব) বুদ্ধরক্ষিতা। সখি! এস, যাই। (এই বলিয়া উভয়ে উঠিল)।

---

(१) अह्माणं वि एदं मन्तिदव्वं इति भिन्नः पाठः।

(२) सहि बुद्धरक्खिदे! एहि दाव। महोसवं सम्भावेह्म इति पाठः क्वचित्।

(३) अयं पाठः क्वचिन्नास्ति। (४) एदे इत्यपि क्वचिन्न दृश्यते।

व्विन्त-( १ ) विह्मआणन्द-सुन्दरान्दोलिद-धीरत्तण-मणोहरा, पट्टुत्यन्ति (२) मदयन्तिआमअरन्दाणं दर-दलिद-णीलप्पल-दाम-सरिच्छा कडक्खविक्खेवा ; (३) तह तक्केमि, (४) मणोरह-णिव्वत्तसम्बन्धा (५) एदे त्ति । (य)

काम । विहस्य । नन्विमौ परस्परं मानसं मोहनमनुभवतः (६) । तथाहि—(ष)

(य) भगवति ! यथैते हृदयभरितोद्वृत्तविस्मयानन्दसुन्दरान्दोलितधीरत्वमनोहराः, प्रवर्त्तन्ते मदयन्तिकामकरन्दयोर्दरदलितनीलोत्पलदामसदृशाः कटाक्षविक्षेपाः ; तथा तर्कयामि, मनोरथनिर्वृत्तसम्बन्धावेतावितिं ।

(य) लवेति । हृदये भरितौ आदौ चित्ते पूर्णौ, परञ्च उद्वृत्तौ तत्र स्थानाभावात् बहिर्भूतौ यौ विस्मयानन्दौ ताभ्यां सुन्दरं यथा स्यात्तथा आन्दोलिताः क्वचित् सञ्चालिताः ; तथा क्वचित् धीरत्वेन स्थिरत्वेन मनोहराः सुन्दराः । तयोः कर्म्मधारयः ।

तथा दरदलितानि ईषद्विकसितानि यानि नीलोत्पलानि तेषां दाम माला तत्सदृशाः तत्तुल्याः, मदयन्तिका-मकरन्दयोः कटाक्षविक्षेपाः प्रवर्त्तन्ते परस्परं प्रति प्रचरन्ति । मनोरथेन निर्वृत्तो निष्पन्नः सम्बन्धो दाम्पत्यसम्बन्धो ययोस्तौ ।

(শ) লবঙ্গিকা। ( কামন্দকীর নিকট চুপি চুপি ) ভগবতি! যেহেতু মদয়ন্তিকা ও মকরন্দের পরস্পর কটাক্ষপাত চলিতেছে ; বিস্ময় ও আনন্দ হৃদয়কে পরিপূর্ণ করিয়া উদ্বৃত্ত হইতেছে, তাহাতে ঐ কটাক্ষপাত-গুলি কখনও সুন্দরভাবে সঞ্চালিত, কখনও স্থিরত্ব নিবন্ধন সুন্দর হইতেছে এবং ঈষদ্বিকসিত নীলোৎপলমালার ন্যায় প্রসারিত হইতেছে ; সেই হেতু আমি মনে করি—মনে মনে ইহাদের পরিণয়সম্বন্ধ সম্পন্ন হইয়া গিয়াছে।

(१) उव्वमन्त इत्यपि पाठः । (२) पल्लत्थन्ति इति पाठभेदः । (३) दिट्ठिभेआ इति पाठान्तरम् । (४) मण्णे इति क्वचित् पाठः । (५) समावमा इति पाठोऽपि दृश्यते । (६) नन्विमौ विलोकनेन मानसं मुहुर्मुहुः प्रमोदमनुभवत इति पुस्तकान्तरे पाठः ।

ईषत्तिर्य्यग्वलनविषमं कूणितप्रान्तमेतत्
प्रेमोद्भेदस्तिमितललितं किञ्चिदाकुञ्चितभ्रु।
अन्तर्मोदानुभवमसृणं स्रस्तनिष्कम्पपक्ष्म (१)
व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम्॥२॥

(ख) कामेति। नन्विति लवङ्गिकासम्बोधने। इमौ मदयन्तिकामकरन्दौ, मानसं मोहनं सङ्कल्पनिर्म्मितसम्भोगम्। हेतुप्रदर्शनेन तदनुमानमुपपादयितुमाह तथाहीति।

ईषदिति। ईषत्तिर्य्यग्वलनेन अल्पतिर्य्यक्प्रसारणेन विषमं वक्रम्, प्रान्ते अपाङ्गदेशे कूणितं नेत्रयोर्भागद्वयं वर्जयित्वा एकभागेन विकसितं प्रान्ते कूणितमिति कूणितप्रान्तं राजदन्तादित्वात् परनिपातः। प्रेमोद्भेदेन अनुरागप्रकाशेन क्वचित् स्तिमितं निष्पन्दं क्वचित्तु ललितम् अन्तर्विकासवत्तरम्, तयोः कर्म्मधारयः; किञ्चिदाकुञ्चिते ईषदुन्नमिते भ्रुवौ यत्र तत् किञ्चिदाकुञ्चितभ्रु, अन्तर्मोदानुभवेन मानसिकानन्दानुभवेन मसृणम् अनुरागरञ्जितं तथा स्रस्तानि अवसन्नानि निष्कम्पानि निश्चलानि पक्ष्माणि नेत्रलोमानि यत्र तत्, एतत् प्रत्यक्षीक्रियमाणम् अनयोः मदयन्तिकामकरन्दयोः, आकेकारे (ट्यारा इति प्रसिद्धे) अक्षिणी चक्षुषी यत्र तत् आकेकराक्षम्, दृष्टं परस्परदर्शनं कर्तृ व्यक्तं स्पष्टम् अचिरम् अचिरजातं शंसति मानससम्भोगानुभवं कथयति सूचयतीत्यर्थः। ईदृशदृष्टिदर्शनादनयोः परस्परमानसिकसम्भोगानुभवसत्ताऽनुमीयते, अन्यत्र दृशदृष्टिपातासम्भवादिति भावः।

अतएवात्रानुमानालङ्कारः, समुच्चयेन च तन्मूलविच्छित्तिः कृतेत्यनुसन्धेयम्। केचित्तु व्यक्तमिति व्यञ्जकं मन्यमाना उत्प्रेक्षामाचक्षते। शंसतीत्यस्य कर्म्मपदानुपादानात् न्यूनपदत्वदोषः, स च 'व्यक्तं तं वक्त्यचिरमनयो'रिति पाठेन समाधेयः।

(ख) কামন্দকী। (কিঞ্চিৎ হাস্য করিয়া) নিশ্চয়ই মনে মনে ইহারা সম্ভোগসুখ অনুভব করিতেছে। তাহার প্রমাণ—

(१) ईषत्तिर्य्यग्वलितविषमं कुञ्चितप्रान्तमेतत्
प्रेमोद्भेदस्तिमितलुलितं किञ्चिदारेचितभ्रु।
अन्तर्मोदानुभवमसृणं स्रस्तनिष्कम्पपक्ष्म
इति पुस्तकान्तरे पूर्व्वपादत्रये पाठभेदः।

पुरुषः । वत्से ! मदयन्तिके ! (१) इत इतः ।

मद । अपवार्य्य । सहि ! बुद्धरक्खिदे ! अवि णाम पुणो वि दाव दीसइ एसो जीविदप्पदो पुण्डरीअलोअणो (२) । (स)

विपुरारिध्वृतानि वक्रदर्शनादिलक्षणानि । यथा—

"वलितो काङ्गसञ्चारी यत्र तद्वक्रमुच्यते ।"

"पुरस्त्रिभागसङ्कोचि प्रेम्णा तत् कुणितं भवेत् ।"

"निष्पन्दं तद्यदन्यत्र दृष्टान्न स्पन्दते क्वचित् ।"

"प्रेमार्द्रं मन्तर्विकसत्तारं ललितमीरितम् ॥"

"मसृणं तनु विज्ञेयमनुरागकषायितम् ॥"

"आकुञ्चितपुटा याङ्गसङ्गतार्थं निमीलिता ॥"

"मुहुर्व्यावर्त्तताराच दृष्टिराकेकरा मता ॥"

मन्दाक्रान्ता वृत्तम् ॥२॥

ইহাদের দৃষ্টি একটু তেরচাভাবে বিস্তৃত হওয়ায় কখনও বক্র হইতেছে, প্রান্তভাগে নয়নের একভাগ মাত্র বিকসিত হইতেছে, অনুরাগ প্রকাশ পাওয়ায় কখনও নিশ্চল, কখনও ভিতরের তারা দুইটী বিকসিত হইতেছে, ভ্রূযুগল কিঞ্চিৎ উপরে উঠিতেছে, মনে মনে আনন্দ অনুভব করায় অনুরাগে রঞ্জিত হইতেছে; নয়নের লোমগুলি কখনও শিথিল, কখনও নিশ্চল রহিতেছে এবং উহাদের চোখ ট্যারা বলিয়া বোধ হইতেছে; সুতরাং ইহাদের এই দৃষ্টি, এখন মনে মনে সম্ভোগসুখ অনুভব করাটী স্পষ্ট সূচনা করিতেছে ॥২॥

সেই পুরুষ। বৎসে! মদয়ন্তিকে! এদিকে, এদিকে এস।

(१) कुत्रचित् सम्बोधनद्वयं नास्ति ।

(२) सहि ! बुद्धरक्खिदे ! अवि पुणो दीसइ एसो जीविदप्पादाई पुण्डरीअलोअणो इति पाठान्तरम् ।

बुद्ध। जइ देव्वमणुकूलं भविस्सदि त्ति (१)। (ह)

पुरुषेण निष्क्रान्ते (२)। (ष)

माधवः। अपवार्य्य। (क)

चिरादाम्रातन्तुस्त्रुटतु विसिनीसूत्रभिदुरो
महानाधिव्याधिर्निरवधिरिदानीं प्रसरतु।
प्रतिष्ठामव्याजं व्रजतु मयि पारिप्लवधुरा
विधिः स्वाच्छ्य (३) धत्तां भवतु कृतकृत्यश्च मदनः॥३॥

---

(स) सखि! बुद्धरक्षिते! अपि नाम पुनरपि तावत् दृश्यते एष जीवितप्रदः पुण्डरीकलोचनः।

(ह) यदि दैवमनुकूलं भविष्यतीति।

---

(स) मदेति। जीवितप्रदः व्याद्र्लङ्घननेन जीवनदाता। एष मकरन्दः। दृश्यत इति भविष्यत्सामीप्ये वर्त्तमाना।

(ह) बुद्धेति। यदि दैवमनुकूलं भविष्यति, तदा पुनर्दृश्यते इत्यर्थः। इतिशब्दो मदयन्तिकाबुद्धरक्षितयोस्तत्कालीनालापसमाप्त्यर्थः।

(ष) पुरुषेणेति। पुरुषेण सह निष्क्रान्ते मदयन्तिकाबुद्धरक्षिते इति शेषः।

(क) माधव इति। अपवार्य्य कामन्दकीं प्रतीत्यर्थः।

चिरादिति। विसिनीसूत्रवत् मृणालतन्तुवत् भिदुरः स्वयमेव भिद्यमानः, अतीवदुर्बल इत्यर्थः, आम्रातन्तुः मालतीलाभाशारूपं सूत्रं चिरात् परं त्रुटतु छिन्नो भवतु, एतावन्तं

---

(স) মদয়ন্তিকা। ( বুদ্ধরক্ষিতার নিকট চুপি চুপি ) সখি! বুদ্ধরক্ষিতে! এই জীবনরক্ষক পদ্মনেত্রকে আবারও দেখিব কি ?

(হ) বুদ্ধরক্ষিতা। যদি দৈব অনুকূল হ'ন।

(ক্ষ) ( পুরুষের সহিত মদয়ন্তিকা ও বুদ্ধরক্ষিতার প্রস্থান। )

---

(१) जइ देव्वं अणुऊलइस्सदि। इति निष्क्रान्ता। इति पाठभेदः।

(२) कुत्रचिदयं पाठो नास्ति। (३) स्थैर्य्यमिति भिन्नः पाठः।

अथवा। (ख)

समानप्रेमाणं जनमसुलभं प्रार्थितवतो
विधौ वामारम्भे मम समुचितैषा परिणतिः।
तथाप्यस्मिन् दानश्रवणसमयेऽस्याः प्रविगलत्
प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥४॥

कालं यावत् या मालतीप्राप्त्याशा परिपोषिता सेदानीं नश्यतु इति सरलार्थः। इदानीं महान् विशालः, आधिरेव मालतीनैराश्यजनिता मानसी व्यथैव व्याधिः रोगः निरवधिरसीमः चिरजीवनस्थायी सन्नित्यर्थः प्रसरतु विजृम्भताम्। पारिप्लवधुरा चाञ्चल्यभारः मयि अव्याजम् अकपटं यथार्थमिति यावत् यथा स्यात्तथा प्रतिष्ठां स्थितिं व्रजतु प्राप्नोतु। विधिर्मम दुःखविधाननिरतं दैवं स्वास्थ्यं सुस्थतां विश्राममित्यर्थः धत्ताम् अवलम्बताम्। इतोऽवधि मम दुःखस्य स्वत एव निरन्तरतया तदुत्पादनचेष्टाया अभावादिति भावः। तथा मदनो मन्मथश्च कृतकृत्यः विरहिणो मे चिरदुःखदानात् कृतकार्य्यो भवतु। सर्वत्र मालतीप्राप्तेरसम्भवादिति भावः।

अत्र स्वकीयदारुणदुःखप्रतिपादनकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः, तथा प्रथमचरणे लुप्तोपमा, निरङ्गं केवलरूपकञ्च, द्वितीयचरणे च निरङ्गकेवलरूपकद्वन्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, समुदाये तु पुनरङ्गाङ्गिभावेन सङ्करः।

"चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे" इत्यमरः। परिप्लवस्येदमिति पारिप्लवं चाञ्चल्यम्, तस्य धूरिति पारिप्लवधुरा "धुरनक्षस्ये"ति राजादित्वादत्।

शिखरिणी वृत्तम् ॥३॥

(क) माधव। ( কামন্দকীর প্রতি চুপি চুপি )

মৃণালতন্তুর ন্যায় নিতান্ত ক্ষীণ আশাতন্তু চিরকালের পর ছিন্ন হউক, গুরুতর মনঃপীড়ারোগ এখন চিরস্থায়ী হইয়া চলুক, চাঞ্চল্যের ভার আমার উপরে অকপটে প্রতিষ্ঠা লাভ করুক, বিধাতা স্বাস্থ্য অবলম্বন করুন এবং কামদেব কৃতকার্য্য হউন ॥৩॥

काम। स्वगतम्। एवमतिदुर्म्मनायमानः पीड़यति मां वत्सो माधवो वत्सा मालती च। दुष्करं निराशा प्राणितीति (१)।

(ख) अथवेति। उक्तवार्त्ताश्रवणेनातीव विषीदन् स्वयमेवात्मानं समाश्वासय-न्नाह—अथवेति।

समानेति। समानो मम तुल्यः, प्रेमा मयि स्नेहो यस्य तम्, असुलभं पित्रादीना-मधीनतया मम दुष्प्राप' जनं मालतीमित्यर्थः प्रार्थितवतः मनसा याचितवती मम, विधौ दैवे वामारम्भे दुर्निवारविघ्नजनकतया प्रतिकूलीयमे सति एषा प्रत्यक्षीक्रियमाणा परिणतिः मालतीलाभाशया महानन्दात् परं सहसैव तन्नैराश्यात् महाविषादरूपा अवस्थापरिवृत्तिः समुचिता युक्ता। दुर्लभलाभस्य प्रायेणासम्भवात् दैवस्य च प्रतिकूलत्वादिति भावः। इत्थं प्रबोध्य यद्यप्यात्मानमाश्वासयामि तथापीत्यर्थः। अस्मिन् दानश्रवणसमये 'स्वयमेव राज्ञा नन्दनाय मालती दत्ता' इति दानवृत्तान्तश्रवणकाले प्रविगलन्ती दारुणविषादवशात् प्रस्खलन्ती प्रभा आनन्दजनिता प्रफुल्लता यस्मात् तत्, अतएव प्रातश्चन्द्रद्युति प्रभातकालीन-चन्द्रसमानकान्ति, अस्या मालत्या वदनं कर्त्तृ माम् अन्तर्दहति अन्तर्दाहं जनयति। 'प्रतिकूले किल दैवे दुर्लभस्यैव लाभर्लाभे महाविषादः सम्भवत्येव' इत्थमाश्वास्यमानमप्यात्मानं तद्वार्त्ताश्रवणजनितविषादेनास्या मलिनीकृतवदनदर्शनमिव पुनः सन्तापयतीति सरलार्थः।

अत्र अन्तर्दाहवदनयोः कार्य्यकारणयोर्यथाक्रमं माधवमालतीवृत्तित्वेन भिन्नदेशत्वात् असङ्गतिर्नामालङ्कारः, तथा तादृशपरिणतेः समुचितत्वं प्रति असुलभत्वं विधेः प्रातिकूल्यञ्च हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, प्रातश्चन्द्रद्युतीति लुप्तोपमा च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। शिखरिणी वृत्तम् ॥४॥

(খ) অথবা, যে লোক তুল্য অনুরাগী অথ চ দুর্লভ, তাহাকে আমি প্রার্থনা করিয়াছিলাম; তাহাতে দৈব প্রতিকূলতাচরণ আরম্ভ করিয়াছেন, সুতরাং আমার এইরূপ পরিণামই উপযুক্ত হইয়াছে। তথাপি এই দানের বৃত্তান্ত শুনিবার সময়ে প্রফুল্লতাবিহীন; সুতরাং প্রাতঃকালের চন্দ্রের ন্যায় কান্তিসম্পন্ন মালতীর মুখখানি আমাকে অন্তরে দগ্ধ করিতেছে ॥৪॥

(१) क्वचित् इतिशब्दो नास्ति।

प्रकाशम्। वत्स! माधव! पृच्छामि तावदायुष्मन्! त्वाम्—अथ किं भवानमंस्त, यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यतीति (१)। (ग)

माधवः। सलज्जम्। नहि नहि। (घ)

(ग) कामेति। एवमनेन हेतुना। निर्नं विद्यते आशा यस्याः सा निराशा व्यक्तिः निराशो जन इत्यर्थः, दुष्करं यथा स्यात्तथा प्राणिति जीवति। इति हेतोः पीड़यतीत्यर्थः। तथा च कुतोऽपि कारणात् यस्य बलवत्याशा विनष्टा, तस्य जीवनधारणं दुष्करमेव, सुतरां 'स्वयं राज्ञैव नन्दनाय मालती दत्ते'ति वृत्तान्तश्रवणेन मालतीमाधवयोश्चिरतराशाविनाशात् जीवनधारणस्य दुष्करतया मन्यमानत्वादुपस्थितविषादवैमनस्यमेव तद्वत्सलां मां सन्तापयतीति भावः। आयुष्मन्निति सम्बोधनेन वात्सल्यातिशयो व्यज्यते। किं पृच्छसीत्याह—अथ किमिति। भवान् माधवः। अमंस्त मनसा निर्द्दिष्टवान्। अस्मभ्यं मह्यम्। "वास्मदश्चे"ति बहुवचनम्। इति किम् अमंस्त इत्यन्वयः। तथा च सति राज्ञे दानेनैव भूरिवसोरपि दाननिष्पत्तेर्मालत्यलाभेन तव परितापो युज्यते एवेति भावः।

(घ) माधव इति। नहि नहि, भूरिवसुरेव मह्यं मालतीं दास्यतीति न खल्वहं मनसा निर्द्दिष्टवानस्मीत्यर्थः। कुत्रापि तादृशप्रस्तावस्याप्यभावादिति भावः। किन्तु युष्माकं यत्नेनैव मालतीमहं प्राप्स्यामीति सम्भावनासीदिति व्यज्यते।

(গ) কামন্দকী। (স্বগত) বৎস মাধব ও বৎসা মালতী এই ঘটনায় অত্যন্ত দুঃখিত হইয়া আমাকেও দুঃখিত করিতেছে। কারণ, যে লোকের আশাভঙ্গ হইয়া যায়, সে দুঃখেই প্রাণধারণ করে। (প্রকাশ্যে) বৎস! আয়ুষ্মন্! মাধব! আমি তোমাকে জিজ্ঞাসা করি—তুমি কি মনে করিয়াছ যে, ভূরিবসুই মালতীকে আমার হস্তে দান করিবেন?

(ঘ) মাধব। (লজ্জার সহিত) না না।

(१) पृच्छामि तावदायुष्मन्तम्, अपि भवानमंस्त, यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यति? इति पाठान्तरम्।

काम । न तर्हि प्रागवस्थायाः परिहीयसे (१) । (ङ)

मक । भगवति ! (२) दत्तपूर्वेत्याशङ्क्यते । (च)

काम । जानामि तां खलु वार्त्ताम् । इदन्तु (३) प्रसिद्धमेव, यथा नन्दनाय मालतीं प्रार्थयमानं भूरिवसुर्नृपतिमुक्तवान्— "प्रभवति निजस्य कन्यकाजनस्य महाराज" इति । (छ)

---

(ङ) कामेति । तर्हि भूरिवसुकर्त्तृकमालतीदानसम्भावनाया अभावे, प्रागवस्थायाः पूर्व्वावस्थातः न परिहीयसे न किञ्चित् विच्युतो भवसि । यथा पूर्व्वमेव तवावस्था वर्त्तत इत्यर्थः । तथा च पूर्व्वमपि भूरिवसुना मालतीदानाय न भवानाहूतः, न वा इदानीमपि भवन्तमपहाय तेनैव नन्दनाय मालती दीयते, युवयोरन्योन्यानुरागोऽपि पूर्व्ववदेवावतिष्ठते, अस्माकं तत्साधनप्रयत्नोऽपि पूर्व्ववदेवास्ति ; सुतरां कस्यापि विशिष्टनूतनकारणस्याभावात् कथमयं ते परिताप इति भावः ।

(च) मकेति । दत्तपूर्वा इतः पूर्व्वमेव वाग्दत्ता मालतीत्याशङ्क्यते माधवेनेति शेषः । राज्ञोऽनुरोधात् "प्रभवति निजस्य कन्यकाजनस्य महाराज" इत्यभिदधता भूरिवसुना मालतीदाने राजा प्रतिनिधीकृतः, ततश्च नन्दनाय राज्ञो वाग्दानेनैव भूरिवसोरपि वाग्-दाननिष्पत्तेः कुतश्चित् कारणात् मालतीप्राप्तिसम्भवेऽपि माधवेन तत्परिणयो न कर्त्तव्य एव ।

"सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ।
वाचादत्ता मनोदत्ता कृतकौतुकमङ्गला ॥"

इत्यादि-(उद्वाहतत्त्वधृत) काश्यपवचनात्, तथा च सति परितापः सम्भवपर एवेति भावः ।

(ঙ) কামন্দকী। তবে পূর্ব অবস্থা হইতে তুমি বিচ্যুত হও নাই !

(চ) মকরন্দ। ভগবতি! মালতী ইহার পূর্ব্বেই বাগ্‌দত্তা হইয়া গিয়াছেন, মাধব এই আশঙ্কা করিতেছে।

---

(१) न तर्हि प्रागवस्थाया भूरिवसुः परिहीयते इति पाठान्तरम् ।

(२) क्वचित् भगवति इति सम्बोधनं नास्ति । (३) इदं तावदिति क्वचित् पाठः ।

मक। अस्त्येतत्। (ज)

काम। अद्य च स्वयं राज्ञैव मालती दत्तेति संप्रत्येव पुरुषेणावेदितम्। तद्वत्स! वाक्प्रतिष्ठानि देहिनां व्यवहारतन्त्राणि। वाचि पुण्यापुण्यहेतवो व्यवस्थाः सर्वथा जनानामायतन्ते। सा च भूरिवसोर्वागनृतात्मिकैव। न खलु महाराजस्य निजकन्यका मालती। कन्यकाप्रदाने च नृपतयः प्रमाणमिति मैवंविधो धर्म्माचारसमयः। तस्माद्विमर्शितव्यमेतत्। कथञ्च वत्स! मामनवधानां मन्यसे (१)। पश्य—(झ)

(छ) कामेति। वार्त्ताम् इतः पूर्वं पुरुषेणावेदितं वृत्तान्तं जानामीति प्रौढोक्तिः, तु किन्तु। प्रसिद्धमेव सर्वजनविदितमेव। इतिशब्दस्य उक्तवानित्यनेनान्वयः।

(ज) मकेति। एतत् प्रसिद्धमस्ति। इति स्वीकरोमि, तेन किमिति भावः।

(झ) कामेति। तथा च सतीति चकारस्यार्थः। राज्ञैव न तु वास्तविकदानाधिकारिणा भूरिवसुनेति भावः। इति पुरुषेणावेदितम्, न तु भूरिवसुना दत्तेत्यावेदितमिति भावः। तत्तस्मात्, वत्स! माधव! देहिनां लोकानां व्यवहारतन्त्राणि प्रधानव्यवहारविषयाः वाचि प्रतिष्ठा स्थितिः येषां तानि वाक्प्रतिष्ठानि वाङ्निबन्धनानि सर्वे प्रधानव्यवहारा वाक्येनैव प्रचलन्तीत्यर्थः। क्वचित्तु क्षुद्रविषया इङ्गितेनापि सम्भवन्तीत्या-

(ছ) কামন্দকী। আমি সে বৃত্তান্তও জানি। ইহা ত প্রসিদ্ধই রহিয়াছে যে, রাজা নন্দনের জন্য মালতীকে প্রার্থনা করিলে ভূরিবসু তাঁহাকে বলিয়াছিলেন—"নিজের কন্যার উপরে মহারাজের প্রভুত্ব রহিয়াছে।"

(জ) মকরন্দ। ইহা প্রসিদ্ধ আছে বটে।

(१) अद्य च राज्ञा स्वयमेव मालती दत्तेति पुरुषेणावेदितम्। तद्वत्स! वाङ्प्रतिष्ठानिबन्धनानि देहिनां व्यवहारतन्त्राणि, वाचि पुण्यापुण्यहेतवो व्यवस्थिताः, सर्वञ्च वचनानामायत्तम्,⋯नैवंविधः।⋯तस्मादवस्थितमेवैतत्। इति पाठभेदः।

भय:। तथा पुण्यापुण्यहेतवो धर्म्माधर्म्मबोधजनिकाः, व्यवस्थाः "सत्यं वदेन्नानृत"मित्यादि शास्त्रविषयः, वाचि आयतन्ते वागधीना भवन्ति। तथा च सत्यभाषणे—

"अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते॥"

इति मनूक्तास्तुत्यर्थवादोपहितः "सत्यं वदे"दिति विधिः "धर्म्मोऽयम्" इति बोधं जनयति। तथा असत्यभाषणे "असत्यभाषणं शूद्रसेवन"मिति "अपावीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति" इति विष्णुवचने प्रायश्चित्तश्रवणात् कल्प्यमानो "नानृतं वदे"दिति निषेधविधिः "अधर्म्मोऽयम्" इति बोधं जनयति। सुतरां वागधीनौ धर्म्माऽधर्म्माविति सरलार्थः।

नन्वेतावता किमायातमित्याह—सा चेति। तथा चेति चकारस्यार्थः। सा "प्रभवति निजस्ये"त्यादिका भूरिवसोर्वाक्, अनृतात्मिकेव कृष्णरूपतया मिथ्याभूतेव। कथमनृतात्मिकेत्याह—न खल्विति। अर्थविसंवादि वाक्यं हि मिथ्यावाक्यम्, तथा च मालत्यां भूरिवसोरिव कन्यात्वेन राज्ञा निजकन्यात्वाभावादर्थविसंवादितया तद्वाक्यं मिथ्याभूतमेव, सुतरां तत्प्रयुक्तं प्रतिनिधित्वं राज्ञो नास्ति, अतश्च राज्ञा नन्दनाय दातुं वाग्दाने कृतेऽपि न खलु मालती वाग्दत्ता जातेति भावः।

ननु राज्ञः सर्व्वस्वामित्वेन यस्य कस्यचित् जनस्य कन्यायामपि स्वामित्वात्तस्या वाग्दानं सङ्गच्छत इति चेत्तत्राह—कन्यकाप्रदाने चेति। प्रमाणं नियन्तारः धर्म्माचारयोः धर्म्मशास्त्रशिष्टाचारयोः समग्रौ नियमः।

"पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥"

इति याज्ञवल्क्यवचनात् पित्रादीनामेव कन्यादानाधिकारात् तादृशादेवाचाराच्चेति भावः। विमर्शितव्यं युष्माभिर्विवेचनीयम्। किञ्चेति चार्थः। कथं केन हेतुना, अनवधानां मालतीमाधवयोः समागमविषये असावधानाम्। मालतीमाधवयोः समागमविषये सर्वदैव सावधानाऽस्मि, ततः कथमीदृशं घटेतेति भावः। पश्य जानीहि।

अत्र तुल्यतर्को नाम नाट्यलक्षणम्। यथा दर्पणे—

"तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिना।"

मा वां (१) सपत्नेष्वपि नाम तद्भूत्
पापं यदस्यां त्वयि वा विशङ्क्यम् (२)।
तत्सर्वथा सङ्गमनाय यत्नः
प्राणव्ययेनापि मया विधेयः ॥५॥

---

"न नर्म्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन् ! न विवाहकाले।
प्राणात्यये सर्व्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥"

इति मत्स्यपुराणवचनात् विवाहकाल इत्यस्य च विवाहविषयमात्रत्वेनोपलक्षणत्वात् नाट्यमिथ्योक्तावपि न दोष इति बोध्यम्।

"तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे" इत्यमरः। "समयः शपथे भाषा सम्पदोः कालसंविदोः। सिद्धान्ताचारसङ्केतनियमावसरेषु च। क्रियाकारे निर्द्देशे चे"ति हेमचन्द्रः।

मा वामिति। यस्यां मालत्यां त्वयि माधवे वा यत्पापं परस्परसमागमाभावात् यदमङ्गलं मरणमित्यर्थः विशङ्क्यम् अस्माभिराशङ्कनीयम्, तत्पापं वां युवयोः सपत्नेष्वपि आत्मनोः का कथा शत्रुष्वपि मा भूत् न भवतु। इति नाम, स्वीकरोमीत्यर्थः। तत् तस्मात् सर्व्वथा मया प्राणव्ययेनापि साधारणायासे का कथा प्राणत्यागेनापि सङ्गमनाय

(ঝ) কামন্দকী। আজও রাজাই স্বয়ং মালতীকে দান করিয়াছেন ইহা এখনই এই লোকটা জানাইয়া গেল। অতএব বৎস! প্রাণিগণের প্রধান ব্যবহারগুলি বাক্যের উপরে প্রতিষ্ঠিত। লোকের ধর্ম্ম ও অধর্ম্মের বিধিগুলি সর্বপ্রকারেই বাক্যের অধীন। সুতরাং ভূরিবসুর সেই বাক্যটী মিথ্যাই বটে। কারণ, মালতী মহারাজের নিজকন্যা নহেন। 'কন্যাদানে রাজারাই নিয়ন্তা' এরূপ ধর্ম্মশাস্ত্রও নাই, লৌকিক নিয়মও নাই। অতএব তোমাদের এই সকল বিবেচনা করা উচিত। বৎস! কি প্রকারেই বা আমাকে উদাসীন মনে করিতেছ? দেখ—

(१) मा वा इति पाठान्तरम्। (२) पापं यदस्यां नु मया विशङ्क्यमिति पाठभेदः।

मक। सर्वं सुष्ठु युज्यमानमादिश्यते युष्माभिः। अपि च (ञ)
दया वा स्नेहो वा भगवति! निजेऽस्मिन् शिशुजने
भवत्याः संसाराद्विरतमपि चित्तं द्रवयति।
अतश्च (१) प्रव्रज्यासमयसुलभाचारविमुखः
प्रसक्तस्ते यत्नः प्रभवति पुनर्दैवमपरम् ॥६॥

युवयोर्मेलनाय यत्नो विधेयः कर्त्तव्यः सुतरां मम यत्नस्य सर्व्वथा सफलत्वसम्भावनया परितापो न करणीय इति भावः।

अत्र उक्तरूपार्थागमादर्थापत्तिरलङ्कारः। तथा यत्नो नाम द्वितीयावस्था च। यथा दर्पणे—

"प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः।"

इन्द्रवज्रा वृत्तम् ॥५॥

(ञ) मकेति। सुष्ठु युज्यमानं सम्यग् युक्तियुक्तम्, आदिश्यते उच्यते सुतरामस्माकं न काचिद्विप्रतिपत्तिरिति भावः। गौरवप्रदर्शनाय आदिश्यत इत्युक्तम्।

दयेति। हे भगवति! अस्मिन् निजे स्वकीयतुल्ये शिशुजने मालत्यां माधवे च दया कृपा वा, स्नेहो वात्सल्यं वा, दया च स्नेहश्चेत्यर्थः संसाराद्विरतमपि प्रव्रज्यावलम्बनेन गार्हस्थ्यान्निवृत्तमपि भवत्यास्तव चित्तं द्रवयति आर्द्रं करोति पुनरपि विषयान् प्रति आकर्षतीत्यर्थः। अतश्च अतएव कारणात् प्रव्रज्यासमये सन्न्यासाश्रमकाले ये सुलभाचाराः नियतसर्व्वसङ्गपरित्यागादिव्यवहाराः तेषां विमुखो विरोधी ते तव यत्नः मालतीमाधवयोः समागमसम्पादने प्रवृत्तिः, प्रसक्तः लग्नः सञ्जात इत्यर्थः। पुनः किन्तु अपरम् इतोऽन्यत्,

( তোমাদের সম্মেলন না হইলে ) তোমার বা মালতীর যে অমঙ্গল আশঙ্কা করি, তাহা যেন তোমাদের শত্রুদেরও হয় না। অতএব আমি প্রাণ দিয়াও তোমাদের সম্মেলনের জন্য সকল রকমে যত্ন করিব ॥৫॥

(ঞ) মকরন্দ। আপনি সমস্ত কথাই সুন্দর যুক্তিসঙ্গত বলিতেছেন। আরও দেখুন—

(१) ततश्चेति पाठान्तरम्।

नेपथ्ये। भअवदि! कामन्दइ! एसा भट्टिणो विसवेदि, जधा मालदीं घेत्तुण तुरिदमाअच्छदु त्ति। (ट)

(ट) भगवति! कामन्दकि! एषा भर्तृनी विज्ञापयति, यथा मालतीं गृहीत्वा त्वरितमागच्छतु इति।

दैवम् अनयोर्भाग्यम्, प्रभवति समागमाभिलाषं सद्यः पूरयितुं चिराय नाशयितुं वा शक्नोति। इतः परं बलवद्दैवप्रतिबन्धकताऽभावे तव यत्नादेवावश्यमनयोः समागमो निष्पद्येतेति भावः।

अत्र "शङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च।" इति चन्द्रालोकोदाहृतवत् द्रवयतीत्येकया क्रियया दयास्नेहयोरप्रस्तुतयोः कर्त्तृतासम्बन्धात् तुल्ययोगितालङ्कारः। तथा "न तर्हि प्रागवस्थायाः परिहीयसे" इत्यनेन कामन्दक्या निश्चितेऽपि विषये "भगवति! दत्तपूर्वेत्याशङ्क्यते" इत्यभिदधानेन मकरन्देन संशयोद्भावनात् धृष्टताप्रकाशेन कामन्दक्याः किञ्चित् कोपो जातः, अतएव "जानामि तां खलु वार्त्ता"मिति कामन्दक्या सकोपमिवाभिहितम्, अत्र तु पुनस्तदनुनयात् पर्य्युपासनं नाम प्रतिमुखसन्ध्यङ्गम्। यथा दर्पणे—

"…क्रुद्धस्यानुनयः पुनः। स्यात् पर्य्युपासनम्…।"

"संसारश्च मिथ्याधीप्रभवा वासना" इति प्रामाण्यवादे गदाधरः। "स्वादृष्टोपनिबद्धशरीरपरिग्रहः संसारः" इति तु कातन्त्रपरिशिष्टटीकायां गोपीनाथः।

सन्न्यासाचारानाह वामनपुराणे—

"सर्वसङ्गपरित्यागो ब्रह्मचर्य्यसमन्वितः।<br>जितेन्द्रियत्वमावासे नैकस्मिन् वसतिश्चिरम्॥" इत्यादि।

शिखरिणी वृत्तम्॥६॥

ভগবতি! এই নিজ সন্তানের প্রতি আপনার দয়া ও স্নেহ সংসার হইতে বিরত চিত্তকেও দ্রবীভূত করিতেছে। এই হেতুই সন্ন্যাসকালে নিয়মিত সকল ব্যবহার হইতে পরাঙ্মুখ হইয়া আপনার যত্ন, এই বিষয়ে লাগিয়া রহিয়াছে। কিন্তু ইহা ভিন্ন দৈব যাহা ইচ্ছা করিতে পারেন।৬।

काम। वत्से! उत्तिष्ठ (१)।

सर्वे उत्तिष्ठन्ति।

मालतीमाधवौ सकरुणानुरागमन्योन्य-(२) मवलोकयतः।

माधवः। स्वगतम् (३)। कष्टम्, एतावती हि लोकयात्रा मालत्या समं माधवस्य। अहो नु खलु भोः! (ठ)

सुहृदिव प्रकटय्य सुखप्रदः (४)
प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम् (५) ॥७॥

(ट) नेपथ्य इति। भट्टिनी राज्ञी। त्वरितमागच्छतु नन्दनेन सह तस्या विवाह-मङ्गलसम्पादनायेति भावः।

(ठ) माधव इति। लोकयात्रा साक्षात्कारादिलौकिकव्यवहारः। अहो नु खलु भोरित्येकमेव महाविषादसूचकमव्ययम।

(ট) নেপথ্যে। ভগবতি! কামন্দকি! এই রাণী জানাইতেছেন যে, মালতীকে লইয়া শীঘ্র আসুন।

কামন্দকী। বৎস! উঠ।

( সকলে উঠিল। )

( মালতী ও মাধব শোক ও অনুরাগের সহিত পরস্পর পরস্পরকে দেখিতে লাগিলেন। )

(ঠ) মাধব। ( স্বগত ) বড়ই কষ্ট, মালতীর সহিত মাধবের এই পর্য্যন্তই লৌকিক ব্যবহার। হায়!

(१) उत्तिष्ठोत्तिष्ठेति क्वचित् द्विरुक्तिः। (२) क्वचित् 'अन्योन्य'मिति नास्ति।

(३) क्वचित् स्वगतमिति पाठो नास्ति। (४) सुखप्रदामिति क्वचित् पाठः।

(५) प्रविशिनष्टि विधिर्मनसो रुजमित्यपि पाठः।

मालती । अपवार्य्य (१) । महाणुहाव ! लोअणाणन्दअर ! (२) एत्तिअं दिट्ठोसि । (ड)

लव । हद्धी हद्धी ! सरीरसंसग्गं ज्जेव णो पिअसही आरोविदा अमच्चेण । (ढ)

(ड) महानुभाव ! लोचनानन्दकर ! एतावत् दृष्टोऽसि ।

(ढ) हा धिक् हा धिक् ! शरीरसंशयमेव नः प्रियसखी आरोपिता अमात्येन ।

सुहृदिति । विधिर्विधाता सुहृदिव सखेव प्रथमम् आदौ, एको मुख्यः, रसो मम सुखजननानुरागो यस्यां ताम् अनुकूलताम् आनुकूल्यं प्रकटय्य प्रकाश्य सुखप्रदः सन्, पुनः अकाण्डे अनवसरे असमये विवर्त्तनेन परिवर्त्तनेन दारुणः सन् मनोरुजं चित्तपीड़ां विशिनष्टि विशेषेण जनयति । अहोशब्दो विषादे । विधेरियमतीव निष्ठुरतेति भावः ।

अत्र श्रौती उपमालङ्कारः ।

"शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः ।" "काण्डोऽस्त्री दण्डबाणार्ववर्गावसर-वारिषु ।" इति चामरः । "अहो धिगर्थे शोके च करुणार्थविषादयो"रिति विश्वः ।

उत्तररामचरितचतुर्थाङ्के कञ्चुकिना श्लोकोऽयमविकलमेव पठितः ।

द्रुतविलम्बितं वृत्तम् ॥७॥

(ड) मालतीति । एतावद्दृष्टोऽसि, इतः परं न पुनर्मया त्वं द्रष्टव्यः जीवनाभावा-दिति भावः । इदञ्च प्रत्यक्षनिष्ठुरत्वात् वज्रं नाम प्रतिमुखसन्धेरङ्गम् ।

"प्रत्यक्षनिष्ठुरं वज्रम् ।" इति साहित्यदर्पणलक्षणात् ।

বিধাতা বন্ধুর ন্যায় প্রথমে একমুখী অনুকূলতা প্রকাশ করিয়া সুখ দিয়া, আবার অসময়ে পরিবর্ত্তন নিবন্ধন ভয়ঙ্কর হইয়া বিশেষরূপে মনের কষ্ট জন্মাইতেছেন ॥৭॥

(ড) মালতী। ( মাধবের প্রতি চুপি চুপি ) মহাত্মন্ ! নয়নানন্দ-জনক ! আমি আপনাকে এই পর্য্যন্তই দেখিলাম।

(१) स्वगतमिति पाठान्तरम् । (२) महाभाव ! लोअणाणन्द ! इति पाठभेदः ।

. मालती। स्वगतम् (१)। परिणदं दाणिं मे जीविदतिण्हाए फलं। सास्रम् (२)। निव्वूढ़ं अ णिक्करुणदाए तादस्स वि कावालित्तणं। पड़िष्ठिदो दुद्दैवस्स दारुणसमारम्भसरिसो (३) परिणामो। कं एत्थ (४) उवालहामि मन्दभाइणी। कं वा असरणा सरणं पड़िवज्जामि। (ण)

(ण) परिणतमिदानीं मे जीवितहृष्णायाः फलम्। निर्व्यूढ़ं च निष्करुणताया तातस्यापि कापालिकत्वम्। प्रतिष्ठितो दुर्दैवस्य दारुणसमारम्भसदृशः परिणामः। कमत्र उपालभे मन्दभागिनी। कं वा अशरणा शरणं प्रतिपद्ये।

(ढ) लवेति। शरीरसंशयं सहसा चिरतराशाविनाशेन अतीवविप्रियाचरणेन च देहधारणसन्देहम्। अमात्येन भूरिवसुना। तत् किमिदानीं करणीयमिति भावः।

(ण) मालतीति। परिणतं पर्य्यवसितम्। निर्व्यूढ़ं सम्पन्नम्। कापालिकत्वं नरबलिदातुः कापालिकस्य भावः। यथा स्त्रीबालादिनिर्विशेषेणैव नरबलिदानात् कापालिकस्य नृशंसत्वं सम्पद्यते, तथा नन्दनाय दानादवश्यम्भाविना मम मरणेन तातस्यापि नृशंसत्वं सम्पन्नमित्यर्थः। दुर्दैवस्य क्रूराया नियतेः दारुणो यः समारम्भः मम विषये कार्य्यविधानोपक्रमः तत्सदृशः तदनुरूपः परिणामः परिसमाप्तिः नन्दनहस्ते दानरूपात्मन्नवणमात्रमेव असह्यदुःखजननादेतद्दैवचेष्टितस्य आरम्भो यथा भयङ्करः मरणविधानात् परिसमाप्तिरपि तथैवेत्यर्थः। प्रतिष्ठितो निर्व्यूढ़ः। उपालभे निन्दामि। यतोऽहं मन्दभागिनी, अतो भाग्यमेव निन्दामीति भावः। अशरणा रक्षकहीना। सर्वत्र पितैव कन्याया रक्षकः मम तु स पितैव विनाशकः संवृत्त इति सर्वथैवाहमशरणेति भावः। प्रतिपद्ये प्राप्नोमि।

(ঢ) লবঙ্গিকা। হায়! হায়! মন্ত্রীমহাশয় আমাদের প্রিয়সখীকে শরীরসংশয়েই উপনীত করিয়াছেন।

(१) कुत्रचित् स्वगतमिति पाठो नास्ति। (२) क्वचित् सास्रमित्यपि नास्ति।

(३) परिणिट्ठिदो देव्वहदअस्स दारुणसमारम्भपरिणामो इति भिन्नः पाठः।

(४) कं वा असरणा इति पाठोऽपि दृश्यते।

लव। सखि! इदो इदो। इति कामन्दक्या सह निष्क्रान्ते (१)। (त)

माधवः। स्वगतम्। नूनमाश्वासनमात्रमेवैतत् (२) सहजस्नेहकातरा (३) भगवती करोति। सोद्वेगम्। हन्त! सर्वथा संशयितजन्मसाफल्यः संवृत्तोऽस्मि। तत् किमिदानीं (४) कर्त्तव्यम्। विचिन्त्य। न खलु महामांसविक्रयादन्यमुपायं (५)

(त) सखि! इत इतः।

(त) लवेति। इत इत आगच्छेति शेषः। निष्क्रान्ते मालतीलवङ्गिके इति शेषः।

(थ) माधव इति। सहजस्नेहेन मां प्रति स्वाभाविकवात्सल्येन कातरा मम दुःखदर्शनेन सन्तप्यमाना, भगवती कामन्दकी एतत् "न तर्हि प्रागवस्थायाः परिहीयसे" इत्यादिनाऽभिहितं नूनं निश्चितम् आश्वासनमात्रमेव केवलां सान्त्वनामेव करोति। न तु कार्य्यतः किमपि कर्त्तुं शक्यति स्वयं राज्ञ एव प्रतिबन्धकत्वादिति भावः। संशयितं राज्ञः प्रतिबन्धकत्वात् मालतीलाभो न भवेत् कामन्दक्याः प्रभावात् भवेद्वा इति सान्देह्यं जन्मसाफल्यं मालतीप्रतिरूपं यस्य सः। मालतीप्राप्त्यभावे मम जन्मैव निरर्थकमिति

(ণ) মালতী। (স্বগত) আমার জীবিত থাকিবার ইচ্ছার ফল এখন পর্য্যবসিত হইল। (অশ্রুপাতের সহিত) নির্দ্দয়তানিবন্ধন পিতারও কাপালিকতা সম্পন্ন হইল; দুষ্ট দৈবের যেমন ভাবে কার্য্যের আরম্ভ, তেমন ভাবেই তাহার সমাপ্তি নিষ্পন্ন হইল। আমার অদৃষ্ট মন্দ; তাই এ বিষয়ে কাহার নিন্দা করিব। আমার রক্ষক নাই; সুতরাং রক্ষক বলিয়া কাহার আশ্রয় লইব।

(ত) লবঙ্গিকা। সখি! এদিক্ এদিক্। (এই বলিয়া কামন্দকীর সহিত উভয়ে প্রস্থান করিল।)

(१) परिक्रामति इति, निष्क्रामन्ति इति पाठभेदौ। (२) मात्रमेतदित्यपि पाठः। (३) सहजस्नेहभावकातरा इति भिन्नः पाठः। (४) तत् किं कर्त्तव्यमिति पाठः क्वचित्। (५)···अन्यदुपायान्तरमिति पाठान्तरम्।

पश्यामि। प्रकाशम्। वयस्य! मकरन्द! अपि भवानुत्कण्ठते मदयन्तिकायाः? (१)। (थ)

भावः। महामांसस्य नरमांसस्य विक्रयात् चामुण्डानुचरपिशाचेभ्यो विक्रयणात्। तथा च शीघ्रमालतीलाभाय महाश्मशाने वामाचारानुसारेण चामुण्डार्च्चनानन्तरं तदनुचरपिशाचेभ्यो नरमांसार्पणरूपमवश्यम्भाविशीघ्रफलदमागमप्रसिद्धं वीरानुष्ठानं मया कर्त्तव्यमिति भावः। तथा चोक्तं तन्त्रसारे—

"चामुण्डा साधकानां भवति च फलदा वाममार्गेण शीघ्रम्॥"

इति संक्षेपः। विस्तारस्तु तत्तदागमेऽनुसन्धेयः। अनेन पञ्चमाङ्कसूचनमपि वेदितव्यम्। महामांसमुक्तं कौलार्च्चनदीपिकायाम्—

"गो-नरेभाश्व-महिष-वराहोष्ट्रोरगोद्भवम्।
महामांसाष्टकं देवि! देवताप्रीतिकारकम्॥"

ईदृशानुष्ठाने तु नरमांसमेव ग्राह्यम्। तदुक्तं कापालिकागमे—

"अशस्त्रसंछिन्नमथोपिदेयं नृमांसमार्द्रं गलदस्रविन्दु यत्।"

जगद्धरादयस्तु—"आत्मसिद्धिं पणीकृत्य साहसाद्यदुपार्जितम्।
अशस्त्रपूतमव्याजं नृमांसं परिकीर्त्तितम्॥"

इति परिभाषितमेव मांसं महामांसमाहुः स्म।

मूल्यलाभोद्देशेन यत्किञ्चिदर्पणं हि विक्रयः। तथा च मालतीरूपमूल्यलाभोद्देशेन यन्महामांसार्पणं तद्विक्रय एव भवतीति बोध्यम्। एतन्नरमांसन्तु परकीयमित्यादिकं पञ्चमाङ्के वक्ष्यते।

ईदृशसाहसानुष्ठाने मकरन्दस्य प्रतिबन्धकतामाशङ्क्य तमपसारयितुमाह वयस्येत्यादि। अपि भवानुत्कण्ठते मदयन्तिकायाः मदयन्तिकार्थं भवानुत्कण्ठितः किमित्यर्थः। मदयन्तिका इति "अधीगर्थदयेशां कर्म्मणि" इति षष्ठी।

(থ) মাধব। (স্বগত) ভগবতী কামন্দকী আমাদের প্রতি স্বাভাবিক স্নেহে বড়ই কাতর; তাই নিশ্চয়ই এইগুলি কেবল আশ্বাস

(१) मदयन्तिकायाम् इति सप्तम्यन्तपाठोऽपि दृश्यते।

मक। अथकिम्।

तन्मे मनः क्षिपति यत् सरसप्रहार-
मालोक्य मामगणितस्खलदुत्तरीया।
त्रस्तैकहायन-कुरङ्गविलोलदृष्टि-
राश्लिष्टवत्यमृतसंवलितैरिवाङ्गैः ॥८॥

स्वकीयौत्कण्ठ्यमाह—तदिति। सरसः सरक्तः प्रहारः शार्दूलनखरप्रहारजनित-व्रतं यस्य तादृशं माम् आलोक्य दृष्ट्वा, अगणितम् अविचारितं स्खलत् पतत् उत्तरीयं यया सा, निपतत् स्तनावरणांशुकमलक्षयन्तीत्यर्थः; तथा त्रस्ता कुतश्चित् कारणात् भीतः, एक-हायन एकवर्षवयस्कः, यः कुरङ्गो मृगः तस्येव विलोले विघूर्णचञ्चले दृष्टी चक्षुषी यस्याः सा तथोक्ता मदयन्तिका, अमृतसंवलितैः सुधामिश्रितैरिव अङ्गैः वक्षःप्रभृतिभिरवयवैः यत् आश्लिष्टवती मामालिङ्गितवती, तत् आश्लेषणं कर्तृ मे मम मनः क्षिपति अधीरं करोति। सुतरां तदर्थमतीवोत्कण्ठितोऽस्मीति भावः।

अत्र अमृतसंवलितैरिवेति भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः, तृतीयपादे लुप्तोपमा च, अनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः। तथा तच्छब्दान्वितवाक्यस्य प्राक्पाठात् "न्यक्कारो ह्ययमेव मे यदरयः" इत्यादिवत् वाक्यगतविधेयाविमर्शदोषः, किञ्च क्षिपतीति पदम् अधीरीकरणार्थस्यावाचकमित्यवाचकत्वदोषोऽपि, तेन 'मच्चित्तमुद्भ्रमति, यन्नृवरस-प्रहारम्' इति पाठेन तयोः समाधानं विधेयम्। एतत्पाठे तु उद्भ्रमति उद्भ्रान्तम् अधीरं भवति, यद्यस्मादित्यर्थः, तेन "आत्मा जानाति यत्पापम्" इत्यादिवत् यच्छब्दस्य परवाक्यगतत्वेन तच्छब्दानपेक्षणात् न विधेयाविमर्शदोषः, न वा अवाचकत्वदोषोऽपीति ध्येयम्।

দিয়াই গেলেন। (উদ্বেগের সহিত) হায়! সকল রকমেই আমার জন্মের সফলতা সন্দিগ্ধ হইয়াছে। অতএব এখন কি কর্ত্তব্য? (চিন্তা করিয়া) মহামাংস বিক্রয় ব্যতীত অন্য উপায় দেখি না। (প্রকাশ্যে) সখে! মকরন্দ! তুমি কি মদয়ন্তিকার জন্য উৎকণ্ঠিত হইতেছ?।

মকরন্দ। হাঁ, ব্যাঘ্র আমার অঙ্গে প্রহার করিল, তাহা হইতে

माधवः । सुलभैव बुद्धरक्षिताप्रियसखी भवतः (१) । अपि च, (द)

प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः
परिष्वङ्गं लब्ध्वा तव कथमिवान्यत्र रमताम् ।
तथा च व्यापारः कमलनयनाया नयनयो-
स्त्वयि व्यक्तस्नेहस्तिमितरमणीयश्चिरमभूत् ॥८॥

वसन्तपदमेकहायनपदस्य दृष्टे विशेषचाञ्चल्यद्योतनार्थम् । एतत् तृतीयचरणमुत्तररामचरिततृतीयाङ्केऽपि दृश्यते । किन्तु तत्र षष्ठ्यन्तः पाठः इति भेदः ।

वसन्ततिलका वृत्तम् ॥८॥

(द) माधव इति । यतो मदयन्तिका बुद्धरक्षितायाः प्रियसखी, अतो भवतः सुलभैवेति भावः । बुद्धरक्षितैव विविधं प्रबोध्य तां त्वयि समासक्तां करिष्यतीति व्यज्यते । अपि च अन्यच्च तत्प्राप्तौ कारणमस्तीत्यर्थः ।

किं तत् कारणमित्याह—प्रमथ्येति । क्रव्यादं मांसाशिनं शार्दूलं प्रमथ्य निहत्य मरणसमये रक्षितवतस्तव परिष्वङ्गम् आलिङ्गनं लब्ध्वा प्राप्य कथमिव केन प्रकारेण अन्यत्र त्वद्व्यतिरिक्ते जने रमताम् अनुरज्यतु मदयन्तिका कथमपि नेत्यर्थः । प्राणरक्षणरूपमुपकारं कृतवतस्तव सापि स्वदेहार्पणरूपं प्रत्युपकारं करिष्यत्येव, तथा परमन्यत्रासक्तौ तव

রক্ত নির্গত হইতে লাগিল ইহা দেখিয়া, ( তাড়াতাড়ি আসিবার সময়ে ) উত্তরীয় বসন খুলিয়া পড়িতেছিল, তাহা লক্ষ না করিয়া, ত্রস্ত ও একবর্ষবয়স্ক হরিণের ন্যায় চঞ্চলনয়না মদয়ন্তিকা, অমৃতমিশ্রিতের ন্যায় অঙ্গদ্বারা আমাকে যে আলিঙ্গন করিয়াছিলেন, তাহা আমার মনকে অধীর করিয়া তুলিয়াছে ॥৮॥

(দ) মাধব। বুদ্ধরক্ষিতার প্রিয়সখী মদয়ন্তিকা তোমার সুলভই হইবেন। আরও দেখ—

(१) न दुर्लभा बुद्धरक्षितायाः प्रियसखीति पाठान्तरम् ।

मक (१)। तदुत्तिष्ठ, पारा-(२) सिन्धुसम्भेदमवगाह्य नगरोमेव प्रविशाव:। उत्थाय परिक्रामत:। (ध)

परिष्वङ्गेण परपुरुषसंस्पर्शदोषाशङ्कयाऽपि त्वय्यनुरज्येतेति भाव:। इदानीं स्वाभिमतासक्तौ वाञ्छलक्षणमाह तथा चेति। तथा च त्वयि तदासक्त्यनुमानहेतुरित्यर्थ:। कमलनयनाया मदयन्तिकाया:, नयनयोर्व्यापारो दृष्टिपात: त्वयि व्यक्तत्वेन स्पष्टीभूतानुरागेण स्तिमित: निश्चल: अतएव रमणीय: सुन्दर: चिरं बहुकालं व्याप्य अभूत्, बहुकालं यावत् निस्पन्द-नयना सा त्वमवलोकितवतीत्यर्थ: सुतरां मदयन्तिका त्वय्यासक्ता तादृशानुरागदर्शनात् अन्यत्र तदसम्भवादिति भाव:।

अतएवात्रानुमानमलङ्कार:, अर्थापत्त्युपमाभ्याञ्च विच्छित्ति: कृतेत्यनुसन्धेयम्। मांसाशि-विशेषे शार्दूलं वक्तव्ये क्रव्यादमिति सामान्याभिधानात् विशेषेऽविशेषाख्यदोष:, स च "मथित्वा शार्दूलम्" इति पाठेन समाधेय:। इदञ्च युक्तिविशेषेणार्थनिश्चयादुपन्यासो नाम प्रतिमुखसन्धेरङ्गम्।

"उपपत्तिकृतो योऽर्थ: स उपन्यास इष्यते।" इति प्राचां लक्षणात्। संशयेन कलुषितस्य मकरन्दचित्तस्य युक्त्या मदयन्तिकाप्राप्तिनिश्चयेन प्रसन्नताप्रतिपादनात् साहित्य-दर्पणमतेऽपि तल्लक्षणसङ्गति:। तथा च—

"उपन्यास: प्रसादनम्।"

क्रव्यं मांसमत्तीति क्रव्याद: कर्म्मण्यण्। "अपक्वे त्वेव" इति नियमात् "क्रव्ये चे"ति न क्विप्। शिखरिणी वृत्तम् ॥९॥

(ध) मकेति। पारासिन्धुनामानौ नदीविशेषौ, तयो: सम्भेदं सङ्गमम्।

মাংসভোজী ব্যাঘ্রকে বিনষ্ট করিয়া মরণের সময় তুমি রক্ষা করিয়াছ এবং তোমার আলিঙ্গন লাভ করিয়াছেন; ইহার পর মদয়ন্তিকা অন্য পুরুষের প্রতি আসক্ত হইবেন কিরূপে। তাহার কারণ দেখ—সেই পদ্মনয়না মদয়ন্তিকার নয়নযুগলের দৃষ্টি তোমার উপরে অনুরাগ প্রকাশ করিয়াছিল এবং বহুসময় যাবৎ নিশ্চল ও সুন্দর হইয়াছিল ॥৯॥

(१) क्वचित् मकेति पाठो नास्ति। (२) वरदा इति पाठभेद:।

माधवः । अयमसौ महानद्योः सम्भेदः (१) । य एषः—(न)

जलनिविड़ितवस्त्रव्यक्तनिम्नोन्नताभिः
परिगततटभूमिः स्नान-(२) मात्रोत्थिताभिः ।
रुचिरकनककुम्भ-श्रीमदाभोगतुङ्ग-
स्तनविनिहितहस्तस्वस्तिकाभिर्बधूभिः ॥१०॥

(न) माधव इति । अयं दृश्यमानः, असौ सः, महानद्योः पारासिन्ध्वोः ।

जलेति । स्नानमात्रमेव उत्थिताभिः पारासिन्धुसङ्गमप्रदेशे अवगाहनानन्तरमेव तीरमुत्तीर्णाभिः, अतएव जलेन निविड़ितानि निरन्तरीकृतानि नितान्तार्द्रतया देहे अत्यन्तसंलग्नानि यानि वस्त्राणि तैर्व्यक्तानि प्रकटितानि स्पष्टदर्शनयोग्यीकृतानि निम्नोन्नतानि निम्नोन्नतस्थलानि नाभिमध्य कुचमण्डल-नितम्ब-जघनाद्यवयवा यासां ताभिः । तथा रुचिरकनककुम्भवत् मनोहरकाञ्चनकलसवत् श्रीमन्तः कान्तिमन्तः, एवम् आभोगेन परिपूर्णतया तुङ्गाः उन्नताश्च ये स्तनाः तेषु विनिहिताः स्थापिताः हस्ताः पाणयः स्वस्तिका इव, हस्ता एव स्वस्तिका इति वा, याभिः, ताभिस्तथोक्ताभिर्बधूभिः स्त्रीभिः परिगता व्याप्ता तटभूमिः तीरदेशो यस्य स तथोक्तः य एष सम्भेदो वर्त्तत इत्यर्थः ।

अत्र स्वभावोक्तिरलङ्कारः, रुचिरकनककुम्भश्रीमदिति लुप्तोपमा, हस्तस्वस्तिकेत्यत्र साधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करः, पुनस्तेषामङ्गाङ्गिभावेन सङ्करः । तथा बधूभिरिति बहुवचनेन चातुर्वर्ण्यस्त्रीणामेव मेलनद्योतनात् वर्णसंहारो नाम प्रतिमुखसन्धेरङ्गम् । तथा च दर्पणे—

"चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ॥"

(ধ) মকরন্দ। তবে উঠ; পারা ও সিন্ধুনদীর সঙ্গমস্থানে অবগাহন করিয়া নগরেই প্রবেশ করি। (উভয়ে উঠিয়া পাদক্ষেপ করিতে লাগিলেন।)

(ন) মাধব। এই সেই মহানদীদ্বয়ের সঙ্গমস্থান। এই যে—

(१) महानद्योर्व्यतिकर इति पाठान्तरम् । (२) स्नात इति पाठभेदः ।

ইতি নিষ্ক্রান্তাঃ সর্ব্বে । (প)

# ইতি মালতীমাধবে শার্দ্দূলবিভ্রমো নাম (১) চতুর্থোঽঙ্কঃ । (ফ)

"আভোগঃ পরিপূর্ণতা" ইত্যমরঃ । "স্বস্তিকো মঙ্গলদ্রব্যে চতুষ্কগৃহভেদয়োঃ । পিষ্টকস্য বিকারে চ স্বস্তিকো রততালিকে ॥" ইতি বিশ্বঃ । অত্র তু মঙ্গলদ্রব্যরূপ এব স্বস্তিকো গ্রাহ্যঃ । স চ অধিবাসার্থং তণ্ডুলাদিচূর্ণেন ত্রিকোণাকারঃ ক্বচিত্ বর্ত্তুলো বা ক্রিয়ত ইতি দ্রষ্টব্যম্ । নিবিড়িতেতি নিবিড়ানি কৃতানীতি করোত্যর্থে ণ্যন্তাৎ নিবিড়শব্দাৎ কর্ম্মণি ক্তঃ । মালিনী বৃত্তম্ ॥১০॥

(প) ইতীতি । পূর্ব্বনিষ্ক্রান্তাঃ কামন্দক্যাদীরাদায় সর্ব্বশব্দস্য বহুবচনস্য চোপপত্তিরিতি দিক্ ।

(ফ) ইতীতি । শার্দ্দূলেন মকরন্দস্য শার্দ্দূলপ্রহারেণ বিভ্রমো ভ্রান্তির্মকরন্দ-মাধবয়োর্মোহো যস্মিন্ সঃ । নাম, শার্দ্দূলবিভ্রম ইতি নাম্না প্রসিদ্ধ ইত্যর্থঃ ।

ইতি মহামহোপাধ্যায়-শ্রীহরিদাসসিদ্ধান্তবাগীশভট্টাচার্য্যবিরচিতায়াং মালতীমাধবটীকায়াং ভাবমনোহরায়াং চতুর্থাঙ্কবিবরণং সমাপ্তম্ ॥০॥

নগরবাসী রমণীগণ স্নান করিয়াই তীরে উঠিয়াছে, জল থাকায় গায়ের সঙ্গে কাপড়গুলি একেবারে লাগিয়া গিয়াছে, তাহাতে গায়ের উচু-নীচু স্থানগুলি স্পষ্ট দেখা যাইতেছে ; সুন্দর স্বর্ণকুম্ভের ন্যায় মনোহরকান্তি, বিশাল ও উন্নত স্তনের উপরে স্বস্তিকের ( টীকা দ্রষ্টব্য ) ন্যায় হস্ত স্থাপিত রহিয়াছে ; ইহাদের দ্বারা যাহার তীরভূমি ব্যাপ্ত হইয়া গিয়াছে ॥১০॥

(প) ( ইহার পর সকলের প্রস্থান । )

(ফ) শার্দ্দূলবিভ্রমনামে চতুর্থ অঙ্ক সমাপ্ত ।

(১) শার্দ্দূলবিভ্রমো নাম ইতি পাঠঃ ক্বচিত্ নাস্তি ।

# पञ्चमोऽङ्कः ।

—०:*:०—

ततः प्रविशत्याकाशयानेन भीषणोज्ज्वलवेशा कपालकुण्डला । (क)

कपाल । षड़धिकदशनाड़ीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥१॥

(क) तत इति । भीषणो नरशिरोऽस्थिकुण्डलधारणादिना भयङ्करः, उज्ज्वलो रक्तपट-रक्तचन्दन-पिङ्गलजटादिधारणात् दृष्टिप्रतिघातिदीप्तिशाली च वेशो यस्याः सा । कपाले नरशिरोऽस्थिद्वयमेव कुण्डले कर्णभूषणविशेषौ यस्याः सा कपालकुण्डला, तदाख्या काचित् वामाचारवती नारी, आकाशयानेन योगप्रभावात् गगनगमनेन खेचरगत्येत्यर्थः ।

षड़धिकेति । यः, षड्भिरधिका अध्यारूढ़ा दश इति षड़धिकदश षोड़श इति तात्पर्य्यम्, नाड़ीनां बहुतरसंख्यत्वेऽपि प्रधानीभूता इड़ापिङ्गलादयो याः षोड़शनाड्य इत्यर्थः, तासां यच्चक्रं मण्डलाकारेणावस्थितं विशुद्धनामकं कण्ठदेशवर्त्ति पद्मं तस्य मध्ये स्थित आत्मा स्वरूपं यस्य स तथोक्तः । इड़ापिङ्गलादि-प्रधानषोड़शनाड़ीघटिते कण्ठदेश-वर्त्तिनि विशुद्धनामके षोड़शदले पद्मे विनैव पञ्चानन-दशभुज-सदाशिवरूपेण विराजमान इति सरलार्थः । तथा तद्विदां तादृशात्मवेदिनां हृदि हृदये विनिहितं कृपया स्थापितं रूपं स्वकीयाकृतिर्येन तादृशः सन् सिद्धिदः योगसिद्धिदाता । तथा अविचलितमनोभिः एकाग्रचित्तैः साधकैः निजोपासकैः मृग्यमाणः साक्षात् कर्त्तुमन्विष्यमाणो भवति । शक्तिभिः इच्छा-क्रिया-ज्ञानरूपाभिः, अथवा ब्राह्मीप्रभृतिभिरष्टशक्तिभिः परिणद्धः समन्ताद्वेष्टितः,

(क) তদনন্তর ভীষণ ও উজ্জ্বলবেশে খেচরগতিতে কপালকুণ্ডলার প্রবেশ ।

सः, शक्तीनां तासामेव इच्छा-क्रिया-ज्ञानरूपाणां नाथः प्रयोक्ता, अथवा ब्राह्मीप्रभृतीनां पतिः सदाशिव इत्यर्थः; जयति सर्वोत्कर्षतया वर्त्तते। सुतरां तं चिन्तयामीति भावः।

अत्र तादृशनाड़ीचक्रादीनां केवलतन्त्रशास्त्रप्रसिद्धत्वादप्रतीतत्वदोषः प्रसजन्नपि स्वयं परामर्शाद्‌गुणतामेव भजते। तथा च साहित्यदर्पणे—

"गुणः स्यादप्रतीतत्वं ज्ञत्वचेद्वक्तृवाच्ययोः।
स्वयं वापि परामर्शे ... ॥"

इतः प्रभृति मदमाङ्कसमाप्तिपर्य्यन्तो गर्भसन्धिः। यथा तत्रैव—

"फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन।
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः॥"

तथा चात्र विवाहरूपप्रधानफलोपायभूतस्य प्रथमाङ्कादावुत्पन्नस्य मालतीमाधवयोः परस्परानुरागस्य "प्रेमार्द्राः प्रणयस्पृशः" इत्यादिना समुद्भेदः, "हा ताद! निक्करुण" "व्यस्तालककै"त्यादिना पुनस्तस्य ह्रासः, "भो भो मालत्यन्वेषिणः सैनिका" इत्यादिना अन्वेषणम्, "मालत्याः प्रथमे"त्यादिना पुनरुद्भेदः, "अमच्चो भअवदी विअवेदि" इत्यादिना ह्रासः, "ता परमत्थवहिणि!" इत्यादिना पुनरन्वेषणञ्च द्रष्टव्यम्। मकरन्दस्य मालतीपरिच्छदधारणादिवृत्तान्तः पताका। यथा तत्रैव—

"व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते।"

तथा मालतीलाभे कामन्दकादीनां चेष्टादर्शनादुपायचिन्ता, राज्ञो नन्दनाय मालतीदानार्थमलङ्कारादिप्रेरणदर्शनादपायचिन्ता, निजसाहसात् प्राप्तिसम्भवश्चेति प्राप्त्याशा नाम तृतीयावस्था। यथा तत्रैव—

"उपायापायचिन्ताभ्यां प्राप्त्याशा प्राप्तिसम्भवः।"

अस्य चाभूतहरणादीनि त्रयोदशाङ्गानि यथास्थानं निवेश्य लक्षणानि वक्ष्यामः।

"अध्यारूढस्याधिक इति निपात्यते" इति कातन्त्रपञ्जिकायां त्रिलोचनः।

प्रधानाः षोड़श नाड़ीराह त्रिपुरारिधृतं वचनम्। यथा—

"इड़ा च पिङ्गला चैव सुषुम्णा च परा स्मृता।
गान्धारी हस्तिजिह्वा च पूषा यशस्विनी तथा॥

अलम्बुषा कुहूश्चैव शङ्खिनी दशमी स्मृता।
तालुजिह्वा च जिह्वा च विजया कामदा परा॥
अमृता बहुला नाम नाड्यो वायुसमीरिताः॥"

षट्चक्राण्याह योगशास्त्रे—

"चतुर्द्दलं स्यादाधारे स्वाधिष्ठाने च षड्दलम्।
नाभौ दशदलोपेतं सूर्य्यसंख्यदलं हृदि॥
कण्ठे स्यात् षोड़शदलं भ्रूमध्ये द्विदलान्वितम्।
सहस्रदलमाख्यातं ब्रह्मरन्ध्रे तु पङ्कजम्॥"

षट्चक्रनिरूपणे—

"विशुद्धाख्यं कण्ठे सरसिजममलं धूम्रधूम्रावभासं
स्वरैः सर्व्वैः शोणैर्द्दलपरिलसितैर्दीपितं दीप्तबुद्धेः।
समास्ते पूर्णेन्दुप्रथिततमनभोमण्डलं वृत्तरूपं
हिमच्छायानागोपरिलसिततनोः शुक्लवर्णाम्बरस्य॥
भुजैः पाशाभीत्यङ्कुशवरलसितैः शोभिताङ्गस्य तस्य
मनोरङ्गे नित्यं निवसति गिरिजाभिन्नदेहो हिमाभः।
त्रिनेत्रः पञ्चास्यो ललितदशभुजो व्याघ्रचर्म्माम्बराढ्यः
सदापूर्व्वो देवः शिव इति समाख्यानसिद्धिप्रसिद्धः॥"

तस्य शक्तित्रयमाह गौरचसंहितायाम्—

"इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी।
त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति॥"

मालिनी वृत्तमिति संक्षेपः॥१॥

কপালকুণ্ডলা। কণ্ঠদেশে ষোড়শনাড়ীঘটিত বিশুদ্ধনামক চক্রের মধ্যে যাঁহার স্বরূপ অবস্থিত, সেই স্বরূপাভিজ্ঞ যোগিগণের হৃদয়ে যিনি নিজরূপ স্থাপিত করিয়া সিদ্ধি দান করিয়া থাকেন এবং সাধকগণ স্থির-চিত্তে যাঁহার অন্বেষণ করেন, ব্রাহ্মীপ্রভৃতি শক্তিগণে পরিবেষ্টিত শক্তিপতি সেই সদাশিবের জয় হউক॥১॥

इयमहमिदानीम्—

नित्यं (१) न्यस्तषडङ्गचक्रनिहितं हृत्पद्ममध्योदितं
पश्यन्ती शिवरूपिणं लयवशादात्मानमभ्यागता ।
नाड़ीनामुदयक्रमेण जगतः पञ्चामृताकर्षणा-
दप्राप्तोत्पतनश्रमा विघटयन्त्यग्रे नभोऽम्भोमुचः ॥२॥

नित्यमिति । मूलाधारस्थितायाः कुलकुण्डलिन्या मूलाधार-स्वाधिष्ठान-मणिपूरानाहत-विशुद्धाज्ञानामक-षट्चक्रभेदनानन्तरं ब्रह्मरन्ध्रस्थित-सहस्रदलकमलान्तर्गते परमात्मनि शिवे संयोजनं लयः, लयनामकस्तन्त्रमतसिद्धो योगविशेषः, तद्वशात् तदवलम्बनबलात् न्यस्तानां पूजाजपारम्भकाले 'श्रां हृदयाय नमः' 'श्रीं शिरसे स्वाहा' इत्यादिक्रमेण विन्यस्तानां, षड़ङ्गानां हृदय-शिरः-शिखा-कवचनेत्रास्त्राणां यत् चक्रं समूहः तत्र निहितं तादृशन्यासे-नैवारोपितम्, तथा हृत्पद्ममध्ये अनाहतनामक-द्वादशदल-हृदयस्थपङ्कजमध्ये उदितं प्रकाशमानं शिवरूपिणं वराभयदाननिरतद्विभुजस्वर्णवर्णध्याननामकशिवस्वरूपम् आत्मानं परमात्मानं नित्यं पश्यन्ती सर्वदा साक्षात् कुर्वती, तथा नाड़ीनाम् इड़ा-पिङ्गला-सुषुम्णानाम् उदयक्रमेण क्रियाप्रकाशपौर्वापर्य्येण पूरक-कुम्भक-रेचकात्मकेन प्राणायामेनेत्यर्थः जगतो गतिशीलात् देहात्, पञ्चामृतानां देहगुरुत्वप्रयोजकीभूतानां विण्मूत्र-रक्त-मज्ज-शुक्राणाम् आकर्षणात् उत्पतनाय देहस्य लघुतां सम्पादयितुम् अपसारणाद्धेतोः, न प्राप्त उत्पतनश्रमः गमनोड्डयनायासो यया सा अप्राप्तोत्पतनश्रमा इयमहं ( प्रागुक्तगद्यस्थपदमत्रान्वेति ) अग्रे नभसः सम्मुखवर्त्तिगगनदेशस्य ये अम्भोमुचः गमनप्रतिबन्धका मेघाः, तान् विघटयन्ति योगबलेनापसारयन्ती सती, इदानीं ( इदमपि प्रागुक्तगद्यस्थं पदम् ) अभ्यागता श्रीपर्व्वतात् करालायतनं प्राप्ता ।

अत्रापि पूर्ववत् स्वयं परामर्शात् न अप्रतीतत्वदोषः ।

अग्रे इति "एकारान्तमव्ययम्" इति कातन्त्रवृत्तौ दुर्गसिंहः ।

षड़ङ्गानि तन्त्रासमन्त्रांश्चाह शारदावचनम् । यथा—

(१) नित्यन्यस्तेति पाठान्तरम् ।

"हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा ।
शिखायै वषडित्युक्तं कवचाय हुमीरितम् ॥
नेत्रत्रयाय वौषट् स्यात् अस्त्राय फडिति क्रमात् ।
षडङ्गमन्त्रानित्युक्तान् षडङ्गेषु नियोजयेत् ॥"

षट्चक्रनिरूपणे—"तन्मध्ये पवनाक्षरञ्च मधुरं धूमावलीधूसरं
ध्यायेत् पाणिचतुष्टयेन लसितं कृष्णाधिरूढं परम् ।
तन्मध्ये करुणानिधानममलं हंसाभमीशाभिधं
पाणिभ्यामभयं वरञ्च विदधत् लोकत्रयाणामपि ॥"

दत्तात्रेयसंहितायां—"लययोगश्चित्तयोगात् सङ्केतैश्च प्रजायते ।
आदिनाथेन सङ्केतानन्तकोटिः प्रकीर्त्तिता ॥

इत्यादौ लययोगो द्रष्टव्यः । प्राणायामे इड़ादिनाड़ीनां क्रमिकक्रियाप्रकाशो देहस्मृत्यादिषु योगियाज्ञवल्क्यसंहितादावनुसन्धेयः ।

प्राणायामफलमाह शिवसंहितायाम्—

"प्राणायामेन योगीन्द्रो लब्ध्वैश्वर्य्याष्टकानि वै ।
पापपुण्योदधिं तीर्त्त्वा त्रैलोक्यचरतामियात् ॥"

"जगत् स्यात् पिष्टपे क्लीवं वायौ ना जङ्गमे त्रिषु । जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च ॥" इति मेदिनी ।

पञ्चामृतमाह त्रिपुरारिधृतं वचनम् । यथा—

"विट् च मूत्रमसृङ्मज्जा शुक्रं पञ्चामृतं स्मृतम् ।"

अत्र हि कपालकुण्डलामुखेन खल्वात्मनोऽतीवतन्त्रशास्त्रवैचक्षण्यमाविष्कृतं कविना ।

शार्दूलविक्रीड़ितं वृत्तम् ॥२॥

---

ন্যাসের আশ্রয় হৃদয়প্রভৃতি ছয়টী অঙ্গে সংস্থাপিত এবং হৃৎপদ্ম মধ্যে প্রকাশমান শিবরূপী পরমাত্মাকে সর্ব্বদা দেখিতে থাকিয়া এবং সম্মুখবর্ত্তী মেঘসমূহকে অপসারিত করিয়া এই আমি এখন আগমন করিলাম। ষট্চক্র ভেদ করিয়া মূলাধারস্থ কুলকুণ্ডলিনীকে ব্রহ্মরন্ধ্রস্থিত

उद्वृत्त-(१) स्खलित-कपालकण्ठमाला
संघट्टक्वणित-करालकिङ्किणीकः ।
पर्य्याप्तं मयि रमणीयडामरत्वं
सन्धत्ते गगनतलप्रयाणवेगः ॥३॥

उद्वृत्तेति । उद्वृत्ता वेगेन कदाचिदुपर्य्युत्थिता, स्खलिता पुनरेव अवनता या कपाल-कण्ठमाला नरशिरोऽस्थिनिर्म्मित-ग्रीवाहारः, तत्र संघट्टेन कपालानां परस्पराघातेन क्वणिताः शब्दायमानाः कराला दन्तुराः किङ्किण्यः तत्कण्ठमालास्थापिता एव क्षुद्रघण्टिका यस्मिन् स तथोक्तः । गगनतलप्रयाणवेगः मयि पर्य्याप्तं यथेष्टं रमणीयडामरयोर्भाव इति रमणीयडामरत्वम्, तथा च मादृशयोगिपक्षे रमणीयत्वम्, साधारणपक्षे तु डामरत्वं भीषणत्वं सन्धत्ते सम्पादयति ।

अत्र तादृशभीषणवेगात् तद्विरुद्धरमणीयत्वगुणोत्पत्तेर्विषमालङ्कारः ।

"डामरोड्डामरौ भीमे केलिसंरम्भनिर्भरे ।" इति रत्नकोषः ।

किङ्किण्यादिध्वनिना तादृशकुलयोगिनीनामानन्दो भवतीति वेदितव्यम् । तथा च जगद्धरधृतवचनम्—

"समुद्रघोषसम्भारकिङ्किणीघण्टिकास्वनैः ।
सदानन्दो भवेद्योगी न निद्रा न क्षुधा तृषा ॥"

प्रहर्षिणी वृत्तम् ॥३॥

সহস্রদলকমলের অন্তর্গত পরমাত্মরূপী শিবের সঙ্গে সম্মিলিত করায় এবং প্রাণায়ামদ্বারা দেহ হইতে বিষ্ঠা-মূত্রপ্রভৃতি আকর্ষণ করায় উৎপতনে ( আকাশে উড়াতে ) আমার কোনই পরিশ্রম হয় নাই ॥২॥

আকাশতলে আমার আগমনের বেগে কণ্ঠদেশের নরকপালেরই মালা কখনও উঠিতেছিল, কখনও নামিতেছিল, তাহাতে ঐ কপালগুলির পরস্পর সংঘর্ষ হওয়ায় অসমান কিঙ্কিণীগুলি বাজিতেছিল; সুতরাং আমার

(१) अपि च । उल्लोल···इति पाठान्तरम् ।

तथा हि—(ख)

विष्वग्वृत्तिर्जटानां प्रचलति निविड़ग्रन्थिनद्धोऽपि (१) भारः
संस्कारक्वाणदीर्घं पटु रटति कृतावृत्तिखट्वाङ्गघण्टा ।
ऊर्द्धं धूनोति वायुर्विवृतशवशिरःश्रेणिकुञ्जेषु गुञ्ज-
न्नुत्तालः किङ्किणीनामनवरतरणत्कारहेतुः पताकाम् ॥४॥

(ख) रमणीयडामरत्वं समर्थयितुमाह तथा हीति ।

विष्वगिति । विष्वक् सर्वतो वृत्तिरवस्थानं यस्य स विष्वग्वृत्तिः जटानां भारः समूहः, निविड़ो गाढ़ो यो ग्रन्थिर्गेथनं तेन नद्धो बद्धोऽपि सन् वेगवशात् प्रचलति । खट्वाङ्गं शिवस्यास्त्रविशेषः ( चिमटा इति यस्य प्रसिद्धिः ) तान्त्रिकयोगिजनोऽपि तत् धारयति । तस्य घण्टा तत्र बद्धा काचित् घण्टा, संस्कारेण वेगाख्यसंस्कारेण यः क्वाणः किङ्किण्यादीनां ध्वननं तेन दीर्घम्, तथा पटु स्फुटं स्पष्टमिति यावत्, तथा कृता आवृत्तिः पौनःपुन्यं यस्मिन् कर्म्मणि तद्यथा तथा रटति शब्दायते । तथा उत्तालो महान्, किङ्किणीनां कण्ठमालास्थितानां क्षुद्रघण्टिकानाम् अनवरतरणत्कारहेतुः अविश्रान्तध्वनिजनकः, वायुर्गमनवेगानिलः, विवृतानि मांसहीनतया स्पष्टलक्ष्यमाणमकलरन्ध्रभागानि यानि शवशिरांसि कण्ठमालागतकपालानि तेषां श्रेणयः कुञ्जा इव श्रेणय एव कुञ्जा इति वा तेषु, तदभ्यन्तरेष्वित्यर्थः गुञ्जन् अव्यक्तं शब्दं कुर्वन् सन् पताकां खट्वाङ्गबद्धां वैजयन्तीं वस्त्रखण्डमिति यावत् ऊर्द्धं यथा स्यात्तथा धूनोति कम्पयति निम्ने पतनादुपरि चालयतीत्यर्थः । सुतरामीदृशो व्यापारो मादृशयोगिपक्षे रमणीय एव साधारणपक्षे तु भीषण एवेति भावः ।

अत्र स्वभावोक्तिरलङ्कारः, श्रेणिकुञ्जेष्वित्यत्र उपमारूपकयोः सन्देहसङ्करः, कुञ्जेषु गुञ्जदिति छेकानुप्रासश्च, समुदाये तु संसृष्टिः ।

"संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।" इति भाषापरिच्छेदः ।

এই গগনগমনের বেগ আমাতে যথেষ্ট মনোহরতা ও ভীষণতা ধারণ করিয়াছিল ॥৩॥

(१)…बन्धोऽपि इति पाठभेदः ।

परिक्रम्यावलोक्य गन्धमाघ्राय च (१)। इदं तावत् (२) पुराणनिम्ब-तैलाक्तपरिमृज्यमानरसोनकगन्धिभि-(३) श्चिताधूमैः पुरस्ता-(४) द्विभावितस्य महतः श्मशानवाटस्य नेदीयः करालायतनम्। (ग)

"खट्वाङ्गं (क्ली) शिवस्यास्त्रविशेषः।" इति शब्दकल्पद्रुमः। "उत्ताल उत्कटे श्रेष्ठे विकराले प्लवङ्गमे।" इति मेदिनी।

स्रग्धरा वृत्तम् ॥४॥

(ग) इदमिति। पुराणेन पुरातनेन निम्बतैलेन अक्तानां मर्दितानां परिमृज्यमानानाम् आरब्धभर्जनानां रसोनकानां लशुनानां गन्ध इव गन्ध एषामस्तीति तैः। पुरस्तादग्रत एव, विभावितस्य अनुमितस्य, महतो विशालस्य, वय्यते वेष्ट्यते अनेनेति वाटः पन्थाः तस्य श्मशानगामिविस्तृतमार्गस्येत्यर्थः, नेदीयः अतिसन्निहितम्, इदं दृश्यमानं करालाया-स्तदाख्यायाश्चामुण्डाया आयतनं स्थानम्, दृश्यते इति शेषः।

"लशुनं गृञ्जनारिष्ट-महाकन्दरसोनकाः" इत्यमरः। "पन्था वाटः पथो मधि" इति भागुरिः।

(খ) যথা—সকলদিকে অবস্থিত জটাসমূহ, দৃঢ় গ্রন্থিদ্বারা বদ্ধ হইলেও গমনের বেগে চলিতেছিল, চিম্‌টার ঘণ্টাটা গমনের বেগে বার বার সুস্পষ্ট ও দীর্ঘ শব্দ করিতেছিল এবং কিঙ্কিণীগুলির অবিশ্রান্ত শব্দ-জনক গুরুতর বায়ু কুঞ্জের ন্যায় বিবৃত নরকপালশ্রেণীর ভিতরে অব্যক্ত শব্দ করতঃ পতাকাদিগকে ঊর্দ্ধে কম্পিত করিতেছিল ॥৪॥

(গ) (পাদক্ষেপপূর্ব্বক দর্শন ও গন্ধ আঘ্রাণ করিয়া) পুরাণ নিম্বের তৈলের সহিত রসুন ভাজিতে লাগিলে যেরূপ গন্ধ বাহির হয়, সেইরূপ গন্ধশালী চিতার ধূমে সম্মুখের শ্মশানের সেই বিশাল পথ অনুমিত হইতেছে, ইহার অত্যন্ত নিকটে করালানামক চামুণ্ডার এই বাড়ী রহিয়াছে।

(१) गन्धमाघ्राय इति पाठः क्वचिन्नास्ति। (२) इदञ्चेति पाठान्तरम्।
(३) रसोनकरसगन्धिभिरिति पाठभेदः। (४) अधस्तादित्यपि पाठः।

यत्र पर्य्यवसितमन्त्रसाधनस्यास्मद्गुरोरघोरघण्टस्याज्ञया सविशेषमद्य पूजासम्भारो मया सन्निधापनीयः। कथितञ्च मे गुरुणा—"वत्से! कपालकुण्डले! अद्य मया भगवत्याः करालायाः प्रागुपयाचितं स्त्रीरत्नमुपहर्त्तव्यम्, (१) तदत्रैव नगरे विदित(२) मास्त" इति। तद्विचिनोमि (३)। सकौतुकमग्रेऽवलोक्य। तत्कोऽयमतिगम्भीरमधुराकृतिरुत्तम्भितकुटिलकुन्तलभारः (४) कृपाणपाणिः श्मशानवाट-(५) मवतरति। य एषः—(घ)

(घ) यत्रेति। पर्य्यवसितं समाप्तं मन्त्रसाधनं पुरश्चरणं यस्य तस्य। सविशेषं दिनान्तरेभ्यः सातिशयं यथा स्यात्तथा। पूजासम्भारः करालार्च्चनोपकरणद्रव्यसमूहः। सन्निधापनीय उपस्थापनीय आनेतव्यः। प्राक् पुरश्चरणारम्भात् पूर्वम्, उपयाचितं सङ्कल्पितम् 'अस्मिन् पुरश्चरणे समाप्ते भगवत्यै स्त्रीरत्नमुपहरिष्यामी'ति मनीषितमित्यर्थः, स्त्रीरत्नं काचित् उत्कृष्टा स्त्री, उपहर्त्तव्यं बलिभावेन दातव्यम्। तत् स्त्रीरत्नम्, अत्रैव नगरे पद्मावत्याम्, विदितं सर्वलोकावगतम् आस्ते विद्यते। इति कथितमित्यन्वयः। तत् तस्मात् विचिनोमि तत् स्त्रीरत्नमन्विष्यामि। भीषणेऽस्मिन् महाश्मशाने निशायामेव सुकुमाराकृतिरयमेकाकी युवा सञ्चरतीति कौतुकेन सहेति सकौतुकम्। अतिगम्भीरा ईदृशभयस्थानेऽपि कम्पादिविकाररहिता, मधुरा कोमला आकृतिर्यस्य सः। उत्तम्भितः जटीकृत्य बद्धः कुटिलः वक्रः कुन्तलभारः केशकलापो यस्य सः। कृपाणपाणिः खड्गहस्तः।

"यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये।
उपयाचितकं तत्तु दोहदं सम्प्रचक्षते॥" इति हारावली।
"भीशोकक्रोधहर्षेषु गाम्भीर्य्यं निर्विकारता।
सर्वावस्थासु माधुर्य्यं प्रियाणां मृदुकारिता॥" इति त्रिपुरारिधृतम्।

---

(१) भगवत्याः करालाया यन्मया⋯इति पाठोऽपि दृश्यते। (२) विचितमिति भिन्नः पाठः। (३) पुस्तकान्तरे पाठोऽयं न दृश्यते। (४) कुन्तल इतिमात्रः पाठः क्वचित्। (५) श्मशानमवतरतीति पुस्तकान्तरे पाठः।

कुवलयदलश्यामोऽप्यङ्गं दधत् परिधूसरं
ललितचरणन्यासः (१) श्रीमान् मृगाङ्कनिभाननः।
हरति विनयं वामो यस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्लसन्नरजाङ्गलः ॥५॥

कुवलयेति। कुवलयदलश्यामोऽपि स्वभावतो नीलोत्पलपत्रवत् श्यामवर्णोऽपि सन् परिधूसरं कुतोऽपि कारणात् धूसरवर्णम् अङ्गं दधत् धारयन्, ललितः सुन्दरः चरणन्यासः भूतले पादन्यासो यस्य सः, श्रीमान् स्वभावतः कान्तिमान्, मृगाङ्कनिभाननः चन्द्रतुल्यवदनः, य एष दृश्यत इत्यन्वयः। लसत् विलसत् नरजाङ्गलं मनुष्यमांसं यत्र सः, अतएव प्रविगलन्तो निष्पतन्तः, असृक्पङ्काः छेदनकालतः किञ्चिद्विलम्बवशात् घनीभूतरक्तविन्दवो यस्मात् सः, सुतरां प्रकाशितं सूचितं साहसम् अन्यदेहात् मांसानयनरूपं दारुणाध्यवसायकार्य्यं येन सः, यस्यास्य वामः पाणिः विनयं शिष्टासौकुमार्य्यं हरति विनाशयति, चण्डत्वमेव द्योतयतीत्यर्थः। सुतरामयं किमपि दुष्करं कर्म्म साधयितुमिच्छतीति भावः।

अत्र लुप्तोपमाद्वयस्य पदार्थहेतुककाव्यलिङ्गद्वयस्य च परस्परनैरपेक्ष्यात् संसृष्टिरलङ्कारः।

(ঘ) যেখানে আমার গুরু অঘোরঘণ্ট ইষ্টমন্ত্রের পুরশ্চরণ সমাপ্ত করিয়াছেন; তাঁহার আদেশে আজ আমার বিশেষরূপে পূজার দ্রব্য উপস্থাপিত করিতে হইবে। গুরুদেব আমার নিকট বলিয়াছেনও—"বৎসে! কপালকুণ্ডলে! ভগবতী করালার নিকট পূর্ব্বে যে সঙ্কল্প ( মানিত ) ছিল, আজ সেই স্ত্রীরত্ন উপহার দিতে হইবে। তাহা এই নগরেই সকলের বিদিত অবস্থায় আছে।" অতএব তাহার অন্বেষণ করি। ( কৌতুকের সহিত সম্মুখে দৃষ্টিপাত করিয়া ) অতি নির্ভয় হৃদয় ও মনোহরাকৃতি এইটীকে উপরে বক্র কেশকলাপের জূট বদ্ধ করিয়া অসিহস্তে শ্মশানের পথে নামিতেছে। এই যে—

নীলোৎপলদলের ন্যায় শ্যামবর্ণ হইয়াও ধূসরবর্ণ অঙ্গ ধারণ করিতেছে;

(१) विकटन्यास इति पाठान्तरम्।

निरूप्य। अये! (१) स एष कामन्दकीसुहृत्पुत्रो महा-मांसस्य पणयिता माधवः। तत् किमनेन, समीहितं (२) सम्पादयामि। विगलितप्रायश्च पश्चिमसन्ध्यासमयः। तथाहि सम्प्रति—(३) (ङ)

साहसमाह व्यवहारतत्त्वे नारदः—

"मनुष्यमारणं स्तेयं परदाराभिमर्षणम्।
पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतम्॥"

"जाङ्गलं (क्ली) मांस" इति शब्दकल्पद्रुमः। हरिणी वृत्तम्॥५॥

(ङ) निरूप्येति। निरूप्य योगप्रभावेण निश्चित्य। कामन्दकीसुहृदः कुण्डिन-नगरेश्वरसचिवस्य देवरातस्य पुत्रः, महामांसस्य नरमांसस्य पणयिता श्मशानपिशाचेभ्यो विक्रेता। योगप्रभावादिदमवधारणम्, अन्यथा माधवेन चतुर्थाङ्के स्वगतभावेनैव महा-मांसविक्रयस्योक्तत्वेन परेषां श्रवणासम्भवात् परस्पराश्रवणस्याप्यसम्भवेन कपालकुण्डलाया इदृशमवधारणं नोपपद्यत इति भाव्यम्। अनेन एतत्कर्त्तृकविघ्नसंशयेन, किं फलम्, किमपि नेत्यर्थः। तथा च अस्माकं योगप्रभावसमीपे अस्य यत्किञ्चित् साधनं कथमपि न प्रभविष्यति, सुतरामनायासेनैव मालतीमानीय गुरोः सङ्कल्पसाधनाय शक्ष्याम्येवेति भावः। अतएवाह समीहितमिति। समीहितं चेष्टितं स्त्रीरत्नानयनम्। विगलितप्रायः गतप्रायः, पश्चिमसन्ध्यासमयः सायंसन्ध्याकालः। सुतरामयमेव समयस्तत्समीहितसाधनस्येति भावः।

ইহার পদক্ষেপ সুন্দর, দেহটী কান্তিমান্ এবং মুখখানি চন্দ্রের মত। যাহার বাম হস্তে একখানা নরমাংস ঝুলিতেছে এবং তাহা হইতে গাঢ় রক্ত পড়িতেছে; সুতরাং ঐ হস্ত উহার সাহসের কার্য্য প্রকাশ করিতেছে এবং মনের কোমলতা হরণ করিতেছে॥৫॥

(ঙ) (নিরূপণ করিয়া) ও! এই সেই কামন্দকীর সখার পুত্র নরমাংসের বিক্রেতা মাধব। তা হউক, উহা দ্বারা আমার কি হইবে।

(१) क्वचित् अये इति पाठो नास्ति। (२) भवतु समीहितमिति पाठभेदः।
(३) सम्प्रतीति पाठोऽपि क्वचिन्नास्ति।

व्योम्नस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते
पर्य्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव।
वात्यासंवेगविष्वग्वितत-वलयित-स्फीतधूम्याप्रकाशं
प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥६॥

व्योम इति। व्योम्न आकाशस्य पर्य्यन्ताः दृष्टिसीमान्तदेशे यवनिकावत् भूतललग्ना इव प्रतीयमानाः प्रदेशाः तमोवल्लरीभिः अन्धकारलताभिः, तापिच्छगुच्छावलिभिरिव तमालस्तवकश्रेणिभिरिव, व्रियन्ते आच्छाद्यन्ते। तथा वसुमती पृथिवी प्रान्तवृत्त्या समन्ततः पर्य्यन्तदेशनिमज्जनक्रमेण नूतने पयसि अभिनवे जले मज्जतीव मग्ना भवतीव। यथा न्युब्जभावेन निमज्जतः कटाहादिवर्त्तुलवस्तुनः प्रथमं निमग्नतया प्रान्तभागो न दृश्यते, अनिमग्नो मध्यभागस्तु दृश्यते एव, परन्तु क्रमशो निमग्नतया मध्यभागोऽपि न दृश्यते; तथा दृष्टिसीमान्तवर्त्ती भूतलांशोऽन्धकारलीनतया प्रथमं न दृश्यते, सन्निहितस्थानन्तु दृश्यत एव परन्तु क्रमशोऽन्धकारलीनतया तदपि न दृश्यते इति सरलार्थः। तथा त्रियामा रात्रिः प्रारम्भेऽपि स्वाविर्भावसमयेऽपि, वनेषु वनप्रदेशेषु वात्याया वायुसमूहस्य संवेगेन विष्वक् वितता सर्वतो विस्तारिता, वलयिता मण्डलाकारेण स्थिता, स्फीता बहुलीभूता च या धूम्या धूमसमूहः, तस्याः प्रकाश इव प्रकाशो यस्य तं तत्सदृशमित्यर्थः। निजं स्वकीयं नीलिमानं नीलतां तरुणयति प्रमुख एव गाढ़ान्धकाररूपयौवनं प्रापयति गाढ़ं करोतीत्यर्थः। सुतरां समीहितसम्पादनस्यायमेवोपयुक्तसमय इति भावः।

अत्र प्रथमवाक्ये उपमालङ्कारः, द्वितीये भावाभिमानिनी वाच्या क्रियोत्प्रेक्षा, तृतीये च लुप्तोपमा, इत्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः।

"अवक्लिनी च वाताली स्याद्वात्या वातमण्डली" इति त्रिकाण्डशेषः। "धूम्या धूमसमूहेऽपि नीहारेऽपि निगद्यते" इति धरणिः।

स्रग्धरा वृत्तम् ॥६॥

আমি আমার অভীষ্ট সম্পাদন করি। সায়ংসন্ধ্যার সময়ও প্রায় অতীত হইয়াছে। তাই এখন—

তমালস্তবকশ্রেণীর ন্যায় অন্ধকাররাশি আকাশের প্রান্তভাগ আবরণ

इति निष्क्रान्ता (१)।

## विष्कम्भकः (२)। (च)

ततः प्रविशति यथानिर्द्दिष्टो माधवः। (छ)

**माधवः।** साशंसम्। (ज)

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढ़रागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः (३) ॥७॥

(च) विष्केति। तल्लक्षणन्तूक्तम्। कपालकुण्डलारूपमध्यमपात्रेण प्रयोजितत्वात् शुद्धविष्कम्भकोऽयम् इति। शुद्धविष्कम्भ इति क्वचित् पाठोऽपि। यथा दर्पणे—

"मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात्······ ॥"

तथा चात्र करालायै स्त्रीरत्नोपहारदानसङ्कल्पः, तदायतने अघोरघण्टस्य सन्निधानादिकञ्च वृत्तकथांशनिदर्शनम्, मालत्यानयनादिकञ्च वर्त्तिष्यमाणकथांशनिदर्शनमित्यनुसन्धेयम्।

(छ) तत इति। यथानिर्द्दिष्टः वामहस्तगृहीत-गलद्रक्तनरमांसखण्डादिरूपः।

করিতেছে, পৃথিবীর চারিধারে যেন নূতন জলে মগ্ন হইতেছে এবং রাত্রি, প্রারম্ভ সময়েই বনপ্রদেশে, বায়ুর বেগে চতুর্দ্দিক্ বিস্তারিত, মণ্ডলাকারীকৃত ও বর্দ্ধিত ধূমরাশির ন্যায় স্বকীয় নীলবর্ণকে প্রগাঢ় করিতেছে ॥৬॥

(এই বলিয়া প্রস্থান করিল।)

(চ) বিষ্কম্ভক।

(ছ) তাহার পর নির্দ্দিষ্টরূপে মাধবের প্রবেশ।

(१) इति परिक्रम्य निष्क्रान्ता इति पाठभेदः। (२) इति शुद्धविष्कम्भ इति पाठान्तरम्। (३) आनन्दसान्द्रोदय इति क्वचित् पाठः।

(ज) माधव इति। आशंसया मालतीलाभाशया सहेति साशंसम्, आहेत्यर्थः।

प्रेमेति। प्रेमा अनुरागाङ्कुरः तेन आर्द्राः सरसाः, प्रणयम् अङ्कुरावस्थातः किञ्चिदतिरिक्तमनुरागं स्पृशन्ति भजन्त इति प्रणयस्पृशः, तथा परिचयात् अयमीदृश इति विशेषज्ञानात् उद्गाढ़ः अतीव घनो यो रागोऽनुरागस्तस्य उदय उत्पत्तिर्यासु ताः, निसर्गमधुराः स्वभावमनोहराः, मुग्धदृशः सुन्दरनयनाया मालत्याः, तास्ताः पूर्वानुभूताः चेष्टाः कटाक्षविक्षेप-भ्रूसङ्कोचनाङ्गवलनादयः मयि भवेयुः। इत्येवाशंसेति भावः। अतएव आशंसया 'कथमस्याः पुनरपि तादृशकटाक्षनिक्षेपगोचरो भवेयम्' 'कथं वा प्रणयमधुरां वाचमाकर्णयेयम्' 'केन वा गाढ़ालिङ्गनसुखमनुभवेयम्' इत्यादिरूपया आशया परिकल्पितासु निर्म्मितास्वपि यासु चेष्टासु, यथार्थरूपासु का कथा सङ्कल्पमात्रनिर्म्मितास्वपीत्यपेरर्थः, क्षणात् तत्क्षणात् वाह्यकरणानां वहिरिन्द्रियाणां चक्षुरादीनां व्यापारं वृत्तिं रूपादि स्वस्वविषयग्रहणसामर्थ्यमित्यर्थः, रोद्धुं शीलं यस्य सः वाह्यकरणव्यापाररोधी, तथा सान्द्रो निरन्तरः आनन्दः सुखं यत्र स आनन्दसान्द्रः, अन्तःकरणस्य चित्तस्य लयो विलीनता भवति तन्मयता भवतीत्यर्थः। तथा च भावनावशात् तासु तासु मालतीचेष्टास्वेव चित्तस्य कान्तनिमग्नतया चक्षुरादिवहिरिन्द्रियैः सम्बन्धाभावात् तेषां सन्निकर्षेऽपि विषयान्तररूपादिप्रत्यक्षं न भवति ; किन्तु निविड़ः कश्चिदानन्दः परिस्फुरतीति सरलार्थो भावार्थश्च।

अत्र साभिप्रायविशेषणत्वात् परिकरालङ्कारः, अर्थापत्तिश्च, इत्यनयोरङ्गाङ्गिभावेन सङ्करः।

प्रेमाणं प्रणयञ्चाह भरतः—

"परस्पराश्रयघनं निरूढ़ं भावबन्धनम्।
यदैकायत्ततोपाधि तत् प्रेमेति निगद्यते॥"
"उपचारैर्मिथो यूनोर्वाह्याभ्यन्तराभिधैः।
प्रेम नीतं प्रकर्षञ्चेत् स एव प्रणयः स्मृतः॥"

"करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः।

आनन्दसान्द्र इति "अग्न्याहितादीनि" इति सान्द्रशब्दस्य परनिपातः।

शार्दूलविक्रीड़ितं वृत्तम्॥७॥

---

(জ) মাধব। (আশার সহিত) মনোহরনয়না মালতীর প্রেমসিক্ত,

अपि च, (१)

अतिमुक्तमद्ग्रथितकेसरावली-(२)
सतताधिवास-सुभगार्पितस्तनम्।
अपि कर्णजाहविनिवेशिताननः (३)
प्रियया तदङ्गपरिवृत्तिमाप्नुयाम् (४) ॥८॥

अतिमुक्तेति। प्रियया मालत्या कर्णजाहे मदीयकर्णमूले विनिवेशितं कपोल-चुम्बनार्थं स्थापितम् आननं यस्य सः, अहम्, अतिमुक्तेन माधवीलतामूलेन, अथवा मुक्तां मुक्तामालाम् अतिक्रान्ता मद्ग्रथितत्वेनादरातिशयादतिक्रम्य स्थितेति अतिमुक्ता, सा चासौ परीता चेति कर्मधारये पुंवद्भावः, मया ग्रथिता या केशरावली वकुलकुसुममाला तस्याः सतताधिवासेन अनवरताश्रयेण सुभगं मनोहरं यथा स्यात्तथा अर्पितौ मम वक्षसि स्थापितौ स्तनौ यस्मिन् कर्मणि तद्यथा तथा तस्याः मालत्या अङ्गपरिवृत्तिं तदीयवक्षो मदीयवक्षसि मदीयवक्षश्च तदीयवक्षसि इत्येवमङ्गविनिमयम् आलिङ्गनमित्यर्थः अपि आप्नुयां किं लभेयम्। तदा च धन्यो भवामीति भावः।

अत्र समेन समविनिमयरूपा परिवृत्तिरलङ्कारः।

"अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलता।" इत्यमरः। कर्णजाहेति "तस्य पाकमूले पील्वादि कर्णादिभ्यः कुणब्जाहचौ"विति कर्णशब्दात् जाहच् प्रत्ययः।

मञ्जुभाषिणी वृत्तम् ॥८॥

প্রণয়শালী, প্রগাঢ় অনুরাগসম্পন্ন ( টীকা দ্রষ্টব্য ) এবং স্বভাবসুন্দর কটাক্ষপাতপ্রভৃতি সেই সেই ব্যবহারগুলি কি আবারও আমার উপরে হইবে। যে ব্যবহারগুলিকে কেবল আশাদ্বারা কল্পনা করিলেও চিত্তের একেবারে লয় হইয়া যায়, সে লয়টী গাঢ় আনন্দে পরিপূর্ণ থাকে এবং চক্ষুপ্রভৃতি বহিরিন্দ্রিয়ের কার্য্যগুলিকে রুদ্ধ করিয়া ফেলে ॥৭॥

(१) किञ्चेति क्वचित् पाठः। (२) अतिमुक्तकग्रथितः,···अविमुक्तकग्रथित···इति पाठभेदौ। (३) कण्ठजाह···इति पाठान्तरम्। (४) तदङ्गपरिवृत्तम्, तदङ्गपरि-वर्त्तम् इति पाठभेदौ।

अथवा, दूरे तावदेतत्, इदमेव प्रार्थये । (ञ)

सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।
यद्बालेन्दुकलोच्चयादवचितैः (१) सारैरिवोत्पादितं
तत् पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥८॥

(ञ) तदालिङ्गनलाभस्य सर्वथैवासम्भवमाशङ्क्याह अथवेति । एतत् तदालिङ्गनप्रार्थनं दूरे आस्तामिति शेषः । तदालिङ्गनसुखं परमसौभाग्यलभ्यमेव, सुतरां तादृशसौभाग्यशून्यस्य मम तत् प्रार्थनं निष्फलमेवेति भावः । इदं वक्ष्यमाणं मुखदर्शनमात्रम् ।

सम्भूयेवेति । यत्र प्रियतमाया मालत्या मुखे आलोकपथावतारिणि दृष्टिपथगामिनि सति सुखानि जगतः सर्वप्रकारानन्दाः चेतसि सम्भूयेव मिलित्वेव परं भूमानं परस्परमेलनादतीवबाहुल्यम् आतन्वते विस्तारयन्ति लभन्त इत्यर्थः । तथा नेत्रोत्सवो नयनप्रीतिहेतुभूतो व्यापारविशेषः रतिं मालतीविषयकाभिलाषविशेषात्मिकां चित्तवृत्तिं प्रस्तौति उत्पादयति । तथा बालेन्दोः अपूर्णमण्डलस्य कलङ्करहितस्य चन्द्रस्य कलोच्चयात् कलासमूहात् अवचितैरानीतैः सारैः श्रेष्ठांशैः यत् मुखम् उत्पादितमिव विधिना निर्म्मितमिव । अनङ्गस्य मदनस्य मङ्गलगृहं कल्याणाधिष्ठानरूपं तदाश्रयेणैव मदनस्य जगद्विजयलक्षणमङ्गललाभादिति भावः । तस्याः प्रियतमाया मालत्यास्तत् मुखं भूयः पुनरपि पश्येयम् । प्राक्तनपुण्यपरिपाकादेतन्मात्रमेव ममास्तु तेनैव चरितार्थो भविष्यामीति भावः ।

আরও ( আশা এই যে, ) প্রিয়তমা মালতী আমার কর্ণমূলে মুখমণ্ডল সংস্থাপন করিবেন এবং আমার গাঁথা বলিয়া মুক্তার হার অপেক্ষাও আদরণীয় সেই বকুলফুলের মালা সর্ব্বদা অবস্থান করায় মনোহর স্তনযুগল আমার বুকের উপরে রাখিবেন ; এই অবস্থায় আমি তাঁহার আলিঙ্গন পাইব কি ? ॥৮॥

(ঞ) অথবা, ইহা দূরে থা'ক, ইহাই প্রার্থনা করি—

(१) यद्बालेन्दुकलोच्चयादुपचितैरिति पाठभेदः ।

.यत्सत्यमधुना सन्दर्शनं नेति स्वल्पोऽपि विशेषः (१) ।
मम हि सम्प्रति सातिशयप्राक्तनोपलम्भसम्भावितात्मनः ( २ )

अत्र प्रथमवाक्ये प्रसिद्धकारणाभावेऽपि ताद्दशसुखोत्पत्तेर्विभावना, वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा इत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः, तृतीये पुनर्वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, अनङ्गमङ्गलगृहमित्यत्र निरङ्गकेवलरूपकच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करश्च, समुदाये तु मिथो नैरपेक्ष्यात् संसृष्टिः । तथा शृङ्गाररसस्थायिभाववाचकरतिशब्दोपादानात् स्थायिभावस्य स्वशब्दवाच्यत्वरूपो रसदोषः, स च "मनो दृक्प्रीतिराकर्षति" इति पाठेन समाधेयः ।

अस्मिंश्च श्लोकद्वये आशंसा नाम नाट्यालङ्कारः । यथा दर्पणे—

"आशंसनं स्यादाशंसा ।"

"तत्सुते हर्षमित्येष उत्सवः परिकीर्त्तितः ।" इत्युत्सवलक्षणम् ।

उपादानस्य निर्दोषत्वे उपादेयस्य निर्दोषता स्वभावसिद्धेति न्यायादुपादेयमुखगतकलङ्कराहित्यद्योतनाय उपादानीभूत-कलङ्कहीनबालेन्दुपदोपादानमिति बोध्यम् ।

तृतीयचरणानुरूपश्लोकार्द्धं यथा नैषधे—

"हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।"

शार्दूलविक्रीड़ितं वृत्तम् ॥८॥

যে মুখখানি দৃষ্টিপথে পতিত হইলে, জগতের সকল সুখ চিত্তে সম্মিলিত হইয়াই যেন অত্যন্ত বাহুল্য লাভ করে এবং নয়নের আনন্দ অনুরাগ উৎপাদন করে এবং সে মুখখানিকে বিধাতা নূতন চন্দ্রকলাসমূহ হইতে আনীত সারাংশদ্বারাই যেন নির্ম্মাণ করিয়াছেন, কামদেবের মঙ্গলময় বাসস্থান প্রিয়তমা মালতীর সেই মুখখানিকে আবারও দেখিতে পাইব কি? ॥৯॥

(१) यत् सत्यमधुना तत्सन्दर्शनेनातिस्वल्पोऽपि न विशेष इति पाठान्तरम् ।

(२)···सम्भावितात्मजन्मन इति क्वचित् पाठः ।

संस्कारस्य अनवरतप्रबोधात् प्रतायमानस्तद्विसदृशैः प्रत्ययान्तरै-(१) रतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययोत्पत्तिसन्तानस्तन्मय-मिव करोति वृत्तिसारूप्यत-(२) श्चैतन्यम् । तथाहि—(ट)

(ट) ननु भावनावशादेव सततमवलोक्यमानायां मालत्यां किमिति पुनः सन्दर्शनं प्रार्थ्यत इत्याह यत्सत्यमिति । तदयमात् अधुना सत्यं सन्दर्शनं न, भावनावशादुपजाय-मानम् इदानीन्तनमिदं प्रियतमायाः पारमार्थिकचाक्षुषप्रत्यक्षं न भवति, इति हेतोः स्वल्पोऽपि विशेष इदानीन्तनतदानीन्तनसन्दर्शनयोरल्प एव भेदः प्रत्यक्षत्वेनैकरूपत्वेऽपि मानसत्वचाक्षुषत्वाभ्यां यत्किञ्चिद्भेद इत्यर्थः । अतएव तन्मुखस्य चाक्षुषप्रत्यक्षं प्रार्थ्यत इति भावः । अथ तादृशभेदे स्वल्पोऽपीति कथमुक्तमित्याह मम इत्यादि । अतिशयेन दृढतर-संस्कारजननसामर्थ्यरूपातिरेकेण सहेति सातिशयः प्राक्तनः पूर्ववर्त्ती य उपलम्भः मदनोद्याने मालत्याश्चाक्षुषप्रत्यक्षरूपं ज्ञानं तेन सम्भावितः सम्पादितः आत्मा स्वरूपं जन्म यस्य तस्य, तस्मिन् मदनोद्याने मालत्यास्तदानीन्तनविविधभावप्रत्यक्षेण जनितस्येत्यर्थः, संस्कारस्य भावनाख्यसंस्कारस्य अनवरतप्रबोधात् चिन्तया अविरतोद्रेकात् स्वकार्य्योत्पादनोन्मुखत्वा-द्धेतोः प्रतायमानः धारावाहिकन्यायेन विस्तारं गच्छन्, तद्विसदृशैः मालतीस्मृतिविजातीयैः प्रत्ययान्तरैः घटादिविषयान्तरावगाहिनीभिः स्मृतिभिः अतिरस्कृतप्रवाहः अनन्तरितधारा-प्रसारः, प्रियतमायाः मालत्याः स्मृतिप्रत्ययोत्पत्तिसन्तानः स्मृतिरूपज्ञानोद्भवसमूहः वृत्तेः मालतीगतायाः स्मृतिरूपायाश्चित्तवृत्तेः सारूप्यतः मालत्याकारेणाकारितत्वात्, मम चैतन्यं चित्स्वरूपमात्मानं तन्मयमिव मालतीमयमिव करोति । सुतरां प्रत्यक्षत्वेनाभेदात् मानसत्व-चाक्षुषत्वाभ्यामिव भेदात् स्वल्पोऽपीत्युक्तमिति भावः ।

तथा च तस्मिन् मदनोद्याने कियन्तं कालं यावत् प्रियतमाया मालत्यास्तत्तद्विविध-भावानां चाक्षुषप्रत्यक्षीकरणात् दृढतरभावनाख्यसंस्कारोत्पत्तिवशात् यदा यदैव तां चिन्तयामि तदा तदैव मम चेतसि तत्तदविकलस्मृतिराविर्भवति, तदा च सम्मुखवर्त्तिनामपि घटादीनां प्रत्यक्षं न भवति, आत्मा च मे मालतीमय इव भवतीति सरलार्थः ।

(१) विसदृशप्रत्ययान्तरैरित्यपि पाठः ।

(२) अन्तर्वृत्तिसारूप्यत इति भिन्नः पाठः ।

अनभिनिवेशपूर्वकं यत्किञ्चिद्दर्शनं न खलु संस्कारमुत्पादयेत्, उत्पादितो वा यथाकथञ्चित् संस्कारो दृढ़त्वाभावात् स्मृतिं नोत्पादयेत् । अभिनिवेशपूर्वकन्तु दर्शनम् अवश्यमेव संस्कारमुत्पादयेत्, उत्पादितश्च संस्कारः स्मृतिं जनयेदित्येतत् प्रतिपादयितुं सातिशयेत्युक्तम् । विषयान्तरावगाहित्वमेव ज्ञानानां वैसादृश्यं वैजात्यं वेति च मन्तव्यम् ।

वेदान्तवेदिनः किलेत्थं ब्रुवन्ति ; विषयसन्निकर्षे सति परिणामस्वभावमन्तःकरणं वृत्तिरूपेण परिणमते, अन्तःकरणावच्छिन्नञ्च प्रमातृचैतन्यं वृत्तौ प्रतिविम्बितं भवति, तदेव वृत्तिप्रतिविम्बितं चैतन्यं प्रमाणमित्युच्यते, सा च वृत्तिर्विषयदेशं गत्वा तदाकारेणाकारिता सती विषयाधिष्ठानचैतन्यतिरोधायकमज्ञानं नाशयति ; ततश्च विषयाधिष्ठानचैतन्यं वृत्तिप्रतिविम्बितप्रमातृचैतन्याभिन्नतया कूपकुल्यालवालसलिलन्यायेनैकत्वमापन्नं सत् स्फुरतीति । अत्र तु मालतीरूपविषयसन्निकर्षाभावेन वास्तविकतन्मयता नास्तीति ज्ञापनाय इवशब्दप्रयोगः । तथा च वेदान्तपरिभाषायाम्—"तैजसमन्तःकरणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते । स एव परिणामो वृत्तिरित्युच्यते ।" विस्तरस्तु तदादौ द्रष्टव्यः ।

अत्र हि "यद्वेदाध्ययनं तथोपनिषदा"मित्यादिना सूत्रधारमुखेन 'अनावश्यकतया शास्त्रान्तरज्ञानपरिचयमत्र न दास्यामी'ति प्रतिज्ञां सूचयन्नपि भवभूतिरन्तराऽन्तरा तज्ज्ञानस्फुरणदुर्निवारवेगेन तत्परिचयमदत्त्वा कथं तूष्णीम्भावमवलम्बितुमर्हतीति समालोचनीयम् ।

---

(ट) এখন সত্য দেখা হইতেছে না বলিয়াও, তখনকার দেখাও এখনকার দেখার অল্পই প্রভেদ। কারণ, পূর্ব্বে অত্যন্ত প্রত্যক্ষ হইয়াছিল, তাহাতে যে সংস্কার জন্মাইয়াছিল, এখন অবিরত চিন্তায় সেই সংস্কারের উদ্বোধন হওয়ায় প্রিয়তমা মালতীর স্মৃতিপ্রবাহ বৃদ্ধি পাইতেছে কিন্তু ইহার বিপরীত অন্যান্য জ্ঞান ইহাকে বাধিত করিতে পারিতেছে না ; সুতরাং প্রিয়তমা মালতীর স্মৃতিরূপ জ্ঞানের উৎপত্তিপ্রবাহ চিত্তবৃত্তিকে মালতীর আকারে পরিণত করিয়াছে বলিয়া আমার চৈতন্যকে যেন মালতীময় করিয়া ফেলিয়াছে। তাহাই বলিতেছি—

लीनेव प्रतिविम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिविड़स्यूतेव लग्ना प्रिया॥१०॥

नेपथ्ये कलकलः।

तन्मयत्वं प्रतिपादयितुमाह लीनेवेति। सा प्रिया मालती नोऽस्माकं चेतसि मम मनसि लीनेव जलादौ लवणादिवत् मिश्रितेव। ननु तदा कथं पृथक् प्रतीतिरित्याह प्रतिविम्बितेवेति। दर्पणादौ मुखादिवत् प्रतिफलितेव। ननु विम्बरूपाया मालत्या असन्निकर्षे कथं तत्प्रतिविम्ब इत्याह लिखितेवेति। मदनचित्रकारेण चिन्तातूलिकया अनुरागवर्णकेन मम चित्तभित्तौ चित्रितेवेति भावः। अथ तदा विषयान्तरज्ञानजलादिना प्रोञ्छनमपि सम्भाव्यत इत्याह उत्कीर्णरूपेव चेति। मदनशिल्पिना शरटङ्कैः मच्चित्तशिलायाम् उत्कीर्णरूपेति भावः। ननु तादृशपदार्थस्य कदाचिन्नष्टतापि स्यादित्याह प्रत्युप्तेव चेति। मदनकर्म्मकारेण मम चित्ताङ्गुरीयके मालतीमणिशिला प्रत्युप्तेव इति भावः। ननु प्रत्युप्तस्यापि कदाचिदुद्धारसम्भव इत्याह वज्रलेपघटितेवेति। वज्रं लौह-विशेषः तच्चूर्णैः सह गुड़माषादिमिश्रणेन निर्म्मितो दृढ़तरसंयोगजनको लेपविशेषो वज्रलेपः, तेन घटितेव संयोजितेव। सुतरामशक्य एव तदुद्धार इत्याशयः। अथ मनस उपरि वज्रलेपस्तदुपरि च मालतीति न साक्षात् परस्परसंस्पर्श इति चेदाह अन्तर्निखातेव चेति। भूमध्ये निधिनिधानवत् अन्तः चेतोमध्ये निखातेव निहितेव। अतएव प्रत्युप्तत्व-निखातत्वयोर्भेदः। ननु तथापि काले तदुद्धारः शक्यते कर्त्तुमित्याह कीलितेवेति। पञ्चभिः चेतोभुवो मनोजस्य कामस्य विशिखैः शरैः कीलितेव तिर्य्यग्विद्धेव। अतएव सुदृढ़लौह-शङ्कुना कुत्रापि विद्धस्य वस्तुन इव न शक्य एव समुद्धार इत्यभिप्रायः। ननु कीलितस्य प्रतिकीलनादिविश्लेषो दृश्यत इत्यत आह चिन्तेत्यादि। चिन्तायाः सन्ततिः प्रवाह एव तन्तुजालं सूत्रसमूहः तेन निविड़ं घनं यथा स्यात्तथा स्यूतेव सीवनं ( सेलाइ इति यस्य वङ्गभाषा ) प्रापितेव लग्ना अनवरतचिन्तया संसक्ता। अतएव तन्मयत्वमिति भावः।

अत्र विशेषणानामभिप्रायविशेषैरुक्तत्वात् परिकरालङ्कारः, वाच्या भावाभिमानिनी

माधवः। आकर्ण्य। अहो! सम्प्रति इतस्ततः प्रवर्त्तमान-कौणपनिकरस्य (१) महती श्मशानवाटस्य रौद्रता। अत्र हि—(२) (ठ)

पर्य्यन्तप्रतिरोधिमेदुरघनस्त्यानं (३) चिताज्योतिषा-
मौज्ज्वल्यं परभागतः प्रकटयत्याभोगभीमं तमः।

क्रियोत्प्रेक्षामाला, चतुर्थचरणे निरङ्गकेवलरूपक-वृत्त्यनुप्रासोत्प्रेक्षाणामेकाश्रयानुप्रवेशरूपः सङ्करश्च, समुदाये पुनरङ्गाङ्गिभावेन सङ्करः।

"वज्रं (क्ली) लौहविशेषः।" इति शब्दकल्पद्रुमः।

शार्दूलविक्रीड़ितं वृत्तम् ॥१०॥

(ठ) माधव इति। इतस्ततः प्रवर्त्तमानो विद्यमानः कौणपनिकरो राक्षससमूहो यस्य तस्य। श्मशानवाटस्य श्मशानप्रदेशस्य। रौद्रता भयङ्करत्वम्। हि यस्मात्।

প্রিয়তমা মালতী আমার চিত্তে সংলগ্ন হইয়া যেন মিলিয়া গিয়াছেন, যেন প্রতিবিম্বিত, চিত্রিত, ক্ষোদিত, রোপিত, বজ্রলেপদ্বারা যোজিত কিংবা ভিতরে প্রোথিত হইয়াছেন, অথবা কামদেবের পাঁচটী বাণ যেন তাঁহাকে আমার চিত্তে বিদ্ধ করিয়া দিয়াছে, কিংবা ধারাবাহিচিন্তারূপ সূত্রসমূহ যেন মালতীকে আমার চিত্তে ঘনভাবে সেলাই করিয়া ফেলিয়াছে ॥১০॥

( নেপথ্যে কোলাহল। )

(ঠ) মাধব। ( শুনিয়া ) ওহে! সম্প্রতি চারিদিকে রাক্ষসগণ বিচরণ করিতেছে, তাহাতে শ্মশানপ্রদেশের অত্যন্ত ভীষণতা জন্মিয়াছে। যেহেতু এখানে—

(१) प्रगल्भमानकौणपनिकायस्य इति पाठान्तरम्।

(२) अस्मिन् हि इति पाठभेदः। (३)…चयस्त्यानम् इति क्वचित् पाठः।

संसक्ताकुलकेलय: किलकिलाकोलाहलै: सम्मदा-
दुत्ताला: कटपूतनाप्रभृतय: सांराविणं कुर्वते ॥११॥

पर्य्यन्तेति । पर्य्यन्ते ज्योतिषां प्रान्तप्रदेशे प्रतिरोद्धुं दृष्टिमवरोद्धुं शीलं यस्य तत् पर्य्यन्तप्रतिरोधि, मेदुरं स्निग्धम्, घनं निविड़म्, स्त्यानं वृद्धिप्राप्तम् । अत्र परपरस्य विशेषत्व-विवक्षया क्रमशो द्वयोर्द्वयो: पदयो: कर्म्मधारय: । तथा आभोगेन विस्तारेण भीमं भयङ्करं तम: कर्त्तृ परभागत उत्कर्षेण अतिशयेनेत्यर्थ:, चिताज्योतिषां चिताग्नीनाम् औज्ज्वल्यम् उज्ज्वलतां प्रकटयति व्यनक्ति प्रकाशयति । गाढ़ान्धकारे हि तेजोरूपमतिशयेन प्रकाशत इति द्रष्टव्यम् । संसक्ता अविच्छिन्नभावेन लग्ना अविरतोपस्थिता आकुला व्यस्ततायुक्ता केलि: क्रीड़ा यासु ता:, उत्ताला विकराला:, कटपूतना: श्मशानवासिपिशाचविशेषा: तत्-प्रभृतय: तेन शृगालादयोऽपि गृह्यन्ते, सम्मदात् गाढ़ान्धकारागमेन पर्य्युषितशवदर्शनेन च संहर्षात्, किलकिलेति तत्कोलाहलानुकरणम्, तेन किलकिलारूपै: कोलाहलै: सांराविणं व्यापिनम् अनवगतविशेषं शब्दं कुर्वते । अतएव श्मशानवाटस्य महती रौद्रतेति भाव: ।

अत्रान्धकारात् प्रकाशरूपविरुद्धक्रियोत्पत्तेर्विषमालङ्कार: तृतीयचरणे वृत्त्यनुप्रास-श्चेत्यनयो: संसृष्टि: । तथा कोलाहलसांराविणशब्दयोस्तात्पर्य्यादर्थभेदाभावेऽपि तदुभय-प्रयोगादर्थगतपुनरुक्ततादोष:, स च 'किलकिलारूपं महासम्मदा'दिति पाठेन समाधेय: ।

"वर्णोत्कर्षश्च परभाग: ।" इति माघद्वादशसर्गे ६२ श्लोके मल्लिनाथ: । "शपथे च क्रियाकारे किलिञ्जशवयो: कट: ।" इति त्रिकाण्डशेष: । "पूतं त्रिषु पवित्रे च शटिते बहुलीकृते ।" इति मेदिनी ।

तेन च कटानां शवानां पूतं शटितम् अवसन्नं गलितमिति यावत् मांसं नाथति याचत इति कटपूतना, पृषोदरादित्वात् साधु: । सांराविणमिति रुधातो: "अभिविधौ भाव इनुण्" इतीनुण्प्रत्ययान्तात् स्वार्थेऽण् ।

शार्दूलविक्रीड़ितं वृत्तम् ॥११॥

প্রান্তভাগে দৃষ্টিরোধী, স্নিগ্ধ, নিবিড়, বৃদ্ধিপ্রাপ্ত ও বিস্তারবশতঃ ভয়ঙ্কর অন্ধকার চিতাগ্নির উজ্জ্বলতা অত্যন্ত ব্যক্ত করিতেছে এবং কট-পূতনাপ্রভৃতি পিশাচগণ আনন্দবশতঃ 'কিল্' 'কিল্' এইরূপ কোলাহলে

तदुच्चैराघोषयामि (१)। भो भोः! श्मशाननिकेतनाः कटपूतनाः! (ड)

अशस्त्रपूतमव्याजं पुरुषाङ्गोपकल्पितम्।
विक्रीयते महामांसं गृह्यतां गृह्यतामिदम् (२) ॥१२॥

नेपथ्ये पुनः कलकलः।

---

(ड) तदिति। तत्तस्मात् पिशाचानामुपस्थितत्वादित्यर्थः, उच्चैराघोषयामि अन्यथा स्वकीयकोलाहलात् न श्रूयेतेति भावः। श्मशानं निकेतनमालयो येषां ते।

अशस्त्रेति। शस्त्रेण शस्त्रच्छेदेन पूतं पवित्रमिति शस्त्रपूतं तन्न भवतीत्यशस्त्रपूतं शस्त्रेणाच्छिन्नम् अपि तु मृतस्य कस्यचित् पर्य्युषितदेहात् हस्ताकर्षणेन संगृहीतमित्यर्थः। ईदृशं खलु पिशाचैर्ग्राह्यमपवित्रत्वात्, शस्त्रच्छिन्नन्तु न ग्राह्यं पवित्रत्वादिति भावः। न विद्यते व्याजश्छलं प्रतारणा यत्र तत्, क्रियार्थमेवेदमानीतं न तु तदपदेशेन सन्निहितीकृतानां युष्माकं प्रहरणार्थमित्याशयः। पुरुषस्य अङ्गेन केनचिदवयवेन उपकल्पितं सम्पादितम्, अतएवेदमुत्कृष्टतरं स्त्रीपुंसयोः पुंमांसस्यैवोत्कर्षादित्यभिप्रायः। इदं मदीयहस्तान्दोलितं महामांसं मानुषमांसं विक्रीयते किञ्चिन्मूल्यदानशपथेन मया समर्प्यते, गृह्यतां गृह्यतां तन्मूल्यार्पणमङ्गीकृत्य नीयतां नीयताम्।

अत्र विशेषणानामुक्ताभिप्रायैरुक्तत्वात् परिकरालङ्कारः। तथा लोके पुरुषाङ्गपदेनोपस्थप्रतीतेर्व्रीडाव्यञ्जकतया अश्लीलतादोषः, स च 'नरावयवकल्पित'मिति पाठेन समाधेयः।

---

দীর্ঘ ও অব্যক্ত শব্দ করিতেছে এবং অবিচ্ছিন্ন ও ব্যস্তভাবে ইহাদের খেলা চলিয়াছে ॥১১॥

(ড) অতএব উচ্চৈঃস্বরে ঘোষণা করি। ওহে ওহে শ্মশানবাসী কটপূতনাগণ!

---

(१) भवतु, आघोषयामि तावत् इति पाठान्तरम्।

(२) गृह्यतामिति इत्यपि पाठः।

माधवः। कथमाघोषणानन्तरमेव सर्वतः समुच्चलदुत्ताल-वेतालमुक्ततुमुलाव्यक्तकलकलाकुलः (१) प्रचलित इवाविर्भवद्भूत-सङ्कटः श्मशानवाटः। आश्चर्य्यम्! (ढ)

अग्निपुराणे प्रेतानामाहार्य्यमुक्तम्। यथा—

"तिलमन्त्रविहीनानि हिजाहृष्टानि यानि तु।
नियमव्रतहीनानि प्रेता भुञ्जन्ति तत्र वै॥"
"सक्षीधान्यपवित्राणि प्रेता भुञ्जन्ति तत्र वै।"

ईदृशप्रेतपिशाचयोः पर्य्यायतेति बाध्यम्। महामांसलक्षणादिकन्तूक्तम्। गृह्यतां गृह्यतामित्यादरातिशये द्विरुक्तिरिति संक्षेपः॥१२॥

(ढ) माधव इति। सम्भावनायां कथंशब्दः। समुच्चलद्भिः उत्तालैर्विकरालैः, वेतालैर्भूताधिष्ठितशवैः मुक्तस्त्यक्तः कृत इत्यर्थः, यस्तुमुलः अव्यक्तश्च कलकलः कोलाहलः, तेन आकुलः। तथा आविर्भवद्भिर्भूतैः अन्यान्यपिशाचैः सङ्कटः सङ्कीर्णः श्मशानवाटः श्मशानप्रदेशः प्रचलित इव, इति सम्भावयामीत्यर्थः। आश्चर्य्यं वक्ष्यमाणम्।

"वेतालः (पुं)···भूताधिष्ठितशव" इति शब्दकल्पद्रुमः।

এই মহামাংস বিক্রয় করিতেছি, ইহা অস্ত্রদ্বারা ছেদ করায় পবিত্র নহে, ইহাতে কোন কপটতা নাই এবং পুরুষের অঙ্গ হইতে ইহা আনীত; অতএব ইহা গ্রহণ কর॥১২॥

( নেপথ্যে পুনরায় কোলাহল। )

(ঢ) মাধব। আমার ঘোষণার পরই ভয়ঙ্কর বেতালগণ সকল দিকেই চলিতে থাকিয়া অব্যক্ত ও তুমুল কোলাহল করিতেছে, তাহাতে শ্মশানদেশ আকুল হইয়া উঠিয়াছে এবং আরও কতকগুলি পিশাচের আগমনে শ্মশানপ্রদেশ ব্যাপ্ত হইয়া, যেন চলিতে লাগিয়াছে। কি আশ্চর্য্য!

(१) समुच्चलदुत्तालतुमुलव्यक्तकलकलाकुल इति पाठभेदः।

कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभि-
र्दंष्ट्राकोटिविसङ्कटैरित इतो धावद्भिराकीर्य्यते।
विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो
लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः ॥१३॥

कर्णेति। कर्णयोरभ्यर्णे अन्तिके प्रायेण कर्णसमीपपर्य्यन्तमित्यर्थः, विदीर्णे विपाटिते ये सृक्कणी ओष्ठप्रान्तद्वयं ताभ्यां विकटव्यादानेन भयङ्करमुखविवरप्रकटनेन दीप्तः प्रकाशितः अग्निर्येषु तैः, दंष्ट्राणां दन्तानां कोटिभिरग्रभागैः विसङ्कटानि विशेषेण सङ्कीर्णानि तैः, इत इतो धावद्भिः समन्ततः प्रचरद्भिः। तथा विद्युत्पुञ्जनिकाशानि तड़ित्समूह-समानपिङ्गलवर्णानि केश-नयन-भ्रू-श्मश्रुजालानि येषु तैः। लक्ष्याणि मुखस्थितोल्कादीप्ति-वशात् कदाचित् दृश्यानि, अलक्ष्याणि मुखसङ्कोचेन तदुल्कादीप्त्यभावात् अन्धकारावरणेन अदृश्यानि, विशुष्काणि विशेषेण कृशानि, दीर्घाणि च वपूंषि येषां तेषां तथोक्तानाम् उल्कामुखानां तदाख्यानाम् अन्वर्थनामकानां पिशाचविशेषाणां मुखैर्वदनैः नभः श्मशाना-काशम् आकीर्य्यते व्याप्यते। ईदृशमलौकिकजन्तुदर्शनमेवाश्चर्य्यमिति भावः।

अत्र स्वभावोक्तिरलङ्कारः। विद्युत्पुञ्जनिकाशेत्यत्र लुप्तोपमा, प्रथमे द्वितीये च चरणे वृत्त्यनुप्रासः, तृतीये च काशकेशेति च्छेकानुप्रासश्च, इत्येतेषां संसृष्टिः।

"प्रान्तावोष्ठस्य सृक्कणी।" "सङ्कटं ना तु सम्बाधः।" इति चामरः।

शार्दूलविक्रीड़ितं वृत्तम् ॥१३॥

উল্কামুখনামক পিশাচগণের শুষ্ক ও দীর্ঘ শরীর কখনও (মুখাগ্নি প্রকাশের সময়) দেখা যাইতেছে না। ইহাদের ওষ্ঠের দুই প্রান্তভাগ কর্ণের নিকট পর্য্যন্ত গিয়াছে, তাহার ব্যাদান (হাঁ) করায় মুখ হইতে অগ্নি প্রকাশ পাইতেছে; দন্তসমূহের অগ্রদেশে মুখসমূহ পরিপূর্ণ হইয়া গিয়াছে; কেশ, নয়ন, ভ্রূ ও শ্মশ্রুসমূহ (দাড়িগুলি) বিদ্যুৎপুঞ্জের ন্যায় পিঙ্গলবর্ণ দেখা যাইতেছে এবং এই মুখগুলি চতুর্দ্দিকে ধাবিত হইতেছে, তাহাতে শ্মশানের আকাশ ব্যাপ্ত হইয়া যাইতেছে ॥১৩॥

अपि च,

एतत् पूतनचक्रमक्रमकृतग्रासार्द्धमुक्तै-(१) र्वृकान्
नुत्पुष्णात् परितो नृमांसविघसैराघर्घरं (२) क्रन्दतः ।
खर्जूरद्रुमदघ्नजङ्घमसितत्वङ्नद्धविष्वक्तत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥१४॥

एतदिति। अक्रमेण अतिबुभुक्षावशात् यौगपद्येन कृतो यो ग्रासः वृहत्कवलः तस्मादर्द्धमुक्तैः तादृशमुखस्यापि मध्ये वृहत्तया स्थानप्राप्त्यभावात् भूतले पतितार्द्धैः नृमांसविघसैः मृतनरमांसानां भुक्तावशेषैः परितः सर्वतः, आघर्घरम् ईषत् "घर् घर्" इत्येवं यथा स्यात्तथा क्रन्दतः शब्दं कुर्वतः, वृकान् शृगालान्, उत्पुष्णात् तादृशखाद्यार्पणेन पुष्टान् कुर्वाणम्। खर्जूरद्रुमदघ्नाः खर्जूरतरुप्रमाणा जङ्घा यस्य तत्। तथा असितत्वचा कृष्णवर्णचर्म्मणा नद्धा बद्धा आवृता इत्यर्थः, विष्वक्तताः सर्वतो व्याप्ताः सर्वशरीर-सन्धिस्थान-व्यापिनः ये स्नायुग्रन्थयः शिराबन्धनानि तेषु तत्तत्स्थानेष्वित्यर्थः, घनानि निविड़ानि पुञ्जीभूतानि अस्थिपञ्जराणि पञ्जरवत् प्रतीयमानानि क्षुद्रक्षुद्रास्थीनि येषु ते तथाभूताः जरन्तः अतिचिरकालजीवनाज्जीर्णाः कङ्कालाः सम्पूर्णदेहास्थीनि यस्य तथोक्तम्। एतत् पूतनानां पिशाचविशेषाणां चक्रं समूहः आलोक्यते दृश्यते।

अत्रापि स्वभावोक्तिरलङ्कारः, खर्जूरद्रुमदघ्नजङ्घमित्यत्र लुप्तोपमा च, अनयोरङ्गाङ्गिभावेन सङ्करः, चक्रमक्रमेति च्छेकानुप्रासेन संसृज्यते। तथा रोदनाह्वानवाचकं क्रन्दत इति पदं शब्दार्थस्यावाचकमित्यवाचकत्वदोषः, तस्य तु 'आघर्घरध्वानिनः' इति पाठेन समाधानं विधेयम्।

"चक्रं प्रहरणे गणे।" इत्यादि हेमचन्द्रः। "वृकः (पुं) शृगाल" इति शब्दकल्पद्रुमः। "अमृतं विघसो यज्ञशेषभोजनशेषयोः।" "स्यात्शरीरास्थि कङ्कालः।" इति चामरः।

"उद्भूतरूपं नयनस्य गोचर" इत्यादि भाषापरिच्छेदकारिकायां यद्यपि पिशाचरूपस्य चाक्षुषप्रत्यक्षव्यावर्त्तनार्थमेव उद्भूतपदमुपात्तम्, तथापि माधवस्य मालतीलाभाय तान्त्रिक-

(१) ग्रासार्द्धभुक्तैरिति क्वचित् पाठः। (२) आदर्दरमिति पाठभेदः।

: समन्तादवलोक्य विहस्य च। अहो! प्रकारः पिशाचानाम्। एते हि—(१) (ग)

पृथु चल-(२) रसनोग्रमास्यगर्त्तं
दधति विदार्य्य विवर्णदीर्घदेहाः (३)।
चल-(४) दजगरघोरकोटराणां
द्युतिमिह (५) दग्धपुराणरोहिणानाम् (६) ॥१५॥

क्रियाविशेषानुष्ठानवशेन लब्धालौकिकदर्शनशक्तिकतया तदानीं पिशाचानामपि रूपप्रत्यक्षं जातमिति मन्तव्यम्। अतएव आलोक्यत इत्युक्तम्।

शार्दूलविक्रीड़ितं वृत्तम् ॥१४॥

(ग) समन्तादिति। विहस्येत्यनेन तादृशभयङ्करदर्शनेऽपि माधवस्य गाम्भीर्य्यं सूचितम्। प्रकारो विधा व्यापारविशेष इति यावत् (धारा, रकम इति द्वयं यस्य वङ्गभाषा)।

पृथुचलेति। विवर्णा मलिना दीर्घाश्च देहा येषां ते एते दृश्यमानाः पिशाचविशेषाः, पृथुर्वृहती चला लोला च या रसना जिह्वा, तया उग्रं भयङ्करम्, आस्यगर्त्तं मुखविवरम्

আরও, এই পূতননামক কতকগুলি পিশাচ দেখা যাইতেছে, ইহারা একেবারে যে সকল মনুষ্যের মাংস গ্রাস করিয়াছিল, তাহা হইতে অবশিষ্ট অৰ্দ্ধ পরিত্যাগ করিয়া, চতুর্দ্দিকে 'ঘর্' 'ঘর্' শব্দকারী শৃগালগণকে পোষণ করিতেছে; ইহাদের জঙ্ঘাগুলি খর্জ্জুরবৃক্ষের ন্যায় সুদীর্ঘ এবং জীর্ণ কঙ্কালের অস্থিসমূহ কৃষ্ণবর্ণ চর্ম্মে বদ্ধ ও সর্ব্বশরীরব্যাপী শিরাসমূহে গ্রথিত রহিয়াছে ॥১৪॥

(গ) (চতুর্দ্দিকে দৃষ্টিপাতপূর্ব্বক হাস্য করিয়া) ওহে! পিশাচদের রকমই আশ্চর্য্য!

(१) तत इति क्वचित् पाठः। (२) पृथुतर, ततपृथु इति पाठभेदौ। (३) विशीर्णशुष्कदेहा इति पाठान्तरम्। (४) ललदजगर, चलदजगर इति भिन्नौ पाठौ। (५) द्युतिमिव इत्यपि पाठः। (६)…रोहणानामिति पाठोऽपि दृश्यते।

परिक्रम्यावलोक्य च (१)। हन्त! अतिबीभत्समग्रतो वर्त्तते (२)। (त)

उत्कृत्योत्कृत्य (३) कृत्तिं प्रथममथ पृथूच्छोथ (३) भूयांसि मांसा-
न्यंसस्फिक्पृष्ठपीठाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।
आर्त्तः पर्य्यस्तनेत्रः (४) प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥१६॥

अत्र जातविकवचनम्। विदार्थ्य व्यादाय, इह इदानीं चलद्भिः प्रविशद्भिः, अजगरैः बृहत्सर्पैः घोराणि भीषणानि कोटराणि शरीरस्थविवराणि येषां तेषां दग्धा दवाग्निना उपरिवल्कलदेशे किञ्चित् विदह्य कृष्णवर्णीकृताः, पुराणाः पुरातनाः, एतेन तेषां जीर्णत्व-शुष्कत्व-कोटरवत्त्वं सूचितम्, रोहिणाश्चन्दनतरवः, तेषां द्युतिं कान्तिं दधति धारयन्ति।

अत्र अन्येषां द्युतिं कथमन्ये दधतीति वस्तुसम्बन्धोऽसम्भवन् द्युतिमिव द्युतिमिति बिम्बानुबिम्बभावं बोधयतीति असम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः।

"रोहिणश्चन्दनद्रुमः।" इति विश्वः। पुष्पिताग्रा वृत्तम् ॥१५॥

(त) परिक्रम्येति। अतिबीभत्सम् अतीव घृणाव्यञ्जकं कर्म्म।

ইহাদের শরীর মলিন ও সুদীর্ঘ, মুখবিবরে বৃহৎ জিহ্বা ঝুলিতেছে, এখন ইহারা সেই মুখ ব্যাদান করিয়া, কোটরের ভিতরে ভয়ঙ্কর অজগর প্রবেশ করিতে থাকিলে দগ্ধ পুরাতন চন্দনবৃক্ষের শোভা ধারণ করিতেছে ॥১৫॥

(ত) ( কতিপয় পদক্ষেপ ও দৃষ্টিপাত করিয়া ) ওঃ! সম্মুখে অতিশয় ঘৃণিত ব্যাপার চলিতেছে—

(१) अवलोक्य चेति क्वचित् नास्ति। (२) बीभत्समिवाग्रे वर्त्तते इति भिन्नः पाठः।

(३) निर्भिद्योत्कृत्य इति पुस्तकान्तरे पाठः।

(४) पृथूच्छोफ, पृथूत्सेध इति पाठभेदौ।

किन्तदित्याह उत्कृत्येति। क्षार्त्तः क्षुधया पीड़ितः, पर्य्यस्ते अन्यः प्रेत आगच्छति न वेति दर्शनाय इतस्ततो निक्षिप्ते नेत्रे येन स पर्य्यस्तनेत्रः, तथा प्रकटिता मुखव्यादानेन प्रकाशं नीता दशना दन्ता येन स प्रकटितदशनः प्रेतरङ्कः दीनः कश्चित् पिशाचः, प्रथमम् आदौ कृत्तिं कस्यचित् शवस्य चर्म्म उत्कृत्य उत्कृत्य नखैश्छित्त्वा छित्त्वा, अथ अनन्तरं पृथुना महता उच्छोथेन उत्पन्नशोथरोगेण भूयांसि बहुलीभूतानि, उग्रा दारुणा पूतिर्दुर्गन्धो येषु तानि नासिकापीड़ाजनकदुर्गन्धान्वितानीत्यर्थः, तथा अंसौ स्कन्धौ, स्फिचौ नितम्बस्थस्थूलमांसपिण्डौ पृष्ठपीठं पीठवद्विशालं पृष्ठञ्च तानि आद्यानि येषां ते च ते अवयवा ऊरुप्रभृतीन्यङ्गानि चेति तेषु सुलभानि स्थूलत्वादनायासलभ्यानि मांसानि पिशितानि जग्ध्वा भक्षयित्वा अङ्कस्थात् क्रोड़स्थितात् करङ्कात् शवस्य मस्तकात् अस्थिषु संस्थं विद्यमानम्, तथा स्फुटगतमपि निम्नोन्नतस्थानस्थितञ्च क्रव्यं मांसम् अव्यग्रं त्वरारहितम् आयत्तीकृतत्वेनान्येषां ग्रहणासम्भवात् सधैर्य्यमित्यर्थः, अत्ति खादति।

अत्र स्वभावोक्तिरलङ्कारः, तथा सर्व्वत्र हत्त्यनुप्रासः, क्रव्यमव्यग्रमित्यत्र तु छेकानुप्रासः, इत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः। परुषवर्णबाहुल्यात् प्रसजन्नपि दुःश्रवत्वदोषः अत्रत्यबीभत्सरसानुकूलत्वात् गुणत्वमेव भजते। तथा च साहित्यदर्पणे—

"वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्॥"

"रङ्कः कृपणमन्दयो"रिति मेदिनी। "करङ्को मस्तके शस्ये नारिकेलफलास्थनि।" इति विश्वः। "स्फुटः (त्रि)···विषमोन्नतस्थानम्" इति शब्दकल्पद्रुमः। "पिशितं तरसं मांसं पललं क्रव्यमामिषम्।" इत्यमरः।

करङ्कादिति आकृष्येति ल्यब्लोपे पञ्चमी। स्रग्धरा वृत्तम्॥१६॥

ক্ষুধার্ত্ত একটা ক্ষুদ্র পিশাচ, (অন্য পিশাচ আসিতেছে কি না ইহা দেখিবার নিমিত্ত) ইতস্ততঃ দৃষ্টিপাত করিয়া এবং দাঁতগুলি বাহির করিয়া প্রথমে নখ দিয়া কোন শবের চামড়া কাটিয়া কাটিয়া, তা'র পর বড় শোথে ফুলা ও ভয়ঙ্কর দুর্গন্ধ কাঁধ, পাছা ও পীড়ির মত পিঠপ্রভৃতি অঙ্গের সুখলভ্য মাংসগুলি খাইয়া, তাহার পর কোলের উপরে যে শবের মাথাটা

अपि च,

निष्टापस्विद्यदस्थ्नः (१) क्वथनपरिगलन्मेदसः (२) प्रेतकायान्
कृष्ट्वा संसक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः।
उत्पक्वस्रंसि मांसं प्रचलदुभयतः (३) सन्धिनिर्मुक्तमारा-
देते निष्कुष्य (४) जङ्घानलकमुदयिनीर्मज्जधाराः पिबन्ति ॥१७॥

निष्टापेति। एते कुणपभुजः शवभोजिनः पिशाचविशेषाः भूयसीभ्यः प्रचुराभ्यः चिताभ्यः, निःशेषेण तापो निष्टापः चिताग्निना सकृत्सम्यगुत्तापः तेन स्विद्यन्ति गलन्मज्जानि अस्थीनि येषां तान्, क्वथनेन अंशविशेषे निष्पाकेन विशेषदाहेनेत्यर्थः, परिगलन्ति स्रंसमानानि मेदांसि तरलपदार्थविशेषा येभ्यस्तान्, तथा संसक्ताः दह्यमानत्वात् संलग्ना धूमा येषु तानपि अपिशब्दः समुच्चये, प्रेतकायान् मृतजनदेहान् कृष्ट्वा आनीय, ततश्च उत्पक्वेन उत्कटपाकेन सातिशयदाहेनेत्यर्थः, स्रंसीनि विगलन्ति मांसानि यस्मात् तत्, प्रचलत् वह्नितापेनैव स्पन्दमानम्, तथा उभयतो मूलाग्रभागयोर्यौ सन्धी संयोगभागौ ताभ्यां सकाशात् निर्मुक्तं वह्निपाकेनैव विभक्तम्, जङ्घानलकं जङ्घायाः प्रधानमस्थिदण्डम् आरात् समीपे निष्कुष्य आकृष्य आनीय उदयिनीः तस्मादेव गलन्तीः मज्जधाराः अस्थिविवरपूरकधातुविशेषधाराः पिबन्ति।

अत्रापि स्वभावोक्तिरलङ्कारः। पूर्ववदेव दुःश्रवत्वदोषो गुणतां भजते।

"आराद्दूरसमीपयो"रित्यमरः। "नलकं (क्ली) शाखास्थि" इति शब्दकल्पद्रुमः।

निष्टापेति "निसस्तपत्यनभ्यासेवने"ति षत्वम्। उत्पक्वेति भावे क्तः।

स्रग्धरा वृत्तम् ॥१७॥

---

আছে তাহার হাড়ের ভিতরে ও উচু-নীচু জায়গায় যে মাংস আছে, তাহাও স্থিরচিত্তে খাইতেছে ॥১৬॥

---

(१) निष्टापस्विद्यदस्थ्नः इति पाठान्तरम्। (२) क्वथनपरिणमन्मेदस इति क्वचित् पाठः। (३) प्रचलमुभयत इति भिन्नः पाठः। (४) निष्कृष्य, निष्कुष्य इति पाठभेदौ।

(विहस्य।) अहो! प्रादोषिकः प्रमोदः पिशाचाङ्गनानाम् (१)। तथाहि—(थ)

अन्त्रैः (२) कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा (३) हृत्पुण्डरीकस्रजः।
एताः शोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः (४) कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥१८॥

(थ) विहस्येति। अहो आश्चर्य्ये। प्रादोषिकः प्रदोषकालोत्पन्नः। प्रदोषकालस्तु "प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमिष्यते।" इति तिथितत्त्वधृतदेवलवचनान्निर्णेयः।

अन्त्रैरिति। अन्त्रैः कल्पिताः निर्म्मिता मङ्गलप्रतिसराः अर्द्धव्यक्तपमङ्गलसूचक-कङ्कणानि याभिस्ताः स्त्रीणां मृतयोषितां हस्ता एव रक्तोत्पलानि तद्रूपान् व्यक्तान् कथञ्चित् केशावरणे सत्यपि स्फीततया स्पष्टलक्ष्यीभूतान् उत्तंसान् कर्णभूषणानि बिभ्रति यास्ताः। शोणितपङ्का मृतानां घनीभूतरक्तान्येव कुङ्कुमानि तानि जुषन्ते सेवन्ते धारयन्ति यास्ताः। एताः दृश्यमानाः पिशाचाङ्गनाः, हृदि हृदयान्तर्गतपद्माकारमांसविशेषा एव पुण्डरीकाणि

আরও, চিতার আগুনের তাপে হাড়ের ভিতর হইতে মজ্জা গলিয়া পড়িতেছে, কোন অংশে আগুনের গুরুতর তাপ লাগায় মেদগুলিও গলিয়া পড়িতেছে এবং ধূম লাগিয়া রহিয়াছে, এইরূপ শবের দেহগুলিকে বহুতর চিতা হইতে টানিয়া আনিয়া তাহার পর আগুনেরই তাপে মাংস খসিয়া পড়িতেছে, কাঁপিতেছে এবং দুই সন্ধিস্থানের মধ্যভাগে বিভক্ত হইয়া গিয়াছে—এইরূপ জঙ্ঘার প্রধান হাড়খানাকে বাহির করিয়া, তাহা হইতে বিগলিত মজ্জার ধারা এই সকল পিশাচগণ পান করিতেছে ॥১৭॥

(থ) (হাস্য করিয়া) হায়! পিশাচরমণীগণের প্রদোষকালের আমোদ বড়ই আশ্চর্য্য। যথা—

---

(१) पिशाचानामिति क्वचित् पाठः। (२) आन्त्रैरिति पाठभेदः।

(३) शिरसा इत्यपि पाठः। (४) सुरामित्येकवचनान्तः पाठोऽपि दृश्यते।

श्वेतपद्मानि तेषां स्रजः माल्यानि पिनह्य कण्ठे बद्धा धारयित्वेत्यर्थः, कान्तैः पतिभिः सम्भूय मिलित्वा प्रीताः क्षुधासमये खाद्यलाभात् सन्तुष्टाः, अतएव हसेन हासेन सहेति सहसाः हासान्विताः सत्यः कपालानि शरावाकारा मांसहीननरमस्तकोर्द्धभागा एव चषकाणि पानपात्राणि तैः अस्थिस्नेहा मज्जान्येव सुराः मद्यानि ताः पिबन्ति। प्रमोदवशा-देवेदृशमाचरन्तीति भावः।

अत्र साङ्गरूपकमलङ्कारः, तथा प्रतीयमानः सम्भोगशृङ्गाररसः प्रधानस्यात्यबीभत्स-रसस्याङ्गमिति रसवदलङ्कारश्च, अनयोरङ्गाङ्गिभावेन सङ्करः। न च "आद्यः करुण-बीभत्स-रौद्र-वीर-भयानकैः" इत्युक्तदिशा शृङ्गारबीभत्सयोर्विरोधः शङ्कनीयः, "अयं स रसनोत्कर्षी" इत्यादाविव अङ्गाङ्गिभावेनावस्थानात् तुल्यभावेनावस्थान एव विरोधाङ्गी-कारात्। यदाह ध्वनिकारः—

"विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम्।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला॥"

पिबन्तीत्यस्य पादद्वयसम्बन्धेऽपि "यथा कृष्णः पुण्यात्वतुलमहिमे"त्यादिवत् सन्धिकृतत्वात् न यतिभङ्गदोषः।

"भवेत् प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे।" इत्यादि मेदिनी। "उत्तंसः कर्णपूरे स्यात् शेखरे च वतंसवत्।" इति विश्वः। "हृदयादिहयं हृदयान्तर्गतपद्माकार-मांसविशेषे" इत्यमरटीकायां रघुनाथः। "द्वादशाङ्गुलसम्पूर्णे श्वेते हृदयपङ्कजे।" इत्यादिदर्शनात् तस्य श्वेतत्वं मन्तव्यम्। "चषकं पानपात्रं स्या"दिति हारावली।

बन्धुहीनानामेव मृतानां परैरुत्पातभीत्येनानीय चितायां निक्षिप्यमाणानां शवानां तत्त्वावधानाभावात् पूर्णदाहाभावेनैव पिशाचानामीदृशो व्यापारः सम्पद्यते; अन्यथा स्मृतिशास्त्रे किञ्चिदवशेषीकृत्य पूर्णदाहोपदेशात् शवावस्थानाभावेनेदृशं वर्णनं नोपपद्यत इति समालोचनीयम्।

शार्दूलविक्रीडितं वृत्तम् ॥१८॥

---

পিশাচরমণীগণ শবের নাড়ীদ্বারা মাঙ্গলিক করকঙ্কণ নির্ম্মাণ করিয়াছে, মৃত স্ত্রীলোকের হস্তরূপ রক্তপদ্মের স্পষ্ট কর্ণভূষণ ধারণ করিয়াছে, গল-

· परिक्रम्य पुन"रशस्त्रपूत"मित्यादि पठित्वा (१)। कथं नामातिभीषण-विभीषिकाविकारै-(२) र्झटित्यपक्रान्तं पिशाचैः। अहो! निःसत्त्वता पिशाचानाम् (३)। परिक्रम्य दृष्ट्वा सनिर्वेदम् (४)। विचितश्चैष सर्वः (५) श्मशानवाटः। तथाहि (६) खल्वियं पुरत एव। (द)

(द) परिक्रम्येति। परिक्रम्य पूर्वघोषणानन्तरं कति पिशाचाः समागता इति पर्य्यवेक्षणार्थं पदक्षेपं कृत्वा पुनरप्यशस्त्रेत्यादि पाठो नवोपस्थितपिशाचानां महामांस-विक्रयज्ञापनार्थः, पूर्वमनवधानतावशात् श्रवणासम्भवसंशयेन पुनः श्रावणार्थो वेति बोध्यम्। अतिभीषणा विभीषिकाविकारा मानवानां भयप्रदर्शनाय विकृतवेशभाषादयो येषां तैः, झटिति द्रुतम् अपक्रान्तम् अपसृतम्। निःसत्त्वता दुर्बलता। मदीयकण्ठस्वरमाकर्ण्य भयेनैव पलायनादिति भावः। दृष्ट्वा कश्चिदपि पिशाचो नास्तीत्यवलोक्य। पिशाचेभ्यो विक्रयाभावे न खल्वभिप्रेतसिद्धिरित्यतो निर्वेदेन नितान्तदुर्भाग्यसूचनादात्मावमाननेन सहेति सनिर्वेदम्। विचितः पिशाचेभ्यो विक्रेतुमन्विष्टः। श्मशानवाटोऽत्र श्मशानप्रदेशः।

দেশে শবের হৃৎপদ্মের মালা পরিধান করিয়াছে এবং গাঢ় রক্তরূপ কুঙ্কুম মাখিয়াছে; এই অবস্থায় পতিগণের সহিত সম্মিলিত হইয়া, সন্তুষ্টচিত্তে হাস্য সহকারে, নরকপালরূপ পানপাত্রদ্বারা অস্থি হইতে নির্গত মজ্জরূপ মদ্য পান করিতেছে ॥১৮॥

(দ) (কতিপয় পদক্ষেপপূর্ব্বক পুনরায় "অশস্ত্রপূতম্" ইত্যাদি পাঠ করিয়া) অত্যন্ত ভীষণ-বিভীষিকাকারী পিশাচগণ হঠাৎ পলাইয়া গেল কেন? পিশাচগণের কি দুর্ব্বলতা! (আবার পদক্ষেপপূর্ব্বক দর্শন

(१) परिक्रम्य पुनरशस्त्रेति पठित्वा इत्यपि पाठः क्वचित्।

(२) कथं द्रागतिप्रशान्त-भीषणभीषिका-प्रकारैरिति पाठान्तरम्।

(३) अहो! निःसत्त्वाः सर्वे इति कुत्रचित् पाठः।

(४) सनिर्वेदमितिमात्रः क्वचित् पाठः। (५) समन्तादिति भिन्नः पाठः।

(६) तथा इतिमात्रः पाठः क्वचित्।

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारसंवेल्लित-(१)
क्रन्दत्फेरवचण्ड-डात्कृति-(२) भृतप्राग्भारभीमैस्तटैः
अन्तःशीर्णकरङ्ककर्करतरत्-(३) संरोधिकूलङ्कष-
स्रोतोनिर्गमघोरघर्घररवा पारेश्मशानं सरित् ॥१८॥

गुञ्जदिति। गुञ्जताम् अव्यक्तं शब्दायमानानां कुञ्जकुटीरकौशिकानां लतादि-पिहितोदररूप-क्षुद्रगृहस्थितानां पेचकानां या घटा समूहः, तस्या घूत्कारेण 'घूत्' इत्येवं-शब्देन संवेल्लिता सम्मिलिता या क्रन्दतां शब्दायमानानां फेरवाणां शृगालानां चण्डा भीषणा डात्कृतिः 'डात्' इत्येवंशब्दः, तया भृतेन पूर्णेन प्राग्भारेण तटाग्रभागेन भीमैर्भयङ्करैः तटैः तीरप्रदेशैः उपलक्षितेत्यर्थः। तथा अन्तर्मध्ये शीर्णानि कालवशात् क्रमेण क्षयं प्राप्तानि करङ्ककर्कराणि मस्तकास्थि-क्षुद्रक्षुद्र-खण्डानि यत्र तत्, तरत् प्रवहत्, संरोधः अभ्यन्तरपतितपाषाणादिकृतवेगरोधोऽस्यास्तीति संरोधि, तथा कूलं तीरं कषति भनक्तीति कूलङ्कषं यत् स्रोतः, तस्य निर्गमेन तीरान्तरविवरदेशात् निःसरणेन घोरो भीषणः घर्घरः श्रवणपरुषः रवः शब्दो यस्याः सा तथोक्ता, (गद्ये इयं पुरत एव अग्रत एव) श्मशानस्य श्मशानप्रदेशस्य पारे प्रान्तभागे सरित् नदी वर्त्तत इति शेषः। सुतराम् इतः परं श्मशानं नास्ति, कश्चित् पिशाचोऽपि नागत्य महामांसं क्रीतवानिति महासाहसमनु-तिष्ठन्नपि विफलमनोरथ एवास्मीति भावः।

अत्र कुञ्जकुटीरेति साधक-बाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करः, छेकानु-प्रासवृत्त्यनुप्रासौ चेति परस्परनैरपेक्ष्यात् संसृष्टिः। रोदनाह्वानमात्रवाचकक्रन्दधातोः शब्दार्थे प्रयोगादवाचकत्वदोषः, स तु 'गर्ज्जत् फेरवे'ति पाठेन समाधेयः। वाच्यार्थस्य भीषणत्वादेव न दुःश्रवत्वदोषः।

করিয়া নির্ব্বেদের সহিত) এই ত সমস্ত শ্মশানস্থানই অন্বেষণ করিলাম। সম্মুখেই ত এই (নদী)—

(१) संवल्गित इति क्वचित् पाठः। (२) घात्कृति इति भिन्नः पाठः।
(३) अन्तःक्षीर्णकरङ्ककर्परतरत्, अन्तःशीर्णकरङ्ककर्करतरः इति पाठभेदौ।

नेपथ्ये। हा ताद! णिक्करुण! एसो दाणिं दे णरेन्द-चित्ताराहणोवअरणं (१) जणो विवज्जइ। (ध)

(ध) हा तात! निष्करुण! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते।

"घटा (स्त्री)···समूहः।" "फेरवः (पुं)···शृगालः।" "कर्कर (क्ली) चूर्णखण्डम्, कांकर, घुटिं इत्यादि भाषा।" "घर्घरः स्वरभेदे त्रि" इति च शब्दकल्पद्रुमः।

कूलं कषतीति "सर्वकूलाभ्रकरीषेषु" इति खप्रत्ययः। अन्तःशीर्णेत्यादौ परपरस्य विशिष्टत्वविवक्षया द्वयोर्द्वयोः पदयोः क्रमशः कर्म्मधारयः। श्मशानस्य पारे इति पारेश्मशानं "पारे मध्ये षष्ठ्या वे"त्यव्ययीभावः।

प्रथमचरणमुत्तररामचरितद्वितीयाङ्केऽपि पठितम्, किन्तु तत्र 'घूत्कारवत् कौचकी'ति भेदः।

शार्दूलविक्रीड़ितं वृत्तम् ॥१९॥

(ध) नेपथ्य इति। नरेन्द्रचित्ताराधनोपकरणं राजमनःसन्तोषहेतुभूतः न तु ते वात्सल्यभागित्यर्थः। एष जनः अहमिति तात्पर्य्यम्। विपद्यते म्रियते। मालत्या उक्तिरियम्।

লতাগৃহে অব্যক্ত শব্দকারী পেচকগণের 'ঘূৎ' 'ঘূৎ' শব্দের সহিত প্রচণ্ড শব্দকারী শৃগালগণের 'ভাং' ভাং' শব্দ, তীরের সম্মুখভাগ ভয়ঙ্কর করিয়া তুলিয়াছে (ইহাই নদীর সেই তীর)। অভ্যন্তরে শূন্য ও শীর্ণ মাথার খুলির ভিতর দিয়া স্রোত চলিয়াছে, কোথাও রুদ্ধ হইতেছে, কোথাও তীর ভাঙ্গিতেছে এবং কোথাও তীরের রন্ধ্র হইতে নির্গত হইতে থাকিয়া ভয়ঙ্কর ঘর্ঘর রব করিতেছে—এইরূপ শ্মশানের প্রান্তভাগে এই নদী (প্রবাহিত হইতেছে) ॥১৯॥

(ধ) নেপথ্যে। হা পিতঃ! হা নির্দ্দয়! এই তোমার রাজার মন সন্তুষ্ট করিবার উপায়রূপ লোক এখন মরিতে চলিয়াছে।

---

(१) राहणोवआरणो इत्यपि पाठः।

माधवः। साकूतमाकर्ण्य। (न)

नादस्तावद्विकलकुररी-कूजितस्निग्धतार-
श्चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति।
अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्यङ्गमङ्गं
देहस्तम्भः, स्खलति च गतिः, (१) कः प्रकारः किमेतत् ॥२०॥

(न) माधव इति। साकूतं साभिप्रायं मुखभङ्गीविशेषेण निरूपणाभिप्रायसूचनसहितमित्यर्थः।

नाद इति। विकला कुतोऽपि भीता या कुररी उत्क्रोशपक्षिवधूः (वाजकुरल, कुरल, इति च यस्य प्रसिद्धिस्तद्वधूः) तस्याः कूजितवत् निनादवत् स्निग्धः अकर्कशः तार उच्चश्च स तथोक्तः। तथा परिचित इव पूर्व्वं विशेषेणावगत इव चित्ताकर्षी कथमपि हृदयापहारी अयं तावत् नादो ध्वनिः श्रोत्रसंवादं कर्णयोः सम्मेलनम् एति प्राप्नोति, पूर्व्वं शार्दूलाक्रमणसमये मकरन्दविपदवलोकनाकुलाया मालत्या यः कण्ठस्वरो मयानुभूतः स इवायमनुभूयत इत्यर्थः। अतएव अन्तर्भिन्नं मध्ये विदीर्णं हृदयं भ्रमति तस्या एव विपत्तिशङ्कया अधीरं भवति, अङ्गमङ्गं प्रत्यवयवं विह्वलति व्याकुलीभवति, कर्त्तव्यविमूढतया हस्तपदादयः सर्व्वे अवयवा जड़तामापद्यन्ते इत्यर्थः, देहस्तम्भः शरीरनिश्चेष्टता जायत इति शेषः, गतिर्गमनं स्खलति लद्ध्यात् भ्रश्यति, चित्तस्याधीरत्वादितः कर्त्तव्ये गमने ततः क्रियत इत्यर्थः। प्रकारः कः आर्त्तनादोत्पत्तेर्विशेषः कः, कस्यायमार्त्तनाद इत्यर्थः, एतत् आर्त्तनादोत्पत्तेः कारणं किम्।

अत्र प्रथमपादे लुप्तोपमा, तथा पूर्व्वार्द्धवाक्यार्थः परार्द्धगतवाक्यार्थानां हेतुरिति काव्यलिङ्गञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः। तथात्र रूपं नाम गर्भसन्धेरङ्गम्। तथा च दर्पणे—

"रूपं वाक्यं वितर्कवत् ॥"

(ন) মাধব। ( বিশেষ অভিপ্রায়ের সহিত শুনিয়া )

(१) गात्रस्तम्भः स्खलयति गतिमिति पाठान्तरम्।

करालायतनाच्चायमुच्चरन् करुणध्वनिः (१)।
विभाव्यते ननु स्थानमनिष्टानां तदीदृशाम् ॥२१॥

भवतु, पश्यामि। इति परिक्रामति।

न च अङ्गविन्यासपौर्वापर्य्यविपर्य्यय इति वाच्यं मुखहस्ताद्युपक्षेपादीनां त्रयाणामेव पौर्व्वापर्य्यनियमादन्येषान्तु तदभावादित्युक्तमेव। मन्दाक्रान्ता वृत्तम् ॥२०॥

इति वितर्क्य स्वयमेवावधारयति करालेति। किञ्चेति चार्थः। अयं करुणध्वनिः शोकार्त्तनादः करालाया आयतनात् स्थानात् उच्चरन् उद्गच्छन् विभाव्यते अनुमीयते। ननु कथमिदमनुमानमित्याह नन्वित्यादि। नन्वित्यवधारणे। यतस्तत् करालायतनम् ईदृशाम् अनिष्टानां स्थानम्। तथा च करालायतने बलिनिमित्तानीतजनादेवायं शोकार्त्त-नादः समुद्भवतीति प्रतीयते तमसावृतायामीदृशनिशायां प्रायेणैव नरबलिर्भवतीति श्रुतत्वादिति भावः।

अत्र पूर्व्ववाक्यार्थं प्रति परवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, तत्कृतविच्छित्तिवशाच्चानु-मानमलङ्कारः। तथा पूर्व्वार्द्धान्वितस्य 'विभाव्यते' इत्येकपदस्य परार्द्धे पाठादर्द्धान्तरैक-पदतादोषः। स च

'करालालयजातोऽयमार्त्तनादः प्रतीयते।
ईदृशानामनिष्टानां ननु स्थानमिदं किल ॥'

इति पाठेन समाधेयः। अत्रानुमानं नाम गर्भसन्धेरङ्गम्। यथा दर्पणे—

"लिङ्गादूहोऽनुमानता" ॥२१॥

এই আর্ত্তনাদ, ভীত কুররীর রবের ন্যায় স্নিগ্ধ, উষ্ণ ও চিত্তের আকর্ষক এবং ইহা যেন পরিচিত বলিয়া বোধ হইতেছে, আর কাণের সঙ্গেও মিলিতেছে। (ইহা শুনিয়া) আমার হৃদয়, ভিতরে বিদীর্ণ হইতেছে এবং ঘুরিতেছে, সমস্ত অঙ্গ বিহ্বল হইয়া উঠিয়াছে, দেহে জড়তা আসিয়াছে এবং গতি স্থানভ্রষ্ট হইতেছে; অতএব এ রকমটা কি? এ ব্যাপারটা কি? ॥২০॥

(१) उच्चरत् करुणध्वनिरिति पाठभेदः।

ततः प्रविशती देवतार्चनव्यग्रहस्तौ (१) कपालकुण्डलाऽघोरघण्टौ कृतवध्यचिह्ना मालती च । (प)

मालती । हा ताद ! णिक्करुण ! एसो दाणिं दे णरेन्द-चित्ताराहणोवअरणं (२) जणो विवज्जइ । हा अम्ब ! सिणिह-मअहिअए ! तुमं वि हदासि देव्वदुव्विलसिदेण (३) । हा मालदीमअजीविदे ! मम कल्लाणसाहणिक्कसुहसअलवावारे ! भअवदि ! कामन्दइ ! चिरस्स जाणाविदासि दुक्खं सिणेहेण । हा पिअसहि ! लवङ्गिए ! सिविणअवसरमेत्तदंसणा अहं दे संवुत्ता । (फ)

(फ) हा तात ! निष्करुण ! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते । हा अम्ब ! स्नेहमयहृदये ! त्वमपि हतासि दैवदुर्विलसितेन । हा मालतीमयजीविते ! मम कल्याणसाधनैकसुखसकलव्यापारे ! भगवति ! कामन्दकि ! चिरस्य ज्ञापितासि दुःखं स्नेहेन । हा प्रियसखि ! लवङ्गिके ! स्वप्नावसरमात्रदर्शना अहं ते संवृत्ता ।

(प) तत इति । कृतं वध्यचिह्नं रक्तमाल्यालक्तकपरिधापनादिकं यस्याः सा ।

(फ) मालतीति । दैवस्य विधेः दुर्विलसितेन दुराचरणेन । अनेन विधेर्दुरा-चरणेन मम मरणात् तव जीवनधारणमसम्भवमेवेति भावः । कल्याणसाधनं मङ्गलजनन-

এই করুণধ্বনি করালার আয়তন হইতেই উঠিতেছে বলিয়া অনুমান হইতেছে ; যেহেতু সেই করালার আয়তনই এইরূপ অনিষ্টের স্থান ॥২১॥

হউক, দেখি । ( এই বলিয়া পদক্ষেপ করিতে লাগিলেন ) ।

(প) তাহার পর দেবতাপূজায় ব্যাপৃতহস্ত কপালকুণ্ডলা ও অঘোর-ঘণ্টের এবং কৃতবধ্যচিহ্না মালতীর প্রবেশ ।

(१) देवतार्चनाव्यग्रौ इति पाठभेदः । (२) णरिन्दचित्ताराहणोवअरणो इति भिन्नः पाठः ।

(३) हा अम्ब ! हिअए हदासि दुव्वारदेव्वदुव्विलसिदेण इति क्वचित् पाठः ।

माधवः। हन्त! सम्प्रति निरस्त एव मे सन्देहः। तदपि नाम जीवन्तीमेनां सम्भावयेयम् (१)। इति झटिति परिक्रामति। (ब)

मेव एकम् अद्वितीयं सुखम् आत्मसुखं तस्मिन् सकलाः सर्वे व्यापाराः कार्य्याणि चेष्टा यस्याः सा, मदीयमङ्गलविधानमेव तवाद्वितीयं सुखमासीत्, तत्र यया त्वया सर्वा एवात्मन-श्चेष्टाः सन्निवेशिता इत्यर्थः, तत्सम्बोधनम्। स्नेहेन प्रयोजककर्त्रा प्रयोज्यकर्त्री त्वं दुःखं ग्राहितासि अनुभावितासि। मां प्रति निरतिशयवात्सल्यवशात् मदीयमङ्गलविधानपरायण-तया नानाविधदुष्करकार्य्यसम्पादनपरिश्रमात् बहुकालं यावत् त्वं दुःखमनुभूतवत्यसीत्यर्थः। किन्तु सम्प्रति मम मरणेन सर्व एव स ते परिश्रमदुःखानुभवो निष्फलो जात इति भावः। स्वप्नावसरमात्रे केवले स्वप्नसमये दर्शनं यस्याः सा। मरणात् परं साक्षाद्दर्शनासम्भवा-दिति भावः।

अत्राक्रन्दो नाम नाट्यालङ्कारः। यथा साहित्यदर्पणे—

"आक्रन्दः प्रलपितं शुचा।"

(ब) माधव इति। हन्तेति विषादे। विषादश्च मालत्या एव विपत्तिनिश्चयात्। निरस्तो दूरीकृतः, मालती-कामन्दकी-लवङ्गिकानामीदृशारण-स्वरसंवादादिनेति शेषः। सम्भावयेयमिति शक्यार्थे सप्तमी (लिङ्)। अस्या जीवनसत्त्व एव सन्दर्शन-सम्भाषण-संरक्षणयत्नादिविधानेन संवर्द्धनां कर्त्तुं शक्नुयां किमित्यर्थः।

(फ) মালতী। হা পিতঃ! হা নির্দ্দয়! এই তোমার রাজার মন সন্তুষ্ট করিবার উপায়স্বরূপ লোক এখন মরিতে চলিয়াছে। হা মাতঃ! স্নেহময়হৃদয়ে! দৈবের দুর্ব্যবহারে তুমিও মরিলে? হা মালতীময়জীবনে! ভগবতি! কামন্দকি! আমার মঙ্গলসম্পাদনেই তোমার একমাত্র সুখ ছিল এবং তাহাতেই তোমার সকল চেষ্টা ছিল, আজ সেই স্নেহই তোমাকে চিরকালের জন্য দুঃখ অনুভব করাইল। হা প্রিয়সখি! লবঙ্গিকে! আমি এখন তোমার কেবল স্বপ্নের সময়েই দর্শনের যোগ্য হইলাম।

(१) हन्त! दैवेयं मदिरेक्षणा, सम्प्रति निरस्त एव सन्देहः, तदहमपि नामैनां जीवन्तीं सम्भावये इति पाठान्तरम्।

अघोरघण्टकपालकुण्डले (१)। देवि! चामुण्डे! भगवति! नमस्ते (२)। (भ)

सावष्टम्भनिशुम्भनिर्भर-(३) नमद्भूगोलनिष्पीड़न-
न्यञ्चत्कर्परकूर्म्मकम्पविगलद्ब्रह्माण्डखण्डस्थिति।
पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवं
वन्दे नन्दितनीलकण्ठपरिषद्व्यक्तं तव (४) क्रीड़ितम् ॥२२॥

---

(भ) अघोरेति। "यच्चार्च्चितं द्वयो"रित्यनुशासनात् गुरुत्वेनार्च्चितत्वादघोरघण्ट-पदस्य पूर्वनिपातः। "नत्वा स्तुत्वा बलिं हरेत्" इति शास्त्रात् प्रथमं नमस्क्रियते देवीति। वाचनिकोऽयं नमस्कारः।

स्तुतिरभिधीयते सावष्टम्भेति। अवष्टम्भेन और्जित्येन सहेति सावष्टम्भः समुद्धतो यो निशुम्भः नृत्यविशेषः नृत्यविशेषसम्बन्धी पादाघात इत्यर्थः, तेन निर्भरमतिमात्रं नमतो नीचं गच्छतो भूगोलस्य पृथिवीमण्डलस्य निष्पीड़नेन आघातेन न्यञ्चन् अवनमन् कर्परः पृष्ठास्थिकटाहो यस्य तस्य तथोक्तस्य कूर्म्मस्य सततभूमण्डलधारिणो महाकच्छपस्य कम्पेन शरीरसञ्चलनेन विगलन्ती भ्रश्यन्ती ब्रह्माण्डखण्डस्य स्थितिरवस्थानं यस्मिन् तत् तथोक्तम्। पातालस्य प्रतिमल्लं प्रतिभटं प्रतिस्पर्द्धि सदृशमिति यावत्, यत् गल्लविवरं गण्डयोरभ्यन्तर-रन्ध्रं तत्र प्रक्षिप्ताः भूमण्डलस्याधोगमनेनोर्द्धोच्छलनात् निक्षिप्ताः सप्त अर्णवाः समुद्राः

---

(ব) মাধব। হায়! এখন আমার সন্দেহ নিরস্তই হইয়াছে। অতএব জীবিত থাকিতে থাকিতে ইহার সংবর্দ্ধনা করিতে পারিব কি? ( এই বলিয়া তাড়াতাড়ি পদক্ষেপ করিতে লাগিলেন )।

(ভ) অঘোরঘণ্ট ও কপালকুণ্ডলা। দেবি! চামুণ্ডে! ভগবতি! তোমাকে নমস্কার করি।

---

(१) कापालिकाविति पाठान्तरम्। (२) देवि! चामुण्डे! नमस्ते नमस्ते इति क्वचित् पाठः। (३)···सम्भ्रम इत्यपि पाठः। (४)···परिषद्व्यक्तर्द्धि वः क्रीड़ितम् इति पाठभेदः।

अपि च,

प्रचलितकरिकृत्तिपर्य्यन्तचञ्चन्नखा-
घातभिन्नेन्दुनिष्यन्दमानामृत-
स्रोतजीवत्कपालावलीमुक्तचण्डाट्ट-
हासत्रसङ्क्षुभितभूतप्रवृत्तस्तुति,

यस्मिन् तत् । तथा नन्दितस्य तादृशनृत्येनामोदितस्य नीलकण्ठस्य प्रमथाधिपतेर्महादेवस्य परिषदि प्रमथगणघटितसभायां व्यक्तं प्रसिद्धं तव क्रीडितं समुद्धतनृत्यं वन्दे ।

अत्र भूगोलनमन-कूर्म्मकर्पराधोनमन-तत्कम्पन-ब्रह्माण्डविगलन-गण्डविवर-सप्तार्णव-प्रवेशाणामसम्बन्धेऽपि तत्तत्सम्बन्धोक्तेः पञ्चातिशयोक्तयोऽलङ्काराः, पातालप्रतिमल्लेत्यत्र तु आर्थी समासगतोपमा, इत्यङ्गाङ्गिभावेन सङ्करः । छेकानुप्रासश्चेति संसृष्टिः ।

निशुम्भनृत्यमाह भरतः—"उत्क्षिप्ता तु भवेत् पार्ष्णिर्निशुम्भोऽयं निगद्यते ।
अङ्गुल्योऽग्राञ्चिताः सर्वाः पादाग्रतलसञ्चरे ॥"

अतएव निशुम्भशब्दस्य दैत्यविशेषे प्रसिद्धत्वेऽपि नृत्यविशेषेऽपि प्रसिद्धत्वात् न निहतार्थत्वदोषः । गल्लपदस्य ग्राम्यत्वेऽपि वैदग्ध्यकृतत्वेनाधमाभ्यामुक्तत्वान्न ग्राम्यत्वदोषः, प्रत्युत गुण एव "ग्राम्यत्वमधमोक्तिष्वि"ति "साहित्यदर्पणात् । समुद्धतवाच्यत्वाच्च न दुःश्रवत्वदोषोऽपीति ।

"कटाहे च कपालेऽपि पृष्ठास्थनि च कर्परः ।" इति शाश्वतः । विश्वव्यापिन्या जगदम्बिकायाः समीपे ब्रह्माण्डस्य क्षुद्रताप्रतिपादनाय खण्डपदम् । "गल्लः (पुं) गण्डः" इति शब्दकल्पद्रुमः । शार्दूलविक्रीडितं वृत्तम् ॥२२॥

प्रचलितेति । हे देवि ! प्रचलिता अङ्गविक्षेपादतिमात्रास्फालिता या करिकृत्तिः

---

যে নৃত্যে জোরের সহিত পাদক্ষেপ করায় ভূমণ্ডল অত্যন্ত নামিয়া যাইতেছিল, তাহার নিষ্পীড়নে আবার মহাকূর্ম্মের পৃষ্ঠকটাহও নামিতেছিল এবং তাহার কম্পনে ব্রহ্মাণ্ডমণ্ডলও স্খলিত হইতেছিল ; আর যে নৃত্যে পাতালের তুল্য গলরন্ধ্রের ভিতরে সপ্তসাগর বিক্ষিপ্ত হইয়াছিল ; আনন্দিতচিত্ত মহাদেবের সভাতে প্রকাশিত তোমার সেই নৃত্যকে নমস্কার করি ॥২২॥

श्वसदसितभुजङ्गभोगाङ्गदग्रन्थि-
निष्पीड़नस्फार-(१) फुल्लत्फणापीठ-
निर्य्यद्विषज्योतिरुज्ज़ृम्भणोड्डामरव्यस्त-
विस्तारिदोःखण्डपर्य्यासितक्ष्माधरम् ।

उत्तरीयभूतं गजचर्म्म, तस्याः पर्य्यन्ते प्रान्तभागे । चञ्चन्तश्चलन्तो ये नखाः तत्कविक्लिमलग्ना एव नखराः तेषामाघातेन भिन्नाद्विदीर्णात् इन्दोश्चन्द्रात् निष्पन्दमानस्य क्षरतः अमृतस्य पीयूषस्य श्चोतेन संस्रवेण जीवन्तीभिर्ब्बजीवनाभिः, कपालावलीभिः गललम्बितमुण्ड-मालाभिः, मुक्तैस्त्यक्तैः पुनर्जीवनलाभामोदेन नृत्याश्चर्य्यदर्शनेन वा क्रतैरित्यर्थः, चण्डाट्टहासैः भयङ्करीच्चैर्हासैः वस्तैः विभ्यद्भो भूरिभ्यो भूतेभ्यः प्रमथगणादिभ्यः प्रवृत्ता तद्भयनिवारणार्थ-मुपस्थिता स्तुतिः स्तवो यस्मिन् तत् तथोक्तम् । इति प्रथमचरणम् ।

तथा, श्वसतां नृत्यास्फालनेनातीवपरिश्रमात् मुहुर्मुहुः श्वासं मुञ्चताम् असितानां कृष्णवर्णानां भुजङ्गानां सर्पाणां भोगैः शरीरैः ये अङ्गदग्रन्थयः बाहुषु केयूरबन्धनानि तेषां निष्पीड़नेन आस्फालनेनानवरतघर्षणवेदनया स्फारं विकटं यथा स्यात्तथा फुल्लन्ति विकसन्ति प्रसृतानि यानि फणापीठानि पीठवद्विस्तृतफणामण्डलानि, तेभ्यो निर्य्यतां निर्गच्छतां विष-ज्योतिषां गरलतेजसाम् उज्जृम्भणेन आविर्भावेन उड्डामरं लोकानां भयङ्करं यथा स्यात्तथा व्यस्ता इतस्ततो विक्षिप्ताः, विस्तारिणः पीनदीर्घाः, ये दोःखण्डाः बाहुखण्डाः, तैः पर्य्यासिताः समन्ततो विकीर्णाः क्ष्माधराः पर्वता यस्मिन् तत् तथोक्तम् । इति द्वितीयचरणम् ।

আরও, ( তোমার যে নৃত্যে ) উত্তরীয়স্বরূপ হস্তিচর্ম্ম আস্ফালিত হইতে থাকায় তাহার প্রান্তস্থিত নখগুলিও চলিতেছিল, সেই নখগুলির আঘাতে চন্দ্রমণ্ডল বিদীর্ণ হইয়া যাওয়ায় তাহা হইতে অমৃতের ধারা নিঃসৃত হইতেছিল, তাহাতে মুণ্ডমালার মুণ্ডগুলি জীবিত হইয়া প্রচণ্ড অট্টহাস্য করিতেছিল, তাহাতে ভীত হইয়া প্রমথগণ তোমার স্তব আরম্ভ করিয়া দিয়াছিলেন, ( প্রথম চরণ )

(१)⋯निष्पीड़नोत्फुल्ल इति पाठभेदः ।

ज्वलदनलपिङ्गनेत्रच्छटाच्छन्न-(१)
भीमोत्तमाङ्गभ्रमि प्रस्तुतालातचक्र-
क्रियास्यूतदिग्भागमुत्तुङ्गखट्वाङ्गशृङ्ग-(२)
ध्वजोद्धूतिविक्षिप्ततारागणं,

तथा, ज्वलता अनलेन तृतीयनेत्रस्थेव वह्निना पिङ्गं पिङ्गलवर्णं यत् नेत्रं तृतीयं ललाटनयनं तस्य छटया दीप्त्या आच्छन्नं व्याप्तं भीमं भयङ्करं यदुत्तमाङ्गं मस्तकं तस्य या भ्रमिर्घूर्णनं तया प्रस्तुता निर्म्मिता या अलातचक्रस्येव चक्राकारेण भ्राम्यमाणस्य लग्न-ज्वलदनलेन्धनस्येव क्रिया सर्व्वतः प्रकाशरूपो व्यापारः तया स्यूता ग्रथिताः सम्बद्धा दिग्भागा दिङ्मण्डलं यस्मिन् तत्। तथा उत्तुङ्गस्य उच्छ्रितस्य खट्वाङ्गस्य दीर्घास्त्रविशेषस्य शृङ्गं शिखरम् अग्रभागो ध्वज इव, अथवा अग्रभाग एव ध्वजः तस्य उद्धूत्या ऊर्द्ध्वभ्रामणेन विक्षिप्ता इतस्ततो विकीर्णाः तारागणा नक्षत्रसमूहा यस्मिन् तत् तथोक्तम्। इति तृतीयचरणम्।

এবং ( তোমার যে নৃত্যে ) বাহুতে কেয়ূররূপে নিবদ্ধ দীর্ঘনিশ্বাসকারী কৃষ্ণবর্ণ সর্পগণের বন্ধনস্থানে ( নৃত্যের আস্ফালনে ) বেদনা উপস্থিত হওয়ায় তাহাদের ফণাগুলি পীঠের ন্যায় অত্যন্ত বিস্তৃত হইতেছিল, তাহা হইতে নির্গত বিষের তেজ প্রকাশ পাইতে থাকায় সকলেরই ভয় জন্মিতেছিল; এইভাবে বিস্তৃত বাহুগুলি আস্ফালিত হইতে থাকায় পর্ব্বতসমূহ সকলদিকে বিক্ষিপ্ত হইতেছিল, ( দ্বিতীয় চরণ )

এবং ( তোমার যে নৃত্যে ) ললাটনেত্র হইতে অগ্নি প্রজ্বলিত হইতে থাকায় তোমার সেই নেত্র পিঙ্গলবর্ণ হইয়াছিল, তাহা হইতে দীপ্তি নির্গত হইয়া মস্তকটাকে আচ্ছন্ন ও ভয়ঙ্কর করিয়াছিল, তাহার ঘূর্ণনে ঘূর্ণিত জ্বলদঙ্গারের কার্য্য করিতেছিল, সেই কার্য্যে সমস্ত দিঙ্মণ্ডল ব্যাপ্ত হইয়াছিল এবং ( তোমার যে নৃত্যে ) ধ্বজের ন্যায় উত্তোলিত খট্টাঙ্গের উপরের আঘাতে নক্ষত্রসমূহ চারিদিকে ছুটিয়া পড়িতেছিল, ( তৃতীয় চরণ )

(१)···नेत्रच्छटाभार इति क्वचित् पाठः। (२)···खट्वाङ्गकोटि इति भिन्नः पाठः।

प्रमुदितकटपूतनोत्तालवेतालताल-
स्फुटत्कर्णसम्भ्रान्तगौरीघनाश्लेष-
हृष्यन्मनस्त्र्यम्बकानन्दि वस्ताण्डवं देवि !
भूयादभीष्ट्यै च (१) हृष्ट्यै च नः ॥२३॥

इत्यभिनयतः ।

तथा, प्रमुदिताः तादृशाश्चर्य्यनृत्यदर्शनेन हृष्टचित्ताः । कटपूतनाः पिशाचविशेषाः, उत्तालवेताला विकरालपार्षदविशेषाश्च तेषां तालैः नृत्यस्य तालि तालि कराभ्यां दत्ततालैः स्फुटन्तौ विदीर्य्यमाणौ कर्णौ यस्याः सा, अतएव सम्भ्रान्ता वित्रस्ता या गौरी पार्श्वोपविष्टा पार्वती, तस्या घनाश्लेषेण गाढालिङ्गनेन हृष्यत् सन्तुष्यत् मनो यस्य तं तथोक्तं त्र्यम्बकं त्रिलोचनं भूतनाथम् आनन्दयति पुनः पुनरामोदयति यत्, तत् तथोक्तम्, वो युष्माकं गौरवाद्बहुवचनं तवेत्यर्थः, ताण्डवम् उद्धतनृत्यं कर्तृ नोऽस्माकम् अभीष्ट्यै अभीष्टसिद्धये च हृष्ट्यै हर्षाय सन्तोषाय च भूयात् । इति चतुर्थचरणम् ।

अत्रापि पूर्ववदनेकातिशयोक्तिरलङ्कारः । तत्संख्या तु सुधीभिरुन्नेया । फणापीठेत्यत्र अलातचक्रक्रियेत्यत्र च लुप्तोपमाद्वयम्, खट्वाङ्गशृङ्गध्वजेत्यत्र तु साधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करः, इत्येतेषामङ्गाङ्गिभावेन सङ्करः । छेकानुप्रासवृत्त्यनुप्रासौ च शब्दालङ्कारावितिं समुदाये पुनः संसृष्टिः । अत्रापि वाच्यार्थस्य समुद्धतत्वान्न दुःश्रवत्वदोषः, प्रत्युत गुण एव ।

"अत्यर्थं चोभयोरट्टः ।" इति त्रिकाण्डशेषः । "स्फारः स्यात् पुंसि विकटे करकादेश्च बुद्बुदे ।" इति मेदिनी । "छटा (स्त्री) दीप्तिः ।" इति शब्दकल्पद्रुमः । "अथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम् ।" इत्यमरः ।

"पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते ।"

इति सङ्गीतनारायणे यद्यपि पुंनृत्यमेव ताण्डवमित्युक्तं तथाप्युद्धतनृत्यमात्रेऽपि कोषपाठदर्शनार्थं एवात्र प्रयोगः । तथा च मेदिनी—

"ताण्डवोऽस्त्री तृणान्तरे । भवेदुद्धतनृत्ये च···॥"

(१) अरिष्ट्यै इति पाठान्तरम् ।

'माधवः। विलोक्य। हा धिक् प्रमादम् (१)। (म)

न्यस्तालक्तकरक्तमाल्यवसना पाषण्डचाण्डालयोः
पापारम्भवतोर्मृगीव वृकयोर्भीरुर्गता गोचरम्।
सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्त्तते
हा धिक् कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः ॥२४॥

इदञ्च प्रतिचरणे 'न'गणद्वयात् परं षोडश'र'गणनिबन्धनात् संग्रामी नाम दण्डकी वृत्तम्।

पिङ्गलमते तु प्रचितो नाम दण्डकः "शेषः प्रचित इति" इति पिङ्गलसूत्रात् ॥२३॥

(म) माधव इति। विषादे हाशब्दः, निन्दायाञ्च धिक्शब्दः। प्रमादं भूरिवसु-प्रभृतीनामनवधानतां निन्दामीत्यर्थः। अन्यथेदृशी विपत्तिरस्या न स्यादिति भावः।

तां विपत्तिमेवाह न्यस्तेति। न्यस्तानि यथासम्भवस्थाने अर्पितानि अलक्तकरक्त-माल्यवसनानि यस्याः सा, करचरणमुखेषु अलक्तकम्, गले रक्तमाल्यम्, गात्रे च रक्त-वसनद्वयमर्पितं तथेदमेव च वध्यचिह्नमिति बोध्यम्। वसोरिव द्युप्रभृत्यष्टवस्वन्यतमस्येव अथवा वह्नेरिव, महातेजस्विन इति भावः, भूरिवसोः सुता सा इयं भीरुः स्वभावतो भयशीला योषिदुत्तमा मालती, वृकयोर्व्याघ्रविशेषयोः मृगी हरिणीव, पापारम्भवतोः पाप-

এবং ( তোমার যে নৃত্যে ) আনন্দিত কটপূতনাপ্রভৃতি পিশাচগণ ও ভয়ঙ্কর বেতালগণের করতালীতে গৌরীর কর্ণযুগল বিদীর্ণ হইতেছিল, তাই তিনি ত্রস্ত হইয়া যে গাঢ় আলিঙ্গন করিয়াছিলেন, তাহাতে মহাদেবের মন আনন্দিত হইয়াছিল ; হে দেবি ! মহাদেবের আনন্দজনক তোমার সেই উদ্ধত নৃত্য আমাদের অভীষ্টসিদ্ধি ও আনন্দের নিমিত্ত হউক ( চতুর্থ চরণ ) ॥২৩॥

( এইরূপ স্তব করিয়া সেই নৃত্যের অভিনয় করিতে লাগিল )।

(ম) মাধব। ( দর্শন করিয়া ) হায় ! কি অনবধানতা।

(१) माधवः। हा धिक् प्रमादः। इति पाठान्तरम्।

जनककर्म्मारम्भशालिनी:, नरबले: शास्त्रीयत्वेऽपि नारीबलेर्निषेधादिति भाव:, अतएव पाषण्डौ विकर्म्मस्थौ, चाण्डालौ चण्डालसदृशौ, अवैधत्वेन केवलनृशंसताप्रतिपादनप्रवृत्तत्वादित्याशय:, पाषण्डौ च तौ चाण्डालौ चेति तयो: दृश्यमानयोरपुंसयोरित्यर्थ:, गोचरं भावप्रधानोऽयं निर्द्देश:, तथा च हिंसावृत्तिविषयतामिति तात्पर्य्यम्, गता प्राप्ता सती मृत्योर्मुखे वर्त्तते कृतान्तस्य वदने तिष्ठति, कवलनानन्तरमुखमुद्रणन्यायेन इत:परमेवास्या मरणमवश्यम्भावीति भाव:। अतएव हाधिगिति विषादे, कष्टं बन्धूनामतीवकष्टकरम्, अनिष्टं शत्रुभिरप्यनीप्सितम् इदमस्या व्यसनमुपस्थितमिति शेष:। अतएव अस्तकरुणो निर्द्दय: विधेर्दैवस्य अयं क: प्रक्रम आरम्भ:, निर्द्दयविधिना किमिदमारब्धमित्यर्थ:। ईदृशीं कुलकन्यां प्रति विधेरिदमाचरणमतीवान्याय्यमिति भाव:।

अत्र विशेषणानामभिप्रायविशेषवत्त्वात् परिकरालङ्कार:, उपमाद्वयम्, काव्यलिङ्गद्वयञ्च इत्येतेषामङ्गाङ्गिभावेन सङ्कर:। छेकानुप्रासश्च शब्दालङ्कार इति समुदाये संसृष्टि:। तथा चतुर्थचरणे 'बन्धूनाम्' 'शत्रुभिरपि' 'इदमस्या व्यसनमुपस्थितम्' इत्येतेषां पदानामनुक्तावपि न न्यूनपदत्वदोष:, प्रत्युत गुण:; प्रियतमाया मालत्यास्तादृग्विपत्तिदर्शनेन वक्तुर्माधवस्य विषादमग्नत्वात्। तथा च दर्पणे—

"उक्तावानन्दमग्नादे: स्यान्न्यूनपदता गुण:।"

"भ्रष्ट: स्वधर्म्मात् पाषण्डो विकर्म्मस्थो निषिद्धकृत्।" इति विष्णुपुराणम्। "वसुमयूखाग्निधनाधिपेषु" इत्यादि विश्व:। "मृत्युर्ना मरणे यमे।" इति मेदिनी।

अत्र "पितृमातृविहीनञ्च युवकं व्याधिवर्ज्जितम्" इत्यादिब्रह्मवैवर्त्तपुराणवचनेन, "नरे दत्ते महर्द्धि: स्यादष्टसिद्धिरनुत्तमा" इति मुण्डमालातन्त्रवचनेन च नरबलेर्विहितत्वेऽपि—"स्त्रियं न दद्यात्तु बलिं दत्त्वा नरकमाप्नुयात्" इति तिथितत्त्वधृतवचनात् "बलिं दद्यान्मानुषीन्तु त्यक्त्वा संघातपूजितम्" इति कालिकापुराणवचनाच्च नारीबलिदाननिषेधे सत्यपि तदर्थोद्यमात् निषिद्धकारित्वेन कपालकुण्डलाघोरघण्टयो: पाषण्डत्वं बोध्यम्। तथा च अवध्यवधोद्यमेऽपि दोषमाह प्रायश्चित्ततत्त्वे याज्ञवल्क्य:—"चरेद्व्रतमहत्वापि घातार्थञ्चेत् समागत:।" अतएवेदृशबहुतराधर्म्मसम्भावनया माधवेनाघोरघण्टो व्यापादित:, तेन च तस्य न प्रत्यवाय:, प्रत्युत धर्म्म एवासीत्। तथा च कालिकापुराणम्—

'कपाल। तं भद्रे ! स्मर दयितोऽत्र यस्तवाभू-

दद्य त्वां त्वरयति दारुणः कृतान्तः।

मालती। हा दइअ ! (१) णाह माहव ! परलोअगदो वि सुमरिदव्वो तुह्मेहिं अअं जणो। ण हु सो उवरदो, जस्स वल्लहो जणो सुमरेदि। (य)

(य) हा दयित ! नाथ माधव ! परलोकगतोऽपि स्मर्त्तव्यो युष्माभिरयं जनः। न खलु स उपरतः, यस्य वल्लभो जनः स्मरति।

"एकस्य यत्र निधने प्रवृत्ते दुष्टकारिणः।

बहूनां भवति चेमं तस्य पुण्यप्रदो वधः॥"

इति सर्वं समाहितमित्यनुसन्धेयम्। शार्दूलविक्रीड़ितं वृत्तम् ॥२४॥

तमिति। हे भद्रे ! तव यो दयितोऽभूत् अस्मिन् जीवने वल्लभ आसीत्, अत्र अस्मिन् मरणसमये तं स्मर, इतः परं पुनः स्मरणासम्भव इति भावः। कथमित्याह अद्येति। अद्य अस्मिन्नेव समय इत्यर्थः, दारुणः कृतान्तो यमः त्वां त्वरयति स्वां पुरं नेतुं सत्वरीकरोति। इति श्लोकार्द्धम्।

(य) मालतीति। अयं जनः अहमित्यर्थः। कथं स्मर्त्तव्य इत्याह न खल्विति।

---

হরিণী যেমন ব্যাঘ্রদ্বয়ের মধ্যে উপস্থিত হয়, সেইরূপ ভয়শীলা বসুতুল্য ভূরিবসুর কন্যা এই সেই মালতী যথাস্থানে অলক্তক, রক্ত মাল্য ও রক্ত বসন ধারণ করিয়া, পাপকর্ম্মে প্রবৃত্ত পাষণ্ড ও চাণ্ডালস্বভাব লোক দুইটার মধ্যে উপস্থিত হইয়া মৃত্যুর মুখে অবস্থান করিতেছেন। হায়! কি কষ্ট। ইহা শত্রুর উপরেও ইষ্ট নহে। সুতরাং বিধাতার দয়াশূন্য এই কোন উপক্রম হইয়াছে ॥২৪॥

কপালকুণ্ডলা। ভদ্রে! তোমার যে প্রিয়তম ছিল, এখন তাহাকে স্মরণ কর। আজ তোমাকে ভয়ঙ্কর যম ত্বরিত করিতেছেন।

(१) देव्व ! इति पाठान्तरम्।

कपाल। हन्त! माधवानुरक्तेयं तपस्विनी (१)। (र)

अघोर। अस्त्रमुद्यम्य (२)। यदस्तु, व्यापादयामि (३)। (ल)

चामुण्डे! भगवति! मन्त्रसाधनादा-
वुद्दिष्टामुपनिहितां भजस्व पूजाम् ॥२५॥

इति हन्तुमुपक्रान्तः (४)।

उपरतो मृतः। वल्लभो यं जनं स्मरति स मृतोऽपि जीवित एव तिष्ठति सर्व्वदा तस्य वल्लभस्य मनसि विद्यमानत्वात्, अतएव परलोकगतोऽपि मल्लक्षणोऽयं जनो युष्माभिः स्मर्त्तव्य इति सरलार्थो भावार्थश्च। यस्येति "स्मृत्यर्थ कर्म्मणि" इति कर्म्मणि षष्ठी।

(र) कपालेति। अत्र प्रमादे हन्तशब्दः। तपस्विनी शोच्या। तथा च अस्या व्यापादने विलम्ब एवावयोः प्रमादः (अनवधानता) येन हि, महाश्मशानेऽस्मिन्नितः पूर्व्वमेव मया दयितोऽस्याः स माधवः पर्य्यटन्नवलोकितः, सुतरां कथमपि स चेदागत्य विघ्नं विदध्यादिति भावः।

"हन्त दानेऽनुकम्पायां वाक्यारम्भविषादयोः। निश्चये च प्रमादे च॥" इति हेमचन्द्रः।

(ल) अघोरेति। अस्त्रं खड्गम्। यदस्तु (या हउक इति वङ्गभाषा) अस्या विलपनं चरणधारणं वा अनयोर्यद्भवतित्यर्थः। न तेन निवर्त्तिष्ये, व्यापादनस्यावश्य-कर्त्तव्यत्वादिति भावः। अतएव व्यापादयामि निहन्मि।

(য) মালতী। হা প্রিয়তম! নাথ! মাধব! এই ব্যক্তি পরলোক-গত হইলেও তুমি স্মরণ করিবে। সে ব্যক্তি মরে না, যাহাকে বল্লভজন স্মরণ করে।

(র) কপালকুণ্ডলা। হায়! এই শোচনীয়া বালিকা মাধবের প্রতি অনুরক্ত।

(ল) অঘোরঘণ্ট। ( খড়্গ উত্তোলন করিয়া ) যাহা হউক, মারিয়া ফেলি।

(१) वराकी तपस्विनीति क्वचित् पाठः। (२) असिमुद्यम्य इति पाठभेदः।
(३) क्वचिदयं पाठो नास्ति। (४) अयं पाठः क्वचिन्नास्ति।

'माधवः। सहसोपसृत्य प्रकोष्ठे मालतीं निक्षिप्य। दुरात्मन्! एष प्रतिहतोऽसि कापालिकापसद! नन्वयं न भवसि? (१)। (व)
मालती। सहसावलोक्य। परित्तायदु महाभाओ (२)। इति माधवमालिङ्गति। (श)

चामुण्ड इति। हे भगवति! चामुण्डे! मन्त्रसाधनस्य पुरश्चरणस्य आदौ पूर्वसमये उद्दिष्टां 'स्त्रीरत्नमुपहरिष्यामि' इत्येवंवाक्येन कीर्त्तिताम्, उपनिहिताम् इदानीं मन्त्रसाधनान्ते उपस्थापिताम्, पूजां स्त्रीरत्नोपहारात्मिकामर्चनां भजस्व गृहाण। कपालकुण्डलोक्ताद्धेन सहैक एवायं श्लोकः।

प्रहर्षिणी वृत्तम् ॥२५॥

(व) माधव इति। कफोणिदेशादारभ्य मणिबन्धं यावत् प्रकोष्ठः, तस्मिन् निक्षिप्य आकृष्य आनीय। माधवः स्वयमुत्तरदेशात् सहसागत्य छेदनार्थं पूर्व्वमुखस्थिताघोरघण्टकर्त्तृकाक्रमणाशङ्कया दक्षिणमुष्टौ खड्गमादायैव छेदनार्थमवनतीकृतामुत्तरशिरसं मालतीं वामहस्तेनोत्तोल्य पुनरुभयमणिबन्धमध्यपर्य्यन्तमानीय वदतीति बोध्यम्। कापालिकापसद! अवेधवलिदानोद्यमात् वामाचारिणामधम! अतएव प्रतिहतोऽसि मालतीवैपरीत्येन त्वमेव मया व्यापादितोऽसि नन्वय न भवसि? अकारणस्त्रीरत्नवधोद्यमात् वध्यः किं न भवसीत्यर्थः।

ভগবতি! চামুণ্ডে! পুরশ্চরণের পূর্ব্বে যে পূজা মানসিক করিয়াছিলাম, তাহা এখন উপস্থিত করিয়াছি; তুমি গ্রহণ কর ॥২৫॥

( এই বলিয়া মারিবার উপক্রম করিল )।

(ব) মাধব। ( তাড়াতাড়ি উপস্থিত হইয়া মালতীকে কোলের ভিতর টানিয়া আনিয়া ) দুরাত্মন্! এই তুই উল্টা মরিলি; কাপালিকাধম! তুই কি বধ্য নহিস্?।

(१) माधवः। ( सहसोपसृत्य खड्गं प्रकोष्ठेन निक्षिप्य। ) आः कापालिकापसद! दुरात्मन्! अपेहि। प्रतिहतोऽसि। इति पाठान्तरम्। (२) परित्ताअदु मं महाणुभाओ माहओ इति पाठभेदः।

माधवः । महाभागे ! न भेतव्यम् (१) ।

मरणसमये त्यक्त्वा शङ्कां (२) प्रलाप-(३) निरर्गल-
प्रकटितनिजस्नेहः सोऽयं सखा पुर एव ते ।
सुतनु ! विसृजोत्कम्पं सम्प्रत्यसाविह पाप्मनः
फलमनुभवत्युग्रं पापः प्रतीपविपाकिनः ॥२६॥

(अ) मालतीति । माधवस्योत्तरदेशादागमने उत्तरमुख्याश्च मालत्यास्तद्वाहुमध्ये निःक्षेपे सहसावलोकनमालिङ्गनञ्चातीव सुघटमिति ध्येयम् । अतएवोक्तं प्राक्—"औद्धत्य-मायोजितकामसूत्र"मिति ।

मरणेति । मरणसमये तवास्मिन् मृत्युकाले प्रलापेन 'हा दइअ ! णाह माहव !' इत्यादिना अनर्थकवचसा, प्रकृतनाथत्वाभावादानर्थक्यं तद्वचस इति भावः, निरर्गलं निर्बाधं यथा स्यात्तथा प्रकटितः परित्राणीयमात् प्रकाशितः निजः स्वकीयः स्नेहः त्वां प्रति वात्सल्यं येन सः । एतेन वस्तुवृत्त्या अनिर्वृत्तमपि तन्नाथत्वमिदानीं त्वं निवर्त्तयेति व्यज्यते । अयं स ते तव सखा शङ्कामात्मनो मरणभयं त्यक्त्वा पुर एव सम्मुख एव वर्त्तते । अतएव हे सुतनु ! उत्कम्पं मरणभयजनितं वेपथुं विसृज परित्यज । कथमेतदित्याह सम्प्रतीति । सम्प्रत्येव इह अस्मिन् स्थाने असौ पापः अवध्यवधोद्यमात् पापकारी कापालिकः प्रतीप-विपाको विपरीतपरिणामोऽस्यास्तीति तस्य, त्वद्विपरीतभावेनात्मन्येव परिणमत इत्यर्थः, पाप्मनः तव वधोद्यमरूपस्य पापस्य उग्रं भयङ्करं फलमात्ममरणरूपम् अनुभवति । इदानी-महमेवामुं व्यापादयामीति मरणभयाभावादुत्कम्पं विसृजेति भावः ।

अत्र वाक्यार्थहेतुककाव्यलिङ्गद्वयस्याङ्गाङ्गिभावेन सङ्करालङ्कारः । हरिणी वृत्तम् ॥२६॥

(अ) মালতী। (হঠাৎ দর্শন করিয়া) মহাত্মা রক্ষা করুন। (ইহা বলিয়া মাধবকে আলিঙ্গন করিলেন)।

মাধব। ভাগ্যবতি! ভয় করিবেন না।

(१) न भेतव्यं न भेतव्यमिति द्विरुक्तिः क्वचित् ।

(२) त्यक्त्वाशङ्कमिति भिन्नः पाठः । (३) प्रताप इत्यपि पाठः ।

अघोर। आः, क एष पापोऽस्माकमन्तरायः संवृत्तः। (ष)

कपाल। मालत्या एवायमस्याः स्नेहभूमिः (१) कामन्दकी-सुहृत्पुत्रो महामांसस्य पणयिता माधवो नाम (२)। (स)

माधवः। सावेगम्। महाभागे! किमेतत्?। (ह)

(ष) अघोरेति। अन्तरायः बलिदानविघ्नस्वरूपः। अतएव पापः अस्माकं मते पापी।

(स) कपालेति। अयम् अस्या मालत्या एव स्नेहभूमिरनुरागपात्रम्। एतेनाय-मवश्यमेव प्राणव्ययेनापि मालतीं परित्रातुं यतिष्यते इति ध्वनितम्। कामन्दकीसुहृदो देवरातस्य पुत्रः। सुतरां तया महायोगिन्या नियतकृतरक्षणत्वादमुं प्रति नास्माकं मन्त्र-मायादिकं प्रभविष्यतीति प्रत्यायितम्। महामांसस्य पणयिता इत्यनेन अस्मिन् महाश्मशाने खल्वेकाकी पर्य्यटन् विविधभीषणाकृतिभ्यः पिशाचादिभ्योऽपि निर्भीकतया महाशूरोऽयमिति पुरुषकारेणापि नायत्तीकर्त्तुं शक्य इति सूचितम्।

মৃত্যুর সময়ে আপনার প্রলাপে যে অবাধে নিজের স্নেহ প্রকাশ করিয়াছে, আপনার সেই সখা ভয় ত্যাগ করিয়া এই সম্মুখেই রহিয়াছে। অতএব সুন্দরি! কম্প পরিত্যাগ করুন; এই পাপাত্মাই সম্প্রতি বিপরীতভাবে পরিণত পাপের ভয়ঙ্কর ফল এখানে অনুভব করিবে ॥২৬॥

(ষ) অঘোরঘণ্ট। আঃ! এ কোন্ পাপাত্মা আমাদের বিঘ্ন হইয়া দাঁড়াইল ?।

(স) কপালকুণ্ডলা। এই মালতীরই অনুরাগের পাত্র, কামন্দকীর বন্ধুর পুত্র এবং মহামাংসবিক্রেতা; ইহার নাম মাধব।

(१) भगवन्! स एवास्याः स्नेहभूमिः···इति भिन्नः पाठः।

(२) क्वचित् 'नाम'शब्दो नास्ति।

मालती। विरादाश्वस्य। महाभाअ! अहं ण किम्पि जाणामि, एत्तिअं उण जाणामि, उवरि अलिन्दे पसुत्ता इह पवुद्धह्मि (१)। तुह्मे उण कहिं। (च)

माधवः। सलज्जम्। (क)

त्वत्पाणिपङ्कजपरिग्रहधन्यजन्मा (२)
भूयासमित्यभिनिवेशकदर्थ्यमानः।

(च) महाभाग! अहं न किमपि जानामि, एतावत् पुनर्जानामि, उपर्य्यलिन्द-प्रसुप्ता इह प्रबुद्धास्मि। यूयं पुनः कस्मिन्।

(छ) माधव इति। एतत् उपस्थितं तव व्यसनम्, किं किंकारणकं कथं जातमित्यर्थः।

(च) मालतीति। अलिन्दस्य वहिर्द्वारसंलग्नचतुरस्रकृत्रिमभूमेरुपरीति उपर्य्यलिन्दे, प्रसुप्ता निद्रिता, इह महाश्मशाने प्रबुद्धा जागरितास्मि। केनाहमानीतेति न जानामीति भावः। कस्मिन् निमित्ते सति केन निमित्तेनागता इत्यर्थः। कपालकुण्डलया माया-प्रभावेण निद्रितैव मालती समानीतेति बोध्यम्।

(ছ) মাধব। ( অশ্রুপাতের সহিত ) ভাগ্যবতি! আপনার এই বিপদ কি কারণে উপস্থিত হইল ?।

(ক্ষ) মালতী। ( বহুকালের পর আশ্বস্ত হইয়া ) মহাত্মন্! আমি কিছুই জানি না। কিন্তু এইটুকু মাত্র জানি যে, উপরের আঙ্গিনায় ঘুমাইয়া ছিলাম, এইখানে আসিয়া জাগিয়াছি। কিন্তু আপনি এখানে কি জন্য ?।

(१) अहं वि ण आणामि। एत्तिअं आणामि। उवरि अलिन्दं एव्व पसुत्ता-इह पडिवुद्धाह्मि। इति क्वचित् पाठः।

(२) त्वत्पादपङ्कजपरिग्रहधन्यजन्मा, त्वत्पाणिपङ्कजपरिग्रहपुण्यजन्मा इति पाठभेदौ।

भ्राम्यन्नृमांसपणनाय परेतभूमा-
वाकर्ण्य भीरु! रुदितानि तवागतोऽस्मि ॥२७॥

मालती। स्वगतम्। हद्धी! कधं मम कारणादो एव्वं एदे अप्पणिरवेक्खा परिक्कामन्दि (१)। (ख)

(ख) हा धिक्! कथं मम कारणात् एवमेते आत्मनिरपेक्षाः परिक्रामन्ति।

(क) माधव इति। पिशाचीभ्यो नरमांसविक्रयरूप-कुत्सितकापालिकवृत्तिरवलम्बितेति वार्त्तायाः कथनीयत्वात् सलज्जमित्युक्तम्।

त्वत्पाणीति। हे भीरु! भयशीले! त्वत्पाणिपङ्कजपरिग्रहेण धन्यजन्मा भूयासम् इत्यभिनिवेशेन अभिसन्धानेन कदर्थ्यमानः कदर्थीक्रियमाणः परेतभूमौ अस्मिन् श्मशाने नृमांसपणनाय भ्राम्यन् पर्य्यटन् अहं तव रुदितानि "हा ताद! णिक्करुण!" इत्यादि क्रन्दनानि आकर्ण्य श्रुत्वा आगतोऽस्मि अस्मिन् करालायतने उपस्थितोऽस्मि। तव परित्राणार्थमेवेदमागमनमिति भावः।

अत्र पाणिपङ्कजेति लुप्तोपमालङ्कारः।

कुत्सितोऽर्थः पिशाचीभ्यो नरमांसविक्रयरूपप्रयोजनं यस्य स कदर्थः। कदर्थः क्रियमाण इति कदर्थ्यमानः करोत्यर्थेनन्तात् कदर्थशब्दात् कर्म्मण्यानश्।

वसन्ततिलका वृत्तम् ॥२७॥

(ख) मालतीति। एते माधवाः गौरवाद्बहुवचनम्, मम कारणात् मत्प्राप्तिमुद्दिश्येत्यर्थः, एवम् अनेन प्रकारेण आत्मनि आत्मरक्षायां निर्न विद्यते अपेक्षा आकाङ्क्षा

(क) মাধব। (লজ্জার সহিত) হে ভীরু! আপনার পাণিপদ্ম গ্রহণ করিয়া ধন্যজন্মা হইব এই আশায় লাঞ্ছিত হইয়া, মনুষ্যমাংস বিক্রয় করিবার জন্য এই শ্মশানে পরিভ্রমণ করিতেছিলাম, তখন আপনার রোদন শুনিয়া আসিয়াছি ॥২৭॥

(१) मालती। (अपवार्य्य) कहं मम कालणादो एव्व एदे अप्पणिरवेक्खं परिब्भमन्दि। इति पाठान्तरम्।

माधवः। अहोनुखलुभोः! तदेतत् काकतालीयं नाम। सम्प्रति हि—(ग)

राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम्।
आतङ्काद्विकलं, द्रुतं करुणया, विक्षोभितं विस्मयात्,
क्रोधेन ज्वलितं, मुदा विकसितं, चेतः कथं वर्त्तते (१) ॥२८॥

येषां ते तथोक्ताः सन्तः परिक्रामन्ति श्मशानेऽस्मिन् पर्य्यटन्ति। कथमिति सम्भावनायाम्। अत्र हि विविधविभीषिकावशात् सर्व्वेषामेव जीवननाशाशङ्का विद्यते, तथापि तत्तुच्छज्ञानेन मदुद्देशादेव पर्य्यटनादहमेवापराधिनीति भावः।

(ग) माधव इति। अहोनुखलुभोरित्येकमेवाव्ययं विस्मयविषादहर्षे। तदेतत् प्रियतमाया दर्शनं काकागमनसामयिक-तालफलपतनवत् दैवात् सङ्घटितमित्यर्थः। तथा च यथा तालं पातयितुं न खलु कश्चित् काकं प्रेरयति, अपि तु यदैव काक आगच्छति, तदैव दैववशात् तालफलं पतति ; तथा प्रियतमादर्शनोद्देशेन नाहमवागतः किन्तु दैवा-देवास्याः सन्दर्शनं जातमिति सरलार्थः। इदञ्च परस्परसन्दर्शनं माधवानुष्ठिततत्तान्त्रिक-कर्म्मणः किञ्चित् फलमिति कविना सूचितम्।

राहोरिति। दैवात् भाग्यवशात् समासाद्य श्मशानमिदमागत्य राहोराननचरीं मुखगतां चन्द्रस्य कलामिव स्थिताम् अस्य पाषण्डस्याक्रमणगतामित्यर्थः. प्रेयसीं प्रियतमां मालतीम् अस्य सन्निहितस्य दस्योर्महासाहसिकस्य कापालिकस्य कृपाणपातविषयात् खड्गा-घातगोचरात् आच्छिन्दतः बलेनानयतो मे मम चेतश्चित्तम् आतङ्कात् इतः परं समागमने

(খ) মালতী। (স্বগত) হায়! আপনার জন্য ইনি এইরূপে আত্মনিরপেক্ষ হইয়া বিচরণ করিতেছেন।

(গ) মাধব। কি আশ্চর্য্য! তবে এই ঘটনা কাকতালীয়ের ন্যায় ঘটিয়াছে ইহা আমি মনে করি। এখন—

(१) वर्त्ततामिति पाठभेदः।

अघोर । अरे (१) ब्राह्मणडिम्भ ! । (घ)

महाननर्थोऽभूदित्याशङ्कातः विकलं विह्वलम्, करुणया ईदृशीमबलां प्रति ईदृग् व्यवहार इति दयया द्रुतं द्रवीभूतं विस्मयात् अहो दैवमहिमा यदचिन्तितपूर्वोऽयमिदानीमीदृगवस्थायां साक्षात्कार इत्याश्चर्यात् विक्षोभितमुद्वेलितम्, क्रोधेन एवम्भूतायां रमणीरत्नललामस्वरूपायामवैधोऽयं व्यवहार इति रोषेण ज्वलितमुत्तेजितम्, मुदा जीवन्तीमेनामवलोकितवान् आपातती रक्षितवानपीत्येवं हर्षेण विकसितं प्रफुल्लञ्च सत् कथं कीदृक् वर्त्तते । तदहं निरूपयितुं न शक्नोऽस्मीति भावः ।

अत्र प्रथमपादे श्रौत्युपमालङ्कारः, द्वितीयार्द्धे तु द्रुतमित्याद्यनेकक्रियाणां चेत इत्येककर्त्तृकारकत्वाद्दीपकम्, अनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः । तथा हेतुषु पदत्रयं तृतीयान्तं पदद्वयञ्च पञ्चम्यन्तमिति भग्नप्रक्रमतादोषः । तथा च साहित्यदर्पणटीकायां रामचरणः—"कारकोपसर्गादावपि प्रक्रमभङ्गो बोद्धव्य" इति । तेन च 'त्रासेनोद्विकलं द्रुतं करुणयाश्चर्य्येण विक्षोभितम्' इति तृतीयचरणपरिवर्त्तनेनैव तत्समाधानं विधेयम् ।

आनने चरतीत्याननचरी "चरेष्ट" इति टप्रत्ययान्ताद्दीप्रत्ययः । समासाद्य इत्यतः परं 'वर्त्तमानस्य' इत्यध्याहर्त्तव्यक्रियया सहैककर्त्तृकता । तथात्वेऽपि न न्यूनपदत्वदोषः, नियमेन तत्प्रतीतेरीदृशभूरिप्रयोगदर्शनाच्च । शार्दूलविक्रीडितं वृत्तम् ॥२८॥

(घ) अघोरेति । ब्राह्मणडिम्भ ! विप्रबालक !, ब्राह्मणतया बालकतया च भीरुस्वभावत्वात् शूरत्वहीनेत्यर्थः ।

"पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः ।

ভাগ্যবশতঃ এই শ্মশানে আসিয়া রাহুর মুখগত চন্দ্রকলার ন্যায় প্রিয়তমাকে এই দস্যুর খড়্গাঘাতের স্থান হইতে আনিয়া আমার চিত্ত, ভয়ে বিহ্বল হইয়া, দয়ায় গলিয়া, বিস্ময়ে উদ্বেলিত হইয়া, ক্রোধে জ্বলিয়া এবং আনন্দে প্রফুল্ল হইয়া, কি রকম হইয়া দাঁড়াইয়াছে (তাহা আমি নিশ্চয় করিতে পারিতেছি না) ॥২৮॥

(ঘ) অঘোরঘণ্ট । ওরে ব্রাহ্মণবালক !

---

(१) रे रे इत्यपि पाठः ।

व्याघ्राघ्रातमृगीकृपाकुलमृगन्यायेन हिंसारुचेः
पाप ! प्राण्युपहारकेतनजुषः प्राप्तोऽसि मे गोचरम् ।
सोऽहं प्रागभवतैव भूतजननीमृध्नोमि खड्गाहति-
च्छिन्नस्कन्धकबन्ध-(१) रन्ध्ररुधिरप्राग्भारनिष्यन्दिना ॥२९॥

व्याघ्रेति । हे पाप ! अतिकृष्टबलिविघ्नाचरणात् मन्मते पापकारिन् ! व्याघ्रेण आघ्रातायाम् आक्रान्तायां मृग्यां हरिण्यां कृपाकुलः परित्राणाय दयाव्ययो यो मृगो हरिण-स्तन्न्यायेन तत्सादृश्येन तादृशो हरिण इवेत्यर्थः, त्वं हिंसारुचेः सर्वदा प्राणिवधप्रवृत्तस्य, प्राणिनामुपहारः चामुण्डार्थमुपायनं यत्र तत्, तादृशं केतनमायतनं जुषते सेवते यः स, तस्य मे मम गोचरं विषयं प्राप्तोऽसि । अतएव नास्ति निस्तारस्तवेति भावः । निस्तारा-भावमेवाह सोऽहमिति । स सर्वदा हिंसारुचिः सततप्राणिवधप्रसिद्धकरालायतनस्थश्चाहं खड्गस्य आहत्या आघातेन छिन्नस्य स्कन्धकबन्धस्य स्कन्धबन्धस्य ग्रीवादेशस्येत्यर्थः, रन्ध्रा-च्छिद्रात् रुधिरप्राग्भारं रक्तप्रवाहं निष्यन्दयति अवस्रंसयति यः स तथोक्तस्तेन, भवतैव त्वयैव प्राक् पूर्वं भूतानां जननीं सकलप्राणिनां मातरम् इमां चामुण्डाम् ऋध्नोमि प्रीणयामि । पश्चात्नयेति भावः ।

अत्रार्थीयमुपमालङ्कारः, छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः । बालत्वादल्पः स्कन्ध इति स्कन्धकः, अल्पार्थे कप्रत्ययः, तद्रूपो बन्धः शिरःकलेवरसंयोगस्थानमिति स्कन्धकबन्धः । ईदृशव्याख्याने न पौनरुक्त्यदोषः । किन्तु छिन्नस्कन्धेति कबन्धेति भिन्नपदमङ्गीकृत्य व्याख्याने "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरकोषात् पाठान्तरकल्पनामन्तरेण पौनरुक्त्यदोषो दुर्निवार एवेति भाव्यम् ।

शार्दूलविक्रीडितं वृत्तम् ॥२९॥

পাপিষ্ঠ ! ব্যাঘ্রকর্ত্তৃক আক্রান্ত হরিণীর প্রতি দয়াকুল হরিণের ন্যায় তুই, হিংসাপ্রবৃত্ত ও প্রাণি-বলিদানস্থানস্থিত আমার সম্মুখে উপস্থিত হইয়াছিস্ ; সুতরাং সেই আমি, খড়্গের আঘাতে তোর স্কন্ধ ছিন্ন

(१) व्यस्तस्कन्धकबन्ध···इति पाठान्तरम् ।

माधवः। आः (१) दुरात्मन्! पाषण्ड! चाण्डाल! (२)

असारं संसारं, परिमुषितरत्नं त्रिभुवनं,
निरालोकं लोकं, मरणशरणं बान्धवजनम्।
अदर्पं कन्दर्पं, जननयननिर्म्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः॥३०॥

असारमिति। अरे दुरात्मन्! पाषण्ड! चाण्डाल! संसारं जगत्प्रपञ्चं कथं केन हेतुना असारम् अस्या हत्यया सारपदार्थरहितं विधातुं व्यवसितोऽसि कर्त्तुं प्रवृत्तोऽसि। इति सर्व्वत्र योजनीयम्। तथा च "सारन्तु महिलारत्नं संसार इति निश्चय" इत्युक्तेः सर्व्वेषामेव परमलोचनचमत्कारित्वादियमेव संसारेऽस्मिन् सारपदार्थ इति भावः। त्रिभुवनम्, परिमुषितम् अस्या हत्यया अपहृतं रत्नं यस्मात्तादृशम्। इयमेकैवास्मिन् त्रिभुवने सर्व्वसमुत्कर्षेण रत्नभूतेत्याशयः। लोकं जगत्, निरालोकम् अस्या हत्यया आलोकरहितम् अन्धकाराच्छन्नमित्यर्थः। आनन्दैकरसेन सर्वेषामेव मनःप्रकाशादियमेव लोकेऽस्मिन्नालोकरूपेत्यभिप्रायः। अथवा जड़ानां सौरालोकादीनामानन्दात्मकब्रह्मप्रकाश्यत्वेनाभासत्वादियमेवानन्दैकरसप्रकाशात्मकतया यथार्थं आलोक इत्यभिप्रायः। बान्धवजनं पितृभ्रातृप्रभृतिकम्, मरणमेव शरणम्, अस्याः शोकवशादाश्रयो यस्य तं तथोक्तम्। तथा च अस्याः स्वभावसौन्दर्य्याभ्यामेतावद्वात्सल्यवान् बान्धवजनः, यथैतामन्तरेण क्षणमपि न जीवतीति, सुतरामेकस्या एवास्या वधेन बहूनां वध इत्यहो महदनुचितमिति भावः। कन्दर्पं मदनम्, अदर्पम् अस्या वधेन जगद्विजयदर्पहीनम्। तथा हि त्रिलोकीललनाललामभूतामेनामेवादाय कन्दर्पो जगन्मोहनदर्पं करोति, किन्त्वस्या अभावे तस्य स दर्पश्चिराय नङ्क्ष्यतीत्यभिप्रायः। जनानां नयननिर्म्माणं विधातृकर्त्तृकनेत्रसृष्टिम्, अफलम् अस्या

---

হইলে কবন্ধের গলরন্ধ্র হইতে রুধিরপ্রবাহনিঃসরণকারী তোরদ্বারাই প্রথমে জগজ্জননীকে সন্তুষ্ট করিব॥২৯॥

মাধব। ওরে দুরাত্মন্! পাষণ্ড! চাণ্ডাল!

---

(१) आः इति पाठः क्वचिन्नास्ति। (२) चण्डाल इति भिन्नः पाठः।

वधेन निष्फलम्। अलौकिकसौन्दर्य्यदर्शनं हि विधातृकर्त्तृकजननयननिर्म्माणफलम् इयञ्चालौकिकसौन्दर्य्यशालिनी, सुतरामस्या अभावे तदभावान्निष्फलमेव तज्जननयननिर्म्माण-मित्याशयः। तथा जगत् भुवनं कथं जीर्णारण्यम् अस्या वधेन शुष्कविरलतरुप्रायं गहनं विधातुं व्यवसितोऽसि। तथा च अनयैव नवीनवसन्तश्रीरूपया जगदिदं नवकुसुमपल्लवादि-परिशोभित-मनोरमकर-परमारामरूपमास्ते; अस्याः पुनरभावे तु कुरूपाकुलरूप-शुष्कपादप-प्रायभयङ्करारण्यरूपमेव भवेदिति भावः।

अत्र ईदृशैर्वचोभङ्गीविशेषैर्मालत्यां संसारसारत्वादीनां गम्यमानानामभिधेयवत् स्पष्ट-प्रतिपादनात् पर्य्यायोक्तमलङ्कारः, तथा विधातुमित्येकक्रियया असारादीनामप्रस्तुतानां कर्म्मतयाभिसम्बन्धात्तुल्ययोगिता, जगज्जीर्णारण्यमित्यत्र निरङ्गं केवलरूपकञ्च इत्येतेषा-मङ्गाङ्गिभावेन सङ्करः। तेन च मालत्यामलौकिकशीलसौन्दर्य्यशालित्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। छेकानुप्रासवृत्त्यनुप्रासौ च शब्दालङ्कारावित्ति समुदाये संसृष्टिः। तथा असारं संसारमित्यादिकं मालत्याः परमोत्कर्षप्रतिपादकम्, मरणशरणं बान्धवजनमिदन्तु न किञ्चि-दुत्कर्षप्रतिपादकं काणखञ्जकुरूपाणामप्यभावे स्नेहपरतन्त्रस्य तद्बान्धवजनस्य मरणसम्भवा-दिति सहचरत्वे जात्यवशात् सहचरभिन्नतादोषः, स च 'विधिविरचितं सर्व्वमरुचि' इत्यपरा-परवन्मालतीपरमोत्कर्षप्रतिपादकपाठेन परिहरणीयः। एतद्दोषपरिजिहीर्षयैव कुम्भक-त्रिपुरारिप्रभृतयः काव्यतत्त्वज्ञाः 'विधिविलसितं सर्व्वमफलम्' इति पाठमङ्गीकृतवन्तः। स चापि न समीचीनः परत्राप्यफलमित्युपादानात् पुनरनवीकृतत्वदोषापत्तेः। तथा 'असारं संसारम्' इत्यनेनैव मालत्या असाधारणत्वप्रतिपादने सत्यपि पुनस्तस्यैव वाक्यान्तरैरपि बोधनादर्थगतपौनरुक्त्यदोषः प्रसजन्नपि रसाक्षिप्तचेतसा माधवेनाभिहितत्वात् प्रत्युत गुण एव। तथा च सरस्वतीकण्ठाभरणे भोजराजः—

"अविशेषेण पूर्व्वोक्तं यदि भूयोऽपि कीर्त्यते।
तदेकार्थं रसाक्षिप्त-चेतसां तन्न दुष्यति॥"

तत्र चेममेव श्लोकमुदाहृतवान्। अत्रोदाहरणं नाम गर्भसन्धेरङ्गम्। तथा च दर्पणे—"उदाहरणमुत्कर्षयुक्तं वचनमुच्यते।"

अतीवमनोहरोऽयं श्लोकः। शिखरिणी वृत्तम्॥३०॥

अपि च, रे रे पाप!

प्रणयिसखी-(१) सलील-परिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥३१॥

प्रणयीति। यत् मालत्या वपुः, प्रणयिन्यः प्रेमास्पदीभूता याः सख्यः, तासां सलीलो यः परिहासस्तत्र रसेन रागेण स्वेच्छयैव अधिगतैः प्राप्तैः, ललितस्य कोमलत्वात् सुन्दरस्य शिरीषपुष्पस्य हननैः प्रहारैरपि ताम्यति पीड़ामापद्यते। वधाय तत्र वपुषि शस्त्रं खड्गम् उपक्षिपतः पातयतस्तव शिरसि, अकाण्डे अनवसरे पतनशील इत्यर्थः, यमदण्ड इव एष भुजो मम समुत्थिबन्धो दक्षिणहस्तः पततु। एतन्मुष्टिप्रहारेण दारुणनिष्ठुरस्य नृशंसस्य ते शिरश्चूर्णयामीति भावः। सत्यपि खड्गे तं दक्षिणहस्ताद्वामहस्ते निधाय रोषनिबन्धनः केवलवागाडम्बरोऽयमिति प्रतीयते।

अत्र कठिनवस्तुप्रहारे का कथा तादृशपुष्पहननैरपि ताम्यतीत्यर्थापत्तिः, तथात्वे च पीड़ाया असम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः। ताभ्यामतीव सौकुमार्य्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। चतुर्थचरणे उपमा च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। तथा यमदण्डः पतति, भुजस्तु पततु इति विधिभेदात् "चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा"

তুই কি জন্য সংসারকে অসার করিতে প্রবৃত্ত হইয়াছিস্, ত্রিভুবনের রত্নকে হরণ করিতে উদ্যত হইয়াছিস্, জগৎকে আলোকবিহীন করিতে উদ্‌যোগী হইয়াছিস্, বন্ধুজনকে মরণের আশ্রয় লওয়াইতে প্রবৃত্ত হইয়াছিস্, কামদেবকে দর্পশূন্য করিতে উদ্যত হইয়াছিস্, লোকের নয়ন-সৃষ্টিকে নিষ্ফল করিতে উদ্‌যোগী হইয়াছিস্ এবং জগৎকে জীর্ণারণ্য করিতে প্রবৃত্ত হইয়াছিস্ ॥৩০॥

আরও, রে রে পাপিষ্ঠ!

(१) प्रणयसखीति पाठान्तरम्।

অঘোর। আঃ, দুরাত্মন্! প্রহর প্রহর (১)। নন্বয়ং ন ভবসি ?। (ঙ)

মালতী। পসীদ ণাহ! সাহসিঅ! দারুণো ক্খু অঅং হদাসো, তা পরিত্তাঅস্সু মং, ণিবত্তঅদু ইমাদো অণত্থসংসআদো (২)। (চ)

(চ) প্রসীদ নাথ! সাহসিক! দারুণঃ খল্বয়ং হতাশঃ, তত্ পরিত্রায়স্ব মাম্, নিবর্ত্ততামস্মাদনর্থসংশয়াত্।

---

ইতি দর্পণোদাহৃতবক্তৃপ্রক্রমভঙ্গাদোষঃ, স চ 'পততী'তি পাঠেনৈব সমাধেয়ঃ। তথাত্ব এবাভিপ্রেতার্থনির্বাহ ইতি সুধীভির্বিভাবনীয়ম্।

নর্দ্দটকং বৃত্তম্—"যদি ভবতো নজৌ ভজজলা গুরু নর্দ্দটক"মিতি লক্ষণাত্ ॥৩১॥

(ঙ) অঘোরেতি। পশ্যামি তব কিয়দস্তি পৌরুষমিতি সাবষ্টম্ভোপহাসেয়ং প্রহর প্রহরেত্যুক্তিঃ। অয়ং বলিবিঘ্নবিধানপ্রত্যবায়াত্ দুরাত্মা, ন ভবসি কিম্, অপি তু ভবস্যেবে-ত্যর্থঃ। সুতরামিদানীমেব ত্বামহং নিহন্মীতি ভাবঃ।

(চ) মালতীতি। হতাশো নির্দ্দয়ঃ। অনর্থোঽনিষ্টং তস্য সংশয়াত্। অয়ং খল্বতীব দারুণনির্দ্দয়প্রকৃতিঃ, তদলৌকিকরূপলাবণ্যগুণবন্তমপি ভবন্তং প্রতি দয়াং ন করিষ্যতি, যুদ্ধে চ জয়নিশ্চয়াভাবাত্ স্বকীয়মনিষ্টমপ্যাশঙ্কনীয়ম্, সুতরাং মত্পরি-

---

প্রণয়িনী সখীদিগের লীলার সহিত পরিহাসের সময় ইচ্ছানুসারে গৃহীত কোমল শিরীষকুসুমের প্রহারেও যে শরীর বেদনা পায়, হত্যার নিমিত্ত সেই শরীরে তুই শস্ত্রক্ষেপ করিতেছিস্; সুতরাং তোর মস্তকে অসময়ে যমদণ্ডের ন্যায় এই বাহু পতিত হউক ॥৩১॥

(ঙ) অঘোরঘণ্ট। ওরে দুরাত্মা! প্রহার কর, প্রহার কর। তুই দুরাত্মা নহিস্ ?।

---

(১) ক্বচিত্ প্রহর প্রহরেতি দ্বিরুক্তির্নাস্তি।

(২) অণত্থসঙ্কটাদো ইতি পাঠভেদঃ।

कपाल । भगवन् ! अप्रमत्तो भूत्वा दुरात्मानं व्यापादय । (छ)

माधवाघोरघण्टौ । मालतीकपालकुण्डले प्रति । अयि भीरु ! (ज)

धैर्य्यं निधेहि हृदये, हत एष पापः
किंवा कदाचिदपि केनचिदन्वभावि ।
सारङ्गसंहृतिविधा-(१) विभकुम्भकूट-
कुट्टाकपाणिकुलिशस्य हरेः प्रमादः ॥३२॥

नेपथ्ये कलकलः । सर्वे आकर्णयन्ति ।

---

त्वाणीयममपहायास्मात् स्थानादपसर, तथा च सति नारीजीवनस्य तुच्छत्वात् पतिसर्वस्वत्वाच्च तव परित्राणेनैव हताया अपि मे परित्राणमेव भवेदिति सरलार्थो भावार्थश्च ।

अत्र विद्रवो नाम गर्भसन्ध्यङ्गं "शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः ।" इति दर्पणलक्षणात् ।

"हताशो निर्द्दये चाशारहिते पिशुनेऽपि च ।" इति मेदिनी ।

(छ) कपालेति । अप्रमत्तः सावधानो भूत्वा । अस्यापि वीरत्वसम्भवादिति भावः ।

(ज) माधवेति । अत्र कविवाक्ये यथासंख्यं नान्वयः । भीरु ! भयशीले ! ।

धैर्य्यमिति । हृदये धैर्य्यं निधेहि स्थापय, अस्माद्भयजनितां कातरतां नावलम्बस्वेत्यर्थः । यत एष पापो हतः एष दुरात्मा मया व्यापादित एव । कथमीदृशी सम्भावना

---

(চ) মালতী। নাথ! সাহসিক! প্রসন্ন হউন। এই নির্দ্দয় লোকটা বড়ই ভয়ঙ্কর; অতএব আমাকে রক্ষা করুন, এই অনিষ্টসংশয় হইতে নিবৃত্ত হউন।

(ছ) কপালকুণ্ডলা। ভগবন্! সাবধান হইয়া দুরাত্মাকে মারিয়া ফেলুন।

(জ) মাধব মালতীর প্রতি ও অঘোরঘণ্ট কপালকুণ্ডলার প্রতি। হে ভয়শীলে!

---

(१) सारङ्गसङ्गरविधाविति पाठान्तरम् ।

पुनर्नेपथ्ये (१)। भो भो मालत्यन्वेषिणः सैनिकाः! (२) इयममात्यभूरिवसुमाश्वासयन्त्यप्रतिहतप्रज्ञाचक्षु-( ३ ) र्भगवती

इत्याह किंवेति। कदाचिदपि केनचिदपि जनेन सारङ्गसंहतिविधौ हरिणसंहारकर्म्मणि इभकुम्भकूटस्य हस्तिकुम्भसमूहस्य कुट्टाकं विदारणशीलं पाणिकुलिशं हस्तवज्रं यस्य तस्य तथोक्तस्य हरेः सिंहस्य प्रमादोऽनवधानता किंवा अन्वभावि अनुभूतः, अपि तु कथमपि नेत्यर्थः। पाणिकुलिशेन हस्तिकुम्भविदारणकारिणः सिंहस्य हरिणसंहारे यथा प्रमादो न स्यात्, तथा ( माधवपक्षे ) राजभटाभिभाविनः, ( अघोरघण्टपक्षे ) अन्यत्र इमशानेऽपि प्रसमये वीरभूततद्बान्धवाभिभाविनश्च मम नितान्ततुच्छस्यास्य विनाशे प्रमादो न स्यादेव, सुतरां मया हत एवायं पापात्मेति सम्भावयेति भावः।

अतएवात्र समादप्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, तथा पाणिः कुलिशमिवेति लुप्तोपमा, पूर्वार्द्धे वाक्यार्थहेतुकं काव्यलिङ्गञ्चेत्य, इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

"अनायाससाध्ये कर्म्मणि भविष्यत्यप्यतीतवद्व्यवहार" इति न्यायात् भविष्यत्यपि हत इत्यतीते निष्ठाप्रत्ययः "श्रीकृष्णविधौ विहतिं वितेने" "गोपीनाथ इमञ्चकार" इत्यादिवत्। कुट्टाक इति "लुण्टिचिलुण्टिजल्पिकुट्टां षाक" इति षाकप्रत्ययः।

वसन्ततिलका वृत्तम् ॥३२॥

(क) पुनरिति। आश्वासयन्ती 'सुस्थीभव, जीवति ते मालती, अचिरादेव लप्स्यते

হৃদয়ে ধৈর্য্য ধারণ কর, এ পাপাত্মাকে আমি মারিয়া ফেলিয়াছি, কখনও কি কেহ দেখিয়াছে যে, যাহার বজ্রের তুল্য নখ হস্তিকুম্ভসমূহের বিদারণ করিতে সমর্থ, সেই সিংহের হরিণসংহারকার্য্যে অনবধানতা হইয়াছে ॥৩২॥

( নেপথ্যে কোলাহল। সকলে শুনিতে লাগিল। )

(१) क्वचित् पाठोऽयं नास्ति। (२) सैनिका इति पाठोऽपि कुत्रचिन्न दृश्यते।

(३)···प्रज्ञागतिरिति पाठभेदः।

কামন্দকী বঃ (১) সমাদিশতি, পর্য্যবষ্টভ্যতামেতৎ করালায়তনং দ্রুতম্ (২)। (ঝ)

নাঘোরঘণ্টাদন্যস্য কর্ম্মৈতদ্ভীষণাদ্ভুতম্ (৩)।
ন করালোপহারাচ্চ ফলমন্যদ্বিভাব্যতে ॥৩৩॥

কপাল। ভগবন্! পর্য্যবষ্টব্ধাঃ স্মঃ। (ঞ)

---

চ সা' ইত্যেবংবচনৈঃ সান্ত্বয়ন্তী। অপ্রতিহতং কেনাপ্যনিবারিতং প্রজ্ঞা জ্ঞানমেব চক্ষুর্যস্যাঃ সা। পর্য্যবষ্টভ্যতাং পরিবেষ্ট্যতাম্।

নাঘোরেতি। ভীষণং জীবনশঙ্কয়া বন্ধূনাং ভয়ঙ্করম্, অদ্ভুতং সতামপি রক্ষিজনানামজ্ঞাতভাবেন সম্পন্নত্বাদাশ্চর্য্যম্, এতৎ মালতীহরণরূপং কর্ম্ম অঘোরঘণ্টাদন্যস্য জনস্য ন সম্ভবতি। কিঞ্চেতি চার্থঃ। করালায়ৈ উপহারাৎ বলিভাবেনোপায়নাৎ অন্যৎ ফলম্ অপহরণপ্রয়োজনং ন বিভাব্যতে ন প্রতীয়তে। করালায়ৈ বলিভাবেনোপহর্ত্তুমেবাঘোরঘণ্টেন কয়াচিন্মায়য়া মালত্যপহৃতেতি নিশ্চীয়ত ইতি সরলার্থঃ। সুতরামেতৎ পর্য্যবষ্টভ্যতাম্, অত্রৈব সা বিদ্যতে ইতি ভাবঃ।

অত্র ক্ষিপ্তির্নাম গর্ভসন্ধ্যেঙ্গং "রহস্যার্থস্য তূদ্ভেদঃ ক্ষিপ্তিঃ স্যা"দিতি দর্পণলক্ষণাৎ ॥৩৩॥

---

(ঝ) পুনরায় নেপথ্যে। হে মালতীর অন্বেষণকারী সৈন্যগণ! যাঁহার জ্ঞাননয়ন কখনও প্রতিহত হয় নাই, সেই ভগবতী কামন্দকী মন্ত্রী ভূরিবসুকে আশ্বস্ত করিতে থাকিয়া তোমাদিগকে আদেশ করিতেছেন যে, শীঘ্র এই করালার বাড়ীটাকে পরিবেষ্টন কর।

এই ভয়ঙ্কর ও অদ্ভুত কার্য্য অঘোরঘণ্ট ভিন্ন অন্যের নহে। এবং করালার নিকট বলিদান ভিন্ন ইহার অন্য ফলও অনুমান হয় না ॥৩৩॥

(ঞ) কপালকুণ্ডলা। ভগবন্! আমরা পরিবেষ্টিত হইলাম।

---

(১) পুস্তকান্তরে ব ইতি পাঠো নাস্তি। (২) দ্রুতমিত্যপি ক্বচিন্ন দৃশ্যতে।
(৩) নাঘোরঘণ্টাদন্যস্মাৎ কর্ম্মৈতদ্দারুণাদভূৎ। ইতি পাঠান্তরম্।

अघोर। सम्प्रति विशेषतः पौरुषस्यावसरः। (ट)

मालती। हा ताद! हा भअवदि!। (ठ)

माधवः। भवतु, बान्धवसमाजसुस्थितां मालतीं विधाय तत्समक्षमेनं दुरात्मानं व्यापादयामि (१)। मालतीमन्यतः प्रेषयन् परिक्रामति (२)। (ड)

---

(ठ) हा तात! हा भगवति!।

(ञ) कपालेति। पर्य्यवष्टब्धाः सैनिकैः परिवेष्टिताः। सवासीक्लिरियम्। अवीद्वेगो नाम गर्भसन्ध्यङ्गम्। तथा च साहित्यदर्पणे—"नृपादिजनिताभीतिरुद्वेगः परिकीर्त्तितः।"

(ट) अघोरेति। विशेषतः पौरुषस्य, अतिरिक्तभावेन बाहुबलप्रकाशरूपपुरुषकारस्य, अवसरः समयः। सैनिकैः परिवेष्टनात्, महाप्रभाववत्याः कामन्दक्याः सन्निधानस्यायामन्त्रादिप्रभावप्रकाशसम्भावनाया अभावाच्चेति भावः।

(ठ) मालतीति। हा तात! हा भगवति! कामन्दकि! अहमीदृग्विपन्नास्मीति वाक्यशेषः।

(ड) माधव इति। मालतीं बान्धवसमाजे पित्रादिबन्धुवर्गमध्ये सुस्थितां निरुपद्रवभावेन स्थितां विधाय, तस्य बान्धवसमाजस्य समक्षं प्रत्यक्षम्, एनं कापालिकम्, व्यापादयामि निहन्मि। तथा च सति कस्याप्यननुरोधेन स्वयमेव मालतीरक्षणादमात्यो महोपकारं ज्ञास्यन्नवश्यमेव मह्यं मालतीं दातुं विशेषेण यतिष्यत इत्यभिप्रायः। अन्यतः बान्धवसमाजावस्थानदेशं प्रतीत्यर्थः।

---

(ट) অঘোরঘণ্ট। এখন বিশেষরূপ পুরুষকারের সময়।

(ঠ) মালতী। হা পিতঃ! হা ভগবতি!।

(ড) মাধব। হউক, মালতীকে বন্ধুবর্গের ভিতরে সুস্থভাবে

---

(१) भवतु, बान्धवसंस्थामेनां विधाय तत्समक्षमेनां व्यापादयामीति भिन्नः पाठः।

(२) मालतीमन्यतः कापालिकञ्चान्यतः प्रेरयन् परिक्रामति। इत्यपि पाठो दृश्यते।

माधवाघोरघण्टौ। अन्योऽन्यमुद्दिश्य। आः पाप! (१)
कठोरास्थिग्रन्थिव्यतिकररणत्कारमुखरः (२)
खरस्नायुच्छेदक्षणविहितवेगव्युपशमः (३)।
निरातङ्कः पङ्केष्विव पिशितपिण्डेषु विलस-(४)
न्नसिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु ॥२४॥

उभावप्येकेनैव श्लोकेन प्रहारप्रकारमभिदधाते कठोरेति। रे पाप! पापात्मन्! कठोरेषु परिणतत्वेन कठिनेषु अस्थिग्रन्थिषु व्यतिकरेण सवेगसंयोगेन प्रहारेणेत्यर्थः, यो रणत्कारस्तदाकारशब्दः, तेन मुखरः शब्दायमानः। तथा खराणां तीव्राणां कठिनानां स्नायूनां छेदे कर्त्तने क्षणं क्षणकालमात्रं विहितस्तेन च्छेदेनैव जनितो वेगव्युपशमो वेगाव-रोधो यस्य स तथोक्तः। स्नायूनां कठिनत्वादेव तच्छेदेन क्षणमात्रं निरुद्धवेगः परञ्च यथातथैव प्रसरन्नित्यर्थः। पङ्केष्विव अस्थिस्नायुरहितत्वात् कर्द्दमेष्विव अनायासच्छेद्ये-ष्वित्यर्थः, पिशितपिण्डेषु केवलमांसपिण्डेषु निरातङ्को निर्बाधः, विलसन् प्रचरन् असिः मम (माधवस्य अघोरघण्टस्य च) खड्गः सपदि शीघ्रं ते तव (अघोरघण्टस्य माधवस्य च) गात्रं गात्रं सर्व्वाङ्गं लवशः कणशः कृत्वा क्षुद्रं खण्डं खण्डं कृत्वा विकिरतु इतस्ततो विक्षिपतु।

अत्र श्रौतीयमुपमालङ्कारः। गात्रशब्देनैवाङ्गाभिधानान्न विशेषेऽविशेषाख्यदोषः। तथात्र त्रोटकं नाम गर्भसन्ध्यङ्गम्। यथा साहित्यदर्पणे—

"—त्रोटकं पुनः। संरब्धवाक्—।"

"गात्रं गजाग्रजङ्घादौ क्लीवमङ्गे कलेवरे।" इति मेदिनी।

शिखरिणी वृत्तम ॥२४॥

রাখিয়া তাঁহাদের সমক্ষে এই দুরাত্মাকে বধ করিব। (মালতীকে অন্য দিক্ সরাইয়া পদক্ষেপ করিতে লাগিলেন।)

(१) आः, रे रे पाप! इति भिन्नः पाठः। (२)···घणात्कारमुखर इति पाठो-ऽपि दृश्यते। (३)·· वेगव्युपरम इति पाठभेदः। (४) पिशितखण्डेषु निपतन् इति पाठान्तरम्।

इति निष्क्रान्ताः सर्वे। (ढ)

# इति मालतीमाधवे श्मशानवर्णनं नाम (१) पञ्चमोऽङ्कः। (ण)

(ढ) इतीति। "दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः।" इत्यादिनिषेधेन युद्धस्यादर्शनीयत्वात् ततः कर्त्तुं निष्क्रान्ता इत्यर्थः।

(ण) इतीति। श्मशानवर्णनस्यैव विस्तृतत्वादस्य श्मशानवर्णनमिति नाम।

इति महामहोपाध्याय-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां मालतीमाधवटीकायां भावमनोहरायामतिगहनं पञ्चमाङ्कविवरणं समाप्तम् ॥०॥

---

মাধব ও অঘোরঘণ্ট। ( পরস্পরকে উদ্দেশ করিয়া ) আ পাপিষ্ঠ!

কঠিন অস্থিগ্রন্থির সংযোগে যে 'রণৎ' 'রণৎ' শব্দ হইবে, সেই শব্দে শব্দায়মান হইবে এবং কঠিন স্নায়ু ছেদন করিবার সময়ে বেগের কিঞ্চিৎ উপশম জন্মাইবে—এই অবস্থায় আমার অসি বিনা বাধায় কর্দ্দমের ন্যায় মাংসপিণ্ডের ভিতরে বিচরণ করতঃ শীঘ্রই তোর প্রত্যেক অঙ্গকে খণ্ড খণ্ড করিয়া নিক্ষেপ করিবে ॥৩৪॥

(ঢ) ( ইহার পর সকলের প্রস্থান। )

(ণ) শ্মশানবর্ণননামে পঞ্চম অঙ্ক সমাপ্ত।

---

(१) श्मशानवर्णनमिति पाठः पुस्तकान्तरे नास्ति।

# षष्ठोऽङ्कः ।

——०:*:०——

ततः प्रविशति कपालकुण्डला । (क)

कपाल । आः पाप ! (१) दुरात्मन् ! मालतीनिमित्तं व्यापादितास्मद्गुरो ! (२) माधवहतक ! अहं त्वया तस्मिन्नवसरे निर्दयं निघ्नत्यपि स्त्रीत्यवज्ञाता । सक्रोधम् । तदवश्यमनुभविष्यसि कपालकुण्डलाकोपस्य फलम् (३) । (ख)

(क) तत इति । अघोरघण्टवधानन्तरं स्त्रीत्यवज्ञावशान्माधवेन, कामन्दक्यादिशाच सैन्यवर्गेण कपालकुण्डला परिमुक्तेति प्रत्येतव्यम् ।

(ख) कपालेति । पाप ! दैवतार्थं नरतस्य वामाचारिप्रधानस्याघोरघण्टस्य वधात् पापयुक्त इत्यभिप्रायः । मालतीनिमित्तमिति क्रियाविशेषणस्य कारकत्वात् तत्सापेक्षेऽपि समासः । हतक इति कुत्सायां कप्रत्ययः । हतको नीचलोकश्चासौ माधवश्चेति माधवहतकः । तत्सम्बोधनम् । राजदन्तादित्वात् परनिपातः । "हतकः (पुं) नीचलोक" इति शब्दकल्पद्रुमः । तस्मिन्नवसरे अघोरघण्टवधकाले । निघ्नत्यपि त्वां प्रहरन्त्यपि, स्त्रीत्यवज्ञाता स्त्रीत्वनिबन्धनावहेलावशात् मुक्ता ।

अत्र क्षोभो नाम नाट्यालङ्कारः । "अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु ।" इति साहित्यदर्पणात् ।

(क) তদনন্তর কপালকুণ্ডলার প্রবেশ ।

(খ) কপালকুণ্ডলা । আ পাপিষ্ঠ ! দুরাত্মন্ ! নীচলোকমাধব ! তুই মালতীর জন্য আমার গুরুদেবকে হত্যা করিয়াছিস্ । আমি সেই সময়ে

(१) क्वचित् पापेति पाठो नास्ति । (२) विनिपातितास्मद्गुरो ! इति पाठान्तरम् ।

(३) विजृम्भितमिति पाठभेदः ।

शान्तिः कुतस्तस्य भुजङ्गशत्रो-
र्यस्मिन्निबद्धानुशया (१) सदैव ।
जागर्त्ति दंशाय निशातदंष्ट्रा-
कोटिर्विषोद्गारगुरुर्भुजङ्गी ॥१॥

शान्तिरिति । तस्य, भुजङ्गशत्रोः सर्पविनाशिनो जनस्य कुतः शान्तिः कथं स्वास्थ्यं स्यात्, अपि तु कुतोऽपि नेत्यर्थः । यस्मिन् जने निबद्धानुशया पत्युः सर्पस्य विनाशात् धृतदीर्घद्वेषा, निशातदंष्ट्राकोटिः सुतीक्ष्णदन्ताग्रा विषोद्गारेण गरलोद्वमनेन गुरुः कठोरा भुजङ्गी सर्पी सदैव दंशाय दंशनाय जागर्त्ति सचेष्टा तिष्ठति । यथा सर्पविनाशिनो जनस्य तत्पत्नीसर्पीकर्त्तृकदंशनभयात् सर्वदैवात्मरक्षणव्यग्रतया शान्तिर्न स्यात्, तथा अघोरघण्ट-वधकारिणस्तवापि ( माधवस्यापि ) मत्कर्त्तृकमहापकारशङ्कावशात् सदैव तदव्याहति-प्राप्त्युपायान्वेषणपरतया कदापि शान्तिर्न स्यादिति भावः । एतेन कपालकुण्डला अघोर-घण्टस्य शिष्या साधनशक्तिशालीदिति प्रतीयते ।

अतएवात्र समादप्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः । तथा "न्यक्कारो ह्ययमेव मे यदरय" इत्यादिवत् तच्छब्दनिर्द्दिष्टवाक्यस्य विधेयप्रतिपादकस्य पूर्व-पाठेनानुवाद्यत्वप्रतीतिकारित्वाद्वाक्यगतविधेयाविमर्शदोषः, स तु—

"यस्मिन्निबद्धानुशया सदैव जागर्त्ति दंशाय निशातदंष्ट्रा ।
महाविषोद्गारगुरुर्भुजङ्गी शान्तिः कुतस्तस्य भुजङ्गशत्रोः ॥"

इति पाठेन परिहरणीयः ।

"अनुशयः पश्चात्तापे दीर्घद्वेषानुबन्धयो"रिति हेमचन्द्रः । इन्द्रवज्रा वृत्तम् ॥१॥

তোকে নিষ্ঠুরভাবে প্রহার করিতে থাকিলেও তুই স্ত্রীলোক বলিয়া আমাকে অবজ্ঞা করিয়াছিলি ( অবজ্ঞা করিয়া ছাড়িয়া দিয়াছিলি ) । ( ক্রোধের সহিত ) অতএব নিশ্চয়ই কপালকুণ্ডলার ক্রোধের ফল অনুভব করিবি ।

(१) यस्मिन्ननुबद्धानुशया इति भिन्नः पाठः ।

नेपथ्ये। भो राजानश्चरमवयसामाज्ञया सत्वरध्वं
कर्त्तव्येषु, श्रवणसुभगं भूमिदेवाः! पठन्तु।
चित्रं नानावचननिवहै-(१) श्चेष्यतां मङ्गलेभ्यः
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥२॥

भोरिति। भो राजानः! हे पद्मावतीश्वरमहाराजसेवार्थोपस्थायिनः सामन्त-नृपतयः! चरमवयसां कुलाचारवेदिनां वृद्धानाम् आज्ञया आदेशेन कर्त्तव्येषु विवाह-यात्रोपयोगिदधि-दूर्वा-पूर्णकुम्भादिद्रव्याहरणरूपेषु प्रयोजनेषु सत्वरध्वं गच्छत तत्तद्द्रव्या-हरणाय चेष्टध्वमित्यर्थः। तथा हे भूमिदेवाः! ब्राह्मणाः! भवन्तोऽपि श्रवणसुभगं श्रुति-मधुरम्, पठन्तु यात्रामङ्गलमुच्चारयन्तु। तथा मङ्गलेभ्यो वरकन्ययोर्मङ्गलार्थं नानावचन-निवहैर्बहुविधवाक्यसमूहैः चित्रं जनानां चेतसि आश्चर्यं चेष्यतां विधातुमारभ्यतां वन्दिभि-रिति शेषः। कथमीदृक् समारम्भ इत्याह प्रत्यासन्न इति। प्रत्यासन्नः सन्निहितः, जन्यानां वरस्य स्निग्धानां जनानां यात्राया वरगृहात् कन्यागृहगमनक्रियायाः प्रवेशः प्राप्तिः, त्वरयति-तरां सर्वानतिशयेन सत्वरीकरोति। तथा च वरकन्ययोर्नन्दनमालत्योर्विवाहार्थं महा-राजस्यादेशेन नन्दनपक्षीया इतः परमेव मालतीपितुर्भूरिवसोर्गृहं प्रति यात्रां करिष्यन्ति, सुतरामयं समारम्भ इति भावः।

अत्र पूर्ववाक्यार्थान् प्रति चतुर्थचरणगतवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः। तथा अन्यासां कर्त्तृवाच्यक्रियाणां मध्ये चेष्यतामिति कर्म्मवाच्यक्रियानिर्द्देशात् भग्नप्रक्रमता-दोषः, वन्दिभिरित्यध्याहारान्न्यूनपदतादोषश्च, सुतरां 'चित्रं नानावचननिवहैः कुर्वतां वन्दिनश्च' इति पाठेन तयोः समाधानं विधेयम्।

"जन्याः स्निग्धा वरस्य ये" इत्यमरः। सत्वरध्वमिति "समस्तृतीयया युक्त" इत्यात्मने-पदम्। मङ्गलेभ्य इति तादर्थ्ये चतुर्थी। मन्दाक्रान्ता वृत्तम् ॥२॥

সর্পহত্যাকারী সেই ব্যক্তির শান্তি কোথায়, যাহার উপরে দীর্ঘ-কালের জন্য বিদ্বেষিণী সুধার দন্তাগ্রশালিনী ও বিষ-উদ্‌গিরণের জন্য নিষ্ঠুরপ্রকৃতি সর্পী, সর্ব্বদাই দংশনের জন্য সচেষ্ট থাকে ॥১॥

(१) रचननिवहैरिति पाठान्तरम्।

यावच्च सम्बन्धिनो न परापतन्ति, तावद्वत्सया मालत्या (१) नगरदेवतागृहमविघ्नमङ्गलाय गम्यता-(२) मित्यादिशन्ति भगवतीनिदेशवर्त्तिनोऽमात्यदाराः (३)। तथा (४) गृहीत-सविशेषमण्डनः प्रतीष्यतामानुयात्रिको जन इति (५)। (ग)

(ग) यावच्चेति। सम्बन्धिनो वरपक्षीयाः, न परापतन्ति भूरिवसुगृहं नागच्छन्ति। भगवतीनिदेशवर्त्तिनः कामन्दक्यादेशाधीनाः, अमात्यदारा भूरिवसोर्भार्य्या। गृहीतं सविशेषं मण्डनं मालत्याभरणं येन स तादृशः, आनुयात्रिकः मालत्या अनुचरो जनः प्रतीष्यतां देवतागृहप्रवेशाय मालत्या प्रतिपाल्यताम्। तादृशजनाद्दत्तमाभरणं परिधाय मालत्या देवतागृहं प्रविश्यतामित्यभिप्रायः। इत्यादिशन्तीत्यन्वयः। माधवेन कापालिका-न्मालती परित्रातेति वृत्तान्तानधिगमात् पूर्वाङ्गीकाररक्षानुरोधाद्वा महाराजस्यादेशेन नगर-पालः खल्विदमाघोषयतीति बोद्धव्यम्।

নেপথ্যে। হে রাজগণ! বৃদ্ধদিগের আদেশে আপনারা কর্ত্তব্য কার্য্যে গমন করুন, হে ব্রাহ্মণগণ! আপনারা শ্রুতিমধুর যাত্রামঙ্গল পাঠ করুন এবং বন্দিগণ বর-কন্যার মঙ্গলের নিমিত্ত নানাবিধ বাক্যদ্বারা লোকের হৃদয়ে বিস্ময় উৎপাদন করিবার চেষ্টা করুক। কারণ, বর-যাত্রিদিগের যাত্রার সময় সন্নিহিত হইয়া সকলকে অত্যন্ত সত্বর করিতেছে ॥২॥

(গ) ভগবতী কামন্দকীর আদেশবর্ত্তিনী মন্ত্রিমহাশয়ের স্ত্রী আদেশ করিতেছেন যে, যে পর্য্যন্ত বরযাত্রগণ আসিয়া উপস্থিত না হ'ন, তাহার মধ্যে বৎসা মালতী, নির্বিঘ্নে মাঙ্গলিক বিবাহকার্য্য সম্পন্ন হইবার নিমিত্ত নগরের দেবতার গৃহে গমন করুক এবং বিশেষ বিশেষ অলঙ্কারধারী অনুচরদিগের প্রতীক্ষা করুক।

(१) मालत्या सहेति क्वचित् पाठः। (२) गन्तव्यमिति पाठोऽपि दृश्यते। (३) आदिशति भगवती कामन्दकी इति पाठभेदः। (४) अन्यच्च इति भिन्नः पाठः। (५) इतिशब्दः क्वचिन्नास्ति।

कपाल। भवतु, इतो मालतीविवाहपरिकर्म्मसत्वरप्रतीहार-जनसहस्रसङ्कुलात् (१) प्रदेशादपक्रम्य माधवापकारं प्रत्यभि-निविष्टा भवामि। इति निष्क्रान्ता। (घ)

## विष्कम्भकः (२)। (ङ)

ततः प्रविशति कलहंसः।

कल। आणत्तोह्मि, णअरदेवदागव्भघरत्थिदेण समअ-रन्देण णाहमाहवेण (३)। जहा जाणाहि दाव इदोमुहं (४) प्पउत्ता मालदी ण वेत्ति। ता जाव णं आणन्दइस्सं। (च)

(घ) कपालेति। मालत्या विवाहपरिकर्म्मणि विवाहसम्पादकनानाविधकार्य्ये, सत्वरं व्यग्रं यत् प्रतीहारसहस्रं बहुतरा द्वारपाला इत्यर्थः, तैः सङ्कुलात् व्याप्तात्, इतः प्रदेशात् अस्मात् विवाहद्वारदेशात्। ईदृशस्थानान्मालत्यपहरणमसम्भवमिति भावः।

(ङ) विष्कंति। मध्यमपात्ररूपया कपालकुण्डलया प्रयोजितत्वात् शुद्धविष्कम्भकोऽयम्। अत्र च 'व्यापादितास्मद्गुरो!' इत्यादिना अघोरघण्टवधादीनां वृत्तकथांशानां निदर्शनम्, 'वत्सया मालत्या' इत्यनेन मालत्या नगरदेवतागृहगमनस्य, 'माधवापकारं प्रत्यभिनिविष्टा भवामी'त्यनेन मालत्यपहरणस्य च वर्त्तिष्यमाणकथांशस्य निदर्शनं बोध्यम्।

(ঘ) কপালকুণ্ডলা। হউক, মালতীর বিবাহের নানা কার্য্যে ব্যস্ত এইরূপ অসংখ্য দ্বারপালগণে পরিপূর্ণ এই স্থান হইতে চলিয়া যাইয়া মাধবের অপকার করিবার জন্য মনোযোগী হই। ( এই বলিয়া প্রস্থান করিল। )

(ঙ) বিষ্কম্ভক।

(१) प्रतीहारशतसङ्कुलादस्मादिति पाठः क्वचित्। (२) इति शुद्धविष्कम्भ इति पाठोऽन्यत्र दृश्यते। (३) गव्भघरवत्तिणा मअरन्दसणाहेण माहवेण इति पाठोऽपि दृश्यते। (४) जणाहिमुहं इति क्वचित् पाठः।

ततः प्रविशतो माधवमकरन्दौ।

माधवः। मालत्याः प्रथमावलोकनदिनादारभ्य विस्तारिणो(१)
भूयः स्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम्।
अद्यान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे
कल्याणं विदधातु वा भगवतीनीतिर्विपर्य्येतु वा ॥३॥

(च) आज्ञप्तोऽस्मि, नगरदेवतागर्भगृहस्थितेन समकरन्देन नाथमाधवेन। यथा जानीहि तावदितोमुखं प्रवृत्ता मालती न वेति। तद्यावदेनमानन्दयिष्यामि।

(च) कलेति। इतोमुखम् एतन्नगरदेवतागृहाभिमुखं प्रवृत्ता आगन्तुमारभमाणा। एनं माधवम् आनन्दयिष्यामि 'मालती इतोमुखं प्रवृत्ते'ति वृत्तान्तनिवेदनेनेति भावः।

मालत्या इति। मृगदृशो हरिणीचक्षुषाया मालत्याः वकुलतरुसन्निधाने प्रथमावलोकनदिनादारभ्य विस्तारिणो विस्तृतभावेनोत्पन्नस्य, भूयः पुनरपि स्नेहविचेष्टितैर्मत्प्रतिमूर्त्तिचित्रणप्रभृतिभिरनुरागव्यापारैः परां कोटिं चरमां सीमां सातिशयवृद्धिमित्यर्थः, नीतस्य प्रापितस्य, अस्य अनुभूयमानस्य, मे मम मदनायासप्रबन्धस्य कामपीड़ापरम्परायाः, सर्वथा सर्वेण प्रकारेण अद्य खलु अद्यैव, अन्तः अवसानं भविष्यति। इति यथार्थमिति भावः। कथमेतदवगम्यते इत्याह कल्याणमिति। भगवत्याः कामन्दक्या नीतिः कौशलम्, कल्याणं मङ्गलम् अद्यैव मालत्याः पाणिग्रहणरूपामभिलाषसिद्धिमित्यर्थः, विदधातु करोतु वा, वा अथवा विपर्य्येतु विपरीता भवतु केनचित् प्रतिहता सती तादृशमङ्गलं न

তাহার পর কলহংসের প্রবেশ।

(চ) কলহংস। প্রভু মাধব মকরন্দের সহিত নগরদেবতার গৃহের ভিতরে থাকিয়া আমাকে আদেশ করিয়াছেন যে, দেখ দেখি মালতী এদিকে আসিতেছেন কি না। অতএব যাইয়া উঁহাকে আনন্দিত করি।

তাহার পর মাধব ও মকরন্দের প্রবেশ।

(१) प्रथमावलोकदिवसादारभ्य विस्तारिणः, प्रथमावलोकनदिनादारभ्य विस्तारितैः इति पाठभेदौ।

·मक। वयस्य! कथं हि भगवत्याः सुमेधसो नीति-विपर्य्ययमेष्यति (१)। (छ)

विदधातु। कामन्दक्याः कौशलेन यदि मालत्याः पाणिग्रहणं सम्पद्येत, तदा तत्सम्भोगेनैव कामपीड़ाया अवसानं भविष्यति, यदि तु केनचित् प्रतिबन्धकेन तत्कौशलस्य निष्फलतया तत् पाणिग्रहणं न सम्पद्येत, तदापि मम मरणादेव तत्कामपीड़ाया उपशम इत्युभयथाप्यद्यैवान्त इति निश्चय इति भावः।

अत्रापि प्रथमवाक्यार्थं प्रति चतुर्थचरणगतवाक्यार्थद्वयस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, 'विदधातु' 'विपर्य्येतु' इत्यनेकक्रिययोर्भगवतीनीतिरित्येककर्तृकारकत्वाद्दीपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः।

इदञ्च मार्गो नाम गर्भसन्धेरङ्गम्—"तत्त्वार्थकथनं मार्गः" इति दर्पणलक्षणात्। तथा इयमपि च प्राप्त्याशा नाम कार्य्यस्य तृतीयावस्था। यथा साहित्यदर्पणे—

"उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः।"

शार्दूलविक्रीड़ितं वृत्तम् ॥३॥

(छ) मकेति। सुमेधसोऽतीवबुद्धिमत्याः। कामन्दक्याः कौशलेनैव मालत्याः पाणिग्रहणं ते सम्पत्स्यते, सुतरामाश्वस्तो भवेति भावः।

মাধব। যে কামবেদনা হরিণনয়না মালতীর প্রথম দর্শনের দিন হইতে ক্রমশঃ বৃদ্ধি পাইতেছিল এবং আমার প্রতিমূর্ত্তি চিত্র করাপ্রভৃতি সানুরাগ ব্যবহার যাহাকে বৃদ্ধির চরম সীমায় নিয়াছিল, ভগবতী কামন্দকীর কৌশল মঙ্গলই করুক, বা অমঙ্গলই করুক, আজ আমার সেই ধারাবাহিক কামবেদনার সর্ব্বপ্রকারে অবসান হইবে ॥৩॥

(ছ) মকরন্দ। বয়স্য! ভগবতী কামন্দকী অত্যন্ত বুদ্ধিমতী; সুতরাং তাঁহার কৌশল অমঙ্গল করিবে কেন?।

(१) कथं भगवत्याः सा मेधाशक्तिर्विपर्य्यष्यति इति पाठान्तरम्।

कल। उपसृत्य। णाह! दिट्टिआ वड्ढसि। पअत्ता क्खु इदोमुहं (१) मालदी। (ज)

माधवः। अपि सत्यम्? (२)।

मक। सखे! किमश्रद्दधान इव (३) पृच्छसि। न केवलं प्रवृत्ता, प्रत्यासन्ना च वर्त्तते। तथा हि—(झ)

अस्माकमेकपद एव मरुद्विकीर्ण-
जीमूतजालरसितानुकृतिर्निनादः।
गम्भीरमङ्गलमृदङ्गसहस्रजन्मा
शब्दान्तरश्रवणशक्ति-(४) मपाकरोति ॥४॥

तदेहि, जालमार्गेण पश्यामः। तथा कुर्व्वन्ति। (ञ)

(ज) नाथ! दिष्ट्या वर्द्धसे। प्रवृत्ता खलु इतोमुखं मालती।

(झ) मकेति। अश्रद्दधान इव कलहंसवाक्यमविश्वसन्निव। प्रत्यासन्ना एतन्नगर-देवतागृहनिकटवर्त्तिनी च वर्त्तते मालतीति शेषः।

अस्माकमिति। मरुता वायुना विकीर्णं मेघान्तरोपरि विक्षिप्तं यत् जीमूतजालं मेघसमूहः तस्य, रसितस्य गर्ज्जितस्य अनुकृतिरनुकरणं यस्मिन् स तथोक्तः। गम्भीरं

(ज) কলহংস। ( নিকটে যাইয়া ) প্রভো! ভাগ্যবশতঃ আপনার সমৃদ্ধি হইতেছে। মালতীদেবী এদিকেই আসিতেছেন।

মাধব। ইহা কি সত্য?।

(ঝ) মকরন্দ। সখে! যেন অবিশ্বাস করিয়াই জিজ্ঞাসা করিতেছ কেন? কেবল আসিতে আরম্ভ করিয়াছেন ইহা নহে; নিকটবর্ত্তিনীও হইয়াছেন। দেখ—

(१) जत्ताहिमुहं इति भिन्नः पाठः। (२) अपि नाम सत्यमिति क्वचित् पाठः। (३) इवशब्दः क्वचिन्नास्ति। (४) शब्दान्तरग्रहणशक्तिमिति पाठान्तरम्।

·कल। णाह! पेक्ख—(१) इमे दाव उप्पड़िअ-राअहंस-विब्भमाहिराम-चामर-समीरणुव्वेलिअ--कदलिआवली-तरङ्गि-दुत्ताल-(२) गअणङ्गणसरो (३) णिरन्तरुद्दण्डपुण्डरीअविब्भमं

(ट) नाथ! प्रेक्षस्व—इमे तावत् उत्पतितराजहंसविभ्रमाभिराम-चामर-समीरणो-द्वेलित-कदलिकावली-तरङ्गितोत्ताल-गगनाङ्गनसरो निरन्तरोद्दण्ड पुण्डरीकविभ्रमं वहन्तो

गम्भीरनादि, मङ्गलं माङ्गलिकं यत् मृदङ्गसहस्रं बहुतरा मुरजाः, तस्मात् जन्म उत्पत्ति-र्यस्येति सः, तादृशो निनादः शब्दः, एकपदे एव सद्य एव इदानीमित्यर्थः, अस्माकं शब्दान्तरश्रवणशक्तिम् अपाकरोति शब्दान्तरतिरोधानेन नाशयति। अस्य शब्दस्य मालत्यनुगामित्वेन तस्या ध्रुवं प्रत्यासन्नत्वात् कलहंसवाक्यं प्रत्यविश्वासो न त्वया करणीय इति भावः।

अत्रार्थ गतोपमालङ्कारः।

"तत्क्षणैकपदे तुल्ये सद्यः सपदि च द्रुते।" इति हलायुधः।

वसन्ततिलका वृत्तम् ॥४॥

(ञ) तदेहीति। जालमार्गेण गवाक्षद्वारेण। कुर्व्वन्ति माधव-मकरन्द-कलहंसा इति शेषः।

(ट) कलेति। स्वोक्तवाक्यं प्रमाणयितुं माधवञ्चानन्दयितुमाह नाथेति। उत्-पतितानाम् उड्डीनानां राजहंसानां विभ्रमा इव विभ्रमा विलासास्तैः अभिरामाणां मनोज्ञानां चामराणां समीरणैर्वायुभिः, उद्वेलिता सञ्चालिता या कदलिकावली पताकाश्रेणी तया

---

বায়ুবিক্ষিপ্ত মেঘসমূহের গর্জ্জনের অনুকারী এবং গম্ভীরনাদী সহস্র মাঙ্গলিক মৃদঙ্গ হইতে উৎপন্ন শব্দ, সহসাই আমাদের অন্য শব্দ শুনিবার শক্তি লোপ করিতেছে ॥৪॥

(ঞ) অতএব আইস, গবাক্ষদ্বার দিয়া দেখি। (তাহাই করিলেন)।

(१) पेक्खस्स पेक्खस्स इति क्वचित् पाठः। (२) तरङ्गिदुत्ताण इत्यपि पाठः।

(३) सरोवर इति भिन्नः पाठः।

वहन्तो धवलादवत्त-(१) णिवहा दीसन्ति। इमाअ (२) सविलास-कवलिद-तम्बूलाहिपूरिद-(३) कवोलमण्डलाभोअ-व्वइअर-क्खलिद-महुर-मङ्गलुग्गीद-बद्ध-कोलाहलेहिं, विविह-रअणा-

धवलातपत्रनिवहा दृश्यन्ते। इमाश्च सविलास-कवलित-ताम्बूलाभिपूरित कपोलमण्डला-भोग-व्यतिकर स्खलित मधुर मङ्गलोद्‌गीतबद्ध कोलाहलैः, विविध-रत्नालङ्कार-किरणावली-तरङ्गितं सम्भ्रान्तरङ्गं कृतम्, अतएव उत्तालम् उत्कटं व्याप्तं गगनाङ्गनमिव सरो दीर्घिका, तत्र निरन्तराणां घनानाम् उद्दण्डानाम् उत्थितनालानां पुण्डरीकाणां श्वेतपद्मानां विभ्रमं विलासं सौन्दर्य्यम्, वहन्तो धारयन्तः, धवलातपत्रनिवहा श्वेतच्छत्रसमूहाः।

"कदली वैजयन्त्याञ्च रम्भायां हरिणान्तरे। कदली शाल्मली शाल्मी डिम्बिकासु च कथ्यते॥" इति विश्वः।

इमाश्चेति। सविलासं सलीलं कवलितेन ताम्बूलेन अभिपूरितस्य कपोलमण्डलस्य गण्डदेशस्य आभोगात् विस्तारात् व्यतिकरेण सम्पर्केण सुसम्मिश्रितभावेनेत्यर्थः, स्खलितं निर्गतम्, मधुरं मनोहरं यत् मङ्गलोद्‌गीतं गौरीकल्याणादिकमुर्च्चैःस्वरगानं तेन बद्धः कृतः कोलाहलः अस्फुटशब्दो यैस्तथोक्ताः। तथा, विविधानां रत्नालङ्काराणां किरणावलीभिः

(ट) কলহংস। প্রভো! দেখুন—এই সকল শুভ্রবর্ণ ছত্রসমূহ দেখা যাইতেছে, উড্ডীন রাজহংসগণের ন্যায় বিলাস-সৌন্দর্য্যসম্পন্ন চামর-সমূহের বায়ুতে এই শ্বেতচ্ছত্রসমূহের পতাকাগুলি আন্দোলিত হইতেছে; তাহাতে এই ছত্রগুলি বিশালতরঙ্গসম্পন্ন আকাশসরোবরের ঘন-দণ্ড-সমন্বিত শ্বেতপদ্মের শোভা ধারণ করিতেছে। এই সকল হস্তিনীসমূহও দেখা যাইতেছে; ইহাদের উপরে যে সকল বেশ্যা উপবেশন করিয়াছে, তাহাদের গণ্ডমণ্ডল সবিলাসভক্ষিত তাম্বূলে পরিপূর্ণ রহিয়াছে এবং তাহা হইতে সুমধুর মঙ্গলগানের কোলাহল নির্গত

(१) मङ्गलधवलादवत्त इति पाठोऽपि दृश्यते। (२) एदाअ इति पुस्तकान्तरे पाठः। (३) तम्बूलवीडिआहिपूरिद इति कुत्रचित् पाठः।

लङ्कारकिरणावली-विड़म्बिद-महिन्दचावविच्छेअ--विच्छुरिअ-णहत्थलेहिं, वारसुन्दरीकदम्बएहिं अज्झासिआओ कणन्तकणअ-किङ्किणी-रणिअ-झण-झणक्कारिणीओ (१) करिणीओ। (ट)

माधवमकरन्दौ सकौतुकं पश्यतः।

मक। स्पृहणीयाः (२) खल्वमात्यभूरिवसोर्विभूतयः। तथाहि—(ठ)

विड़म्बित महेन्द्रचापविच्छेद-विच्छुरित-नभःस्थलैः वारसुन्दरीकदम्बकैरध्यासिताः क्वणत्-कनककिङ्किणीरणित-झणझणत्कारिण्यः करिण्यः।

प्रभाजालैः विड़म्बितः साद्दृश्येन निर्म्मितः यो महेन्द्रचापविच्छेदः इन्द्रधनुखण्डः तेन विच्छुरितं रञ्जितं नभःस्थलं यैस्तादृशैः, वारसुन्दरीभिर्गणिकागणैः अध्यासिता आरूढ़ाः। तथा क्वणन्त्यः शब्दायमाना याः कनककिङ्किण्यः सुवर्णनिर्म्मितक्षुद्रघण्टाः, तासां रणितैः शब्दैः झणझणत्कारिण्यः झणझणदित्येवं शब्दकारिण्यः करिण्यो हस्तिन्यश्च दृश्यन्त इति शेषः।

(ठ) मकेति। स्पृहणीया अतिप्रचुरत्वात् सर्व्वैरेव वाञ्छनीयाः। विभूतयो धन-सम्पदः।

হইতেছে ; আর উহাদের নানাবিধ রত্নালঙ্কারের কিরণে বহুতর ইন্দ্রধনু-খণ্ড নির্ম্মাণ করিয়াছে, তাহাতে আকাশতল রঞ্জিত করিয়াছে। আর স্বর্ণের কিঙ্কিণীগুলি বাজিতেছে, তাহাতে ঐ হস্তিনীসমূহও 'ঝন ঝন' করিতেছে।

( মাধব ও মকরন্দ কৌতুকের সহিত দেখিতে লাগিলেন। )

(ঠ) মকরন্দ। মন্ত্রী ভূরিবসুর ঐশ্বর্য্য সকলেরই বাঞ্ছনীয়। দেখ—

(१)···किङ्किणीजालझणझणझङ्कारिणीओ इति पाठान्तरम्।

(२) रमणीया इति क्वचित् पाठः।

प्रेङ्खद्भूरिमयूर-(१) मेचकचयैरुन्मेषिचाषच्छद-
च्छायासंवलितैर्विवर्त्तिभिरिव प्रान्तेषु पर्य्यावृताः।
व्यक्ताखण्डलकार्म्मुका इव भवन्त्युच्चित्रचीनांशुक-
प्रस्तारस्थगिता इवोन्मुखमणिज्योतिर्वितानैर्दिशः॥५॥

प्रेङ्खदिति। दिशः, उन्मुखानाम् ऊर्द्धप्रसृतानां मणिज्योतिषां गणिकागणालङ्कारस्थरत्नरश्मीनां वितानैर्विस्तारैः, उन्मेषिणाम् उड्डीनानां चाषाणां स्वर्णचातकानां (सोणाचड़ा इति येषां प्रसिद्धिः) छदच्छायाभिः पक्षकान्तिभिः संवलितैः सम्मिश्रितैः, विवर्त्तिभिः सञ्चारिभिः, प्रेङ्खतां सञ्चरतां भूरीणां प्रचुराणां मयूराणां मेचकचयैः चन्द्रकसमूहैः पुच्छदेशस्थचन्द्राकृतिनीलपीतचिह्नैरिति यावत्, प्रान्तेषु ऊर्द्धप्रान्तभागेषु पर्य्यावृता आच्छादिता इव भवन्ति। व्यक्तानि स्पष्टलक्ष्यमाणानि आखण्डलकार्म्मुकाणि इन्द्रधनूंषि यासु ता इव भवन्ति। तथा उच्चित्राणां नीलपीतादिवर्णैश्चित्रितानां चीनांशुकानां चीनदेशोद्भववस्त्राणां नितान्तसूक्ष्माणामित्यर्थः, प्रस्तारेण वितानेन स्थगिता आवृता इव भवन्ति। कन्याया यात्राशोभापरिवर्द्धनाय यः खलु गणिकाभ्यस्ताटृशान्याभरणानि दातुमर्हति, तस्य तादृश्यो धनसम्पदः सर्वेषामेव स्पृहणीया भवेयुरत्र न काचित् कस्यचिद्विप्रतिपत्तिरिति भावः।

अत्र तिसृणां भावाभिमानिनीनां वाच्यानां क्रियोत्प्रेक्षाणां मिथो नैरपेक्ष्यात् संसृष्टिरलङ्कारः।

"समौ चन्द्रकमेचकौ" इत्यमरः। "चाषः (पुं) स्वर्णचातक" इति शब्दकल्पद्रुमः।

शार्दूलविक्रीडितं वृत्तम्॥५॥

উড্ডীন স্বর্ণচাতকপক্ষিগণের পক্ষদেশের কান্তিমিশ্রিত আকাশসঞ্চারী বহুসংখ্যক ময়ূরের প্রচলিত চন্দ্রকসমূহে যেন সমস্ত দিকের প্রান্তভাগ আবৃত হইয়া গিয়াছে, রত্নসমূহ হইতে উর্দ্ধগামী কিরণসমূহে সমস্ত দিকেই যেন ইন্দ্রধনু প্রকাশ পাইয়াছে এবং বিস্তারিত নানাবর্ণের চীনবস্ত্রে যেন সকল দিক্ আচ্ছাদিত হইয়াছে॥৫॥

(१) प्रेङ्खद्भूरिमयूख इत्यपि पाठः।

क्ल। कहं ससम्भमाणेक्क-पड़िहारमण्डलावज्जिदुज्जल-कणअकलहोअ-पङ्कलित्त-(१) विचित्त-वेत्तलदा-परिक्खित्त-रेहा-रइदमण्डलो दूरदो ज्जेव्व से संठ्ठिदो परिअणो (२)। एसा अ, वहुल-सिन्दूर-णिअर-संज्झारागोवरत्त-मुह-महुर-( ३ ) घोलन्त-

(ड) कथं ससम्भ्रमानेकप्रतिहारमण्डलावर्जितोज्ज्वल-कनक-कलधौत-पङ्कलिप्त-विचित्र वेत्रलता-परिक्षिप्त-रेखा-रचितमण्डलो दूरत एवास्याः संस्थितः परिजनः। एषा च, बहुल-सिन्दूर-निकर सन्ध्यारागोपरक्त-मुख-मधुर घूर्णमान-नक्षत्र मालाभरणधारिणी

(त) कलेति। ससम्भ्रमाणां सत्वराणाम् अनेकेषां प्रतिहाराणां द्वारपालानां रक्षिपुरुषाणामित्यर्थः मण्डलेन समूहेन आवर्जिता अवनमिता भूमौ स्थापिता, उज्ज्वला चिक्कणा, कनककलधौतयोः स्वर्णरौप्ययोः पङ्केन तरलद्रव्यान्तरमिश्रणात् कर्द्दमभावापन्नेन तदीयचूर्णेन लिप्ता, अतएव विचित्रा नानावर्णा या वेत्रलता सततहस्तव्यवहार्य्यो यष्टिविशेषः, तया परिक्षिप्ता सीमान्तेन दत्तेयं रेखा केनापि न लङ्घनीयेत्येवं नियमेन भूमौ विन्यस्ता, या रेखा तया रचितं स्वस्वावस्थानेन विहितम्, मण्डलं वर्त्तुलाकारावस्थानं येन स तथोक्तः, अस्या मालत्याः परिजनः परिचारकवर्गः दूरत एव अस्या मालत्या विप्रकृष्टदेश एव संस्थितः अवस्थितः। "कलधौतं रूप्यहेम्नो"रित्यमरः।

तथा, एषा दूरतो दृश्यमाना, चकारः पुनरर्थे। बहुलानां सिन्दूराणां निकरः समूह एव सन्ध्यारागः, तेन उपरक्तं विच्छुरितं मुखं हस्तिन्या वदनमेव मुखम् आद्या-

(ড) কলহংস। সত্বর অনেক দ্বারপালগণ, স্বর্ণ ও রৌপ্যের কর্দ্দমলিপ্ত, উজ্জ্বল ও বিচিত্র বেত্রযষ্টি ভূতলে অবনত করিয়া যে রেখা করিয়া দিল, তাহাতে মণ্ডলাকারে অবস্থিত পরিজনবর্গ ইঁহার (মালতীর) দূরেই রহিয়া গেল। যে হস্তিনীরূপ রজনী, প্রচুর সিন্দুররূপ সন্ধ্যা-রক্তিমায় রঞ্জিত মুখের উপরে ( বদনরূপ প্রথম সময়ে ) সুন্দরভাবে

(१) क्वचित् लित्त इति पाठो नास्ति। (२) दूरसंठिदो परिअणो इति पाठान्तरम्।
(३)·· चड्डुलमुहघोलन्त इत्यपि पाठः।

णक्खत्तमालाभरणधारिणिं करेणुरअणिं अलङ्करन्ती, इदो ज्जेव्व कोदूहलुम्मुह-(१) समत्थलोअ-दीसन्त-मणहरापाण्डुर-परिक्खामदेह-सोहा-विहाविआणङ्गवेअणा, (२) पढ़मचन्दलेहा-विब्भमं वहन्ती किञ्चि अन्तरं पसरिदा मालदी। (ड)

करेणुर जनीम् अलङ्कुर्वती इत एव कौतूहलोन्मुख-समस्तलोक दृश्यमान-मनोहरापाण्डुर-परिक्षाम-देह-शोभा-विभावितानङ्गवेदना, प्रथमचन्द्रलेखाविभ्रमं वहन्ती किञ्चिदन्तरं प्रसृता मालती।

ड्यव: प्रदोषकाल:, तत्र मधुरं मनोहरं यथा स्यात् तथा घूर्णमाना उज्ज्वलप्रभापटल-प्रसारात् घूर्णमानेव प्रतीयमाना, नक्षत्रमाला मुक्तामालेव नक्षत्रमाला ताराश्रेणी, तत्-स्वरूपमाभरणं धारयति या ताम्। करेणुर्हस्तिन्येव रजनी कृष्णवर्णत्वात् रात्रि:, ताम्। अलङ्कुर्वती, एकत्रारोहणात् अन्यत्रान्धकारापसारणात् शोभयन्ती। कौतूहलोन्मुखै: कौतुकोद्‌ग्रीवै: समस्तलोकै: सर्वजनै: दृश्यमाना, मनोहरा, आपाण्डुरा विरहेण ईषच्छ्वेता, परिक्षामा कृशा, या देहशोभा, तया विभाविता सूचिता अनङ्गवेदना कामपीड़ा यस्या: सा तथोक्ता। प्रथमचन्द्रलेखाया: प्रथमोदितचन्द्रकलाया विभ्रमं विलासं वहन्ती मालती इत एव अस्यामेव दिशि किञ्चिदन्तरं परिजनात् कियद्व्यवधानं यथा स्यात्तथा प्रसृता आगता।

अत्र द्वितीयवाक्ये "दृश्यन्ते क्वचिदारोप्या: श्लिष्टा: साङ्गेऽपि रूपके" इति साहित्य-दर्पणात् श्लिष्टसाङ्गरूपकमलङ्कार:, प्रथमचन्द्रलेखाया विभ्रममिव विभ्रममिति सादृश्याक्षेपा-दसम्भवद्वस्तुसम्बन्धरूपा निदर्शना चेत्यनयोरङ्गाङ्गिभावेन सङ्कर:।

अहो! चमत्कारि कवित्वमाविष्कृतं किङ्करजनेनापि।

"नक्षत्र (क्ली) मुक्ता।···तारा।" इति शब्दकल्पद्रुम:।

घूर्णित मुक्तार हाररूप नक्षत्रसमूह धारण करितेछे, ताहाके (उपवेशन-द्वारा) अलङ्कृत करत: नवोदित चन्द्रलेखार न्याय शोभा धारण करिया

(१) कोऊहलुप्फुल्ल इति पाठभेद:।

(२) विहाविआणङ्गवेअणा इति पाठ: क्वचिन्नास्ति।

मक। वयस्य! पश्य पश्य—(१)

इयमवयवैः पाण्डुक्षामैरलङ्कृतमण्डना
कलितकुसुमा बालेवान्तर्लता परिशोषिणी।
वहति च वरारोहा रम्यां विवाहमहोत्सव-
श्रियमुदयिनीमुद्गाढ़ाञ्च (२) व्यनक्ति मनोरुजम् ॥६॥

इयमिति। पाण्डुक्षामैः विरहेण श्वेतक्षीणैः, अवयवैः स्वभावसुन्दरैरङ्गैः अलङ्कृतानि भूषितानि, मण्डनानि स्वधृताभरणानि यया सा कलितकुसुमा एकत्र साभिलाषत्वादन्यत्र प्रसवकालत्वात् धृतपुष्पा, अन्तर्मध्ये परिशोषिणी कीटवेधादिवशात् शुष्कतायालिनी बाला नवीना लतेव स्थिता, इयं वरारोहा उत्तमा महिला मालती, रम्यां मनोहराम्, उदयिनीमिदानीं प्रतिक्षणं वर्द्धमानां विवाहमहोत्सवश्रियं वहति धारयति च, तथा उद्गाढ़ाम् अतीवतीव्रां मनोरुजं चित्तपीड़ां मन्मथव्यथामित्यर्थः, व्यनक्ति पाण्डुक्षामावयवत्वात् प्रकटयति च।

अत्रोपमालङ्कारः, 'वहति' 'व्यनक्ती'त्यनेकक्रिययोर्वरारोहेत्येककर्त्तृकारकत्वाद्दीपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः। न च परार्द्धे "धुनोति चासिं तनुते च कीर्त्तिम्" इत्यादिवत् क्रियासमुच्चय इति वाच्यम् "एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारानियमेन कार्य्य-कारण-कालविपर्य्ययरूपातिशयोक्तिमूलाः। दीपकस्य चातिशयोक्तिमूलत्वाभावः।" इति साहित्यदर्पणादेव च तादृशातिशयोक्तिमूलत्वाभावात्। एवञ्च 'पचति च पठति च' इत्यादिवत् प्रत्येकक्रियायाः प्राधान्यसूचनाय चकारद्वयमिति भाव्यम्।

"वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्यमरः। हरिणी वृत्तम् ॥६॥

মালতী দেবী, পরিজনবর্গ হইতে এই দিকেই কিছু ব্যবধানে আসিয়াছেন, সকল লোক কৌতুকে উন্মুখ হইয়া উঁহার মনোহর, ঈষৎ পাণ্ডুবর্ণ ও অত্যন্ত ক্ষীণ দেহের শোভা দেখিতেছে; ঐ শোভা উঁহার কামবেদনা সূচনা করিতেছে।

(১) क्वचित् पश्य पश्येति द्विरुक्तिर्न दृश्यते। (२) उद्गूढ़ामिति पाठान्तरम्।

कथं निषादिता गजवधूः। (ढ)

माधवः। सानन्दम्। कथमवतीर्य्य भगवतीलवङ्गिकाभ्यां समभितः (१) प्रवृत्तेव। (ण)

ततः प्रविशति कामन्दकी मालती लवङ्गिका च।

काम। सहर्षमपवार्य्य। (त)

विधाता भद्रं नो वितरतु मनोज्ञाय विधये,
विधेयासुर्देवाः परमरमणीयां परिणतिम्।

(ढ) कथमिति। निषादिता आरोहिणीनामवतरणाय हस्तिपकैर्नीचैर्वेशिता।

(ण) माधव इति। भगवती कामन्दकी। समं सह, इतः अस्यां दिशि, प्रवृत्तेव गन्तुमारभमाणेव।

(त) कामेति। निजयत्नस्य सिद्धप्रायत्वात् कामन्दक्या हर्षस्तेन सहेति सहर्षम्।

মকরন্দ। সখে! দেখ দেখ—

এই বরবর্ণিনী মালতী পাণ্ডু ও ক্ষীণ অঙ্গে অলঙ্কারগুলিকেও অলঙ্কৃত করিয়াছেন, নবীন লতার ন্যায় পুষ্প ধারণ করিয়াছেন, অন্তরে শুষ্ক হইতেছেন এবং ক্রমশঃ বর্দ্ধমানা বিবাহমহোৎসবের শোভা বহন করিতেছেন, অথ চ মনের তীব্রবেদনা প্রকাশ করিতেছেন ॥৬॥

(ঢ) হস্তিনীকে বসাইয়া দিল।

(ণ) মাধব। (আনন্দের সহিত) হস্তিনী হইতে নামিয়া, ভগবতী কামন্দকীও লবঙ্গিকার সঙ্গে এই দিকেই আসিতেছেন।

তাহার পর কামন্দকী, মালতী ও লবঙ্গিকার প্রবেশ।

(ত) কামন্দকী। (আনন্দের সহিত চুপি চুপি)

(१) क्वचित् 'समभितः' इति पाठो नास्ति।

कृतार्थीभूयासं प्रियसुहृदपत्योपयमने (१)
प्रयत्नः कृत्स्नोऽयं फलतु शिवदायी (२) च भवतु ॥७॥

मालती । स्वगतम् । केण उण उवाएण सम्पदं मरणणिव्वाणस्स अन्तरं सम्भावइस्सं । मरणम्मि मन्दभाअहेआणं अहिमदं त्ति सुदुल्लहं होदि (३) । (थ)

(थ) केन पुनरुपायेन साम्प्रतं मरणनिर्वाणस्यान्तरं सम्भावयिष्ये । मरणमपि मन्दभागधेयानामभिमतमिति सुदुर्लभं भवति ।

विधातेति । विधाता विधिः मनोज्ञाय परस्परसुयोग्यगुणशालित्वात् परस्परमनोहराय विषये मालतीमाधवयोर्विवाहविधानाय नोऽस्माकं भद्रं प्रतिबन्धकताऽभावरूपं मङ्गलं वितरतु ददातु । देवाः परिणतिम् अस्य कर्म्मणः शेषावस्थां परमरमणीयां राज्ञः सम्भाव्यमानानिष्टाभावेन प्रत्युत तदनुमोदनेन निरुपद्रवतया परस्परसुयोग्यतया च सर्वेषामतीवमनोहरां विधेयासुः क्रियासुः । प्रियसुहृदोर्भूरिवसुदेवरातयोर्ये अपत्ये सन्तानौ मालतीमाधवौ तयोरुपयमने विवाहविषये अहं कृतार्थीभूयासम् आवान्तरिकविघ्नाभावात् कृतकार्य्या भवेयम् । तथा अयं मदीयः कृत्स्नः सकलः प्रयत्नः फलतु निर्विघ्नेन विवाहनिष्पादनात् सफलो भवतु, शिवदायी स्वास्थ्यशान्तिसदपत्यादिविधानात् भाविकाले मङ्गलदाता च भवतु ।

अत्र किञ्चित् किञ्चिद्भेदविवक्षया नार्थगतपौनरुक्त्यदोषः ।

अकृतार्था कृतार्था भूयासमिति कृतार्थीभूयासम् अभूततद्भावे च्विप्रत्ययः । भूयासमित्याशीः । शिखरिणी वृत्तम् ॥७॥

---

ইহাদের মনোহর বিবাহকার্য্যের জন্য বিধাতা আমাদের মঙ্গল দান করুন, দেবতারা ইহার অত্যন্ত মনোহর পরিণাম বিধান করুন, প্রিয়সখাদের সন্তানদিগের বিবাহে আমি যেন কৃতকার্য্য হই এবং আমার এই সমস্ত চেষ্টা সফল হউক ও ভবিষ্যতে মঙ্গল দান করুক ॥৭॥

(१) कृतार्था भूयासं प्रियसुहृदपत्योपनयतः इति पाठान्तरम् । (२) शिवतातिरिति पाठभेदः । (३) मरणं वि मे मन्दभाअहेआए अहिमदं अदिदुल्लहं होइ इति क्वचित् पाठः ।

लव । स्वगतम् । अदिकिलाम्मिदा (१) क्खु पिअसही एदिणा अणुजलविप्पलम्भेण । (द)

(द) अतिक्लामिता खलु प्रियसखी एतेन अनुकूलविप्रलम्भेन ।

(थ) मालतीति । मरणनिर्वाणस्य मृत्युरूपनिर्वृतेः, अन्तरमवकाशं सम्भावयिष्ये प्राप्स्यामि । "भूप्राप्तावात्मनेपदी" इति चौरादिकभूधातोरयं प्रयोगः । मन्दभागधेयानां दुर्भाग्यानाम् । तथा च दुर्भाग्या जना यद्यदभिमन्यन्ते तत्तदेव न भवति, सुतरां दुर्भाग्याया ममाभिमतत्वात् मरणमपि न भवतीति भावः । नन्दनविवाहार्थं देवतागृहे प्रेषणमिदमिति ग्लानाद्विषादोक्तिरियम् ।

(द) लवेति । एतेन अमात्यकामन्दकीभ्यां प्रयुक्तेन, अनुकूलविप्रलम्भेन निजानुगुणया नन्दनविषयकप्रतारणया अतिक्लामिता सातिशयं मनोदुःखं प्रापिता । तथा च नन्दनेन सह विवाहार्थमेव मालत्या एतन्नगरदेवतागृहगमनमिति च्छलेन बहिःप्रकाश्य कौशलेनाभ्यन्तरे तु माधवेन सह विवाहविधानोपक्रमादमात्यकामन्दकीभ्यां प्रयुक्तोऽयं व्यापारः प्रकृतपक्षे नन्दनस्य प्रतारणैव, सा च मालत्याः परमानुकूला, किन्तु मालती तदजानती नन्दनेन सह विवाहार्थमेवेदमायोजनमिति मन्यमाना दारुणमेव मनोदुःखमनुभवतीति मुखमालिन्यादिनाऽनुमीयत इति सरलार्थो भावार्थश्च ।

अत्राभूताहरणं नाम गर्भसन्ध्यङ्गम्—"तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्" इति साहित्यदर्पणात् ।

(থ) মালতী। (স্বগত) আমি এখন কোন উপায়ে মৃত্যুরূপ নির্বৃতির ভিতরে যাইব। দুর্ভাগা লোকদিগের মরণটা অভিপ্রেত বলিয়া তাহাও অত্যন্ত দুর্লভ হইয়া থাকে।

(দ) লবঙ্গিকা। (স্বগত) এই অনুকূল প্রতারণা আমার প্রিয়-সখীকে বড়ই কষ্ট দিতেছে।

(१) अदिकीलालिआ इत्यपि पाठः ।

प्रविश्य पेटकहस्ता (१) प्रतीहारी । अमच्चो भअवदीं भणादि (२) । "एदिणा णलिन्दाणुप्पेसिदेण विवाहणेवच्छेण देवदापुरदो अलङ्करिदव्वा मालदि त्ति ।" (ध)

काम । युक्तमाहामात्यः । माङ्गलिकमेतत् स्थानम् । अतो दर्शय (३) । (न)

प्रती । एदं दाव धवलपट्टंसुअजुअलं, (४) एदंअ उत्तरीअं रत्तवसांसुअं, (५) इमे अ सव्वाङ्गिआ आहरणसंजोआ, अअं अ

(ध) अमात्यो भगवतीं भणति । एतेन नरेन्द्रानुप्रेषितेन विवाहनेपथ्येन देवतापुरतः अलङ्कर्त्तव्या मालतीति ।

(ध) प्रविश्येति । पेटकहस्ता अलङ्कारमञ्जुषाहस्ता । विवाहनेपथ्येन विवाहोपयोगिवेशेन ।

(न) कामेति । युक्तमाह 'देवतापुरत' इति सङ्गतं ब्रवीति । कथमित्याह माङ्गलिकमिति । माङ्गलिकस्थान एव माङ्गलिककर्म्मकरणौचित्यादिति भावः । दर्शय तद्विवाहनेपथ्यमिति शेषः ।

(ধ) প্রতীহারী পেটরাহস্তে প্রবেশ করিয়া। মন্ত্রীমহাশয় ভগবতীকে বলিতেছেন যে, "রাজার প্রেরিত এই বিবাহের অলঙ্কারে দেবতার সম্মুখে মালতীকে অলঙ্কৃত করিয়া দিবেন।"

(ন) কামন্দকী। মন্ত্রীমহাশয় ঠিক্ বলিয়াছেন; ইহা মঙ্গলের স্থান; অতএব দেখাও।

(१) भूषणपटलकहस्ता इति भिन्नः पाठः । (२) विण्णवेदि इति पाठोऽपि दृश्यते ।

(३) युक्तमाङ्गलिकं हि तत् स्थानम् । इतो दर्शय । इति पाठोऽपि दृश्यते ।

(४) इदं दाव धवलपट्टंसुअचीलअं इति पाठान्तरम् ।

(५) एदं अ उत्तरीअवसंसुअं इति पाठभेदः ।

मोत्तिअहारो, (१) एदं चन्दणं, एसो सिदकुसुमापीड़ो त्ति (२)। (प)

काम। अपवार्य्य। रमणीयं वत्सं मकरन्दमवलोकयिष्यति जनः। प्रकाशम्। गृहीत्वा। भवतु, एवमुच्यताममात्यः (३)। (फ)

प्रती। तह (४)। इति निष्क्रान्ता। (ब)

(प) एतत्तावत् धवलपट्टांशुकयुगलम्, एतच्च उत्तरीयं रक्तवर्णांशुकम्, इमे च सर्वाङ्गिका आभरणसंयोगाः, अयञ्च मौक्तिकहारः, एतच्चन्दनम्, एष सितकुसुमापीड़ इति।

(ब) तथा।

(प) प्रतीति। सर्वाङ्गिकाः सकलावयवसंसृष्टाः आभरणसंयोगाः संयोजनीयान्याभरणानि। संयुज्यन्त इति संयोगाः कर्म्मणि घञ्। विशेष्याभरणस्य पूर्व्वनिपातोऽभिधानात्। सितकुसुमापीड़ः श्वेतपुष्परचितशेखरः।

(फ) कामेति। जनः पौरवर्गः। रमणीयं मालतीभूमिकया एतेषामलङ्कारादीनां धारणादिति भावः। मालतीभूमिका चास्य स्फुटीभविष्यति। एवम्, एतानि मया गृहीतानि इत्यम्।

(প) প্রতীহারী। এই সাদা গরদের কাপড় এক জোড়া, এই লাল চাদর একখানা, এই সকল গায়ে পড়াইবার গহনা, এই মুক্তার হার, এই চন্দন এবং এই সাদা ফুলের মালা।

(ফ) কামন্দকী। ( চুপি চুপি ) পুরবাসীরা বৎস মকরন্দকে সুন্দর দেখিবে। ( প্রকাশ্যে গ্রহণ করিয়া ) হউক, যাইয়া মন্ত্রীমহাশয়কে ইহা বল।

(ব) প্রতীহারী। তাই। ( এই বলিয়া চলিয়া গেল )।

(१) इमे च मोत्तिआहारा इत्यपि पाठः। (२)…कुसुमापीड़ं च इति पाठोऽपि दृश्यते। (३) गोमित्युच्यताममात्यः। इति पाठोऽपि दृश्यते। (४) क्वचित् 'प्रतीहारी निष्क्रान्ता' इतिमात्रः पाठः।

काम। लवङ्गिके! (१) प्रविश त्वमभ्यन्तरं वत्सया मालत्या। (भ)

लव। भअवदी उण? (२)। (म)

काम। अहमपि विविक्ते तावदलङ्करणरत्नानां प्राशस्त्यं शास्त्रतः परीक्षे (३)। इति निष्क्रान्ता। (य)

मालती। स्वगतम्। लवङ्गिआमेत्तपरिवारह्मि संवुत्ता (४)। (र)

---

(म) भगवती पुनः?।

(र) लवङ्गिकामात्रपरिवारास्मि संवृत्ता।

---

(म) लवेति। भगवती पुनः कस्मिन् यास्यतीति वाक्यशेषः।

(य) कामेति। विविक्ते निर्जनस्थाने। मालत्या लवङ्गिकया सह विश्रम्भालापः, माधवालिङ्गनम्, तत्कण्ठे वकुलकुसुममालासमर्पणमित्यादीनां निःसङ्कोचेन घटनार्थं कामन्दक्या निष्क्रमणमिति बोध्यम्।

(र) मालतीति। संवृत्ता। तथा च केवलामेनामनुनीय प्राणांस्त्यक्तुं शक्ष्यामीति भावः।

---

(ভ) কামন্দকী। লবঙ্গিকে! তুমি বৎসা মালতীর সহিত ভিতরে প্রবেশ কর।

(ম) লবঙ্গিকা। আপনি?।

(য) কামন্দকী। আমিও নির্জ্জন স্থানে যাইয়া এই অলঙ্কার ও রত্নগুলির প্রশস্ততা শাস্ত্রানুসারে পরীক্ষা করি। ( এই বলিয়া প্রস্থান করিলেন )।

---

(१) वत्से लवङ्गिके! इति पाठः क्वचित्। (२) अध भअवदी उण कहिं, पुस्तकान्तरे पाठोऽयम्। (३) परीक्षिष्ये इति पाठोऽपि दृश्यते। (४) मालती। ( आत्मगतं ) लवङ्गिकामेत्तपरिवारा दाव संवुत्ता। ( प्रकाशं ) एदं देवदामन्दिरदुवारं। ता पविसदु पिअसही। इति कुत्रचित् पाठः।

লব। এদং দেবদামন্দিরদুবারং তা পবিসহ্ম (১)। ইতি প্রবিশত:। (ল)

মক। বয়স্য! ইত: স্তম্ভান্তরিতৌ পশ্যাব: (২)। তথা কুরুত:। (ব)

লব। সহি! অঅং অঙ্গরাঅো, ইমাঅো কুসুমমালাঅো। (শ)

মালতী। তদো কিং। (ষ)

(ল) ইদং দৈবতামন্দিরদ্বারং তত্ প্রবিশাব:।

(শ) সখি! অয়মঙ্গরাগ:, ইমা: কুসুমমালা:।

(ষ) তত: কিম।

(ব) মকেতি। পশ্যাব: মালত্যা ব্যাপারমিতি শেষ:।

(শ) লবেতি। অঙ্গরাগো গাত্রলেপনদ্রব্যং চন্দনকুঙ্কুমাদি।

(ষ) মালতীতি। তত: কিম্। মর্ত্তুকামায়া মম তেন কিং প্রয়োজনমিতি ভাব:।

(র) মালতী। (স্বগত) এখন আমার পরিজনের মধ্যে কেবল লবঙ্গিকাই রহিল।

(ল) লবঙ্গিকা। এই দেবতামন্দিরের দ্বার, অতএব প্রবেশ করি। (এই বলিয়া উভয়ে প্রবেশ করিল।)

(ব) মকরন্দ। সখে! এদিকে স্তম্ভের অন্তরালে থাকিয়া আমরা ব্যাপারটা দেখি। (উভয়ে তাহাই করিলেন)।

(শ) লবঙ্গিকা। সখি! এই অঙ্গরাগের দ্রব্য, আর এই ফুলের মালা।

(ষ) মালতী। তাহাতে কি হইবে?।

(১) লব লবেত্যাদি পাঠো নাস্তি।

(২) স্তম্ভাপবারিতশরীরৌ তিষ্ঠাব: ইতি পাঠোঽপি দৃশ্যতে।

लव। सहि! इमस्सिं पाणिग्गहणमङ्गलारम्भे कल्लाण-सम्पत्तिणिमित्तं देवदाओ (१) पूजेहि त्ति अम्बाए अणुप्पेसि-दासि। (स)

मालती। स्वगतम् (२)। किं दाणिं दारुणसमारम्भ-देव्वदुव्वि-लासपरिणामदुक्खणिद्दड्ढमाणसं पुणो पुणो वि मम्मच्छेअदूसहं मन्दभाइणीं दुणोसि (३)। (ह)

(स) सखि! अस्मिन् पाणिग्रहणमङ्गलारम्भे कल्याणसम्पत्तिनिमित्तं देवतापूजयेति अम्बया अनुप्रेषितासि।

(ह) किमिदानीं दारुणसमारम्भदैवदुर्विलासपरिणामदुःखनिर्दग्धमानसां पुनः पुनरपि मर्म्मच्छेददुःसहां मन्दभागिनीं दुनोषि।

(स) लवेति। कल्याणसम्पत्तिनिमित्तं मङ्गललाभार्थम्।

(ह) मालतीति। दारुणो गुरुतरदुःखजनकत्वात् भयङ्करः समारम्भो नन्दनेन सह विवाहघटनोपक्रमो यस्मात् तादृशस्य दैवस्य यो दुर्विलासो दुर्व्यवहारः, तस्य परिणामरूपेण फलभूतेन दुःखेन निर्द्दग्धं नितरां सन्तापितं मानसं मनो यस्यास्ताम्। दुःसहो मर्म्मच्छेदो यातना यस्यास्ताम्। अभिधानाद्दुःसहशब्दस्य परनिपातः। मन्दभागिनीं मां दुनोषि उपतापयसि। स्वगतोक्तिरेवेयं परत्र "अयि! किं वक्तुकामासि" इति लवङ्गिकावाक्यात्।

(स) লবঙ্গিকা। সখি! এই মাঙ্গলিক বিবাহকার্য্যের আরম্ভে মঙ্গললাভের জন্য দেবতাদিগের পূজা করিবে এই জন্যই মাতা তোমাকে পাঠাইয়াছেন।

(হ) মালতী। ( স্বগত ) যিনি এখন ভয়ঙ্কর কার্য্য আরম্ভ করিয়া-ছেন, সেই বিধাতার দুর্ব্যবহারের ফলে যাহার হৃদয় দুঃখানলে দগ্ধ

(१) देवदां इति भिन्नः पाठः। (२) क्वचित् स्वगतं इति पाठो नास्ति।

(३) कुदो दाणिं दारुणसमारम्भदेव्व-दुव्विलास-परिणाम दुक्खणिद्दलिअ-माणसं पुणो वि मम्मच्छेददूसहं मन्दभाइणीं दूमिज्जसि इति पाठान्तरम्।

लव। अह्न! (१) किं वत्तुकामासि। (च)

मालती। किं (२) दाणिं दुल्लहाहिणिवेसि-(३) मणोरह-विसंवदन्तभाअहेओ जणो मन्तेदि। (क)

मक। सखे! श्रुतम्?। (ख)

माधवः। असन्तोषस्तु हृदयस्य। (ग)

(च) अयि! किं वक्तुकामासि।

(क) किमिदानीं दुर्लभाभिनिवेशिमनोरथविसंवदद्भागधेयो जनो मन्त्रयते।

(च) लवेति। किं वक्तुकामासीति अधरस्पन्दनदर्शनात् तथाप्रतीतेरिति भावः।

(क) मालतीति। दुर्लभाभिनिवेशिनः मादृशजनदुष्प्रापवस्तुप्रार्थिनः, मनोरथस्य अभिलाषस्य विसंवदत् विपरीतीभवत् भागधेयं भाग्यं यस्य स तथोक्तो जनः अहमित्यर्थः किं मन्त्रयते वक्ति। मादृशगुणहीनतरुणीजनपक्षे पुरुषरत्नभूतस्तादृशो जनो दुष्प्राप एव, तथापि तदिच्छासम्भवात् प्रार्थनाविषयः स एव, किन्तु तत्र भाग्यं विरोधीति दुर्भाग्याया मम किं वक्तव्यमस्तीति भावः।

(ख) मकेति। श्रुतमिति काकुः, श्रुतं किमित्यर्थः।

(ग) माधव इति। किन्त्वर्थे तुशब्दः। श्रुतम्, किन्तु केनापि कारणेन हृदयस्य असन्तोष इत्यनुमीयते वाग्विन्यासप्रकारमुखभङ्गीदर्शनादिति भावः, सरलार्थञ्च।

হইতেছে, সেই দুঃসহমর্ম্মচ্ছেদ-যাতনাভোগিনী মন্দভাগিনীকে বার বার সন্তপ্ত করিতেছ কেন।

(চ) লবঙ্গিকা। ওলো! কি বলিতে ইচ্ছা করিয়াছ?।

(ক) মালতী। যাহার মনোরথ দুর্লভ বস্তু প্রার্থনা করে, অথ চ ভাগ্য তাহার বিপরীত, সে ব্যক্তি আবার বলিবে কি।

(খ) মকরন্দ। সখে! শুনিলে?।

(१) अहृ इत्यपि पाठः। (२) जं दाणिं इति पाठोऽपि दृश्यते।

(३) दुल्लहाहिणिवेस इति क्वचित् पाठः।

मालती। लवङ्गिकां परिष्वज्य। परमत्थवहिणि! (१) पिअसहि! लवङ्गिए! एसा दाणिं दे पिअसही अणाहा मरणे वट्टमाणा, आगब्भणिग्गम-णिरन्तरोवारूढ़-विस्सम्भ-सरिसं परिसज्जिअ अब्भत्थेदि (२)। जइ दे अहं अणुवट्टणीआ, तदो मं हिअएण धारअन्ती समग्ग-सोहग्ग-लच्छी-परिग्गहेक्कमङ्गलं

(घ) परमार्थभगिनि! प्रियसखि! लवङ्गिके! एषेदानीं ते प्रियसखी अनाथा मरणे वर्त्तमाना, आगर्भनिर्गम निरन्तरोपरूढ़-विस्रम्भसदृशं परिष्वज्य अभ्यर्थयते। यदि

अत्र क्रमो नाम गर्भसन्धेरङ्गम्। यथा साहित्यदर्पणे—

"भावतत्त्वोपलब्धिस्तु क्रमः स्यात्…।"

(घ) मालतीति। हे परमार्थभगिनि! चिरायान्तरिकस्नेहाचरणात् वास्तविकभगिनीरूपे!। अनाथा रक्षकहीना। कन्यायाः पितैव रक्षक इति शास्त्रलोकाचारप्रसिद्धम्, अस्ति च मे पिता, किन्तु तथापि तस्य दुर्द्दर्शन-प्राचीन-नन्दनहस्ते प्रदानोन्मुखत्वेन मद्विनाशपरायणत्वादनाथैवाहमिति भावः। मरणे वर्त्तमाना मरणाय कृतनिश्चया परिष्वज्य त्वामालिङ्ग्य। आगर्भनिर्गमात् मातुरुदरतो निर्गमनात् प्रभृति, निरन्तरोपारूढ़ः सर्वदोत्पन्नः, यो विस्रम्भः त्वां प्रति मम विश्वासः, तस्य सदृशम् अनुरूपम्, अभ्यर्थयते वक्ष्यमाणं प्रार्थयते। तादृशगाढ़विश्वासाभावे ईदृशी प्रार्थना तत्पूरणसम्भावना च

(ग) माधव। मनের কিন্তু অসন্তোষ দেখিতেছি।

(ঘ) মালতী। ( লবঙ্গিকাকে আলিঙ্গন করিয়া ) বাস্তবিকভগিনি! প্রিয়সখি! লবঙ্গিকে! তোমার এই প্রিয়সখী এখন অনাথা, তাই মরণের জন্য কৃতনিশ্চয় হইয়া, তোমাকে আলিঙ্গন করিয়া, গর্ভ হইতে নির্গত হওয়া অবধি সমুৎপন্ন প্রগাঢ় বিশ্বাসের অনুরূপ প্রার্থনা করিতেছে।

(१) ता, परमत्थवहिणि! इति पुस्तकान्तरे पाठः।

(२) आगब्भ-णिग्गम-णिरन्तरोवआर-विरूढ़-वीसड्ढ-सरिसं परिस्सइअ तुमं पत्थेदि इति पाठान्तरम्।

माहवस्स सिरिमुहारविन्दं आणन्दमसिणं पलोएहि (१) ।
इति रोदिति । (च)

माधवः । वयस्य ! मकरन्द !

म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।
आनन्दनानि हृदयैकरसायनानि
दिष्ट्या मयाप्यधिगतानि वचोऽमृतानि ॥८॥

तेऽहमनुवर्त्तनीया, ततो मां हृदयेन धारयन्ती, समग्र-सौभाग्यलक्ष्मीपरिग्रहैकमङ्गलं माधवस्य श्रीमुखारविन्दम् आनन्दमसृणं प्रलोकय ।

नोपपद्यते इति भावः । अनुवर्त्तनीया अनुसरणीया, त्वया यदि मम वासना पूरणीया भवेदित्यर्थः । ततस्तदा, मां दारुणमनोदुःखेनासारप्रायशरीरामिति भावः । समग्र-सौभाग्यलक्ष्म्याः समस्तशुभादृष्टजनितशोभायाः परिग्रह एव एकमद्वितीयं मङ्गलं यत्र तत् । आनन्देन सर्व्वदाप्रमोदेन मसृणं कोमलम् । प्रलोकय प्रदर्शय । एतदेवाभ्यर्थ्यत इति भावः ।

म्लानस्येति । मयापि अस्या ईदृशवचनामृतवर्षणोपयोगिगुणरहितेनापीति भावः । दिष्ट्या भाग्येन, म्लानस्य अस्याः प्राप्तिनैराश्येन ग्लानिं प्राप्तस्य, जीव एव कुसुमम्, तस्य, विकासनानि प्रकाशकानि । सन्तर्पणानि सम्यक्तृप्तिकराणि । सकलेन्द्रियमोहनानि आनन्देन जड़ताजननात् सर्व्वेन्द्रियशक्तिरोधकानि । आनन्दनानि चित्तस्यानन्दजनकानि । हृदयस्य एकरसायनानि अद्वितीयरसायनौषधरूपाणि नैराश्येन शीर्णस्य हृदयस्य उपचय-

আমার মনের অনুবৃত্তি করায় যদি তোমার ইচ্ছা থাকে, তাহা হইলে আমাকে বক্ষে ধারণ করিয়া, সৌভাগ্যের সমস্ত সৌন্দর্য্য গ্রহণ করাই যাহার অদ্বিতীয় মঙ্গল এবং যাহা আনন্দবশতঃ সর্ব্বদাই কোমল থাকে, মাধবের সেই মুখকমলখানিকে আমাকে দেখাও ।

(१)···माहवसिरिणो मुहारविन्दं आणन्दमसिणं अवलोअइस्सिं इति पाठभेदः ।

मालती। जइ तस्स जीविदप्पदाइणो जणस्स अवसिदां (१) मं सुणिअ सन्दप्पमाणस्स तहाविहं (२) सरीररअणं ण परिहीअदि, जइ अ लोअन्तरगअं (३) वि मं उद्दिसिअ सो जणो सुमरण-(४) कहामेत्तपरिसेसं कालन्तरे वि लोअजत्तं ण सिढ़िलेदि, तहा करेसु। एवं ज्जेव पिअसहीए प्पसादादो मालदी किदत्था भोदि (५)। (ङ)

(ङ) यथा तस्य जीवितप्रदायिनो जनस्य अवसितां मां श्रुत्वा सन्तप्यमानस्य तथाविधं शरीररत्नं न परिहीयते, यथा च लोकान्तरगतामपि मामुद्दिश्य स जनः स्मरणकथामात्र-

करणीत्यर्थः। वचोऽमृतानि मालत्या उक्तवाक्यान्येव पीयूषाणि अधिगतानि लब्धानि। सम्प्रति धन्योऽस्मीति भावः।

अत्र निरङ्गं केवलरूपकमलङ्कारः। तथा अर्थगतपौनरुक्त्यदोषः सम्भवन्नपि रसाविष्ट-चेतसा माधवेनाभिहितत्वात् प्रत्युत गुणतामेव भजते, "असारं संसारम्" इत्यादिवत्। तत्-प्रमाणन्तु तत्रैवोक्तम्।

रसायनमाह स्म चरकः—"यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्।"

किञ्चिद्विकलीकृतोऽयमेव श्लोक उत्तररामचरितप्रथमाङ्के रामेण पठितः।

वसन्ततिलका वृत्तम् ॥८॥

माधव। সখে! মকরন্দ! আমি আজ ভাগ্যবশতঃ ম্লানজীবন-কুসুমের বিকাসক, অত্যন্ত তৃপ্তিকর, সমস্ত ইন্দ্রিয়ের মোহজনক, আনন্দ-বর্দ্ধক এবং রসায়ন ঔষধের ন্যায় মনের পুষ্টিকারক ইহার বাক্যামৃতগুলি লাভ করিয়াছি ॥৮॥

(१) अवसिदेत्ति इति क्वचित् पाठः। (२) तं तहाविहं इत्यपि पाठः।

(३) परलोअगदं इति पाठभेदः। (४) संसरण…क्वचित् पाठोऽयम्।

(५) एव्वं दे पिअसही मालदी सकामा होइ इति पाठान्तरम्।

मक । हन्त ! अतिकरुणं प्रस्तुतम् (१) । (च)

माधवः । नैराश्यकातरधियो हरिणेक्षणायाः

श्रुत्वा निकाममकरुणस्य मनोहरस्य ।

वात्सल्यमोहपरिदेवितमुद्वहामि

चिन्ताविषादविपदस्य महोत्सवस्य ॥८॥

परिक्षीयतां कालान्तरेऽपि लोकयात्रां न शिथिलयति, तथा कुरु । एवमेव प्रियसख्याः प्रसादात् मालती कृतार्था भवति ।

(ङ) मालतीति । अवसितां समाप्तां मृतामित्यर्थः । तथाविधम् अनिर्वचनीय-सुन्दरम् । परिहीयते विनश्यति, तथा कुर्वित्यन्वयः । स जनो माधवः । स्मरणं स्मृतिः, कथा एवं मालत्यासीत् सौन्दर्यं शीलञ्च तादृशमित्येवमुपाख्यानम्, तन्मात्रः परिशेषो जगत्यामवशिष्टं यस्यास्ताम् । कालान्तरेऽपि सद्यः का कथा बहुपरवर्त्तिनि समयेऽपि, लोकयात्रां गार्हस्थ्यं न शिथिलयति वैराग्यं नावलम्बत इत्यर्थः । एवमेव इत्थं कृत एव । प्रियसख्यास्तव । एतेन माधवं प्रति सुमहाननुरागो व्यज्यते ।

(च) मकेति । अनुकम्पायां हन्तशब्दः । अतिकरुणं सातिशयशोकं यथा स्यात्तथा प्रस्तुतं प्रक्रान्तं वक्तुमारब्धमित्यर्थः ।

(ঙ) মালতী। আমি মরিয়া গিয়াছি ইহা শুনিয়া, সন্তপ্ত হইয়া, আমার জীবনদাতা সেই ব্যক্তির সেইরূপ শরীররত্ন যাহাতে বিনষ্ট না হয় এবং আমি লোকান্তরে গেলে পর আমার স্মৃতি ও কথামাত্র অবশিষ্ট থাকিবে, তাই আমার উদ্দেশে যাহাতে তিনি বহুকাল পরেও সংসারের কার্য্য শিথিল না করেন, তাহা করিবে। এইরূপ করিলেই প্রিয়সখীর (তোমার) অনুগ্রহে মালতী কৃতার্থ হইবে।

(চ) মকরন্দ। হায়! অতিশয় শোকের কথা বলিতে আরম্ভ করিয়াছেন।

(१) वर्त्तते इति पुस्तकान्तरे पाठः ।

लव । अइ ! पड़िहदं दाणिं दे अमङ्गलं । इदो वि अवरं ण सुणिस्सं (१) । (छ)

(छ) अयि ! प्रतिहतमिदानीं ते अमङ्गलम् । इतोऽप्यपरं न श्रोष्यामि ।

नैराश्येति । नैराश्येन नन्दनेन सह विवाहोद्योगात् मत्प्रत्याशाऽभावेन, कातरा दुःखाकुला धीरन्तःकरणं यस्यास्तस्याः हरिणेक्षणाया मालत्याः निकामकरुणं जीवनपरिजिहीर्षाप्रणोदितत्वात् पर्य्याप्तशोकं तथा मनोहरञ्च मां प्रत्येव गाढ़ानुरागद्योतनात् मम मनोरमञ्च, वात्सल्येन मां प्रति प्रणयेन यो मोहो विचित्तता आशाविपरीतं घटनारम्भजनितदुःखवैमनस्यमित्यर्थः तेन परिदेवितं तन्निबन्धनं विलापं श्रुत्वा, चिन्तया कथमिदं दुःखमस्या यास्यति, मया वा किमिदानीं कर्त्तव्यमित्येवंरूपया भावनया यो विषादः अस्या एतद्दुःखापनयनोपायादर्शनाच्चित्तवैक्लव्यं तद्रूपां विपदं विपत्तिञ्च, महोत्सवञ्च ईदृश-मतुलनीयं ललनारत्नं मयीदृशमनुरक्तमिति महानन्दञ्च उद्वहामि दधामि ।

अत्र विपन्महोत्सवयोर्विरूपयोः सङ्घटनया विषमालङ्कारः उद्वहामीत्येकक्रियया विपन्महोत्सवयोरप्रस्तुतयोः कर्म्मतयाभिसम्बन्धात्तुल्ययोगिता च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः । तथा उत्पूर्ववहधातोर्भार्य्यात्वसम्पादकग्रहणरूपविवाहार्थस्यैव वाचकत्वात् अत्र तु धारणार्थे प्रयोगात् "गीतेषु कर्णमादत्त" इत्यादिवदवाचकत्वदोषः, स च 'वात्सल्यमोहजविलापमहं वहामि' इति पाठेन परिहरणीयः ।

वसन्ततिलका वृत्तम् ॥८॥

(छ) लवेति । ते तव अमङ्गलं मरणरूपं प्रतिहतं दैवतानप्रसादेन निवारितं भवत्वित्यर्थः ।

माधव। নৈরাশ্যে দুঃখিতচিত্ত হরিণনয়না মালতীর অত্যন্ত করুণ অথ চ মনোহর অনুরাগোৎপন্নবিষাদজনিত বিলাপ শুনিয়া, আমি চিন্তা-জনিতবিষাদরূপ বিপদ ও মহোৎসব উভয়ই ধারণ করিতেছি ॥৯॥

(ছ) লবঙ্গিকা। ওলো ! তোমার অমঙ্গল বিনষ্ট হউক। ইহারও অধিক আর শুনিব না।

(१) ण अदो वि अधिअदरं सुणिस्सं इति वा पाठः ।

मालती। सहि! पिअं क्खु तुह्माणं मालदीजीविदं, ण उण मालदी। (ञ)

लव। सहि! किं त्ति भणिदं भोदि (१)। (ञ)

मालती। आत्मानं निर्द्दिश्य (२)। जेण पच्चासाणिवन्धणेहिं (३) वअणसंविहाणेहिं जोवाविअ इमं ज्जेव्व (४) महावीभच्छारम्भं अणुभाविदह्मि। संपदं उण मम मणोरहो एसो ज्जेव्व, (५) जं तस्स देवस्स परकेरअत्तणेण अवरुद्धं अत्ताणं परिच्चइअ णिव्वुदा हुविस्सं (६)। अस्सिं पओअणे पिअसही मे अपरिपन्थिणी होदु। इति पादयो: पतति। (ञ)

(ञ) सखि! प्रिय खलु युष्माकं मालतीजीवितम्, न पुनर्मालती।

(ञ) सखि! किमिति भणितं भवति?।

(ञ) लवेति। इति पर्यायादिसन्दर्भेण, किं भणितं त्वया किमुक्तं भवति?। मालतीशब्देन मालतीदेहावच्छिन्नं चैतन्यमुच्यते, मालतीजीवितशब्देनापि तदेव; इत्यर्थभेदाभावात् "प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती" इत्यनेन किमभिहितं तन्नावगच्छामीति सरलार्थो भावार्थश्च। "विशिष्टस्य जीवत्वमन्वयव्यतिरेका"दिति सांख्यसूत्रमनुसन्धेयमिति संक्षेपः।

(ञ) মালতী। সখি! মালতীর বাঁচিয়া থাকাই তোমরা ভালবাস, কিন্তু মালতীকে ভালবাস না।

(ঝ) লবঙ্গিকা। সখি! ইহাতে কি বলা হইল।

(१) किं एव्वं भणिदं भोदि इत्यपि पाठः। (२) क्वचिदयं पाठो नास्ति। (३) जणपच्चासाणिवन्धणेहिं इति क्वचित् पाठः। (४) ज्जेव्व इत्यपि क्वचिन्नास्ति। (५) एत्तिअं एव्व इति पाठभेदः। (६) तस्स देवस्स परीक्खगुणकिरित्तणेण अणवरुद्धं अत्ताणं परिच्चइस्सं त्ति इति भिन्नः पाठः।

मक। सैषा परमा (१) सीमा स्नेहस्य।

(ज) येन प्रत्याशानिबन्धनैर्वचनसंविधानैर्जीवयित्वा इयमेव महाबीभत्सारम्भमनुभावितास्मि। साम्प्रतं पुनर्मम मनोरथ एष एव, यत्, तस्य देवस्य परकीयत्वेनापराद्धमात्मानं परित्यज्य निर्वृता भविष्यामि। अस्मिन् प्रयोजने प्रियसखी मे अपरिपन्थिनी भवतु।

(ञ) मालतीति। आत्मानं स्वदेहम्, निर्द्दिश्य इयमहमित्यङ्गुल्या प्रदर्श्य। येन हेतुना, प्रत्याशानिबन्धनैः 'सखि! समाश्वसिहि, अवश्यमेव पतिलेन माधवं लप्स्यसे' इत्यादिभिराशाजनकैः, वचनसंविधानैर्वाक्यविन्यासैः। जीवयित्वा नैराश्यदुःखेन मरणदशायामित्यर्थः। महाबीभत्सारम्भं नन्दनेन सह विवाहोद्योगरूपमतीवकुत्सितकार्य्योपक्रमं तज्जनितदुःखमित्यर्थः अनुभावितास्मि ज्ञापितास्मि पित्रादिभिर्युष्माभिरिति तिरस्कारारोपः। तथा च मालती, सुखं दुःखं वानुभवतु तत्र न निर्बन्धः, किन्तु जीवति चेत्तदेवास्माकं पर्य्याप्तमित्यवधारणात् मालतीजीवनमेव युष्माकं प्रियम्, न पुनस्तस्या दुःखसम्बन्धराहित्यमिति मदुक्तवाक्यार्थः। एवञ्च सति मालतीशब्दस्य दुःखसम्बन्धरहितमालतीपरत्वात् मालतीजीवितशब्दस्य च सुखदुःखोभयसम्बन्धोदासीनतज्जीवनपरत्वात् दुःखसम्बन्धित्वदुःखसम्बन्धरहितत्वाभ्यामुभयोर्भेद इति भावः। तस्य देवस्य माधवस्य सम्बन्धे परकीयत्वेन माधवभिन्नस्वामिकत्वेन अनेन नन्दनस्वामिकत्वकल्पनोद्योगेनेवेत्यर्थः। आत्मानं स्वदेहम्। अपरिपन्थिनी अप्रतिकूला।

(ঞ) মালতী। (আপনাকে নির্দ্দেশ করিয়া) যেহেতু আশাজনক বাক্যে বাঁচাইয়া রাখিয়া, পরে এই অত্যন্ত কুৎসিত ঘটনার আরম্ভ অনুভব করাইতেছ। এখন কিন্তু আমার ইচ্ছা এইই যে, আমার দেহ সেই মহাত্মার পরকীয় হইতে বসিয়াছে বলিয়া অপরাধী হইয়াছে; সুতরাং ইহাকে পরিত্যাগ করিয়া আমি নির্বৃত হইব। প্রিয়সখী আমার এই কার্য্যে যেন প্রতিবন্ধক না হ'ন। (এই বলিয়া লবঙ্গিকার চরণযুগলে পতিত হইলেন।)

(१) क्वचित् परमेति नास्ति।

लवङ्गिका माधवं संज्ञया समाह्वयति। (ट)

मक। वयस्य! लवङ्गिकास्थाने तिष्ठ (१)।

माधवः। परवानस्मि साध्वसेन (२)। (ठ)

मक। इयमेव नेदीयसां प्रकृतिरभ्युदयानाम्। (ड)

माधवः स्वैरं लवङ्गिकास्थाने तिष्ठति। (ढ)

मालती। सहि! करेहि अणुऊलदाए पसादं। (ण)

(ण) सखि! कुरु अनुकूलतया प्रसादम्।

(ट) लवेति। माधवं पूर्व्वसङ्केतेनावगतावस्थानम्। संज्ञया नयनेङ्गितेन अङ्गुलीचालनया वा।

(ठ) माधव इति। साध्वसेन परावलोकनभयेन, मुग्धाया मालत्या अपसरणभयेन वा, परवानस्मि लवङ्गिकास्थाने स्थातुं पराधीनः कृतोऽस्मि सहसा न शक्तोऽस्मीत्यर्थः।

(ड) मकेति। नेदीयसाम् अतिशयेनासन्नानाम्, अभ्युदयानाम् इष्टलाभानाम् इयमेव प्रकृतिरयमेव स्वभावः। यदुपयुक्तसमये प्रकृतं प्रति केनचित् कारणेन जड़त्वमिति भावः।

(ढ) माधव इति। स्वैरं मन्दम्, मालती यथा नावबुध्येत इत्यर्थः।

(ण) मालतीति। अनुकूलतया मरणानुमोदनरूपानुकूल्येन प्रसादमनुग्रहम्।

মকরন্দ। এই সেই স্নেহের চরম সীমা।

(ট) (লবঙ্গিকা অঙ্গুলীসঙ্কেতে মাধবকে ডাকিল।)

মকরন্দ। বয়স্য! লবঙ্গিকার জায়গায় যাইয়া দাঁড়াও।

(ঠ) মাধব। ভয়ে পরাধীন হইয়া পড়িয়াছি।

(ড) মকরন্দ। অত্যন্ত নিকটবর্ত্তী সম্পদের ইহাই স্বভাব।

(ঢ) (মাধব আস্তে আস্তে যাইয়া লবঙ্গিকার জায়গায় দাঁড়াইলেন।)

(ণ) মালতী। সখি! আনুকূল্য করিয়া অনুগ্রহ কর।

(१) वयस्य! उपसृत्य लवङ्गिकायाः स्थाने तिष्ठ इति पाठोऽपि दृश्यते।

(२) वयस्य!...इत्यपि पाठः।

माधवः। सरले! साहसरागं परिहर रम्भोरु! मुञ्च संरम्भम्।
विरसं विरहायासं सोढ़ुं तव चित्तमसहं मे ॥१०॥

मालती। सहि! अलङ्घणिज्जो (१) दे मालदीप्पणामो। (त)

(त) सखि! अलङ्घनीयस्ते मालतीप्रणामः।

सरल इति। हे सरले! ऋजुबुद्धे! साहसे प्राणत्यागे रागम् इच्छां परिहर परित्यज। तथा हे रम्भोरु! कदलीस्तम्भसमानोरुयुगले! संरम्भं मरणोद्योगमपि मुञ्च जहीहि। कथमेतदित्याह विरसमित्यादि। विगतो भविष्यति रसो मम विषयानुरागो यस्मात् तं मम विषयवैराग्यकरमित्यर्थः तव विरहायासं वियोगदुःखं सोढ़ुं मे मम चित्तम् असहमक्षमम्। अतएव चिरस्नेहभाजनमिमं जनं प्रति दययापि मरणेच्छां तदुद्योगञ्च परित्यजेति भावः।

अत्र पूर्वार्द्धगतवाक्यद्वयार्थौ प्रति परार्द्धगतवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः। किन्तु 'सरले' इत्यादीनामन्येषां सर्वेषामेव पदानां संस्कृतशौरसेन्योर्भाषयोः समानत्वेऽपि 'विरहायास'मिति पदस्य शौरसेन्यां 'विरहाआस' इत्येवंरूपोपपत्तेर्वैषम्यान्न भाषासमालङ्कारः। अथ च लवङ्गिकापाठ्यशौरसेनीभाषायाः 'विरहाआस'' इत्यस्योच्चारणात् माधवपाठ्यसंस्कृतभाषायाः 'विरहायासम्' इत्यस्योच्चारणे वैषम्ये सत्यपि तस्य, लवङ्गिकामाधवयोः स्वाभाविकस्वरभेदस्य च शोकसमाकुलचित्ताया मालत्याः सम्यगलक्षितत्वाभावात् लवङ्गिकाभिन्नजनभ्रमो न जात इति द्रष्टव्यम्। आर्य्या जातिः ॥१०॥

(त) मालतीति। 'सरले' इत्याद्युक्तिवशात् स्वमरणं लवङ्गिकाया अनभिमतम्, प्रत्युत भावि तत्प्रतिबन्धकत्वञ्चाशङ्क्याह सखीत्यादि। अनेन मालतीप्रणामालुलनेनानुग्रहबुद्ध्या तदभिलषितमरणमनुजानीहीति भावः।

মাধব। সরলে! দুঃসাহসের ইচ্ছা পরিত্যাগ কর; হে রম্ভোরু! এই উদ্যমও ছাড়। আমার চিত্ত, বিষয়বৈরাগ্যকারী তোমার বিরহকষ্ট সহ্য করিতে অসমর্থ ॥১০॥

(१) अलङ्घणीओ ज्जेव इति क्वचित् पाठः।

माधवः। (१) किंवा भणामि विच्छेद-दारुणायासकारिणि!।
कामं कुरु वरारोहे! देहि मे परिरम्भणम् ॥११॥

मालती। सानन्दम्। कधं अणुगहीदह्मि। उत्थाय। हुमं आलिङ्गामि। दंसणं उण पिअसहीए वाप्फोप्पीड़णेण पच्चक्खं (२) ण लम्भीअदि। आलिङ्ग्य सानन्दम्। सहि! कठोरकमलगब्भपह्मलो अस्सारिसो ज्जेव्व दे अज्ज णिव्वावेदि मं सन्तप्पमाणं

माधवः पूर्व्ववदेव प्रायेण तत्समानैः पदैर्लवङ्गिकावदाह किंवेति। विच्छेदेन माधवपक्षे वर्त्तमानवियोगेन लवङ्गिकापक्षे मरणाच्चिरवियोगेन दारुणायासकारिणी भीषणकष्टविधायिनी, तत्सम्बोधनं किंवा भणामि ब्रवीमि। लवङ्गिकापक्षे, असह्ययन्त्रणापगमान्मरणविषये किं निषेधवाक्यं वक्तव्यमस्तीत्यर्थः। माधवपक्षे तु तस्यात्यन्तासम्भवात् किं वक्तव्यमस्ति, अपि तु किमपि नेत्यर्थः। अतएव हे वरारोहे! उत्तममहिले! कामं कुरु स्वाभिलाषं विधेहि, प्राणधारणमसह्यञ्चेत् मर्त्तुमर्हसीत्यर्थं इति लवङ्गिकापक्षे। माधवपक्षे तु हे वरारोहे! उत्तममहिले! कामं कुरु मया सार्द्धं कामव्यापारं विधेहि, अनर्थकमरणप्रस्तावेन किं प्रयोजनमिति भावः। अतएव मे मम परिरम्भणम् आलिङ्गनं देहि, मामालिङ्गेत्यर्थः। अयन्तु भयत्रापि समानः।

अत्रापि पूर्ववदेव सर्वोपपत्तिरूहणीया। "माधवं संज्ञया समाह्वयति" इत्यादावेतदन्ते सन्दर्भे छलेन माधवाभिलाषाभिसन्धानादधिबलं नाम गर्भसन्धेरङ्गम्। यथा दर्पणे—
"अधिबलमभिसन्धिश्छलेन यः।" ॥११॥

(त) मालती। সখি! মালতীর অনুনয় তোমার লজ্জনীয় নহে।

মাধব। আমি বলিব বা কি, তোমার বিরহ আমার দারুণ-কষ্টকর; তথাপি বরারোহে! তোমার ইচ্ছানুরূপ কাজ কর (কামব্যবহার কর), আমাকে আলিঙ্গন দাও ॥১১॥

(१) कुत्रचित् सहर्षमित्यधिकः पाठः।

(२) वाप्फोपीड़ेण णिरुद्धं पच्छिमं इति पाठान्तरम्।

पिअसहीए (१) सरीरप्फंसो। साखम्। किन्तु मउलिविणि-वेसिदञ्जली मम वअणेण विण्णाविहि तं जणं। जह ण मए

(ख) कथमनुगृहीतास्मि। इयमालिङ्गामि। दर्शनं पुनः प्रियसख्याः वाष्पोत्पीड़नेन प्रत्यक्षं न लभ्यते। सखि! कठोर-कमल-गर्भ-पक्ष्मलोऽन्यादृश एव ते अद्य निर्वापयति मां सन्तप्यमानां प्रियसख्याः शरीरस्पर्शः। किन्तु मौलिविनिवेशिताञ्जलिर्मम वचनेन विज्ञापय तं जनम्। यथा न मया मन्दभागिन्या विकसच्छतपत्र-लक्ष्मी-

(ख) मालतीति। 'कामं कुरु' इत्यनेन स्वमरणे लवङ्गिकाया अनुमोदनं जातमिति मन्यमाना सानन्दमाह कथमित्यादि। सम्भावनायां कथंशब्दः। अनुगृहीतास्मि प्रार्थितमरणानुमोदनेनेति भावः। वाष्पोत्पीड़नेन अश्रुप्रवाहकर्तृकदृष्टिनिरोधेन प्रियसख्याः दर्शनं दर्शनात्मकं प्रत्यक्षं चाक्षुषप्रत्यक्षमित्यर्थः। एतेन इत्यापि माधवो न परिचित इति सूचितम्। इत्थं लवङ्गिकाभ्रमेण माधवमालिङ्ग्य सुधासरसि निमग्नेव सातिशयमानन्दमनुभवन्ती ब्रवीति सखीति। कठोरकमलगर्भवत् परिणतपद्मबीजकोषवत् पक्ष्मलः रोमाञ्चविषमीकृतः. अन्यादृशः पूर्वानुभूतादिभिन्नरूपः। निर्वापयति शीतलां करोति। विज्ञापनीयमभिधातुमाह किन्त्विति। तं जनं माधवम्। अत्र माधवनामानुच्चारणेन स एव मनसा पतित्वेन वृत इति व्यज्यते। विकसत्

(খ) মালতী। (আনন্দের সহিত) যাহা হউক, অনুগৃহীত হইয়াছি। (উঠিয়া) এই আলিঙ্গন করিতেছি। কিন্তু অশ্রুজলের প্রবাহে দৃষ্টি নিরুদ্ধ হওয়ায় প্রিয়সখীর প্রত্যক্ষ দর্শন পাইতেছি না। (আলিঙ্গন করিয়া আনন্দের সহিত) সখি! পরিণত পদ্মের বীজকোষের ন্যায় উচু-নীচু তোমার শরীরস্পর্শ আজ অন্য রকমই অনুভূত হইতেছে এবং সন্তপ্ত আমাকে শীতল করিতেছে। (অশ্রুজলের সহিত) আরও শোন, আমার বাক্যানুসারে তুমি মস্তকে অঞ্জলিপুট স্থাপন করিয়া সেই ব্যক্তিকে জানাইবে যে, আমার ভাগ্য মন্দ; তাই আমি শোভার

(१) सन्तप्पमाणं पिअसहीए इत्यंशः क्वचिन्नास्ति।

मन्दभाइणीए (१) विश्रसन्त-सदवत्त-(२) लच्छीविलासहारिणो सम्पुस-चन्दमण्डलाहिरामस्स मुहस्स दे सच्छन्ददंसणेण सम्भाविदो चिरं महूसवो लोअणाण (३)। मुहामणोरहेहिं अ अविरद-विअम्भमाण-दुव्वारुव्वेअ-(४) व्वइअरु-व्वत्तमाणवन्धणं धारिअं हिअअं। गमिआ अ वारं वारं सविसेसदूसहारम्भ-

विलासहारिणः सम्पूर्ण-चन्द्रमण्डलाभिरामस्य मुखस्य ते स्वच्छन्ददर्शनेन सम्भावितश्चिरं महोत्सवो लोचनयोः। मुधामनोरथैश्च अविरतविजृम्भमाण-दुर्व्वारोद्वेग-व्यतिकरोद्वर्त्त-मानबन्धनं धारितं हृदयम्। गमिताश्च वारं वारं सविशेषदुःसहारम्भ-दुर्म्मनायितसखी-

प्रकाशमानं शतपत्रं पद्ममिव लक्ष्मीविलासेन शोभाप्रकाशेन हारि सुन्दरं तस्य। स्वच्छन्ददर्शनेन यथेष्टावलोकनेन, लोचनयोर्मम नेत्रयोः, महोत्सवो महानन्दो न सम्भावितः नोत्पादितः। अनुभूतं दुःखं विज्ञापयितुमाह मुधेत्यादि। मुधा मनोरथैः 'पत्या सता माधवेन सममीदृगाचरिष्यामि' इत्यादि वृथाभिलाषैः, इदानीं तदभिलाषस्य निष्फलत्वाद्‌वृथात्वमिति भावः, अविरतं विजृम्भमाणो वर्द्धमानो यो दुर्वारोद्वेगः दुरुपशम-मन्मथोद्वेगः तस्य व्यतिकरेण सम्पर्केण सम्मर्द्देन उद्वर्त्तमानम् उत्तिष्ठत्प्रायं बन्धनं मूलबन्धो यस्य तत्तथोक्तम्। धारितम् एतावन्तं कालं यावत् अवस्थापितं रक्षितमिति तात्पर्य्यम्। इतरथा तादृशोद्वेगेनैव मम हृदयमुन्मूलितमभूदिति भावः। सविशेषः सातिशयो दुःसहस्य

প্রকাশে বিকসিত পদ্মের ন্যায় মনোহর এবং পরিপূর্ণ চন্দ্রমণ্ডলের ন্যায় সুন্দর আপনার মুখমণ্ডলের ইচ্ছানুরূপ দর্শনদ্বারা নিজের নয়নযুগলের মহোৎসব বহুকাল জন্মাই নাই। অবিশ্রান্ত বর্দ্ধমান দুর্নিবারণীয় কাম-বেদনায় যে হৃদয়ের বন্ধন উঠিয়া যাইতেছিল, সেই হৃদয়কে বৃথা অভিলাষেই ধারণ করিয়া রাখিয়াছি। যে শরীরের সন্তাপে ভূতলবিলুণ্ঠন-

(१) मन्दभाआए इति पाठभेदः। (२)...पुण्डरीअ...इति पाठोऽपि दृश्यते।

(३)...मुहचन्दमण्डलस्स...लोअणमहोसवो, इति क्वचित् पाठः।

(४)...दुव्वार-दुक्खावेअ...इति भिन्नः पाठः।

दुम्मणाइद-सहीअणा ( १ ) सरीरसन्दावा। कधं वि अदिवाहिदा चन्दादव-मलअमारुदप्पमुहा अणत्थपरम्परा। सम्पदं उण णिरासह्मि संवुत्तेत्ति। तुए वि पिअसहि ! सव्वदा सुमरिदव्वह्मि, एसा अ माहवसिरीहत्थ-(२) णिम्माणमणोहरा वउलमाला मालदीणिव्विसेसं (३) पिअसहीए दट्टव्वा, सव्वदा हिअएण (४) धारणिज्जा अ त्ति। इति स्वकण्ठादुन्मुच्य (५) माधवस्य हृदि विन्यस्यन्ती सहसापसृत्य साध्वसोत्कम्पं नाटयति। (थ)

मना: शरीरसन्तापा:। कथमप्यतिवाहिताश्चन्द्रातप-मलयमारुतप्रमुखा अनर्थपरम्परा:। साम्प्रतं पुनर्निराशास्मि संवृत्तेति। त्वयापि प्रियसखि ! सर्वदा स्मर्त्तव्यास्मि, एषा च

य आरम्भो भूतलविलुण्ठननलिनीदलधारणादिव्यापार:, तेन दुर्म्मनायिता: तदपनयनोपायाभावात् दु:खितीकृता: सखीजना यैस्ते ; गमिता अनुभूय अतिक्रान्ता:। कथमपि अतिकष्टेनेत्यर्थ:। चन्द्रकिरणानां सन्तापकरत्वात् चन्द्रातपेत्युक्तम्। अनर्थपरम्परा: निरवच्छिन्नदु:खकारणानि तत्तज्जनितदु:खानीत्यर्थ:। सर्वमेतत् त्वत्प्राप्तिप्रत्याशयैव कृतमिति भाव:। पुन: किन्तु। निराशा नन्दनाय दानोद्‌योगात् त्वत्प्राप्ताविति शेष:। अतएव स्वजीवनेऽपि निराशास्मीति भाव:। इति विज्ञापयेत्यन्वय:। शोकसमाकुलतया सङ्कल्प-

প্রভৃতি দুঃসহ ব্যাপারে সখীজন অত্যন্ত দুঃখিত হইত, সেইরূপ শরীরের সন্তাপ বার বার অতিবাহিত করিয়াছি এবং চন্দ্রের কিরণ ও মলয়-বায়ুপ্রভৃতি অনিষ্টকারী পদার্থগুলিকে কোন রকমে অতিক্রম করিয়াছি। কিন্তু এখন নিরাশা হইয়া গিয়াছি। প্রিয়সখি ! তুমিও আমাকে স্মরণ করিও। আর মাধবের শ্রীহস্তনির্ম্মিত এই মনোহর বকুলফুলের মালাটীকে

(१) सविसेसदूसहासासधुमाविदसहीअणा इति पाठभेद:। (२) सिरीमाहवहत्थ…इत्यपि पाठ:। (३) मालदीजीविदणिव्विसेसं इति क्वचित् पाठ:। (४) हिअए इति पाठान्तरम्। (५) स्वकण्ठादपनीय इति भिन्न: पाठ:।

**माधवः।** अपवार्य्य। हन्त! (द)

एकीकृतस्त्वचि निषिक्त इवावपीड्य
निर्भुग्नपीनकुचकुट्मलयानया मे।
कर्पूर-हार-हरिचन्दन-चन्द्रकान्त-
निष्यन्द-शैवल-मृणाल-हिमादिवर्गः ॥१२॥

माधवश्रीहस्तनिर्म्माणमनोहरा वकुलमालामालतीनिर्विशेषं प्रियसख्या द्रष्टव्या, सर्वदा हृदयेन धारणीया चेति।

निर्वृत्तपतिपत्नीभावविस्मरणात् माधवेति नामोच्चारणमिति बोध्यम्। मालतीनिर्विशेषं मालत्यास्तुल्यम्। उन्मुच्य अवतार्य्य। साध्वसोत्कम्पं भयवशाद्वेपथुम्, नाटयति अभिनयति। तथा च मालार्पणकाले स्तनहीनत्व-व्यूढोरस्कत्वानुभवादालिङ्गनसमयानुभूत-कठिनस्पर्शसंवादाच्च प्रथमं पुरुष इति ज्ञानम्, समनन्तरञ्च आलिङ्गने सुधासागरसन्तरणसुखानुभवादन्यस्यासम्भवेन कामन्दकीकौशलात् तदुपस्थितेरेव सम्भवेन कथञ्चिच्चाक्षुषप्रत्यक्षेण च माधव एवायमिति ज्ञानं जातम्; ततश्च तादृशनिभृतदेशे माधवेन सहावस्थानात् पित्रादितो भयेन तदालिङ्गनादेः सात्त्विकभावोदयेन चोत्कम्पं नाटयतीति बोध्यम्।

अत्र 'न मया मन्दभागिन्या' इत्यादिवाक्येनानुतापप्रतीतेः पश्चात्तापो नाम नाट्यालङ्कारः। यथा तत्रैव—"मोहावधीरितार्थस्य पश्चात्तापः स एव तु।"

(द) माधव इति। अत्र हर्षे हन्तशब्दः।

एकीकृत इति। निर्भुग्नौ गाढालिङ्गने मदीयवक्षसा विदलनात् स्वकीयवक्षसि अवरोपितौ, अतएव पीनौ उन्मुक्तमुखाभावात् किञ्चित्पीवरतां गतौ कुचौ कुड्मलौ

তুমি মালতীর ন্যায় দেখিবে এবং সর্ব্বদা হৃদয়ে ধারণ করিবে। (এই বলিয়া নিজ কণ্ঠ হইতে উন্মুক্ত করিয়া মাধবের বক্ষে স্থাপন করতঃ হঠাৎ সরিয়া যাইয়া ভয়বশতঃ কম্প অভিনয় করিতে লাগিলেন।)

(দ) মাধব। (চুপি চুপি) বাঃ!

मालती। स्वगतम् (१)। अह्मो! (२) लवङ्गिआए मालदी-विप्पलद्धा। (ध)

माधवः। अयि स्ववेदनामात्रवेदिनि! (३) परव्यथा-नभिज्ञे! (४) इयमुपालभ्यसे। (न)

(ध) अहो! लवङ्गिकया मालती विप्रलब्धा।

मुकुलाविव यस्यास्तया, अनया मालत्या अवपीड्य मां गाढ़मालिङ्ग्य मे मम त्वचि गात्र-चर्म्मणि कर्पूरः हारो मुक्ताहारः हरिचन्दनं देवदारुविशेषस्य तेषां निष्यन्दो रसः, तथा शैवलं शैवालं मृणालं बिसं हिमं तुषारश्च, आदिशब्देन चन्द्रकिरणचन्दनादीनां ग्रहणम्, तदादीनां वर्गः समूहः, एकीकृतो मिश्रितः सन् निषिक्त इव लिप्त इव प्रतीयत इति शेषः। अतीवशैत्यानुभवादिति भावः।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः, तेन च मालत्याः स्पर्शोऽतीवशीतल इति व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

वसन्ततिलका वृत्तम् ॥१२॥

(ध) मालतीति। अहो इति विस्मये। विप्रलब्धा स्वयमपसृत्य अमुष्योप-स्थापितत्वेन प्रतारिता।

(আমাকে গাঢ় আলিঙ্গন করিবার সময়ে ইঁহার) স্তনমুকুল দুইটী নীচু হইয়া যাইয়া কিঞ্চিৎ স্থূল হইয়াছিল, এই অবস্থায় ইনি আলিঙ্গন করিয়া আমার চর্ম্মের উপরে কর্পূর, মুক্তার মালা, হরিচন্দন ও চন্দ্রকান্ত-মণির রসের সহিত শৈবাল, মৃণাল ও হিমপ্রভৃতি শীতল পদার্থসমূহ মিশ্রিত করিয়া যেন সিক্ত করিয়া দিয়াছেন ॥১২॥

(ধ) মালতী। (স্বগত) ও! লবঙ্গিকা মালতীকে প্রতারিত করিয়াছে।

(१) क्वचित् स्वगतमिति पाठो नास्ति। (२) अम्महे इति पाठान्तरम्।

(३) निवेदिनि इति पाठभेदः। (४) परव्यसनानभिज्ञे! इति भिन्नः पाठः।

उद्दामदेहपरिदाहमहाज्वराणि
सङ्कल्पसङ्गमविनोदितवेदनानि।
त्वत्स्नेहसंविदवलम्बितजीवितानि
किंवा मयापि न दिनान्यतिवाहितानि ॥१२॥

(न) माधव इति। परस्य मम व्यथानभिज्ञ इत्यर्थः। इयं त्वम् उपालभ्यसे मया निन्द्यसे। उक्तसम्बोधनद्वयेनैवेति भावः।

ननु का तव व्यथेत्याह उद्दामेति। मयापि, उद्दामः प्रौढ़ः देहपरिदाहो मदनजनितशरीरसन्ताप एव महाज्वरो येषु तानि, सङ्कल्पसङ्गमेन मनोवृत्तिनिष्पादितत्वत्संसर्गेण विनोदिता अपनीता वेदना विरहव्यथा येषु तानि। तथा त्वत्स्नेहसंविदा तवानुरागो मयि विद्यत एव इति ज्ञानेन, अवलम्बितं धृतं जीवितं जीवनं येषु तानि, मयि तवानुरागो विद्यत एव इति ज्ञानञ्चेन्नाभविष्यत् तदा जीवनमेव धारयितुं नाशक्ष्यमिति भावः। तथाभूतानि दिनानि किंवा न अतिवाहितानि त्वयेव किं नातिक्रान्तानि, अपि तु अतिवाहितान्येवेत्यर्थः। सुतरां स्ववेदनामात्रप्रकटनात् 'ममापि त्वद्विरहवेदनाऽस्ती'त्यनुमानाभावेन तदप्रकाशात् एकदेशदर्शिता रूपेयं तव निन्दा क्रियत इति भावः।

अत्र प्रथमचरणे देहदाहेति व्यञ्जनसङ्घस्य सकृत्साम्याच्छेकानुप्रासः, परिदाह एव महाज्वर इति निरङ्गं केवलरूपकञ्च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः, तथा द्वितीयचरणे एकसकारयोः सकृत् साम्यात् 'नोदि दने'त्यनेकव्यञ्जनस्य कथा साम्याच्च वृत्त्यनुप्रासः, चतुर्थचरणे अर्थापत्तिश्चेति समुदाये परस्परनैरपेक्ष्यात् संसृष्टिः।

आख्यानं नाम नाट्यालङ्कारस्य "आख्यानं पूर्ववृत्तोक्तिः" इति दर्पणलक्षणात्।

"प्रेक्षोपलब्धिश्चित् संवित्" इत्यमरः।

वसन्ततिलका वृत्तम् ॥१२॥

(न) মাধব। আপনি নিজের বেদনামাত্র জানেন, কিন্তু পরের ব্যথা জানেন না; সুতরাং এই আপনাকে নিন্দা করিতেছি।

এ যাবৎ আমার অত্যন্ত শরীরসন্তাপরূপ মহাজ্বর চলিতেছিল, মনে

लव। सहि! उवालम्भणिज्जे व (१) उवालद्धासि। (प)

कल। अहो! सरसरमणिज्जदा संविहाणस्स। (फ)

मक। महाभागे! एवमेतत्। (ब)

---

(प) सखि! उपालम्भनीयैवोपालब्धासि।

(फ) अहो! सरसरमणीयता संविधानस्य।

---

(प) लवेति। उपालम्भनीयैव निन्दनीयैव त्वम् उपालब्धासि अनेन निन्दितासि। तथा च "अनुरागोऽनुरागेण प्रत्येष्टव्य" इति महाजनसंवादात् अभिन्नात्मन इवास्याप्यात्मनि महानुरागस्य निर्व्यूढत्वेन विरहवेदनायाः समानत्वानुमानादुभयोरपि तन्निवेदनौचित्ये केवलस्ववेदनानिवेदनात् अनुरागस्वभावानभिज्ञताप्रकाशेन त्वं निन्दनीयैव जातासीत्यनेन निन्दिता, सुतरां निर्द्दोषस्य दोषाविष्करणरूपदोषोऽप्यस्य न सम्भावनीय इति भावः।

(फ) कलेति। संविधानस्य अनयोरेव सम्मेलनरूपस्य विधिव्यापारस्य, सरसं सानुरागम्, अतएव रमणीयं मनोहरमिति सरसरमणीयं तस्य भावः सा। विधेरिदमनयोर्योजनमन्योन्यानुरागप्रयुक्तम् अतएव मनोहरं सुतरां विचित्रमित्यर्थः। दूरस्थस्य स्वगतवदुक्तिरियम्।

(ब) मकेति। महाभागे! मालति! एतत् लवङ्गिकोक्तम्, एवं सत्यमित्यर्थः।

---

মনে আপনার সঙ্গমসুখ কল্পনা বিরহবেদনাকে কিছু কমাইয়া দিয়াছিল এবং আমার উপরে আপনার অনুরাগ আছে এই ধারণাই আমার জীবন রক্ষা করিয়াছিল, এই অবস্থায় আমিও কি এই দিনগুলি অতিবাহিত করি নাই ॥১৩॥

(প) লবঙ্গিকা। সখি! তুমি নিন্দনীয় বলিয়াই ইনি তোমার নিন্দা করিয়াছেন।

(ফ) কলহংস। বিধাতার বিধানের কি আশ্চর্য্য সরসতা ও রমণীয়তা।

---

(१) उवालम्भणिज्ज' इति पाठान्तरम्।

त्वं वत्सलेति कथमप्यवलम्बितात्मा
सत्यं जनोऽयमियतो दिवसाननैषीत् ।
आबद्ध-कङ्कण-कर-प्रणय-प्रसाद-
मासाद्य नन्दतु, चिराय फलन्तु कामाः ॥१४॥

लव । महाणुहाव ! हिअए वि अप्परिहृद-सअंगाह-साहसो अअं जणो किं दाणिं करग्गहणे विआरेदि (१) । (भ)

त्वमिति । त्वं वत्सला अस्मिन्ननुरागवती इति हेतोरेव कथमप्यतिकष्टेन अवलम्बितः विरहावस्थायां धृत आत्मा जीवनं येन स तादृशोऽयं जनो माधवः इयतो दिवसान् तव प्रथमदर्शनादारभ्य एतावन्ति दिनानि अनैषीत् अतिवाहितवानिति सत्यम् । तवानुराग एवास्य जीवनधारणे हेतुरिति त्वयैवास्येतः परमपि जीवनरक्षणे सर्व्वथा यतितव्यमिति भावः । अतएव आबद्धं धृतं कङ्कणं विवाहसूत्रं येन तस्य करस्य तव पाणेः प्रणयः परिग्रहः एव प्रसादोऽनुग्रहः सन्, आसाद्य प्राप्य नन्दतु माधवः प्रीतो भवतु, तथा कामा अस्माकमभिलाषाश्च चिराय फलन्तु सफला भवन्तु ।

अत्र चतुर्थपादे द्वितीयवाक्ये समुच्चयार्थक-चकाराभावान्न्यूनपदतादोषः, स च 'चिराय फलन्तु चेच्छा' इति पाठेन समाधेयः ।

"कङ्कणं करभूषायां सूत्रमण्डनयोरपि ।" इति मेदिनी ।

वसन्ततिलका वृत्तम् ॥१४॥

(ব) মকরন্দ। ভাগ্যবতি! ইহা এইরূপই বটে।

আপনি ইঁহার প্রতি অনুরক্তা বলিয়া এই ব্যক্তি কোন রকমে জীবন ধারণ করিয়া এতগুলি দিন অতিবাহিত করিয়াছেন। এখন আপনার বিবাহসূত্রধারী পাণির গ্রহণরূপ অনুগ্রহ লাভ করিয়া ইনি আনন্দিত হউন, চিরকালের পর আমাদের অভিলাষও সফল হউক ॥১৪॥

(१)⋯किं दाणिं कङ्कणाभरणं करं विआरेदि महाभाओ इति क्वचित् पाठः ।

मालती । हद्धी ! कस्सआजणविरुद्धं किं वि उवस्सस्सदि (१) । (म)

प्रविश्य कामन्दकी । पुत्रि ! कातरे ! किमेतत् । (य)

(भ) महानुभाव ! हृदयेऽपि अप्रतिहतस्वयंग्राहसाहसोऽयं जनः किमिदानीं करग्रहणे विचारयति ।

(म) हा धिक् ! कन्यकाजनविरुद्धं किमप्युपन्यस्यति ।

---

(भ) लवेति । अपिरेवार्थे । हृदयेऽपि निजवक्षस्येव अप्रतिहतम् अनिवारितम् अङ्गीकृतमित्यर्थः स्वयंग्राह एव इतः पूर्व्वमालिङ्गनसमये स्वयं त्वदीयवक्षोधारणमेव साहसं येन स तादृशोऽयं जनो मालती, इदानीं करग्रहणे त्वत्कर्त्तृकनिजपाणिग्रहणे किं विचारयति कर्त्तव्याकर्त्तव्यतया किं वितर्कयिष्यति किमपि नेत्यर्थः । या खल्वितःपूर्व्वं त्वदीयवक्षसि स्वकीयकुचयुगलमेव निधाय गाढ़मालिङ्गितुमर्हति स्म, तस्या मालत्या इदानीं त्वत्कर्त्तृकनिजपाणिग्रहणे किमपि न वितर्कणीयमस्ति पाणिग्रहणफलस्यालिङ्गनस्य पूर्व्वमेव निष्पन्नत्वात् । सुतरां त्वमिदानीं निःशङ्कमस्याः पाणिग्रहणं कर्त्तुमर्हसीति भावः ।

विचारयतीति भविष्यत्सामीप्ये वर्त्तमाना । "हृदयं वक्षसि स्वान्ते" इति हेमचन्द्रः ।

(म) मालतीति । कन्यकाजनविरुद्धं पुरुषस्पर्शरूपत्वात् । आलिङ्गनन्तु लवङ्गिकाभ्रमेण कृतमित्यभिप्रायः । किमपि आत्मना पाणिग्राहणम् उपन्यस्यति प्रलपति लवङ्गिकेति शेषः । पित्रोरननुमतत्वादेतन्न शक्नोमीति भावः ।

---

(ভ) লবঙ্গিকা। মহাশয় ! ( ইহার পূর্ব্বে ) নিজেই নিজের বুকে ধারণ করিবার সাহসও ইঁহার প্রতিহত হয় নাই, এখন ইনি পাণিগ্রহণে আর কি বিচার করিবেন।

(ম) মালতী। হায় ! কন্যার পক্ষে বিরুদ্ধ অনির্ব্বচনীয় কথা বলিতেছে ।

---

(१) मालती । (स्वगतम्) हा हद्धी ! हद्धी ! हदम्हि कण्णआजणविरुद्धं किम्पि एसा उवण्णस्सदि । इति पाठान्तरम् ।

मालती कम्पमाना कामन्दकीमालिङ्गति ।

काम । तस्याश्चिबुक-(१) मुन्नमय्य । वत्से ! (२)

पुरश्चक्षूरागस्तदनु मनसोऽन्यपरता,
तनुग्लानिर्यस्य त्वयि समभवद् यत्र च तव ।
युवा सोऽयं प्रेयानिह सुवदने ! मुञ्च जड़तां
विधातुर्वैदग्ध्यं विलसतु, सकामोऽस्तु मदनः ॥१५॥

(य) प्रविश्येति । पुत्रीत्यनेन त्वयि वर्त्तते मे सम्यगिष्टानिष्टदर्शनं दानादावधिकारश्चेति व्यज्यते । कातरे ! पित्रोरननुमतमिदं कथं कुर्य्यामित्यनुचितशङ्कोद्विग्नचित्ते! एतत् पाणिग्राहणानभिप्रायप्रकाशनं किं कथं क्रियत इति शेषः । शीघ्रमिदमनुमन्यतामिति भावः ।

पुर इति । यस्य माधवस्य त्वयि, यत्र च माधवे तव, पुरः प्रथमं चक्षूरागः नेत्रप्रीतिः, तदनु तदनन्तरं मनसः अनन्यपरता एकाग्रता अतीवचित्तासक्तिरित्यर्थः, परञ्च तनुग्लानिः अप्राप्तिवशान्मदनजनितदेहसन्तापः समभवत् । प्रेयान् प्रियतमः, अयं स युवा माधवः, इह अस्मिन् स्थाने वर्त्तते । अतएव हे सुवदने ! जड़तामप्रतिपत्तिं कर्त्तव्याकर्त्तव्यविमूढ़तां मुञ्च परित्यज । जड़तां विहाय निःशङ्कमात्मनः पाणिं ग्राहयेति भावः । तेन च विधातुः स्रष्टुः वैदग्ध्यं युवयोर्निर्म्माणनैपुण्यं विलसतु प्रकाशतां परस्परयोग्यसमावेशादिति भावः । मदनो मन्मथश्च सकामोऽस्तु युवयोः समागमाच्चिरात् पूर्णाभिलाषो भवतु ।

अत्र प्रथमार्द्धे अन्योन्यालङ्कारः, अप्रस्तुतानां चक्षूरागादीनां समभवदित्येकक्रियया कर्त्तृतयाभिसम्बन्धात् तुल्ययोगिता चेत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः । चतुर्थचरण-

(य) প্রবেশ করিয়া কামন্দকী। পুত্রি! কাতরে! এ ব্যাপারটা কি ? ।

( মালতী কাঁপিতে কাঁপিতে কামন্দকীকে আলিঙ্গন করিলেন। )

কামন্দকী। ( মালতীর চিবুক উন্নমিত করিয়া ) বৎসে !

(१) तस्याश्चुबुकमिति क्वचित् पाठः । (२) क्वचित् 'वत्से' इति पाठो नास्ति ।

लव। भअवदि! किसणचउद्दसीरअणी-मसाण-सञ्चरण-णिव्वत्तिद-(१) विसम-व्ववसाअ-णिट्ठाविद-चण्ड-पासण्ड-पअण्ड-दोद्दण्डसाहसो (२) साहसिओ क्खु एसो, अदो मे (३) पिअसही उक्कम्पिदा। (र)

(र) भगवति! कृष्णचतुर्द्दशी-रजनी-श्मशान-सञ्चरण-निर्व्वर्त्तित विषम-व्यवसाय-निष्ठापित-चण्ड-पाषण्ड-प्रचण्ड-दोर्द्दण्ड-साहसः साहसिकः खल्वेषः, अतो मे प्रियसखी उत्कम्पिता।

---

वाक्यार्थौ प्रति 'मुञ्च जड़ताम्' इति वाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं-काव्यलिङ्गञ्चेति परस्परनैरपेक्ष्यात् समुदाये संसृष्टिः। तथा तच्चरणगतवाक्यद्वये आवश्यकसमुच्चयवाचक-शब्दाभावात् न्यूनपदतादोषः, स च 'विधातुर्वैदग्ध्यं फलतु, मदनश्चास्तु सुहितः' इति पाठेन समाधेयः।

शिखरिणी वृत्तम् ॥१५॥

(र) लवेति। कृष्णचतुर्द्दशीरजन्यां विषमकर्म्मानुष्ठानोपयोगित्वेन तन्त्रशास्त्र-विहितायामिति भावः, श्मशानसञ्चरणेन निर्व्वर्त्तितौ मालतीप्राप्तये निष्पादितौ विषम-व्यवसायौ महामांसविक्रयात्मको दारुणाध्यवसायो येन स चासौ, निष्ठापितं नाशितं निवारितं चण्डपाषण्डस्य भीषणनिषिद्धकर्म्मकारिणः कापालिकस्याघोरघण्टस्य प्रचण्ड-

---

তোমার প্রতি যাহার এবং যাহার প্রতি তোমার প্রথম নয়নের প্রীতি, তাহার পর মনের একাগ্রতা এবং তাহার পর শরীরের গ্লানি হইয়াছিল, এই সেই তোমার প্রিয়তম যুবা; হে সুমুখি! ইহার প্রতি নিজের জড়তা পরিত্যাগ কর; বিধাতার নৈপুণ্য প্রকাশ পাউক এবং কামদেবের অভিলাষ পূর্ণ হউক ॥১৫॥

---

(१)···सञ्चारणिव्वूढ़···इत्यपि पाठः।

(२)···पचण्ड पाखण्ड-दोद्दण्ड···इति पाठोऽपि दृश्यते।

(३) क्वचित् मे इति पाठो नास्ति।

मक । स्वगतम् । साधु लवङ्गिके ! साधु. अवसरे खल्वनुरागोपकारयोर्गरीयसोरुपन्यास: (१) । (ल)

मालती । हा ताद ! हा अम्ब ! । (व)

---

(व) हा तात ! हा अम्ब ! ।

---

दोर्द्दण्डयो: दारुणभुजदण्डयो: साहसं मालतीहत्यारूपं साहसकर्म्म येन स तथोक्तश्चेति कर्म्मधारय: । एष माधव: साहसिक: खलु । उत्कम्पिता साहसिकपाणिग्रहणे विवशा । प्रचण्डस्वभावात् साहसिकात् सर्व्व एव बिभेतीत्याशय: । एतेन तत्तद्घटनास्मारकतया येन अनुरागातिशयात् तादृशरजन्यां महाश्मशाने मालतीलाभायैव पिशाचेभ्यो महामांसविक्रयरूपं दारुणसाहसिकं कर्म्माध्यवसितम्, येन चातिभयङ्करादघोरघण्टादात्मनैरपेक्ष्येणापि मालती परित्राता, तेनानुरागातिशयवता निरतिशयोपकारिणा माधवेनात्मपाणिग्रहणं पित्रोरनुमत्यभावेऽपि मालत्या अवश्यकर्त्तव्यमिति व्यज्यते ।

(ल) मकेति । अवसरे उपयुक्तसमये । गरीयसोरतिमहतो: । उपन्यास उपस्थापनं स्मरणमित्यर्थ: । विषमव्यवसायेत्यनेन महानुरागस्योपन्यास:, दोर्द्दण्डसाहसेत्यनेन च महोपकारस्योपन्यास इति बोध्यम् ।

(व) मालतीति । हा तात ! हा अम्ब ! युवयोरनुमतेरप्यनपेक्षया ईदृशाचरणात् कथं पुनर्वदनं दर्शयेयमिति भाव: । एतेन माधवपाणिग्रहणे सम्मतिरुत्पन्नेति व्यज्यते ।

---

(র) লবঙ্গিকা। ভগবতি! যিনি কৃষ্ণপক্ষের চতুর্দ্দশীর রাত্রিতে মহাশ্মশানে বিচরণ করিয়া মহামাংসবিক্রয়রূপ ভয়ঙ্কর কার্য্য করিয়াছিলেন এবং যিনি দারুণ পাষণ্ডের প্রচণ্ড দোর্দ্দণ্ডের নারীহত্যারূপ সাহসের কার্য্যকে নিবারিত করিয়াছিলেন, ইনিই সেই সাহসিক পুরুষ; অতএব আমার প্রিয়সখী কম্পিত হইয়াছেন।

(ল) মকরন্দ। (স্বগত) বেশ্ লবঙ্গিকে! বেশ্। তুমি যথাসময়ে গুরুতর অনুরাগ ও গুরুতর উপকারের উল্লেখ করিয়াছ।

---

(१) लवङ्गिके ! स्थाने··· इति पाठभेद: ।

काम। वत्स! माधव!।

माधवः। आज्ञापय।

काम। इयमशेषसामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुले-रमात्यभूरिवसोरेकमपत्यरत्नं (१) मालती, भगवता सदृश-संयोगरसिकेन वेधसा, मन्मथेन, मया च तुभ्यं प्रदीयते। इति रोदिति। (म)

(म) कामेति। अशेषाणां सामन्तानामधिकृतभूस्वामिनां ये मस्तकोत्तंसाः शिरोभूषणीभूतानि कुसुमानि तेषां परागैः रजोभिः, रञ्जिताश्चरणाङ्गुलयो यस्य तस्य। अपत्यञ्च तत् रत्नमिव रत्नञ्चेति अपत्यरत्नम्। एतेन एकतो महैश्वर्य्यशालिनः कन्या, द्वितीयत एकापत्यतया पित्रोरतीववात्सल्यभाजनीभूता, तृतीयतश्च नानागुणवत्त्वात् रत्नभूता मालती, सुतरां तत्रादरातिशयः करणीय इति सूच्यते। सदृशसंयोगरसिकेन योग्ययोजनानुराग-शालिना वेधसा विधात्रा ललाटलिखनात्, मन्मथेन परस्परासक्तिजननात्, मया च लौकिको-पायावलम्बनात् तुभ्यं प्रदीयते। एतेन भूरिवसुना कामन्दक्यां रहसि मालतीदानाधिकारो न्यस्त इति प्रतीयते। मातृस्थानपातिनी कामन्दकी दानेन भाविविरहसम्भावनया वात्सल्यात् रोदितीति बोध्यम्।

अत्र संग्रहो नाम गर्भसन्धेरङ्गम्—"संग्रहः पुनः। सामदानार्थसम्पन्नः" इति साहित्यदर्पणात्।

---

(ব) মালতী। হা পিতঃ! হা মাতঃ!।

কামন্দকী। বৎস! মাধব!।

মাধব। আদেশ করুন।

(শ) কামন্দকী। সকল সামন্তরাজগণ মস্তকাভরণ-পুষ্পের রেণু-দ্বারা যাঁহার চরণাঙ্গুলী রঞ্জিত করিয়া থাকেন, সেই অমাত্য ভূরিবসুর এই একমাত্র সন্তানরত্ন মালতী; যোগ্য-যোজনের অনুরাগী ভগবান্

---

(१) एकापत्यरत्नमिति समस्तः पाठः क्वचित्।

मक। फलितं हि नस्तर्हि (१) भगवतीपादप्रसादेन। (ष)

माधवः। तत्किमिति वाष्पायितं भगवत्या ? (२)। (स)

काम। चीवराञ्चलेन नेत्रे परिमृज्य। विज्ञापयामि कल्याणि-नम् (३)। (ह)

माधवः। नन्वाज्ञापय (४)।

(ष) मकेति। तर्हि माधवाय मालत्या दाननिष्पत्तौ सत्याम्। फलितमिति भावे क्तप्रत्ययः, तेन सफलेन जातमित्यर्थः।

(स) माधव इति। वाष्पायितं वाष्पोद्गमनं कृतम्। "वाष्पादिभ्य उद्गमने" इत्यादयक्तात्भावे क्तः।

বিধাতা, কামদেব ও আমি—আমরা ইহাকে তোমাকে দান করিলাম। ( এই বলিয়া রোদন করিতে লাগিলেন। )

(ষ) মকরন্দ। তাহা হইলে আপনার চরণের অনুগ্রহ আমাদের পক্ষে আজ সফলই হইল।

(স) মাধব। আপনি কি জন্য অশ্রুমোচন করিতেছেন ?।

(হ) কামন্দকী। ( কৌপীনের অঞ্চলদ্বারা নয়নযুগল মার্জ্জনা করিয়া ) কল্যাণভাজনকে কিছু জানাইব।

(१) नस्तर्हीत्यत्र केवलं तर्हीति पाठोऽपि दृश्यते।

(२) तत्किमित्यतिवाष्पायितमाननं भगवत्या इति पाठान्तरम्।

(३) वत्स ! किमपि कल्याणं वक्तुकामास्मि इत्यपि पाठः।

(४) विज्ञापयामीत्यादि कामन्दक्युक्तेः परम्—

माधवः। तत् किम्।

कामन्दकी। विज्ञापयामि।

माधवः। आज्ञापय।

इत्येवं पाठः पुस्तकान्तरे।

काम । परिणतिरमणीयाः प्रीतयस्त्वद्विधाना-
मह्मपि तव मान्या हेतुभिस्तैश्च तैश्च ।
तदिह सुवदनायां तात ! मत्तः परस्तात् (१)
परिचयकरुणायाः (२) सर्व्वथा मा विरंसीः ॥१६॥

इति पादयोः पतितुमिच्छति । (च)

(छ) कामेति । कल्याणिनं मङ्गलास्पदं त्वाम्, विज्ञापयामि वाष्पोद्गमनकारण-मिति शेषः ।

परिणतीति । हे तात ! पुत्र ! वत्स ! त्वद्विधानां त्वादृशानां नानागुणरमणीयानां जनानां प्रीतयः यत्र कुत्रचिदपि स्नेहाः परिणतिरमणीयाः परिपाकेण मनोहराः क्रमिकवर्द्धमानावस्थया क्रमशो गाढ़रूपा भवन्तीत्यर्थः । अयमेव स्वभाव इति भावः । तथा अहमपि तैश्च तैश्च हेतुभिः पितृश्वशुरसहाध्यायित्व-तत्सौहार्द्द-मातृवत्वात्सल्यवत्त्व-प्रभृतिभिः कारणैः मान्या सम्मानार्हा । अतएव मम वचनं त्वया नातिक्रमणीय-मिति भावः । तत्तस्मात् मत्तः परस्तात् परस्मिन् काले मत्परोक्षमात्र इत्यर्थः, इह अस्यां सुवदनायां मालत्यां परिचय प्रणय एव करुणा दया तस्याः सकाशात् सर्वथा मा विरंसीः न विरतो भव, सर्वथैवास्यां त्वया गाढ़स्नेहरूपा दया करणीयेत्यर्थः । ममायमनुरोध इति भावः ।

अत्र तादृशकरुणाया अविरामं प्रति प्रथमचरणार्थरूपे एकस्मिन् कारणे सत्यपि माननीयानुरोधरूपकारणान्तरोपन्यासात् समुच्चयोऽलङ्कारः । तथा शिक्षा नाम नाट्या-लङ्कारः—"शिक्षा स्यादुपदेशनम्" इति दर्पणलक्षणात् ।

अस्यानुरूपः श्लोको यथा शाकुन्तले—"अस्मान् साधु विचिन्त्य संयमधनान्" इत्यादिः ।

"पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते ।" इति शब्दार्णवः । "परिचयः (पुं)···प्रणय" इति शब्दकल्पद्रुमः ।

मालिनी वृत्तम् ॥१६॥

माधव । आदेश करुन ।

(१) परस्तादिति पाठान्तरम् । (२) परिचयकरुणायामिति पाठभेदः ।

माधवः। निवारयन् (१)। अहो! वात्सल्यादतिक्रामति प्रसङ्गः। (क)

श्लाघ्यान्वयेति, नयनोत्सवकारिणीति,
निर्व्यूढसौहृदभरेति (२) गुणोज्ज्वलेति।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि (३) ॥१७॥

(च) इतीति। अनुरोधातिशय्यज्ञापनार्थं पादपतनेच्छेति बोध्यम्।

(क) माधव इति। निवारयन् किञ्चिदपसृत्य हस्तधारणेनेति शेषः। प्रसङ्गः अनुरोधप्रस्तावः, वात्सल्यात् स्नेहात्, अतिक्रामति औचित्यमुल्लङ्घयति। सर्व्वेषामेव परमवन्दनीयायास्ते पुत्रकल्पस्य मम चरणधारणोद्यमो नितान्तमनुचित इति भावः।

कामन्दक्यनुरुद्धमङ्गीकरोति श्लाघ्येति। इयं मालती, श्लाघ्यान्वयेति इतिशब्दः सर्व्वत्र स्वरूपार्थे प्रशस्तकुलस्वरूपा, नयनोत्सवकारिणीति निरुपमसौन्दर्य्येण नेत्रानन्दविधायिस्वरूपा निर्व्यूढो निष्पन्नः सौहृदभरः प्रेमातिशयो यस्यां सेति तत्स्वरूपा यथा गुणैः सुशीलता-

কামন্দকী। বাবা! তোমার মত লোকের ভালবাসা পরিণামে ভালই হইয়া থাকে, আমিও সেই সেই কারণে তোমার মাননীয়; অতএব আমার অসমক্ষে এই সুমুখী মালতীর প্রতি তুমি সকল রকমে ভালবাসারূপ দয়া হইতে বিরত হইও না ॥১৬॥

(ক্ষ) (এই বলিয়া মাধবের চরণযুগলে পতিত হইতে ইচ্ছা করিলেন)।

(ক) মাধব। (বাধা দিয়া) কি আশ্চর্য্য! এই অনুরোধের প্রস্তাব যে স্নেহবশতঃ নিয়ম অতিক্রম করিতেছে।

(१) क्वचिदयं पाठो नास्ति। (२) निर्व्यूढसौहृदरसेति भिन्नः पाठः।

(३) कस्मिंश्चित् पुस्तके तु "मकरन्दः। भगवति! श्लाघ्यान्वयेति—" इति वाक्यव्यतिक्रमो दृश्यते।

काम । वत्स माधव ! ।

माधवः । आज्ञापय ।

विनयादिभिः उज्ज्वलेति निर्म्मलस्वरूपा च । हि यस्मात्, एतेषु श्लाघ्यान्वयत्वादिषु एकैकमेव श्लाघ्यान्वयत्वादिकं कारणं गरीयोऽनतिक्रमणीयं वशीकरणं परायत्तीकरणसाधनम् । विशेषतश्च युष्माकं जगन्माननीयायास्तवेत्यर्थः, एवम् ईदृशी निरतिशयवात्सल्यभागिनीति तात्पर्य्यम्, इति हेतोः, अथेति वाक्यान्तरारम्भे, किं ब्रवीमि मुखेन किं वदामि । श्लाघ्यान्वयत्वादिगुणवशात् विशेषतश्च तवापि वात्सल्यभागित्वाच्चिरमेवास्यां मया गाढ़ः प्रणयः करणीय इति भावः ।

अत्रापि गाढ़प्रणयविधानकार्य्यं प्रति श्लाघ्यान्वयत्वाद्यनेककारणोपन्यासात् समुच्चयो-ऽलङ्कारः । इतिशब्दस्य वारं वारमुपादानादनवीकृतत्वदोषः, किञ्च समुच्चयवाचकचकारानु-पादानान्न्यूनपदतादोषोऽपि, एतयोः परिजिहीर्षया 'श्लाघ्यान्वया च नयनोत्सवकारिणी च, निर्व्व्यूढ़सौहृदभरा च गुणोज्ज्वला च' इति पाठोऽङ्गीकरणीयः । न चैवमपि चकार-चतुष्टयोपादानात् स दोषस्तदवस्थ एवेति वाच्यम् "धिक् ताञ्च तञ्च मदनञ्च इमाञ्च माञ्च" इत्यादाविव अनेकचकारोपादाने सहृदयैस्तद्दोषानङ्गीकारात् सहृदयानामानन्दोद्रेकजनक-तयैव गुणदोषाभ्युपगमात् । तथा गुणकीर्त्तनं नाम नाट्यलक्षणम् । यथा दर्पणे—

"गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तनम् ।"

"इति स्वरूपे सान्निध्ये" इत्यादि हेमचन्द्रः ।

वसन्ततिलका वृत्तम् ॥१७॥

---

এই মালতীদেবী সদ্বংশজাতা, নয়নের আনন্দকারিণী, ইঁহার উপরে অত্যন্ত ভালবাসা জন্মিয়াছে এবং ইনি সমস্ত গুণে পরিপূর্ণ; সুতরাং ইঁহার এক একটী ধর্ম্মই গুরুতর বশ করিবার কারণ; বিশেষতঃ ইনি আপনার এইরূপ স্নেহের পাত্র; অতএব আপনার প্রস্তাবে আমি মুখে আর কি বলিব ॥১৭॥

কামন্দকী। বৎস! মাধব!।

মাধব। আদেশ করুন।

काम। स्वीक्रियतामियम् (१)। (ख)

माधवः। स्वीकरोमि (२)।

काम। वत्स माधव! वत्से मालति! (३)।

माधवः। आज्ञापय।

मालती। आणवेदु भअवदी। (ग)

काम। प्रेयो मित्रं, बन्धुता वा समग्रा
सर्वे कामाः शेवधिर्जीवितञ्च।
स्त्रीणां भर्त्ता, धर्म्मदाराश्च पुंसा-
मित्यन्योन्यं वत्सयोर्ज्ञातमस्तु ॥१८॥

(ग) आज्ञापयतु भगवती।

(ख) कामेति। इयं मालती स्वीक्रियतां त्वया भार्य्यारूपेण परिगृह्यताम्। एवञ्च "तुभ्यं प्रदीयते" इत्यनेनैव दानम्, अयन्तु स्वजनकीभूतप्रतिग्रहानुरोध इति ज्ञेयम्।
अवोल्लेखो नाम नाट्यालङ्कारः—"कार्य्यग्रहणमुल्लेखः" इति दर्पणलक्षणात्।
प्रेय इति। भर्त्ता पतिः स्त्रीणां प्रेयो मित्रं प्रियतमः सखा, समग्रा सर्वप्रकारा बन्धुता बन्धुसमूहः, वाशब्दः समुच्चये, सर्वे, काम्यन्त इति कामा अभिलाषविषयाः, शेवधिर्निधिः, किं बहुना, जीवितं जीवनञ्च। इति मालतीं प्रत्युक्तिः। तथा धर्म्मदारा धर्म्मभार्य्या

(ख) কামন্দকী। ইহাকে গ্রহণ কর।
মাধব। গ্রহণ করিলাম।
কামন্দকী। বৎস! মাধব! বৎসে! মালতি!।
মাধব। আজ্ঞা করুন।
(গ) মালতী। আপনি আদেশ করুন।

क्वचित् (१) (२) चिह्नितपाठौ न दृश्येते।
(३) तथा तत्र 'वत्स माधव!' इत्यपि पुनः पाठो नास्ति।

मक। अथकिम्। (घ)

लव। भगवति! (१) जधा तुम्हे आणावेध। (ङ)

च पुंसां पुरुषाणां प्रेयो मित्रम्, समग्रा बन्धुता वा, सर्वे कामाः शेवधिः, किं बहुना, जीवितञ्च। इयन्तु मुखं परावर्त्य माधवं प्रत्युक्तिः। इति इदम्, वत्सयोर्मालती-माधवयोर्युवयोः अन्योन्यं परस्परं ज्ञातं विदितमस्तु। तथा च अद्यारभ्य त्वया मालत्या प्रियतममित्रत्वेन, सर्वप्रकारबन्धुभावेन, सर्वाभिलषितप्राप्तिरूपेण धननिधिप्रकारेण, किं बहुना स्वकीयजीवनरूपेण च माधवो द्रष्टव्यः, तद्वदादरणीयश्च। त्वया माधवेनापि इतः-प्रभृति तेन तेन रूपेण मालती द्रष्टव्या, तद्वदादरणीया च इति भावः।

अत्रोभयगतप्रियमित्रत्वादिप्रकारकज्ञानस्य उभाभ्यां परस्परकरणादन्योन्यालङ्कारः, निरङ्गं केवलरूपकञ्चाङ्गमित्यनयोरङ्गाङ्गिभावेन सङ्करः। तथा उपदिष्टं नाम नाट्यलक्षणम्। यथा दर्पणे—"उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः।"

"निधिर्ना शेवधि"रित्यमरः।

बन्धुतेति "ग्रामजने"त्यादिना तल्। कामा इति कर्म्मणि घञ्। वत्सयोरिति "वर्त्तमानाधिकरणयोः शेषे" इति कर्त्तरि षष्ठी।

पतिपत्न्योः प्रियमित्रत्वादिज्ञानप्रमाणं ब्रह्मवैवर्त्तपुराणादौ द्रष्टव्यम्।

अस्यानुरूपः श्लोको यथा शाकुन्तले—"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्ति"मित्यादिः।

शालिनी वृत्तम्—"मात्तौ गौ चेच्छालिनी वेदलोकै"रिति लक्षणात्॥१८॥

(घ) मकेति। लज्जावशान्माधवस्य तूष्णीम्भावमवलोक्य मकरन्दः प्रतिनिधिभावेन कामन्दक्युपदिष्टमङ्गीकरोति अथकिमिति। अथकिमित्यकमेवाव्ययमङ्गीकारार्थे इत्युक्त-मेव।

---

कामन्दकी। স্ত্রীলোকের পক্ষে পতি এবং পুরুষের পক্ষে ধর্ম্মপত্নী, প্রিয়সুহৃৎ, সমস্তপ্রকার বন্ধু, সকল কামনার বিষয়, ধনের নিধি ও জীবন-স্বরূপ—ইহা তোমাদের পরস্পর বিদিত হউক॥১৮॥

(ঘ) মকরন্দ। হ্যাঁ।

---

(१) क्वचित् 'भगवति!' इति नास्ति।

काम। वत्स मकरन्द! अनेनैव वैवाहिकेन मालतीनेपथ्येनापवारितः प्रवर्त्तस्व परिणयायात्मनः। इति पटलकमर्पयति (१)। (च)

मक। यदाज्ञापयति भगवती, यावदितस्चित्रयवनिकामन्तर्धाय नेपथ्यं धारयामि। तथा करोति। (छ)

(ङ) भगवति! यथा यूयमाज्ञापयत।

(ङ) लवेति। मालत्या अपि तथैव तूष्णीम्भावात् लवङ्गिकाङ्गीकरोति भगवतीति।

(च) कामेति। वैवाहिकेन विवाहसंसृष्टेन राजप्रेषितेन, मालत्या नेपथ्येन वेशेन, अपवारितः तिरोहितः परैरनवगतमकरन्दभाव इत्यर्थः। प्रतारणापक्षे आत्मनो मालतीभावेन नन्दनेन सह परिणयाय, वास्तविकपक्षे तु मालतीवेशेन मन्दभाग्यं नन्दनं वञ्चयित्वा आत्मनः स्वस्यैव मदयन्तिकया सह परिणयायेत्यर्थः। पटलकं मालतीपरिच्छदम्।

"अथ पटलं पिटके च परिच्छदे।" इति मेदिनी।

अयमेव मकरन्दविवाहवृत्तान्तः पताका नाम। "व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते।" इति दर्पणलक्षणात्।

(छ) मकेति। इतो गत्वा, चित्रयवनिकां मन्दिराभ्यन्तरैकपार्श्वविलम्बिनीं विचित्रतिरस्करिणीम्, अन्तर्धाय मम एतासां मध्ये निधाय, चित्रयवनिकान्तराले स्थित्वेत्यर्थः। अन्यथा आसां स्त्रीणामन्तिके प्रायनग्नत्वासम्भवेन सम्यक् परिधानासम्भव इति भावः।

(ঙ) লবঙ্গিকা। ভগবতি! আপনি যেমন আদেশ করেন।

(চ) কামন্দকী। বৎস! মকরন্দ! মালতীর জন্য রাজপ্রদত্ত এই সকল সাজ-পোষাকে আবৃত হইয়া নিজের বিবাহের জন্য প্রস্তুত হও। (এই বলিয়া সাজ-পোষাক দিলেন)।

(ছ) মকরন্দ। আপনি যাহা আদেশ করেন। এখান হইতে এই

(१)···त्वमनेनैव···प्रसाधितः परिणाययात्मानमिति पाठान्तरम्।

माधवः। भगवति! शुभमपि बह्वनर्थक-(१) मतिसङ्कट-मेतद्वयस्यस्य। (ज)

काम। आः, (२) कस्त्वमस्यां चिन्तायाम्?। (झ)

माधवः। एवं भगवत्येव जानाति। (ञ)

प्रविश्य मकरन्दः। विहसन्। एषोऽस्मि मालती संवृत्तः (३)। (ट)

सर्वे सविस्मयं सकौतुकञ्च पश्यन्ति (४)।

(ज) माधव इति। एतत् मालतीवेशेन नन्दनवञ्चनपूर्वकमदयन्तिकापरिणयनम्, शुभमपि सत् बह्वनर्थकं बहुविपत्सङ्कुलम्, अतिसङ्कटं सुदुष्करम। सुतरामितो मे महती विपदाशङ्का विद्यत इति भावः। एतेनासम्यक्तया मन्यमाने तव कौशले माधवस्य वैमत्यं व्यज्यते।

(झ) कामेति। नाधिकारीत्यर्थः। युष्माकं सर्वविधमङ्गलामङ्गलानां मय्येव न्यस्तत्वात्, मयैव च विपदागमोपायोद्भावनात् नास्ति ते कापि विपदाशङ्केति भावः।

अत्राक्षमा नाम नाट्यालङ्कारः—"अक्षमा सा परिभवः स्वल्पोऽपि नाभिसह्यते।" इति दर्पणलक्षणात्।

(ञ) माधव इति। एवम् अनेन व्यापारेण मङ्गलममङ्गलं वा, भगवत्येव न त्वह-मित्यर्थः। एतेन ससंशया सम्मतिः सूच्यते।

বিচিত্র পরদার অন্তরালে যাইয়া সাজ-পোষাকগুলি পড়ি। (তাহা করিলেন।)

(জ) মাধব। ভগবতি! বয়স্যের পক্ষে ইহা মঙ্গলের হইলেও অত্যন্ত বিপৎসঙ্কুল ও অত্যন্ত দুষ্কর।

(ঝ) কামন্দকী। আঃ! এ চিন্তা করিতে তুমি কে?।

(ঞ) মাধব। ইহাতে মঙ্গল বা অমঙ্গল তাহা আপনিই জানেন।

(१) सुलभमपि बह्वनर्थकम्, सुलभबह्वनर्थम् इति पाठभेदौ। (२) आः इत्यपि क्वचिन्नास्ति। (३) वयस्य! मालत्यस्मि इति भिन्नः पाठः। (४) सर्वे सकौतुकं पश्यन्ति इत्यपि पाठः।

মাধবः । মকরন্দং পরিষ্বজ্য সোপহাসম্ (১) । ভগবতি ! কৃতপুণ্য এব নন্দনः যः প্রিয়ামীদৃশীং (২) মনসা মুহূর্ত্তমপি কাময়িষ্যতে (৩) । (ঠ)

কাম । বৎসৌ মালতীমাধবৌ ! ইতো নির্গত্য বৃক্ষগহনেন গম্যতামুদ্বাহমঙ্গলার্থম্ অস্মদ্বিহারিকায়াः (৪) পশ্চাদুদ্যানবাটः, সুবিহিতঞ্চ তত্রৈব বৈবাহিকং দ্রব্যজাতমবলোকিতয়া । ভূয়শ্চ—(ড)

(ট) প্রবিশ্যেতি । অত্র বিগূঢ়ং নাম লাস্যাঙ্গম্, কপটং নাম নাট্যালঙ্কারশ্চ । যথা দর্পণে—

"স্ত্রীবেশধারিণাং পুংসাং নাট্যং শ্লক্ষ্ণং বিগূঢ়কম্ ।"

"কপটং মায়যা যত্র রূপমন্যদ্বিভাব্যতে ।"

(ঠ) মাধব ইতি । ঈদৃশীং পরমসুন্দরীং মনসেত্যনেন 'ন বপুষা' ইতি সূচ্যতে । কাময়িষ্যতে "নাল্পেন তপসা লভ্যः সুন্দরস্ত্রীসমাগমः" ইত্যুক্তেরিতি ভাবः । এতেন মকরন্দস্যাতীববেশবিন্যাসনৈপুণ্যং ব্যজ্যতে ।

(ট) মকরন্দ প্রবেশ করিয়া। (হাসিতে হাসিতে) এই আমি মালতী হইয়াছি।

(সকলে বিস্ময় ও কৌতুকের সহিত দেখিতে লাগিল)।

(ঠ) মাধব। (মকরন্দকে আলিঙ্গন করিয়া উপহাসের সহিত) ভগবতি! নন্দন পূর্ব্বে পুণ্যই করিয়াছিল, যে মুহূর্ত্তের জন্যও, মনে মনেও, এই রকম প্রিয়তমাকে কামনা করিতে পারিবে।

(১) গাঢ়ং মকরন্দং পরিষ্বজ্য ইতি ক্বচিৎ পাঠः । (২) যতः প্রিয়বয়স্যমীদৃশং ইতি পাঠোঽপি দৃশ্যতে । (৩) কাময়িষ্যতি ইতি বা পাঠः । (৪) অস্তি তত্র দীর্ঘিকায়াः ইতি পাঠান্তরম্ ।

··गाढ़ोत्कण्ठकठोर-केरलवधू-गण्डाच्छपाण्डुच्छदैः (१)
ताम्बूलीपटलैः पिनद्धफलित-(२) व्यानम्रपूगद्रुमाः ।
कक्कोलीफलजग्धि-(३) मुग्ध-विकिर-व्याहारिणस्तद्भुवो
भागाः प्रेङ्खितमातुलुङ्गवृतयः प्रेयो विधास्यन्ति वाम् ॥१८॥

(ङ) कामेति । उद्वाहमङ्गलार्थम् औद्वाहिकमङ्गलाचरणार्थम् । तदाचरणन्तु देशभेदेन भिन्नं प्रायेण स्त्रीजनविधेयं तत्तद्देशीयैः स्वयमेवानुसन्धेयम् । विहारो बौद्धाश्रमः, क्षुद्रो विहार इति विहारिका तस्याः । उद्यानवाट उपवनप्रदेशः । सुविहित-मायोजितं तत्रैव उद्यानवाट एव । द्रव्यजातं गन्धादिद्रव्यसमूहः, अवलोकितया तदाख्यया मम शिष्यया । भूयश्च पुनश्च ।

गाढ़ोत्कण्ठेति । गाढ़ा सातिशया उत्कण्ठा प्रियविच्छेदेनौत्सुक्यं यासां ता गाढ़ोत्-कण्ठाः, कठोराः प्रौढ़ाः, याः केरलवध्वः केरलदेशीयाः स्त्रियः तासां गण्डवत् कपोल-वत् अच्छपाण्डवः निर्म्मलपाण्डुवर्णाः छदाः पत्राणि येषां तैः, ताम्बूलीपटलैः ताम्बूललता-समूहैः, पिनद्धाः परिवेष्टिताः, फलिताः फलवन्तः, अतएव व्यानम्राः फलभारावनता पूगद्रुमा गुवाकवृक्षा येषु ते । कक्कोलीफलानां कोलकफलानां ( काँकला इति प्रसिद्धानां ) जग्धया भक्षणेन मुग्धा मनोहरा विकिराणां पक्षिणां व्याहारा रवाः सन्त्येषामिति ते तथोक्ताः.

(ঙ) কামন্দকী। বৎসে! মালতি! বৎস! মাধব! তোমরা এ স্থান হইতে নির্গত হইয়া, বিবাহের মঙ্গলাচরণের নিমিত্ত এই বনের ভিতর দিয়া, আমাদের বৌদ্ধমঠের পশ্চাদ্ভাগের উদ্যানে চলিয়া যাও; অবলোকিতা সেইখানেই বিবাহের সমস্ত বস্তু সুন্দর আয়োজন করিয়া রাখিয়াছে। আবার—

(१)···गण्डावपाण्डुच्छदैरिति पाठभेदः ।

(२) पिनद्धफलिन···इत्यपि पाठः ।

(३) कक्कोलीफलजग्धि, कक्कोलीफलजग्ध इति पाठभेदौ ।

गत्वा च (१) तत्रैव मदयन्तिकामकरन्दयोर्यावदागमनं (२) स्थातव्यम् । (ढ)

तथा प्रेङ्खिता वायुना सञ्चालिता मातुलुङ्गानां छोलङ्गवृक्षाणां वृतिर्वेष्टनं येषु ते, तथाभूताः तद्भुवो भागाः बकुलवीथिकापश्चाद्वर्त्तिनोद्यानभूमेः प्रदेशाः, वां युवयोर्मालतीमाधवयोः प्रेयः प्रीतिं विधास्यन्ति करिष्यन्ति ।

अत्र प्रथमचरणे समासगतोपमालङ्कारः, तथा एककककाराणामसकृत् साम्याद्वृत्त्यनुप्रासः, गण्डपाण्डु ति व्यञ्जनसङ्घस्यानेकधा सकृत्साम्यात् छेकानुप्रासश्च, इत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः । सम्भोगसाधनाऽयत्नसिद्धताम्बूलपूगलाभः, विहङ्गकोलाहलेन स्वकीयालापस्य परैरश्रवणम्, मातुलुङ्गवृतिसत्त्वादन्येनात्मनोरदर्शनञ्च व्यज्यत इति वस्तुना वस्तुध्वनिः ।

पाण्डुत्वातिशयद्योतनार्थानि गाढोत्कण्ठ-कठोर-केरलपदानि । ननु "न कर्म्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्यभिधानात् कर्म्मधारयपदस्य च बहुव्रीहीतरसमासपरत्वात् कथं 'व्याहारिण' इत्यत्र मत्वर्थीय इन्प्रत्ययः, सत्यम्, यत्र निन्दाप्रशंसातिशयाद्यर्थो विवक्ष्यते तत्र मत्वयर्थीप्रत्ययो भवत्येव, बहुव्रीहिणा तत्तदर्थानां प्रतिपादयितुमशक्यत्वात् मत्वर्थीयप्रत्ययमन्तरेण तादृशार्थप्रत्यायनोपायाभावात् ईदृगाशयज्ञापनायैव 'बहुव्रीहिश्चेदर्थप्रतिपत्तिकर' इत्यभिधानाच्च । अत्र त्वतिशयार्थे इन्प्रत्यय इति ध्येयम् ।

शार्दूलविक्रीड़ितं वृत्तम् ॥१९॥

যেস্থানে ফলভারে অবনত কতকগুলি গুবাক বৃক্ষ আছে, সেগুলিকে অত্যন্ত উৎকণ্ঠিত পরিণতযৌবন কেরলদেশীয় রমণীগণের গণ্ডদেশের ন্যায় নির্ম্মল ও পাণ্ডুরবর্ণ-পত্রসমন্বিত তাম্বূললতায় পরিবেষ্টন করিয়া রাখিয়াছে, এবং যেস্থানে পক্ষিগণ কাকুলা ফল ভক্ষণ করিয়া সুন্দর রব করিতেছে, আর যেস্থান ছোলঙ্গের বেড়া আছে, তাহাকে বায়ু আন্দোলিত করিতেছে, সেইস্থান তোমাদের আনন্দ বিধান করিবে ॥১৯॥

(१) अतः इत्यपि पाठः ।

(२) मकरन्दमदयन्तिकागमनं यावत् इति क्वचित् पाठः ।

माधवः। सहर्षम्। कल्याणान्तरावतंसा हि (१) कल्याण-सम्पदुपरिष्टाद्भवतु (२)। (ण)

कल। दिट्ठिआ इदं वि पिअं (३) णो हविस्सदि ?। (त)

काम। कथं सन्देहो भवतः (४)। (थ)

(त) दिष्ट्या इदमपि प्रियं नो भविष्यति ?।

(ढ) गत्वेति। तथा च तव युवयोर्मदयन्तिकामकरन्दयोश्च युगपदेव विवाहो निष्पादयितव्य इत्यभिप्रायः।

(ण) माधव इति। कल्याणसम्पत् मालतीप्राप्तिरूपा ममैषा मङ्गलसम्पत्तिः, उपरिष्टात् परस्मिन् काले, कल्याणान्तरं मकरन्देन मदयन्तिकालाभरूपमपरं मङ्गलम् अवतंसोऽलङ्कारो यस्याः सा, हि निश्चितं भवतु।

(त) कलेति। इदमपि मकरन्देन मदयन्तिकालाभरूपमपि नोऽस्माकं प्रियं प्रीतिकरं कार्य्यं भविष्यति किमिति काकुः।

(थ) कामेति। मत्कौशलादिदमप्यवश्यमेव भविष्यतीति भावः।

(ঢ) যাইয়া, যে পর্য্যন্ত মদয়ন্তিকা ও মকরন্দের আগমন হয়, সেপর্য্যন্ত সেইখানেই থাকিবে।

(ণ) মাধব। ( হর্ষের সহিত ) আমার এই মঙ্গলসম্পদ, ইহার পরে অন্য মঙ্গলসম্পদে অলঙ্কৃত হউক।

(ত) কলহংস। ভাগ্যের ফলে এই প্রীতিকর ঘটনাও কি আমাদের হইবে ?।

(থ) কামন্দকী। তোমার সন্দেহ হইতেছে কেন ?।

(१) क्वचित् हिशब्दो नास्ति।

(२) भवति इति पाठान्तरम्।

(३) पिअं इति क्वचिन्नास्ति।

(४) माधवः। कथं सन्देह एवात्रभवत इति पुस्तकान्तरे पाठः।

लव । सुदं पिअसहीए ?। (द)

काम । वत्स ! मकरन्द ! भद्रे ! (१) लवङ्गिके ! इत: (२) प्रतिष्ठामहे । (ध)

मालती । सहि ! तुए वि गन्दव्वं ?। (न)

लव । विहस्य । सम्पदं क्खु अह्मे एत्थ ओसरह्म (३) । (प)

(द) श्रुतं प्रियसख्या ?।

(न) सखि ! त्वयापि गन्तव्यम् ?।

(प) साम्प्रतं खलु वयमत्रापसराम: ।

(द) लवेति । कामन्दक्या गमनादेशे कृतेऽपि तथैवावस्थितिमवलोक्य त्वरयितुमाह श्रुतमिति । अत्रापि काकु:, श्रुतम् ? भगवत्या स्वकीयविहारिकापश्चाद्वस्थितोद्यानगमनाय मदयन्तिकामकरन्दागमनप्रतीक्षणाय च यदुक्तं तच्छ्रुतं किमित्यर्थ: । तदेवानुष्ठीयतामिति भाव: ।

(ध) कामेति । भद्रे ! साधुस्वभावे ! । प्रतिष्ठामहे गच्छाम: अन्यथा बहुकालावस्थाने यद्यन्यो जानीयादिति भाव: ।

(न) मालतीति । गन्तव्यम् ? मामेकाकिनीमपहाय गन्तव्यं किमित्यर्थ: । नैतदुचितमिति भाव: ।

(प) लवेति । भीषणसङ्कटजीवनं रचितवत: समीपेऽप्येकाकिनीत्यभिप्रायप्रकाशा-

(द) লবঙ্গিকা। প্রিয়সখি ! শুনিলে ?।

(ধ) কামন্দকী। বৎস ! মকরন্দ ! ভদ্রে ! লবঙ্গিকে ! (এস) আমরা এস্থান হইতে চলিয়া যাই।

(ন) মালতী। সখি ! তুমিও কি যাইবে ?।

(१) वत्से इति पाठोऽपि दृश्यते । (२) इत इत इति द्विरुक्ति: क्वचित् ।

(३) तुवरामो इति पाठभेद: ।

इति निष्क्रान्ताः कामन्दकी-लवङ्गिका-मकरन्दाः।

माधवः। अयमहमिदानीम्—

आमूल-कण्टकित-कोमल-बाहुनाल-
मार्द्राङ्गुलीदलमनङ्गनिदाघतप्तः।
अस्याः करेण करमाकलयामि कान्त-
मारक्तपङ्कजमिव द्विरदः सरस्याः ॥२०॥

विहसितं कृत्वा। अत्रास्मिन्नेव समये, अपसराम इतो गच्छामः। अत्राप्येन युवयोरभिप्रेतसम्पादनार्थमिति भावः।

आमूलेति। अनङ्गो मदनो निदाघो ग्रीष्म इव तेन तप्तोऽयमहं करेण पाणिना शुण्डया च, आमूलम् अंसदेशात् अग्रदेशाद्यावधि, कण्टकितः कामावेशात् रोमाञ्चितः स्वभावात् सञ्जातकण्टकश्च, बाहुर्भुजो नालं नालदण्ड इव यस्य तम्, तथा, आर्द्राः स्वेदजलेन स्तिमिताः तरङ्गजलेन स्तिमितानि च अङ्गुल्यो दलानि पर्णानीव यस्य तम्, तथा, कान्तं मनोरमम्, अस्या मालत्याः करं पाणिम्, सरस्याः पद्माकरस्य आरक्तपङ्कजम् ईषल्लोहितपद्मं द्विरदो हस्तीव आकलयामि गृह्णामि। सानन्दोच्छ्वासोक्तिरियम्।

अत्रारक्तपङ्कजमिवेत्युपमानुसारेण सर्वत्रोपमितसमासस्यौचित्यादुपमालङ्कार एव न तु रूपकं तत्साधकाभावादिति ध्येयम्।

"रोमाञ्चे क्षुद्रशत्रौ च द्रुमाङ्गे कण्टकोऽस्त्रियाम्"मिति त्रिकाण्डशेषः।

वसन्ततिलका वृत्तम् ॥२०॥

---

(প) লবঙ্গিকা। (হাস্য করিয়া) আমরা এখন এস্থান হইতে সরিয়া যাইব।

(ইহার পর কামন্দকী, লবঙ্গিকা ও মকরন্দের প্রস্থান)।

মাধব। যাহার নাল, মূল হইতে কণ্টকিত অথ চ কোমল এবং যাহার দলসমূহ জলে আর্দ্র থাকে, সেইরূপ মনোহর ও আরক্তবর্ণ

ইতি নিষ্ক্রান্তাঃ সর্ব্বে। (ফ)

# ইতি মালতীমাধবে মালত্যুপহারো নাম ষষ্ঠোঽঙ্কঃ (১)। (ব)

(ফ) ইতীতি। সর্ব্বে মালতী-মাধব-কলহংসাঃ।

(ব) ইতীতি। পাণিগ্রহণানিষ্পত্তেঃ সাঙ্গবিবাহনিষ্পত্ত্যভাবাৎ বিবাহ ইতি নামাসম্ভবেন নিষ্পন্নয়োরপি চ দানপ্রতিগ্রহয়োর্দানস্যৈব প্রাধান্যাৎ মালত্যুপহারো নামেতি বোধ্যম্।

ইতি মহামহোপাধ্যায়-শ্রীহরিদাসসিদ্ধান্তবাগীশভট্টাচার্য্যবিরচিতায়াং মালতীমাধবটীকায়াং ভাবমনোহরায়াং ষষ্ঠাঙ্কবিবরণং সমাপ্তম্ ॥০॥

সরোবরের পদ্মটীকে যেমন গ্রীষ্মসন্তপ্ত হস্তী শুণ্ডদ্বারা গ্রহণ করে, কামসন্তাপে সন্তপ্ত এই আমিও এখন স্কন্ধদেশ হইতে রোমাঞ্চিত অথ চ কোমল বাহুসমন্বিত এবং ঘর্ম্মজলে আর্দ্র-অঙ্গুলীসম্পন্ন মনোহর ও আরক্তবর্ণ মালতীদেবীর হস্ত, হস্তদ্বারা গ্রহণ করিব ॥২০॥

(ফ) ( ইহার পর সকলের প্রস্থান। )

(ব) মালতী-উপহারনামে ষষ্ঠ অঙ্ক সমাপ্ত।

---

(১) বীথিকাবিবাহো নাম ইতি ক্বচিৎ পাঠঃ, ক্বচিত্তু 'ষষ্ঠোঽঙ্কঃ' ইতিমাত্রঃ পাঠঃ।

# सप्तमोऽङ्कः।

-०:*:०-

ततः प्रविशति बुद्धरक्षिता। (क)

बुद्ध। अम्महे! सुसिलिट्ट-मालदी-णेवत्थ-लच्छी-विप्पलद्ध-णन्दण-किद-करग्गहो (१) अमच्चभूरिवसुमन्दिरे भअवदी-वअण-संविहाणेहिं (२) खेमेण गोवाइदो मअरन्दो। अज्ज

(ख) अहो! सुश्लिष्टमालतीनेपथ्यलक्ष्मी-विप्रलब्ध-नन्दन-कृत-करग्रहोऽमात्य-भूरिवसुमन्दिरे भगवतीवचन-संविधानैः क्षेमेण गोपायितो मकरन्दः। अद्य वयमपि

(क) तत इति। "नियुक्तैव तत्र मया प्रियसखी बुद्धरक्षिता" इत्यनेन पूर्वमेवास्याः प्रवेशः सूचितः।

(ख) बुद्धेति। अम्महे इति हर्षविस्मयार्थकमव्ययम्। मकरन्देन मालती-वेशग्रहणपूर्वक-विवाहसम्पादनात् हर्षो विषादश्च। सुश्लिष्टं मकरन्दस्य मालतीसमान-वर्णाकृतिमत्त्वात् निपुणभावेन निक्षणमञ्जुलादिविहिताङ्गरागत्वाच्च सुसम्मिलितं यत् मालत्या नेपथ्यं वेशः, तस्य लक्ष्म्या शोभया विप्रलब्धेन वञ्चितेन नन्दनेन कृतो मालतीज्ञानेन सम्पादितः करग्रहः पाणिग्रहणं यस्य सः तथोक्तो मकरन्दः, भगवत्याः कामन्दक्या वचनैः 'नगरदेवतामाराध्य समागतेयं मालती' इत्यादिरूपैर्वाक्यैः, संविधानैः

(क) তদনন্তর বুদ্ধরক্ষিতার প্রবেশ।

(খ) বুদ্ধরক্ষিতা। ভাল! মালতীর সাজ-পোষাকটী মকরন্দের বেশ্ খাটিয়াছিল, তাহার সৌন্দর্য্যে প্রতারিত হইয়া নন্দন, মন্ত্রী ভূরিবসুর গৃহে মকরন্দের পাণিগ্রহণ করিয়াছেন; এদিকে ভগবতী কামন্দকীর

(१) णन्दणकरग्गहो इति पाठान्तरम्।

(२) भअवदीए संविहाणेण इत्यपि पाठः।

अम्मो वि (१) णन्दणावासं उवगदा। तदो (२) भअवदी णन्दणं आपुच्छिअ णिआवसहं गदा (३)। अअं अ णववहू-घरप्पवेस-विरइदाकालकोमुदीमहूसव-प्पमत्त-(४) पज्जाउला-सेस-परिअणो पदोसो अणुउलइस्सदि अज्ज णो ववसिदं।

नन्दनावासमुपगता। ततो भगवती नन्दनमापृच्छ्य निजावसथं गता। अयञ्च नववधू-गृहप्रवेश-विरचिताकालकौमुदीमहोत्सव-प्रमत्त-पर्य्याकुलाशेष-परिजनः प्रदोषोऽनुकूल-

विवाहदिवसीयकन्यासमुचित-तत्तदाचारसम्पादनेन चेमेण कुशलेन निरुपद्रवेण गोपायितो लोकाद्याचारात् परिरक्षितः। आपृच्छ्य आभाष्य स्वाश्रमगमनार्थं सम्भाषणं कृत्वेत्यर्थः। निजावसथं स्वकीयाश्रमम्। कौमुदी कार्त्तिकी पूर्णिमा तस्यामनुष्ठेयो यो महोत्सवः स कौमुदीमहोत्सवः। नववध्वा गृहप्रवेशात् विरचितेन सम्पादितेन अकाले तत्कालव्यतिरिक्ते ग्रीष्मे, कौमुदीमहोत्सवेन प्रमत्ताः व्यापारान्तरेऽनवधानाः पर्य्याकुला व्यतिव्यस्ता अशेषाः सकलाः परिजना यस्मिन् स तादृशः प्रदोषो रजनीमुखम्, अद्य नोऽस्माकं व्यवसितम् अध्यवसितं मदयन्तिकामकरन्दयोः कुशलेन निष्क्रमणादिकम् अनुकूलयिष्यति समीहित-सिद्धिं प्रति साधकीकरिष्यति। कौमुदीमहोत्सवेन प्रमत्ततया पर्य्याकुलतया च परि-जनानां तन्निष्क्रमणादौ सम्यगवधानदानासम्भवादिति भावः।

বাক্যে ও ব্যবহারে মঙ্গলে মঙ্গলেই মকরন্দকে গোপন করিতে পারিয়াছি। আজ আমরা সকলেই নন্দনের বাড়ীতে আসিয়াছি। তাহার পর ভগবতী কামন্দকী নন্দনকে জিজ্ঞাসা করিয়া নিজের বাড়ী চলিয়া গিয়াছেন। এই প্রদোষকালে নববধূ গৃহে প্রবেশ করিবে বলিয়া অকালে কৌমুদীমহোৎসবের অনুষ্ঠান করা হইয়াছে, তাহাতে সমস্ত পরিজনই অসাবধান ও ব্যতিব্যস্ত হইয়া পড়িয়াছে; সুতরাং এই

(१) 'वि' इति क्वचिन्नास्ति। (२) अदो इति पाठभेदः।

(३) गदा आवराहं इति पाठोऽपि दृश्यते।

(४)···प्पउत्ति···इति क्वचित् पाठः।

सम्मद्दं अ (१) तुवरन्तकामो कामेदुं सपादपड़णं (२) अब्भत्थिअ पुणो वलामोड़िअ अहिद्दवन्तो मअरन्देण णिट्ठुरं पड़िहदो जामादा। तदो सो क्खु अधिअ-वेलक्ख-खलन्त-अक्खरो सरोस-णिब्भर-दुक्खिदो मदप्पप्फुरन्त-णअणो "ण मे

यिष्यति अद्य नौ व्यवसितम्। साम्प्रतञ्च त्वरमाणकामः कामयितुं सपादपतनमभ्यर्थ्य पुनर्बलात्कारेणाभिद्रवन् मकरन्देन निष्ठुरं प्रतिहतो जामाता। ततः स खल्वधिकवैलक्ष्य-स्खलदक्षरः सरोषनिर्भरदुःखितो मदप्रस्फुरन्नयनो "न मे साम्प्रतं त्वया कौमारबन्धक्या

त्वरमाणकामः नववधूसम्भोगौत्सुक्यजनितमदनावेगः। सपादपतनं यथा तथा अभ्यर्थ्य सुरतं याचित्वा, अननुमोदिताभ्यर्थनः, सन्नित्यर्थः बलात्कारेण बलेन अभिद्रवन् आक्रामन् निष्ठुरं यथा तथा जामाता वरो नन्दनः प्रतिहतः पादेन ताड़ितः। स नन्दनः। अधिकेन सातिशयेन, वैलक्ष्येण अप्रतिभतया नववध्वा एव सहसाद्भुतकार्य्यदर्शनात् किङ्कर्त्तव्यता-विमूढतयेत्यर्थः स्खलदक्षरो विकलवचनः, सरोषश्चासौ निर्भरदुःखितः सञ्जातभृशदुःखश्चेति सः, मदेन क्रोधमत्ततया प्रस्फुरन्तौ भृशस्पन्दमाने नयने यस्य तादृशः सन्। कौमारि

প্রদোষকাল আজ আমাদের চেষ্টার আনুকূল্য করিবে। কামের আবেগে নন্দন, (মালতীরূপধারী মকরন্দের) সহবাস করিবার জন্য তাহার চরণে পড়িয়া প্রার্থনা করিয়াছিলেন। (কিন্তু মালতীরূপী মকরন্দ তাহাতে অসম্মত হওয়ায় আবার নন্দন বলপূর্ব্বক আক্রমণ করিতে গিয়াছিলেন;) তখন মকরন্দ সেই স্বামী নন্দনকে নিষ্ঠুরভাবে পদাঘাত করিয়াছেন; তাহাতে অত্যন্ত অপ্রতিভ হওয়ায় নন্দনের বাক্য স্খলিত হইতেছিল, তিনি অত্যন্ত ক্রুদ্ধ ও দুঃখিত হইয়াছিলেন এবং ক্রোধের মত্ততায় তাঁহার নয়নযুগল ঘুরিতেছিল; এই অবস্থায় তিনি "তুই

(१) क्वचित् 'अ' इति नास्ति।

(२)···कामिणिं कामेदुं बहुसो सपादवन्दणं···इति पाठान्तरम्।

सम्पदं तुए कोमारवन्धईए (१) पओअणं" त्ति ससवहं पइज्ज' काउण वासभवणादो णिग्गदो त्ति (२)। एदिणा पसङ्गेण मदअन्तिअं आणीअ मअरन्देण सह संजोअइस्सं। इति निष्क्रान्ता। (ख)

## प्रवेशकः। (ग)

ततः प्रविशति शय्यागतो मालतीवेशो (३) मकरन्दो लवङ्गिका च। (घ)

प्रयोजनम्" इति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गत इति। एतेन प्रसङ्गेन मदयन्तिकामानीय मकरन्देन सह संयोजयिष्ये।

कन्यावस्थायामेव बन्धकी असती तया। असतीं विना ईदृशस्वभावासम्भवादिति भावः। शपथोऽत्र गालिः तत्सहितः यथा तथा। एतेन प्रसङ्गेन मालत्याः प्रतिकूलतानिरसन-प्रस्तावेन।

"पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी।" इत्यमरः। "शपथः (पुं) गालिः।" इति शब्दकल्पद्रुमः।

(ग) प्रेति। निर्गत इत्यनेन वृत्तकथांशस्य, संयोजयिष्ये इत्यनेन च वर्णिष्यमाण-कथांशस्य निदर्शनं प्रत्येतव्यम्।

(घ) तत इति। शय्यागतो वासभवने सम्भोगार्थरचित-शय्यास्थितः।

অবিবাহিত অবস্থায়ই বেশ্যা হইয়াছিস্; সুতরাং এখন তোরদ্বারা আমার কোন প্রয়োজন নাই" এইরূপ গালির সহিত প্রতিজ্ঞা করিয়া বাসগৃহ হইতে নির্গত হইয়া গিয়াছেন। এই প্রসঙ্গে মদয়ন্তিকাকে আনিয়া মকরন্দের সহিত যোগ করাইয়া দিব। ( এই বলিয়া প্রস্থান করিল )।

(গ) প্রবেশক।

(१) सीध वेल्लक्क-रीसावेस-खलन्त-अक्खरी पीडइद-णअण-प्पप फुरन्त-वअणी-कोमारबन्धईए इति पाठभेदः।

(२) 'त्ति' इति क्वचिन्नास्ति। (३) मालतीवेश इति पाठः क्वचिन्नास्ति।

मक । लवङ्गिके ! अपि नाम बुद्धरक्षितासंक्रान्ता भगवती-नीतिर्विजेष्यते (१) । (ङ)

लव । को सन्देहो एत्थ महाणुभाअस्स (२) । किं बहुणा, जह एसो मञ्जीरसद्दो सुणीअदि, (३) तहा जाणामि तेण व्वव-देसेण आणीदा बुद्धरक्खिदाए मदअन्तिआ त्ति । ता उत्तरीआव-वारिदो पसुत्तलक्खणो चिट्ठ । (च)

(च) कः सन्देहोऽत्र महानुभावस्य । किं बहुना, यथैष मञ्जीरशब्दः श्रूयते, तथा जानामि तेन व्यपदेशेन आनीता बुद्धरक्षितया मदयन्तिकेति । तदुत्तरीयापवारितः प्रसुप्तलक्षणस्तिष्ठ ।

(ङ) मकेति । अपिः प्रश्ने । बुद्धरक्षितायां संक्रान्ता सञ्चरिता भगवत्यैव विन्यस्ता, भगवत्या नीतिः कौशलम् अपि विजेष्यते उत्कर्षेण वर्त्तिष्यते किम्, मम मदयन्तिकालाभरूपं कार्य्यं साधयितुं शक्ष्यति किमित्यर्थः ।

(च) लवेति । मञ्जीरशब्दो नूपुरनिनादः । तेन व्यपदेशेन मालत्याः प्रबोधन-च्छलेन । तस्मात् उत्तरीयेण प्रावारकेण अपवारित आवृतदेहः, प्रसुप्तलक्षणो निद्रितस्वरूपः ।

(घ) তাহার পর মালতীবেশধারী শয্যাশায়ী মকরন্দের ও লবঙ্গিকার প্রবেশ ।

(ঙ) মকরন্দ । লবঙ্গিকে ! ভগবতী কামন্দকীর নীতি বুদ্ধরক্ষিতার উপরে সংক্রান্ত হইয়াছিল, তাহা এখন কার্য্য সাধন করিতে পারিবে কি ? ।

(চ) লবঙ্গিকা । এ বিষয়ে মহাশয়ের সন্দেহ কি ? । বেশী বলিবার প্রয়োজন নাই ; যেহেতু এই নূপুরের শব্দ শুনিতেছি, তাহাতে আমি বুঝিতেছি যে, বুদ্ধরক্ষিতা সেই ছলেই মদয়ন্তিকাকে আনিয়াছে । অতএব উত্তরীয় বস্ত্রে আবৃত হইয়া নিদ্রিতের মত হইয়া থাকুন ।

(१) विपर्य्येष्यति इति पाठान्तरम् । (२) को सन्देहो महाभाअस्स इति भिन्नः पाठः । (३) क्वचित् 'सुणीअदि' इति पाठो नास्ति ।

मकरन्दस्तथा करोति।

ततः प्रविशति मदयन्तिका बुद्धरक्षिता च।

मद। सहि! सच्चं ज्जेव परिकोविदो मे भादा मालदीए?। (छ)

बुद्ध। अधइं। (ज)

मद। अहो अच्चाहिदं। ता एहि वामसोलं मालदीं णिव्भच्छेह्म। इति परिक्रामतः। (झ)

(छ) सखि! सत्यमेव परिकोपितो मे भ्राता मालत्या?।

(ज) अथकिम्।

(झ) अहो अत्याहितम्। तदेहि वामशीलां मालतीं निर्भर्त्सयावः।

(छ) मदेति। अत्र स्वरवैकृतेन प्रश्नो व्यज्यते।

(झ) मदेति। अत्याहितं महाभीतिः। उपस्थितमिति शेषः। मालत्या ईदृश-दुराचरणेनातीवकोपितो मे भ्राता किमिदानीं व्यवस्येत् तदनिश्चयादिति भावः। वामशीलां भर्त्तारं प्रति प्रतिकूलस्वभावाम्, निर्भर्त्सयावः तस्मिन्नतीवान्याय्याचरणात् तिरस्कुर्वः। अनुकूलयितुमिति भावः।

(মকরন্দ তাহাই করিলেন)।

তাহার পর মদয়ন্তিকা ও বুদ্ধরক্ষিতার প্রবেশ।

(ছ) মদয়ন্তিকা। সখি! সত্যই কি মালতী আমার ভাইকে চটাইয়া দিয়াছে?।

(জ) বুদ্ধরক্ষিতা। হ্যাঁ।

(ঝ) মদয়ন্তিকা। বড়ই ভয়ের কারণ ত। অতএব আইস, প্রতিকূলস্বভাবা মালতীকে ভর্ৎসনা করি। (এই বলিয়া উভয়ে পদক্ষেপ করিতে লাগিল)।

बुद्ध। इदं वासभवणदुवारं (१)। इति (२) प्रविशतः। (ञ)

मद। सहि! लवङ्गिए! जाणीअदि पसुत्ता दे पिअसही ण वेत्ति? (३)। (ट)

लव। सहि! (४) मा णं पड़िबोधेहि। जदो (५) एसा चिरं दुम्मणाअन्ती दाणिं ज्जेव ईस मत्ते पसुत्ते त्ति। अदो सणिअं इध ज्जेव सअणद्धम्मि उवविस (६)। (ठ)

(ञ) इदं वासभवनद्वारम्।

(ट) सखि! लवङ्गिके! ज्ञायते प्रसुप्ता ते प्रियसखी न वेति?।

(ठ) सखि! मा एनां प्रतिबोधय। यत एषा चिरं दुर्म्मनायमाना इदानीमेव ईषन्मन्ये प्रसुप्तेति। अतः शनैरिहैव शयनार्द्धे उपविश।

(ट) मदेति। प्रियसखी मालती, प्रसुप्ता निद्रिता। काकुवशात् ज्ञायते किमित्यर्थः।

(ठ) लवेति। मा प्रतिबोधय उच्चैरुच्चारणेन न जागरय। दुर्म्मनायमाना दुःखितमनस्का। ईषत्प्रसुप्ता स्तोकं निद्रिता, इति मन्ये।

(ঞ) বুদ্ধরক্ষিতা। এই বাসভবনের দ্বার। ( এই বলিয়া উভয়ে প্রবেশ করিল )।

(ট) মদয়ন্তিকা। সই! লবঙ্গিকে! জানিস্ তোর প্রিয়সখী ঘুমাইয়াছে কি না?।

(ঠ) লবঙ্গিকা। সই! ইহাকে জাগাইও না। যেহেতু এ অনেক

(१) क्वचित् दुवारमिति नास्ति। (२) उभे इत्यपि पाठः।

(३) पिअसही त्ति इतिमात्रः पाठः क्वचित्। (४) एहि इति क्वचित् पाठः।

(५) जदो इति क्वचिन्नास्ति। (६)...ईस मत्तं उज्झिअ पसुत्ते त्ति। तदो सणिअं इध ज्जेव सअणुप्पन्ते...इति पाठान्तरम्।

मद । तथा कृत्वा । दुम्मणाअदि कधं वामसीला ? (१) । (ड)

लव । कधं णाम णववहू-विस्सम्भणोवाअजाणुअं लड्हं विसड्ढं महुरभासिणं ससिणेहं अरोसणं अ दे भादरं भत्तारं आसादिअ ण दुम्मणाइस्सदि मे पिअसही ? (२) । (ढ)

(ड) दुर्म्मनायते कथमियं वामशीला ? ।

(ढ) कथं नाम नववधू-विस्रम्भणोपायाभिज्ञं लड्हं विदग्धं मधुरभाषिणं सस्नेहम् अरोषणञ्च ते भ्रातरं भर्त्तारमासाद्य न दुर्म्मनायिष्यते मे प्रियसखी ।

(ढ) लवेति । मे मम प्रियसखी मालती, नववध्वा विस्रम्भणं आत्मानं प्रति विश्वासोत्पादने ये उपायाः चित्तवृत्त्यनुसरणादयः तदभिज्ञम् । "उपकृतं बहु तत्र किमुच्यते" इत्यादिवद्विपरीतलक्षणया सर्वथैव तदनभिज्ञमिति सोल्लुण्ठनोक्तिः । अन्यत्राप्येवम् । ब्रह्मचर्य्यावलम्बनोपयोगिविवाहविरागमध्य एव नायिकाचित्तवृत्तिप्रतिकूलभावेन रमणाय प्रसह्यप्रवर्त्तनादिति भावः । लड्हं सुन्दरम् । अतीवकुरूपमित्याशयः । विदग्धं सुरत-कलानिपुणम् । सर्व्वथैव गोमूर्खमित्यभिप्रायः । मधुरभाषिणम् एकान्तकर्कशभाषिण-मिति भावः । सस्नेहम्, स्नेहलेशेनापि शून्यं किसलयकोमलां प्रति सहसैव बलप्रयोगोप-क्रमादित्याशयः । अरोषणम् अकोपनस्वभावम् । रोषेण नितान्तखरतरस्वभावमिति भावः । आसाद्य प्राप्य, कथं नाम न दुर्म्मनायिष्यते दुःखितचित्ता भविष्यति, अपि तु भविष्यत्ये-वेत्यर्थः । मम प्रियसख्या दुर्म्मनस्कतां प्रति तव भ्रातुर्नववधूविस्रम्भणोपायानभिज्ञत्वादिकमेव हेतुरिति भावः ।

কাল দুঃখিতচিত্তে থাকিয়া এখনই একটু ঘুমাইয়াছে আমি মনে করি। অতএব আস্তে আস্তে বিছানার এই ধারেই ব'স।

(ড) মদয়ন্তিকা। ( সেইরূপ করিয়া ) প্রতিকূলস্বভাবা দুঃখিতচিত্ত হইয়াছে কেন ? ।

(१) सहि ! दुम्मणाअदि इअं वामसीला इति पाठोऽपि दृश्यते ।

(२)···विदड्ढमहुरभासिणं···समासादिअ···इति पाठोऽपि दृश्यते ।

मद । पेक्ख बुद्धरक्खिदे ! विप्पदीवं उवलद्धम्ह (१) । (ण)

बुद्ध । विप्पदीग्रं ण विप्पदीग्रं वा । (त)

मद । कधं विग्र । (थ)

बुद्ध । जं दाव चलणपड़िदो वि (२) भत्ता ण बहुमाणिदो,

(ण) प्रेचस्व बुद्धरचिते ! विप्रतीपमुपालब्धाः स्मः ।

(त) विप्रतीपं न विप्रतीपं वा ।

(थ) कथमिव ।

अव उत्प्रासनं नाम नाट्यालङ्कारः—"उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि ।" इति दर्पणलचणात् ।

"लड़ह: (वि ) सुन्दरः ।" इति शब्दकल्पद्रुमः ।

(ण) मदेति । विप्रतीपं विपरीतम्, उपालब्धास्तिरस्कृताः । मालत्या वान्याय्या-चरणादस्माभिरेव तस्यामुपालम्भनीयायां प्रत्युत तत्पचगतया लवङ्गिकया वयमेवोपालब्धा इत्यर्थः । इदमप्यन्याय्यमिति भावः ।

(त) बुद्धेति । विप्रतीपं न विप्रतीपं वा इदं लवङ्गिकाकृतमुपालम्भनं विपरीत-मविपरीतं वा वक्तुं शक्यत इत्यर्थः । श्रंशत उभयोरपि दोषसत्त्वादिति भावः ।

(ढ) লবঙ্গিকা। তোমার ভাই, নববধূর বিশ্বাস জন্মাইবার উপায় জানেন, দেখিতে সুন্দর, কলাশাস্ত্রে নিপুণ, মিষ্টভাষী ও ভালবাসিতে জানেন, ক্রোধ ত নাই-ই ; সুতরাং এইরূপ স্বামী পাইয়া আমার প্রিয়সখী দুঃখিতচিত্ত হইবেন না কেন ?।

(ণ) মদয়ন্তিকা। দেখ বুদ্ধরক্ষিতে ! আমরা উল্টা তিরস্কৃত হইলাম।

(ত) বুদ্ধরক্ষিতা। উল্টাও বটে, বা উল্টা নাও বটে।

(থ) মদয়ন্তিকা। কি রকম ?।

(१) बुद्धरक्खिदे ! पेक्ख, विप्पदीवं म्हा किं उवालम्भोम्रामो इति पाठभेदः ।

(२) 'वि' इति क्वचिन्नास्ति ।

एत्थ लज्जादोसेण एसो जणो उवालम्भणिज्जो (१)। जं वि पिअसहि! णववहू-विरुद्ध-साहसोवक्कम-(२) क्खलण-वेलक्ख-विच्छुड़िद-महाणुभावत्तणस्स भादुणो दे वाआगदं किं वि अपरिट्ठाणं, (३) तेण जाणीअदि किआवराहा उवालम्भणिज्जा अह्मे त्ति (४)। संस्कृतमाश्रित्य (५)। किञ्च,

(द) यत् तावच्चरणपतितोऽपि भर्त्ता न बहुमानितः, अत्र लज्जादोषेण एष जन उपालम्भनीयः। यदपि प्रियसखि! नववधू-विरुद्ध साहसोपक्रम स्खलन-वैलक्ष्य-विच्छर्द्दित-महानुभावत्वस्य भ्रातुस्ते वाचागतं किमपि अपरिस्थानम्, तेन ज्ञायते कृतापराधा उपालम्भनीया वयमिति।

(द) वुद्धेति। यत्, चरणपतितोऽपि सम्भोगसम्मतिप्रदानाय पादपतनेन कृतानुनयोऽपि भर्त्ता नन्दनः न बहुमानितः सम्मतिप्रदानेन मालत्या नाद्दतः। अत्र अनादरविषये, एष जनो मालती, उपालम्भनीयो दोषसत्त्वान्निन्दनीयः। अस्मिन्नंशे मालत्यामेव निन्दनीयायां प्रत्युत तत्पक्षगतलवङ्गिकया कृतं नन्दननिन्दनं विप्रतीपमेवेति भावः। लज्जादोषेणेत्यनेन लज्जैव बहुमानाकरणकारणं न पुनरन्यत् किञ्चिदिति ध्वन्यते। नववध्वां सान्त्ववाद-सुमधुरव्यवहारादिभिरायत्तीकर्त्तव्यायां नवोढ़ायां मालत्यां विरुद्धः प्रतिकूलः, यः साहसोपक्रमो बलप्रयोगपूर्व्वकरमणोद्यमः, तेन यत् स्खलनं मालतीकृतप्रत्याख्यानरूपो व्यतिक्रमः, तस्माद्यद्वैलक्ष्यं दोषवशादप्रतिभत्वं तेन विच्छर्द्दितं विवर्ज्जितं महानुभावत्वं

(द) बुद्धरक्षিতা। যে হেতু স্বামী পায়ে পড়িলেন, তথাপি তাঁহার আদর করিল না; এ বিষয়ে লজ্জার দোষে এই ব্যক্তিই (মালতীই) নিন্দনীয়। আবার প্রিয়সখি! নববধূর প্রতি বিরুদ্ধ বলপ্রয়োগের

(१) ण उवालम्भणिज्जो इति क्वचित् पाठः।

(२) अहिणव-वहू-विरुद्ध रहसोवक्कम इति पाठान्तरम्।

(३) अप्पदिट्ठाणं इति पाठभेदः। (४) तेण तुह्मे त्ति इतिमात्रः पाठः क्वचित्।

(५) क्वचिदयं पाठो नास्ति।

"कुसुमसधर्म्माणो हि योषितः सुकुमारोपक्रमाः। तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सद्यः (१) सम्प्रयोगविद्वेषिण्यो भवन्ति।"

धैर्य्यं येन तस्य तथोक्तस्य, ते तव भ्रातुर्नन्दनस्य वाचागतं वाक्यगतं वचसा सम्पादितमिति तात्पर्य्यम्, किमपि श्रोतुमप्ययोग्यम्, परिस्थानं स्थितिर्मर्य्यादेति यावत् अपरिस्थानं महाकुलोत्पन्नाया मालत्या मर्य्यादालङ्घनमित्यर्थः। तेन कृतापराधा अतएव वयं नन्दनपक्षगता उपालम्भनीया इति ज्ञायते। सुतरामवांश्च लवङ्गिकाकृतं नन्दननिन्दनमविप्रतीपमेवेति भावः। अत्रार्थे महाजनवाक्यं प्रमाणत्वेनोपन्यस्यति किञ्चेति।

कुसुमेति। कुसुमैः समानो धर्म्मो मृदुत्वादिगुणो यासां ताः कुसुमसधर्म्माणः, योषितो नवोढ़ादिसामान्याः स्त्रियः, सुकुमारः सुमधुरव्यवहारादिना कोमलः कोमलभावेन कर्त्तव्य इत्यर्थः उपक्रमो रमणारम्भो यासां तास्तथाविधा भवन्ति। तु किन्तु अनधिगतो नवविवाहादौ समीचीनपरिचयाभावात् नवोढ़ादिभिरप्राप्तो विश्वासो येषु तादृशैः पुरुषैः प्रसभं बलेन उपक्रम्यमाणा रमणीयमविषयीक्रियमाणाः, ता नवोढ़ादिस्त्रियः, सद्यस्तत्क्षणात् उपक्रमसमय एवेत्यर्थः सम्प्रयोगस्य रमणस्य विद्वेषिण्यो भवन्ति विद्वेषान्निवर्त्तितुं चेष्टन्ते।

तथा च यथा कुसुमानि मृदुमन्दस्पर्शेन सुसौरभमुद्गिरन्ति, महामर्द्दनेन तु विरक्तिकरतिक्तगन्धं प्रकटयन्ति; तथा ललना अपि

"कविता वनिता चैव स्वायाता रसदायिनी।
बलादानीयमाना चेत् सरसा विरसायते॥"

इति न्यायात् सुसद्व्यवहारेणानुमोदने सत्यतीवमधुरायन्ते प्रसभमारम्भे तु प्रत्युतोद्वेगकारिण्यो भवन्तीति सरलार्थः।

উপক্রম করায় সে যে ব্যতিক্রম (পদাঘাত) করিয়াছে, তাহাতে অপ্রতিভ হইয়া তোমার ভাই যে অনির্ব্বচনীয়ভাবে মর্য্যাদা লঙ্ঘন করিয়াছেন, তাহাতে বুঝিতেছি—আমরাই অপরাধ করিয়াছি এবং আমরাই নিন্দনীয় হইয়াছি। ( সংস্কৃতভাষা অবলম্বন করিয়া ) আরও দেখ—

(१) क्वचित् 'सद्य' इत्यपि न दृश्यते।

एवं किल कामसूत्तआरा आमणन्ति (१)। (द)

लव। सख्यम् (२)। घरे घरे पुरिसा कुलकम्रआओ उव्वहन्ति, ण अ को वि लज्जापराहीणं अणवरद्ध' मुद्ध-लड़ह-सहाव' (३) कुलकुमारोअणं पहवामि त्ति वाआणलेण पज्जालेदि। एदे

एवं किल कामसूत्रकारा आमनन्ति।

(ध) गृहे गृहे पुरुषाः कुलकन्यका उद्वहन्ति, न च कोऽपि लज्जापराधीनम् अनपराद्धं मुग्धलड़हस्वभावं कुलकुमारीजनं 'प्रभवामी'ति वाचानलेन प्रज्वलयति। एते

कामसूत्रकारा वात्स्यायनादयः, एवम् उक्तरूपम् आमनन्ति ब्रुवन्ति। किलेत्यैतिह्ये। सुतरां नन्दनस्यायं प्रसभमुपक्रमो दोषायैव जात इति भावः।

अत्रार्थविशेषणं नाम नाट्यालङ्कारः। यथा साहित्यदर्पणे—

"उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा।
उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम्॥"

वाचेति— "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
टापञ्चापि हलन्तानां यथा वाचा निशा गिरा॥"

इत्युक्तेर्वाक्शब्दात् टाप्। एवमुत्तरत्रापि। वात्स्यायनसूत्रानुकरणार्थं संस्कृतमाश्रित्येत्युक्तम्।

(ध) लवेति। परिणयरजन्यामेव प्राणसख्या मालत्या दुष्टशददुर्दर्शनेन शोकोदयादश्रुणा सहेति साश्रमाहेत्यर्थः। कोऽपि पुरुषः, लज्जायाः पर एकान्ती-

"রমণীগণ কুসুমের তুল্য কোমল; সুতরাং তাহাদের প্রতি কোমলভাবে উপক্রম করাই সঙ্গত। তাহাদের বিশ্বাস লাভ না করিয়া তাহাদের উপর বলপূর্ব্বক উপক্রম করিলে তাহারা তৎক্ষণাৎ···বিদ্বেষী হইয়া উঠে।" কামসূত্রকারগণ এইরূপ বলিয়াছেন।

(१) मन्तेति इति भिन्नः पाठः। (२) क्वचित् 'सस्र'मिति पाठो नास्ति।

(३) ण क्खु, को वि लज्जापराहृणं अणवरद्धमुद्धसहावं इत्यपि क्वचित् पाठः।

खु' दे हिअअ-सल्लणिक्खेवा आमरणं सुमरिज्जन्त-दूसहा पदि-घरणिवासवेरग्गकारिणो (१) महापरिहवा ; जाणं किदे इत्थि-आण' जम्मलाहं (२) जुउच्छन्ति वान्धवा। (ध)

मट। वुद्धरक्खिदे! अदिदुम्मणाइदा (३) पिअसही

खलुते हृदयशल्यनिक्षेपा आमरणं स्मर्य्यमाणदुःसहा पतिगृहनिवासवैराग्यकारिणो महा-परिभवाः ; येषां कृते स्त्रीणां जन्मलाभं जुगुप्सन्ते बान्धवाः।

ऽधीनस्तम्, मुग्धः सरलः लड़हः सुन्दरश्च स्वभावो यस्य तं प्रभवामि समर्थोऽस्मि, पतिलाद्स्या विषये यत्किमपि कर्त्तुं शक्नोमीति मत्वेत्यर्थः वाचानलेन अवाच्यवचनरूपेण वह्निना न प्रज्वलयति न सन्तापयति। किन्त्वस्य नन्दनेन तथाकृतत्वादतीवदुःखकारणमेतदिति भावः। हृदयशल्यनिक्षेपाः वक्षसि शङ्कुसमारोपसदृशाः। स्मर्य्यमाणाः सन्तोऽपि दु सहाः, स्वयमनुभवे तु का कथेत्याशयः। पतिगृहनिवासे वैराग्यम् अवश्यमेव तादृश-सम्भवात् वैतृष्ण्यं कर्त्तुं शीलं येषां ते, महापरिभवाः विशालतिरस्काराः। येषां महा-परिभवाणां कृते निमित्ते बान्धवाः तत्तत्स्त्रीणामेव पित्रादयः। जुगुप्सन्ते दुःसहतिरस्कार-सहनास्पदं कन्याजन्म धिगित्येवंरूपेण निन्दन्ति।

(ध) लবঙ্গিকা। ( অশ্রুপাত করিতে করিতে ) ঘরে ঘরে পুরুষগণ কুলকন্যাগণকে বিবাহ করিতেছেন, কিন্তু কেহই লজ্জার অধীন, নিরপরাধ এবং সরল ও সুন্দরস্বভাব কুলকন্যাকে 'আমি উহার প্রভু' এইরূপ মনে করিয়া বাক্যানলে জ্বালান না। এই গুরুতর তিরস্কারগুলি বক্ষের উপরে শল্যনিক্ষেপের তুল্য ; মরণপর্য্যন্ত এগুলিকে স্মরণ করিলেও দুঃসহ হইয়া উঠে এবং পতিগৃহে বাস করারই অনিচ্ছা জন্মায় ; যে তিরস্কারের জন্য বন্ধুগণ স্ত্রীলোকদিগের জন্মলাভকেই নিন্দা করেন।

(१) आमलणसंभरिज्जन्तदूसह-परघरणिवास-वेरग्गकारिणो इति पाठान्तरम्।

(२) इत्थआजम्मलाहं इति पाठोऽपि दृश्यते।

(३) अदिदुम्मिदा, अदिदुम्मिणा इति पाठभेदौ।

लवङ्गिआ। अदिमहन्तो (१) को वि मे भादुणा वाआवराहो से (२) किदो। (न)

बुद्ध। अधइं। सुदं अह्मे हिं जधा—"मम ण तुए संपदं कोमारवन्धईए पओअणं" त्ति (३)। (प)

मद। कर्णौ पिधाय। अहो (४) अदिक्कमो, अहो पमादो।

(न) बुद्धरक्षिते! अतिदुर्म्मनायिता प्रियसखी लवङ्गिका। अतिमहान् कोऽपि मे भ्राता वाचापराधोऽस्याः कृतः।

(प) अथकिम्। श्रुतमस्माभिर्यथा—"मम न त्वया साम्प्रतं कौमारबन्धक्या प्रयोजन" मिति।

---

(न) मदेति। अस्या मालत्याः सम्बन्धे। कृतो भवेदिति शेषः। अन्यथा लवङ्गिकाया ईदृशी दुर्म्मनस्कता न स्यादिति भावः।

(प) बुद्धेति। अथकिं वाचापराधः कृत एवेत्यर्थः। कोऽसावित्याह श्रुत-मित्यादि।

---

(न) মদয়ন্তিকা। বুদ্ধরক্ষিতে! প্রিয়সখী লবঙ্গিকা অত্যন্ত দুঃখিত-চিত্ত হইয়াছে; (সুতরাং বোধ হয়) আমার ভ্রাতা মালতীর সম্বন্ধে বাক্যদ্বারা কোন গুরুতর অপরাধ করিয়াছেন।

(প) বুদ্ধরক্ষিতা। হ্যাঁ। আমরা শুনিয়াছি যে, "তুই অবিবাহিত অবস্থায়ই বেশ্যা হইয়াছিস্; সুতরাং এখন তোরদ্বারা আমার কোন প্রয়োজন নাই" (এই কথা বলিয়াছেন)।

---

(१) महन्त्री इतिमात्रः पाठोऽपि दृश्यते। (२) क्वचित् 'से' इति पाठो नास्ति।

(३)···सुदं एव्व अह्मे हिं ण मे सम्पदं इमाए कोमारवन्धईए पओअणं त्ति ससपहं पइश्च काऊण वासभवणादो णिग्गदो इति पाठान्तरम्। (४) अम्महे इत्यपि पाठः।

सहि! लवङ्गिए! असमत्थम्हि दे मुहं वि संपदं दंसिदुं, (१) तहवि पहवामि त्ति किम्पि मन्तइस्सं। (फ)

लव। साहिणो दे अअं जणो। (ब)

मद। चिट्ठदु दाव (२) मह भादुणो दुस्सीलदा अवरिट्ठाणं अ। तुह्मेहिं वि (३) ईदिसो वि एसो सम्मदं जहचित्तं अणुवट्टणीओ, जेण भत्ता एसो त्ति। अण्णं अ। तुह्मे इमस्स

(फ) अहो अतिक्रमः, अहो प्रमादः। सखि! लवङ्गिके! असमर्थास्मि ते मुखमपि साम्प्रतं दर्शयितुम्, तथापि प्रभवामीति किमपि मन्त्रयिष्ये।

(ब) स्वाधीनस्तेऽयं जनः।

(भ) तिष्ठतु तावन्मम भ्रातुर्दुःशीलता, अपरिष्ठानञ्च। युष्माभिरपीदृशोऽप्येष

(फ) मदेति। निन्दायामहोशब्दद्वयम्। अतिक्रमो नन्दनेन मालत्या मर्य्यादालङ्घनम्। प्रमादो नन्दनस्यानवधानता। नितान्तनिर्म्मलां मालतीं प्रतीदृशवाक्प्रयोगादित्युभयत्रापि भावः। प्रभवामि परमवात्सल्यात् त्वयि मे प्रभुत्वमस्तीत्यर्थः। इति हेतोः। मन्त्रयिष्ये वक्ष्ये।

(ब) लवेति। अयं जनः अहमिति तात्पर्य्यम्, ते तव स्वस्या आत्मनः अधीनः परमवात्सल्यादायत्तः सुतरां यथेष्टं वक्तुमर्हसीति भावः।

---

(फ) মদয়ন্তিকা। (কর্ণযুগল আবৃত করিয়া) ও! অত্যন্ত মর্য্যাদালঙ্ঘন! গুরুতর অনবধানতা। সখি! লবঙ্গিকে! এখন আমি তোমাকে মুখ দেখাইতেও সমর্থ হইতেছি না; তথাপি তোমার উপরে আমার প্রভুত্ব আছে বলিয়া কিছু বলিব।

(ব) লবঙ্গিকা। এই ব্যক্তি (আমি) তোমার নিজের অধীন।

---

(१) दइटुं इति पाठोऽपि दृश्यते। (२) ज्जेव इति क्वचित् पाठः।

(३) क्वचित् 'वि' इति नास्ति।

अणहिजादक्खराहिक्खेवोवालम्भदूषणस्स (१) जं मूलं तं ण जाणध। (भ)

लव। कधं अह्मे असन्तं जाणीमो (२)। (म)

साम्प्रतं यथाचित्तमनुवर्त्तनीयः, येन भर्त्ता एष इति। अन्यच्च। यूयमस्य अनभिजाताक्षराविक्षेपोपालम्भदूषणस्य यन्मूलं तन्न जानीथ।

(भ) मदेति। युष्माभिरपि मालतीतत्पक्षगताभिरपि, ईदृशोऽपि उद्धतदुरुक्त्या मर्य्यादालङ्घनकारी सन्नपि, एष नन्दनः, चित्तं चित्तवृत्तिः यथाचित्तं चित्तवृत्तिमनतिक्रम्य अनुवर्त्तनीयः "भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गम" इत्युक्तेरनुसरणीयः। भर्त्ता पतिः एष नन्दनः। "कोऽपि देवः कुलस्त्रीणां पतिरेव पतन्नपि"इति स्मृतेरिति भावः। अनभिजाताक्षराणां 'मम न लज्जा' इत्याद्यन्याय्यवाक्यस्यैव्यर्थः अधिक्षेपेण प्रयोगेण उपालम्भस्तिरस्कार एव दूषणं तस्य, मूलं कारणम्।

अत्र येन भर्त्तैष इति हेतुप्रदर्शनात् हेतुर्नाम नाट्यलक्षणम्। यथा दर्पणे—

"हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात्।"

"न्याय्ये कुलीनबुधयोरभिजातपदं विदुः।" इति शाश्वतः।

(म) लवेति। असत् अविद्यमानं मूलमित्यर्थः। चिरमसद्भूतमाकाशकुसुमं को जानातीति भावः। एतेन तादृशोपालम्भकारणं किमपि मालतीगतं नासीत्, किन्तु नन्दनेन स्वभावादेवोपालब्धा मालतीति व्यज्यते।

(ভ) মদয়স্তিকা। আমার ভ্রাতার কুস্বভাব ও মর্য্যাদালঙ্ঘন (হইয়া থাকে) থা'ক; কিন্তু ইনি এরূপ হইলেও ইঁহার মনের বৃত্তি অনুসারে তোমাদের ইঁহার অনুবৃত্তি করা উচিত; যেহেতু ইনি স্বামী। আরও শোন—কুৎসিত উক্তিদ্বারা এই তিরস্কারদোষের যেটা মূল, তাহা তোমরা জান না।

(१)···उवालम्भस्स इतिमात्रः पाठोऽपि दृश्यते।

(२) कधं वाघा मन्दिदंवि थाम ण जाणीमो इति पाठभेदः।

मद। जं दाणिं तस्सिं महाणुहावे माहवे किम्पि किल मालदीए तारामित्तग्रं आसी, तहिं (१) सव्वलोग्रस्स अदिभूमिं गदो पवादो। तं क्खु एदं विग्रम्भदि। ता पिग्रसहि! जह एसो भत्तुणो अवक्खाहिणिवेसो णिरवसेसं हिग्रआदो उद्धरीअदि, तह करेध। अणधा महादोसो त्ति जाणिदं भोदु।

(म) कथं वयमस्तत् जानीमः।

(य) यदिदानीं तस्मिन् महानुभावे माधवे किमपि किल मालत्यास्तारामैत्रकमासीत्, तत्र सर्वलोकस्यातिभूमिं गतः प्रवादः। तत् खल्वेतद्विजृम्भते। तत् प्रियसखि! यथा एष भर्त्तुरपक्षाभिनिवेशो निरवशेषं हृदयादुद्ध्रियते, तथा कुरुत। अन्यथा महादोष इति

(य) मदेति। यत्, तारयोः कनीनिकयोः मैत्रकं मेलनमासीत्पन्नः स्नेहः, मालतीमाधवयोः परस्परदृष्टिमेलनमात्रसञ्जातं प्रेमेत्यर्थः। तत्र तारामैत्रकविषये प्रवादः सर्व्वलोकस्य समीपे अतिभूमिमाधिक्यं गतः। तत् तारामैत्रकम् इदं विजृम्भते प्रकाशते नन्दनं प्रति विरक्तिरूपं फलं प्रकटयतीत्यर्थः। भर्त्तुर्नन्दनस्य अपक्षे विपक्षे माधवे अभिनिवेशः चित्ताग्रहः माधवं प्रत्यनुराग इति निष्कर्षः निरवशेषं सम्पूर्णं यथा तथा मालत्या हृदयादुद्ध्रियते, तथा यूयं कुरुत। महादोषो भवेदिति ज्ञातं युष्माकं विदितं भवतु।

(म) লবঙ্গিকা। ইহার মূল কিছু ছিল না; সুতরাং তাহা কি করিয়া জানিব।

(য) মদয়ন্তিকা। সেই মহাত্মা মাধবের প্রতি মালতীর অনির্ব্বচনীয় নয়নপ্রীতি ছিল; সে বিষয়ের প্রবাদ সকল লোকের নিকটই অত্যন্ত প্রসিদ্ধি লাভ করিয়াছে। ইহা এখন তাহাই প্রকাশ পাইতেছে। অতএব প্রিয়সখি! পতিভিন্ন অন্য পুরুষের প্রতি এই অনুরাগ মালতীর হৃদয় হইতে যাহাতে সম্পূর্ণরূপে উঠিয়া যায়, তোমরা তাহা কর। না হইলে

(१)…तारामित्तं आसी, सो एसो…इति पाठभेदः।

णिक्कम्पदारुणा कसआओ दूम्मावेन्ति हिअअं मणुस्साणं ईदि-सादो दुरहिसङ्गादो त्ति। माणं भणिस्सध मदअन्तिआए कधिदं त्ति (१)। (य)

लव। अइ असावधाणि! (२) असंवद्धलोअप्पवादमोहिदे! अवेहि। ण तुए सह जप्पिस्सं (३)। (र)

ज्ञातं भवतु। निष्कम्पदारुणाः कन्यका दावयन्ति हृदयं मनुष्याणाम् ईदृशाद् दुरभिषङ्गा-दिति। मा एनां भणिष्यथ मदयन्तिकया कथितमिति।

(र) अयि असावधाने! असम्बद्धलोकप्रवादमोहिते! अपेहि। न त्वया सह जल्पिष्यामि।

इदानीमपि माधवानुरागात्, नन्दनस्यापि तदवगमेन चिरदारुणविद्वेषादिति भावः। निष्कम्पा महति भर्त्तुर्विद्वेषभये सत्यपि तज्जन्यचित्तचाञ्चल्यहीना अतएव दारुणाः कन्यका ईदृशात् दुरभिषङ्गात् परपुरुषानुरागरूपाद्धेतोः मनुष्याणां भर्त्तृभूतपुरुषाणां हृदयं दावयन्ति सन्तापयन्ति। सुतरामिदानीमपि मालत्या माधवानुरागान्नन्दनस्य चित्तसन्तापः सम्भवत्येव, स एव च तदुपालम्भस्य मूलमिति भावः। इदं वृत्तं मदयन्तिकया कथित-मिति एनां मालतीं मा भणिष्यथ। तथा सति मालती मय्यपि विद्वेषं कुर्य्यादिति भावः।

(र) लवेति। इमं वृत्तान्तं वक्तुं मां निवारयसि, अथ च स्वयमेव तत्सन्निधौ ब्रवीषि, यदि तु जागरितनिभृता सती मालती स्वयमेवेदं शृणुयात्तदा किं कुर्य्या इत्यभि-

গুরুতর দোষ ঘটিবে, ইহা তোমাদের জানা হউক। ভর্ত্তৃভয়ে মন কাঁপে না বলিয়া ভয়ঙ্করপ্রকৃতি কন্যাগুলি, এইরূপ পরপুরুষের প্রতি অনুরাগ-বশতঃ পুরুষের মনকে সন্তপ্ত করিয়া থাকে। ইহা মালতীকে বলিও না যে, মদয়ন্তিকা এইরূপ বলিয়াছে।

(१)···उवेक्खाहिणिवेसो णिरवसेसो···तह करेहि।···महान्तो पमादो।···णिक्कम्प-दारुणासु कुलकण्णकासु···दूरमिति···त्ति जाणह। मा भण··· इति पाठान्तरम्।

(२) क्वचिदेष पाठो नास्ति। (३) मन्तइस्सं इति पाठभेदः।

सद। सहि। पसीद। अहवा ण तुह्मे फुड़ं (१) भणिदाओ चिट्ठध। किन्तु अह्मे सच्चं एव्व माहवेक्कमअजीविदं (२) मालदीं जाणीमो केण वा कठोर-केदअ-(३) गब्भविब्भमावअव-दोव्वल्ल-णिव्वट्टिद-(४) सुन्दरत्तणविसेसं माहव-सहत्थ-

(ल) सखि! प्रसीद। अथवा न यूयं स्फुटं भणितास्तिष्ठथ। किन्तु वयं सत्यमेव माधवैकमयजीवितां मालतीं जानीमः। केन वा कठोर-केतक-गर्भ-विभ्रमावयव-दौर्बल्य-निर्वर्त्तित-सुन्दरत्वविशेषं माधव-स्वहस्त-निर्म्मित-वकुलावली-विरचित-कण्ठावलम्ब-

प्रायेण 'असावधाने' इति सम्बोधनमुक्तम्। असम्बद्धेत्यनेन तत्प्रवादस्य मिथ्यात्वं सूचितम्। अपेहि दूरं गच्छ।

(ल) मदेति। प्रसीद मां प्रति कोपं मा कुरु इत्यर्थः। अथवेत्युत्तपक्षान्तरे। भणिता इमं वृत्तान्तमिति शेषः। अयं वृत्तान्तः केनापि युष्माकमन्तिके न कथित इति सरलार्थः। स्वयं वक्तुमुपक्रमते किन्त्विति। कठोरस्य परिणतस्य पूर्णावयवस्य केतकस्य केतकीकुसुमस्य गर्भवत् मध्यदेशवत् विभ्रमो विलासः श्वेतिमा येषु तेषां तथोक्तानाम् अवयवानां हस्तपदादीनां दौर्बल्येन विरहजनितदुर्बलतया निवर्त्तितो निष्पादितः सुन्दरत्वविशेषः

(র) লবঙ্গিকা। হে অসাবধানে! তুমি অসঙ্গত লোকপ্রবাদে মোহিত হইয়াছ; সুতরাং দূর হও। আমি তোমার সহিত অনর্থক কথা কহিব না।

(ল) মদয়ন্তিকা। সখি! প্রসন্ন হও। অথবা এই বৃত্তান্ত তোমাদের নিকট কেহই বলে নাই; কিন্তু আমরা সত্যই মালতীকে একমাত্র মাধবময়জীবন বলিয়া জানি। আরও শোন, কোন্ ব্যক্তি মালতীর সেইরূপ শরীরটী দেখে নাই? যে শরীরের অবয়বগুলি, পরিণত কেতকী-পুষ্পের অভ্যন্তর দেশের ন্যায় শ্বেতবর্ণ হইয়া গিয়াছিল এবং দুর্ব্বলতায়

(१) अफुड़ं इति क्वचित् पाठः। (२)…जीअलोअं इत्यपि पाठः।
(३) केदई इति पाठोऽपि दृश्यते। (४) णिव्वड्डिद इति भिन्नः पाठः।

णिम्माविद-वउलावली-विरइद-कण्ठावलम्बमेत्त-सन्धारिदजीवणं (१) मालदीए, माहवस्स अ पहाद-चन्दमण्डलापाण्डुरपरिक्खाम-रमणिज्जदंसणं ण विभाविदं सरीरं ? । किं अ, तस्सिं दिअसे (२) कुसुमाअरुज्जाण-पेरन्त-रच्छामुह-समाअमे सविब्भमुल्लसिद-कोदूहलुप्फुल्ल-पसरन्त-णअणुप्पल-वहल--विलास-मसिण-सञ्चार-

मात्र-सन्धारित-जीवनं मालत्याः, माधवस्य च प्रभात-चन्द्र-मण्डलापाण्डुर-परिक्षाम-रमणीय-दर्शनं न विभावितं शरीरम् ? । किञ्च, तस्मिन् दिवसे कुसुमाकरोद्यान-पर्य्यन्त-रथ्या-मुख समागमे सविभ्रमोल्लसित-कौतूहलोत्फुल्ल-प्रसरन्नयनोत्पल-बहल-विलास-मसृण-

सौन्दर्य्यबाहुल्यं यत्र तत् तथोक्तम्, तथा माधवस्वहस्तनिर्म्मितया बकुलावल्या बकुलकुसुम-मालया विरचितः कृतो यः कण्ठावलम्बी गलदेशाश्रयः तन्मात्रेण सन्धारितं जीवनं येन तादृशं मालत्याः शरीरम्, तथा प्रभातचन्द्रमण्डलमिव आपाण्डुरं विरहेण ईषद्धवलं परिक्षामं सततचिन्तया नितान्तक्षीणं तथापि रमणीयदर्शनं मनोहरदृष्टिकञ्च तत् तथाभूतं माधवस्य च शरीरं केन वा जनेन न विभावितं न लक्षितम् ? अपि तु सर्व्वेणैव लक्षित-मित्यर्थः । तथापि कथं गोपयितुमिच्छसीति भावः ।

किञ्चेति । अपि चेति चार्थः । कुसुमाकरोद्यानस्य पर्य्यन्ते प्रान्तभागे यत् रथ्यामुखं तत्र समागमे सम्मिलने सति सविभ्रमं सविलासं नानाविधविकारसहितं यथा तथा उल्लसितयोः

তাহার অত্যন্ত সৌন্দর্য্য সম্পাদন করিয়াছিল; আর মাধব স্বহস্তে যে বকুলফুলের মালা নির্ম্মাণ করিয়াছিলেন, মালতী তাহাই কণ্ঠে ধারণ করিয়া জীবন ধারণ করিতেছিল। আবার মাধবের শরীরটীও প্রভাত-চন্দ্রমণ্ডলের ন্যায় ঈষৎ পাণ্ডুবর্ণ, অত্যন্ত কৃশ, অথ চ মনোহর হইয়াছিল; তাহাই বা কে না দেখিয়াছে? আরও শোন, সেই দিন কুসুমা-করোদ্যানের প্রান্তভাগে সম্মিলন হইলে পর ইহাদের উভয়েরই পরস্পর দৃষ্টিসম্মিলন আমিও কি দেখি নাই? তখন নীলোৎপলতুল্য নয়নযুগল

(१)···कण्ठावलम्बणमेत्तसंजीवणं इत्यपि पाठः। (२) तद्दिअसे इति पाठभेदः।

चारुतारआ-विराअन्त--विब्भमा, अणङ्ग-णट्टाआरिअ-सव्वा-आरोवदेस-णिम्माविअ-विअड्ढ-मुद्ध-महुरा मए वि (१) णिरूविदा इमाणं दिट्ठिसम्भेदा?। किं अ, मम भादुणो दाणवुत्तन्तं सुणिअ तक्खणुच्छलिअ-गम्भीराविअ-व्वइअर-मिलाअन्तदेहसोहाणं

सञ्चार-चारुतारका-विराजमान-विभ्रमाः, अनङ्ग-नाट्याचार्य्य-सर्व्वाकारोपदेश-निर्म्मित-विदग्ध-मुग्ध-मधुरा मयापि न निरूपिता अनयोर्दृष्टिसम्भेदाः?। किञ्च मम भ्रातु-

तत्नाचिमयाः, कौतूहलेन उत्फुल्लयोः विकसितयोः प्रसरतोः गन्तव्यदेशं गच्छतोः नयनोत्पलयोः ये बहलविलासेन प्रचुरविभ्रमेण मसृणसञ्चारेण कोमलचलनेन च चारु मनोहरे तारके कनीनिकाद्वयम्, ताभ्यां विराजमानाः प्रकाशमानाः विभ्रमा नानाविध-विकारा येषु, ते तथोक्ताः, तथा अनङ्गो मदन एव नाट्याचार्य्यः तस्य सर्व्वाकारोपदेशैः सर्व्वप्रकारशिक्षादानैः निर्म्मिताः कृता अतएव विदग्धाः भावविशेषप्रकाशे चतुराः, मुग्धा मनोहराः, मधुरा लोभनीयाश्च ते तथाभूताः, अनयोर्मालतीमाधवयोः, दृष्टिसम्भेदाः परस्परनयनसम्मेलनानि मयापि किं न निरूपिता दृष्टाः? अपि तु निरूपिता एवेत्यर्थः। तथापि समान्तिक एव कथम् असम्बद्धेत्यादिना निर्ज्ञातुमिच्छसीति भावः।

किञ्चेति। अत्रापि, अपि चेति चार्थः। भ्रातुर्नन्दनस्य "चतुर्थ्यर्थे षष्ठी"ति पिङ्गल-सूत्रात् चतुर्थ्यर्थे षष्ठी। तत्‌श्च नन्दनाय दानवृत्तान्तश्रवणचण एव उच्छलितस्य उद्गतस्य

নানাবিধ বিকারের সহিত নিক্ষিপ্ত ও কৌতূহলে উৎফুল্ল হইয়া চলিতে-ছিল, বহুতর বিলাসে ও কোমল সঞ্চরণে মনোহর তারা দুইটী দ্বারাও বিলাস প্রকাশ পাইতেছিল এবং সেই দৃষ্টিসম্মিলনগুলি, অনঙ্গনাট্যাচার্য্যের সর্ব্বপ্রকার উপদেশে চতুর, সুন্দর ও মধুর হইয়াছিল। আরও শোন, আমার ভ্রাতাকে দানের বৃত্তান্ত শুনিয়া মালতী ও মাধবের তৎক্ষণাৎ মহাবিষাদের আবেগ উথলিয়া উঠিল, তাহাতে শরীরের শোভা মলিন

(१)···परिसक्कव्वेल्लमाण-सविलास मसिण-सिणिद्ध-संचरण चारुतारआ-विब्भमा-णाणङ्ग-सिक्खाराआ रिअ-सव्वाअमोवदेस·· तुए वि··इति पाठान्तरम्।

उक्खणिज्जमाणमूलवन्धणं (१) विअ ण लक्खिदं हिअअं ?।
किं अ, एदम्मि अवरं सुमरिदं मए (२)। (ल)

लव। किं दाणिं अवरं ?। (व)

मद। जं क्खु मम तस्स (३) जीविदप्पदाइणो महाणुहावस्स चेदणापड़िलम्भ-पिअणिवेदिआए मालदोए भअवदो-विअड्ढ-वअणोवण्णास-वोधिदेण (४) हिअअं जीविदं अ माहवेण पारि-

दानवृत्तान्तं श्रुत्वा तत्क्षणोच्छलित-गम्भीरावेग-व्यतिकर-म्लायमान-देहशोभयोः उत्-खण्यमान-मूलबन्धनमिव न लक्षितं हृदयम् ?। किञ्च, एतदप्यपरं स्मृतं मया।

(व) किमिदानीमपरम् ?।

(श) यत् खलु मम तस्य जीवितप्रदायिनो महानुभावस्य चेतनाप्रतिलम्भप्रियनिवेदिकाया मालत्या भगवती-विदग्ध-वचनोपन्यास-बोधितेन हृदयं जीवितञ्च माधवेन स्वयंग्राहि गम्भीरावेगस्य महाविषादवेगस्य व्यतिकरेण सम्पर्केण म्लायमाना मलिनीक्रियमाणा देहशोभा ययोः तयोर्मालतीमाधवयोः, उत्खण्यमानं केनापि छिद्यमानं मूलबन्धनं धारणकारणीभूतं देहेन सह बन्धनं यस्य तत् तादृशमिव भूतं हृदयं किं न लक्षितं मयापीत्यन्वयः ; अपि तु लक्षितमेवेत्यर्थः। तत्रापि कथं तद्गोपनेच्छेति भावः। किञ्च अन्यञ्च। अपरं वृत्तान्तान्तरम्।

(व) लवेति। अपरं किं स्मृतं तद्ब्रूहीत्यर्थः।

হইয়া গেল ; আর উহাদের হৃদয়ের মূলবন্ধন যেন কেহ ছিঁড়িয়া ফেলিল ; আমি তাহাও কি লক্ষ্য করি নাই ?। আর ও, আমি এই আর একটী বিষয় স্মরণ করিয়াছি।

(ব) লবঙ্গিকা। এখন আর একটী বিষয় কি ?।

(१) उव्वत्तमाणमूलं इति क्वचित् पाठः।

(२) किं च मए एदं अवरं विसुमरिदं इति भिन्नः पाठः।

(३) क्वचित् 'तस्स' इति पाठो नास्ति। (४)···बोदिदेण इत्यपि पाठः।

तोसिअन्तणीण सअं'गाहे (१) णिउत्तं । अह अ (२) लवङ्गिए !
तहिं तुए क्खु एव्वं (३) भणिदं, "पड़िच्छिदो क्खु णो पिअ-
सहीए अअं पसादो" त्ति । (ग्र)

लव । सहि ! कदमो उण सो महाणुहावो त्ति विसु-
मरिदं मए (४) । (ष)

नियुक्तम् । अथ च लवङ्गिके ! तस्मिन् त्वया खलु एवं भणितम्, "प्रतीष्टं खलु नः प्रियसख्या अय प्रसाद" इति ।

(ष) सखि ! कतमः पुनः स महानुभाव इति विस्मृतं मया ।

(ग्र) मदेति । चेतनाप्रतिलम्भप्रियनिवेदिकायाः शार्दूलकृतप्रहारजनितमूर्च्छापगमात् परं चैतन्यलाभरूप-सन्तोषसंवाददायिन्याः । भगवत्याः कामन्दक्या विदग्धवचनोपन्यासेन "वत्स ! माधव ! दिष्ट्या सुहृद्भुत्त्वा वर्द्धितोऽसि मालत्या, तदयमवसरः प्रतिदानस्य" इति चतुर्थाङ्कगतेन निपुणवाक्यप्रयोगेण बोधितः उपयुक्तमभिधातुं सङ्केतितस्तेन, माधवेन । स्वयंग्राहे दानान्मालत्या आत्मनैव ग्रहणे, नियुक्तम् "यच्चात्तप्रणिते"त्यादिवाक्येन व्यापारितम् । अथ च तदनन्तरञ्च ।

(श) मदयन्तिका । যিনি আমার জীবন দান করিয়াছিলেন, সেই মহাত্মার চৈতন্য লাভের প্রিয় সংবাদ যখন মালতী জানাইয়াছিল ; তখন ভগবতী কামন্দকীর নিপুণ বাক্যবিন্যাসে উদ্বুদ্ধ হইয়া মাধব নিজের হৃদয় ও জীবনকে মালতীর নিজের ইচ্ছা অনুসারে গ্রহণ করিতে নিযুক্ত করিয়াছিলেন। তাহার পর আবার লবঙ্গিকে ! সেই সময়ে তুমি এইরূপ বলিয়াছিলে যে, "আমাদের প্রিয়সখী এই অনুগ্রহদান অবশ্যই গ্রহণ করিলেন।"

(१) सअंगाहसाहसी इति पाठभेदः । (२) अह इतिमात्रः पाठः क्वचित् ।
(३)···ज्जेव इति पाठान्तरम् । (४) कदमो उण महाभाओ त्ति विसुमरिदं मए इदृशः पाठः क्वचित् ।

मद । सहि ! सुमर सुमर । जेण तस्सिं दिअसे विअड़-दुट्ट-सावद-विणिवाद-गोअरं गदा असरणा तक्कालसंणिहिदेण पोअर-भुअत्थम्भेण णिक्कारणवन्धवेण सअल-भुवणेक्कसार-णिअ-देहोवहारसाहसं कदुअ परिरक्खिदह्मि । जेण अ दिढ़-विअड़-मंसलुत्ताण--परिणाहि--वक्खत्थल---लञ्छण-जज्जरिद--जवापोड़-

(स) सखि ! स्मर स्मर । येन तस्मिन् दिवसे विकट-दुष्ट-श्वापदविनिपातगोचरं गता अशरणा तत्कालसन्निहितेन पीवरभुजस्तम्भेन निष्कारणबान्धवेन सकलभुवनैकसार-निजदेहोपहार-साहसं कृत्वा परिरक्षितास्मि । येन च दृढ़-विकट-मांसलोत्तान-परिणाहि-

(घ) लवेति । मदयन्तिकामुखादेव तस्या मकरन्दं प्रत्यनुरागप्रकारमवगन्तुं स्मरणे सत्यपि कौतुकेन विस्मरणभावं दर्शयति सखीत्यादिना ।

(ख) मदेति । विकटो भयङ्करः, दुष्टः पोषितोऽपि चण्डस्वभावः श्वापदो हिंस्रः शार्द्दूलः, तस्य विनिपातगोचरम् आक्रमणविषयतां गता प्राप्ता, अशरणा अन्यरक्षकरहिता । पीवरो भुजः स्थूलो बाहुः स्तम्भ इव तेन । सकलेषु भुवनेषु एकोऽद्वितीयः सारः स्वप्रियतमत्वात् श्रेष्ठः, यो निजदेहः, तस्य उपहारः शार्द्दूलाय समर्पणमेव साहसं तत् तथोक्तं कृत्वा स्वविनाशसम्भवेऽपि तव लक्ष्यमकृत्वेत्यर्थः । दृढ़ं कठिनम्, विकटं प्रहार-क्षताद्भयङ्करम्, मांसलं बलवत् उत्तानम् उन्नतम्, परिणाहि विशालम्, यत् वक्षःस्थलम्, तत्र लाञ्छनं शार्द्दूलनखप्रहारचिह्नं जर्जरितश्छिन्नभिन्नो जवापीड़ो जवापुष्पशेखर इव तं धारय-

(य) লবঙ্গিকা। সখি! সেই মহাত্মা কে? ইহা আমি বিস্মৃত হইয়াছি।

(স) মদয়ন্তিকা। সখি! স্মরণ কর, স্মরণ কর। সেই দিন আমি ভয়ঙ্কর-দুষ্ট হিংস্র জন্তুর (ব্যাঘ্রের) আক্রমণের বিষয় হইয়া পড়িয়াছিলাম, কেহ আমার রক্ষক ছিল না; সেই সময়ে যিনি নিকটবর্ত্তী ও অকারণ বান্ধব হইয়া, সমস্ত জগতের একমাত্র সার নিজের দেহটীকে উপহার দিবার সাহস করিয়া, বিশাল বাহুস্তম্ভদ্বারা আমাকে

धारिणा करुणाघणेण मम किदे विसहिदा अदिदुट्ठसद्दूल-णह-सिहावज्जप्पहारा मारिदो अ सो दुट्ठसावद-महारक्खसो त्ति (१)। (ख)

लव। हुं, मअरन्दो। (ह)

वक्षःस्थल-लाञ्छनजर्जरित-जवापीड़धारिणा करुणाघनेन मम कृते विसहिता अतिदुष्ट-शार्दूलनख-शिखावज्रप्रहाराः, मारितश्च स दुष्टश्वापद-महाराक्षस इति।

(ह) हुं, मकरन्दः।

तीति स तथोक्तस्तेन। करुणा दयैव धनं यस्य तेन अतीव दयालुनेत्यर्थः। अन्यथा निःसम्पर्को मां रक्षितुमेतावत्कष्टसहिष्णुता न स्यादिति भावः। अतिदुष्टशार्दूलस्य नखशिखा एव नखराग्रभागा एव वज्राः नितान्तकठिनतीक्ष्णत्वात् कुलिशानि तेषां प्रहाराः। दुष्टश्वापद एव महाराक्षसः सः। तं स्मर इत्यर्थः।

(ह) लवेति। हुमिति स्मरणार्थद्योतकमव्ययम्। "हुं स्मृतावप्यपाकृता"वित्यादि मेदिनी। अत्रापि कौतुकं व्यज्यते।

রক্ষা করিয়াছিলেন এবং অত্যন্ত দয়ালু যে ব্যক্তি কঠিন, ভয়ঙ্কর, সবল, উন্নত ও বিশাল বক্ষঃস্থলে ছিন্ন ভিন্ন জবাপুষ্পের মালার ন্যায় চিহ্ন ধারণ করিয়া, আমার নিমিত্ত ভয়ঙ্কর ব্যাঘ্রের নখাগ্ররূপ বজ্রের প্রহার সহ্য করিয়াছিলেন এবং সেই দুষ্টহিংস্রজন্তুস্বরূপ মহারাক্ষসকে মারিয়া ফেলিয়াছিলেন।

(হ) লবঙ্গিকা। হ্যাঁ, মকরন্দ।

---

(१) सहि ! सुमर।···सावदावदंसगोअरं···सुलग्गसंखिहिदेण···त्थम्भेण संभाविदा···। दिढ़-दाढ़ा···विदारिअ···वक्खत्थलेण जरटजज्जरिद। जवापीड़हारिणा करुणक्कमणेण मम किदे विणिमज्जन्त-सबल-णह-णिसाण-वज्ज-पञ्जर-प्पहारो···इति पाठभेदाः।

मद। सानन्दम्। पिअसहि! किं किं (१) भणासि। (ख)

लव। ण' भणामि मअरन्दो त्ति। स्मितं (२) शरीरस्पर्शं स्पृशन्ती संस्कृतमाश्रित्य। (क)

वयं तथा नाम यदात्थ किं वदा-
स्ययं त्वकस्माद् (३) विकल: कथान्तरे।
कदम्बगोलाकृतिमाश्रित: कथं
विशुद्धमुग्ध: कुलकन्यकाजन: ॥१॥

(ख) प्रियसखि! किं किं भणसि।

(क) ननु भणामि मकरन्द इति।

(ख) मदेति। प्रियतमनामश्रवणात् सानन्दम्। आनन्दादेव च किं किमिति द्विरुक्ति:। एतेन पुनर्मकरन्दनामश्रवणे महती व्यग्रता व्यज्यते।

(क) लवेति। मकरन्दनामश्रवणायैव व्यग्रतातिशयदर्शनात् स्मितम्। रोमाञ्च-परीक्षणाय शरीरस्पर्श:। लवङ्गिकाया: सखीरूपत्वाद्वैदग्ध्यार्थं संस्कृताश्रयणम्। यथा दर्पणे—

"योषित्सखीबालवेश्याकितवाप्सरसां तथा।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतञ्चान्तरान्तरा ॥"

वयमिति। यत् आत्थ 'वयं माधवे अनुरक्ता' इति यत् त्वं ब्रवीषि, वयं मालती-

(ক) মদয়ন্তিকা। ( আনন্দের সহিত ) প্রিয়সখি! কি? কি বলিলে?।

(ক) লবঙ্গিকা। ওহে! মকরন্দ এই কথা বলিলাম। ( ঈষৎ হাস্যের সহিত মদয়ন্তিকার শরীর স্পর্শ করতঃ, সংস্কৃত অবলম্বন করিয়া )

(१) क्वचित् 'किं किं' इति द्विरुक्तिर्नास्ति। (२) सस्मितं स्पृष्ट्वा इति पाठान्तरम्।

(३)…स्त्वयञ्च कस्मादिति भिन्न: पाठ:।

मद। सलज्जम्। सहि! किं मं उवहससि। णं भणामि णिव्वावदि तारिसस्स अप्पणिरवेक्ख-व्ववसाइणो किदन्त-कवलिज्जन्त-जीविद-वलामोडिअ--पच्चाणअण--गुरुओवआरिणो

(ख) सखि! किं मामुपहससि। ननु भणामि निर्वापयति तादृशस्य आत्म-निरपेक्षव्यवसायिनः कृतान्त-कवल्यमान-जीवित-बलात्कार-प्रत्यानयन-गुरूपकारिणो

तत्पक्षगताश्च जनाः, तथा माधवे अनुरक्ता एव इति नाम स्वीकरोमीत्यर्थः। नामशब्दोऽय-मभ्युपगमे। तु किन्तु, किं वदामि अहमपि त्वद्विषये किं ब्रवीमि, विशुद्धः परपुरुषानु-रागकलङ्कराहित्येन निर्मलः, प्रत्युत परपुरुषे नितान्तानुरागवानिति व्यज्यते, मुग्धः कामावेशजनितकपटताशून्यतया मूढ़ः सरलः, सातिशयकामावेशवशेनातीवकपट इत्यपि व्यज्यते। विशुद्धश्चासौ मुग्धश्चेति स विशुद्धमुग्धः। अयं इस्तेन स्पृश्यमानः कुलकन्यका-जनः केवलपरदोषाविष्कारिणी मदयन्तिका त्वमित्यर्थः, कथान्तरे कस्यचित् पुरुषस्य कथा-प्रसङ्गमध्य एव विकलः कुतश्चिदावेशाद्विह्वलः सन् कथं केन हेतुना कदम्बगोलस्य कदम्ब-पुष्पगोलकस्य आकृतिमिवाकृतिमाकारम् आश्रितः अवलम्बितवान् रोमाञ्चित इत्यर्थः। यथेयं कुलकन्यका कुमारी सत्येव, कस्मिंश्चित् पुरुषे परममनुरक्ता, मालत्यपि तथा, सुतरां तव केवलं दोषारोपो नितान्तमनुचित इति भावः। सोपहासेयमुक्तिः।

अत्र इत्थभङ्गीविशेषेण मदन्तिकायाः पुरुषविशेषानुरागस्याभिधानात् पर्यायोक्तमलङ्कारः समासगतार्थोपमया सङ्कीर्य्यते। तथा यदाख्य इति वाक्यस्य परत्र पाठात् "न्यक्कारो ह्ययमेव मे यदरय" इति दर्पणोदाहृतवत् वाक्यगतविधेयाविमर्शदोषः, स च 'यदाख्य एवं वयमत्र' इति पाठेन समाधेयः। ईदृशपाठे तु आख्य इति व्याघातोरयतन्त्याः सो प्रयोगः। एवम् इत्थम्भूता इत्यर्थः।

अत्र लेशो नाम नाट्यलक्षणम्। "स लेशो भण्यते वाक्यं यत् सादृश्यपुरःसरम्।" इति दर्पणलक्षणात्। वंशस्थविलं वृत्तम् ॥१॥

তুমি যেরূপ বলিতেছ, আমরা বরং সেইরূপই বটি ইহা স্বীকার করিলাম; কিন্তু নির্দ্দোষ ও সরল এই কুলকন্যাটী, হঠাৎ কথার প্রসঙ্গে বিকল হইয়া কদম্বপুষ্পের আকৃতি ধারণ করিল কেন? ॥১॥

জণস্স সংকহাসু ণামগ্গহণং সুমরণং অ (১)। তধা অ তুএ বি গাঢ়-গুরু-ণহ-প্পহার--বেঅণারম্ভ-বিহ্মলাবিদ--সরীর-সঙ্কলিদ-সেঅ-সলিলুপ্পীলো, মোহ-মউলাঅন্ত-ণেত্ত-কন্দোট্টজুঅলো, ভূমি-বিলগ্গিদাসিলদা-বিট্টম্ভ-ধোর-ধারিদ-সরীরভারো, পচ্চক্খীকিদো

জনস্য সঙ্কথাসু নামগ্রহণং স্মরণঞ্চ। তথা চ ত্বয়াপি গাঢ়-গুরু-নখ-প্রহার-বেদনারম্ভ-বিহ্বলিত শরীর-সঙ্কলিত স্বেদ-সলিলোৎপীড়ঃ, মোহ-মুকুলায়মান-নেত্রকন্দোটযুগলঃ,

(খ) সহীতি। লবঙ্গিকয়া স্বরীমাধবপ্রত্যক্ষীকরণাৎ সলজ্জমাহেত্যর্থঃ। আত্ম-নিরপেক্ষেণ আত্মরক্ষণাপেক্ষামকৃত্বা, ব্যবসায়িনঃ মাং রক্ষিতুমুদ্যমিনঃ, কৃতান্তেন যমেন কবল্যমানং শার্দ্দূলাক্রমণেনেব গ্রস্যমানং যৎ জীবিতং মম জীবনং তস্য বলাৎকারেণ বল-প্রকাশেন যৎ প্রত্যানয়নং প্রত্যুদ্ধরণং তেন গুরুকং মহৎ উপকর্ত্তুং শীলং যস্য তস্য। সঙ্কথাসু কথাপ্রসঙ্গেষ্বপি নামগ্রহণং নামোচ্চারণং স্মরণঞ্চ কর্ত্তৃ, নির্ব্বাপয়তি সন্তাপহীনাং করোতি। গাঢ়গুরুনখপ্রহারেণ কঠিনমহানখরাঘাতেন যো বেদনারম্ভস্তেন বিহ্বলিতাৎ শরীরাৎ বিকলী-কৃতাৎ সঙ্কলিতঃ স্বেদসলিলোৎপীড়ো ঘর্ম্মজলপ্রবাহো যস্য সঃ। মোহেন মূর্চ্ছয়া মুকুলায়-মানং মুদ্রিতীভবৎ নেত্রকন্দোটযুগলং নয়ননীলোৎপলদ্বয়ং যস্য সঃ। ভূমৌ বিলগ্নায়াঃ স্থিতায়া অসিলতায়া বিষ্টম্ভেন অবলম্বনেন ধীরং স্থিরং যথা স্যাৎ তথা ধারিতো ধৃতঃ শরীরভারো

(খ) মদয়ন্তিকা। (লজ্জার সহিত) সখি! আমাকে উপহাস করিতেছ কেন। আমি এই বলিতেছি যে, যিনি নিজের জীবনের অপেক্ষা না করিয়া আমার জীবন রক্ষা করিতে প্রবৃত্ত হইয়াছিলেন এবং যম আমার জীবন গ্রাস করিতেছিলেন, এই অবস্থায় যিনি বলপূর্ব্বক তাহা প্রত্যানয়ন করিয়া গুরুতর উপকার করিয়াছিলেন, কথার প্রসঙ্গে সেইরূপ লোকের নামোচ্চারণ ও স্মরণ করাই চিত্ত শীতল করে। দেখ, তুমিও প্রত্যক্ষই করিয়াছিলে যে, কঠিন ও বৃহৎ নখের আঘাতে তাঁহার দেহটীকে বিকল করিয়া ফেলিল, তাহা হইতে ঘর্ম্মজলের প্রবাহ পড়িতে

(১) সহি! কীস···ণিব্বাবঅন্তি···ণামগ্গহণ-সুমরণাইং ইতি পাঠান্তরাণি।

ज्जे वं मदअन्तिआ-णिमित्त-मेत्त-विच्छड्डिदमहामहग्घजीअलोओ महाभाओ त्ति (१)। स्वेदादीन् विकारान्नाटयति। (ख)

बुद्ध। शरीरमस्याः स्पृशन्ती। अस्सत्थसरीरे! किं वाआ, दंसिदं सरीरेण मअरन्दसमाअमोच्छुक्कं (२)। (ग)

भूमि-विलग्नाशीलता-विष्टम्भ-धीर-धारित-शरीरभारः, प्रत्यक्षीकृत एव मदयन्तिकानिमित्त-मात्र-विच्छर्दितमहामहार्घजीवलोको महाभाग इति।

(ग) अस्वस्थशरीरे! किं वाचा, दर्शितं शरीरेण मकरन्दसमागमौत्सुक्यम्।

येन सः। तथा मदयन्तिकानिमित्तमात्रे केवलमदयन्तिकानिमित्ते विच्छर्दितः परित्यक्तः शार्दूलसन्निधौ स्वदेहस्थापनेन मरणावश्यम्भावात् परित्यज्यमान इत्यर्थः महामहार्घः जीवने नानाविधसुखसम्भोगसम्भवादतीवमहामूल्यः जीवलोको येन स तथोक्तः, महाभागो नाना-गुणशालित्वादतीवभाग्यवान् मकरन्दः, त्वयापि प्रत्यक्षीकृत एव। सुतरां तत्कृतोपकारे न मे मिथ्यावादित्वमाशङ्कनीयमिति भावः।

"कन्दोट (क्ली) नीलोत्पल"मिति शब्दकल्पद्रुमः।

(ग) बुद्धेति। अस्वस्थशरीरे! मदनपीडावशादसुस्थदेहे! वाचा किं निजावस्था

लাগিল, মোহের আবেগে নীলোৎপলতুল্য নয়নযুগল মুদ্রিত হইতেছিল, ভূতলসংলগ্ন তরবারিখানি ধরিয়া ধীরে ধীরে শরীরের ভার ধারণ করিতে লাগিলেন, এইভাবে সেই মহাত্মা কেবল মদয়ন্তিকার জন্য অত্যন্ত মহামূল্য এই জীবলোক পরিত্যাগ করিতে প্রবৃত্ত হইয়াছিলেন। ( ঘর্ম্ম ও রোমাঞ্চপ্রভৃতি বিকার অভিনয় করিতে লাগিল। )

(१)···सो तुए वि गाढप्पहारवेअणारम्भविसारिदसरीरसङ्कलिदसेअणविलुग्गमो···भाम विगलिदासिअट्टि···परिधारिअ···मदअन्तिआमेत्तविच्छड्डिअमहग्घजीविदो महाणुहावो त्ति इति पाठभेदाः।

(२) बुद्ध। व्ववसिदं पिअसहीए सरीरेण इति पाठान्तरम्।

মদ । সলজ্জম্ । সহি ! অবেহি অবেহি । উব্‌ভিন্নহ্মি সহবাসিণীএ মালদীএ (১) । (ঘ)

লব । সহি ! মদঅন্তিএ ! অহ্মে বি জাণিদব্বং জাণীমো । তা পসীদ, বিরম ব্ববদেসাদো । এহি, বিস্সম্ভ-গব্‌ভ-কধা-বন্ধসরিসং (২) সুহং চিট্ঠহ্ম । (ঙ)

(ঘ) সখি ! অপেহি অপেহি । উদ্ভিন্নাস্মি সহবাসিন্যা মালত্যা ।

(ঙ) সখি ! মদয়ন্তিকে ! বয়মপি জ্ঞাতব্যং জানীমঃ । তৎ প্রসীদ, বিরম ব্যপদেশাৎ । এহি, বিস্রম্ভগর্ভ-কথাবন্ধসদৃশং সুখং তিষ্ঠামঃ ।

গোপনবচসা কিং ফলম্ অপি তু কিমপি নেত্যর্থঃ । কথমেতদিত্যাহ দর্শিতমিতি । শরীরেণ মকরন্দস্য স্মরণমাত্রেণৈব রোমাঞ্চিতেনেত্যভিপ্রায়ঃ । দর্শিতং প্রকটিতম্ ।

(ঘ) মদেতি । উদ্ভিন্না রোমাঞ্চিতা । তথা চ প্রিয়সখ্যা মালত্যাঃ সহবাসেনানন্দাদেবাঙ্গে রোমাঞ্চাঃ সঞ্জাতাঃ, ন পুনর্মকরন্দস্য স্মরণাদিতি ভাবঃ ।

অত্র ব্যাজোক্তিরলঙ্কারঃ । "ব্যাজোক্তির্গোপনং ব্যাজাদুদ্ভিন্নস্যাপি বস্তুন" ইতি লক্ষণাৎ ।

(ঙ) লবেতি । ব্যপদেশাৎ আত্মভাবগোপনচ্ছলাৎ । বিস্রম্ভঃ প্রণয়ো গর্ভে যস্য তস্য তাদৃশস্য কথাবন্ধস্য সংলাপপরম্পরায়াঃ সদৃশং যোগ্যং তাদৃশালাপপরম্পরয়া যাদৃশং সুখং ভবিতুমর্হতি তাদৃশং সুখং নিরতিশয়নির্মলসুখং যথা স্যাত্তথেত্যর্থঃ ।

(গ) বুদ্ধরক্ষিতা । ( মদয়ন্তিকার শরীর স্পর্শ করিতে করিতে ) সখি ! তোমার শরীর অসুস্থ হইয়া পড়িয়াছে । বাক্যে কি হইবে, তোমার শরীরই, মকরন্দের সহিত সম্মিলিত হইবার ঔৎসুক্য দেখাইতেছে ।

(ঘ) মদয়ন্তিকা । ( লজ্জার সহিত ) সখি ! দূর হও, দূর হও । আমি সহবাসিনী মালতীদ্বারাই রোমাঞ্চিত হইয়া পড়িয়াছি ।

(১)···পিঅসহি ! অব্বহি । উব্‌ভিন্নহ্মি সহবাসিণীএ রোমঞ্চেণ ইতি পাঠভেদঃ ।

(২)···বিস্সম্ভগব্‌ভকহাপ্পবন্ধসরসং ইতি ক্বচিৎ পাঠঃ ।

बुद्ध। सहि! सोहणं लवङ्गिआए भणिदं (१)। (च)

मद। विधेअम्हि संपदं सहीणं (२)। (छ)

लव। जइ एव्वं, ता कधेहि कधं णु दे कालो गच्छदि त्ति। (ज)

मद। णिसामेहि पिअसहि!। मम बुद्धरक्खिदा-पक्खवाद-पच्चएण पढमं ज्जेव तस्सिं जणे अदिभूमिं गदो अणुराओ।

---

(च) सखि! शोभनं लवङ्गिकया भणितम्।

(छ) विधेयास्मि साम्प्रतं सख्योः।

(ज) यद्येवम्, तत् कथय, कथं नु ते कालो गच्छतीति।

(च) बुद्धेति। शोभनं युक्तियुक्तत्वात् साधुभूतम्। सुतरां तदेव कर्त्तव्यमिति भावः।

(छ) मदेति। सख्योर्युवयोः। विधेयास्मि अतीवस्नेहवशात् वाक्याधीनास्मि। तथा च यदादिश्यते तदेव मया करणीयमिति भावः।

"विधेयो विनयग्राही वचनेस्थित आश्रवः" इत्यमरः।

(ज) लवेति। कथं केन प्रकारेण।

---

(ङ) লবঙ্গিকা। সখি! মদয়ন্তিকে! আমরাও, কিছু জ্ঞাতব্য বিষয় জানিতে চাই। অতএব তুমি প্রসন্ন হও, ছল হইতে বিরত হও। আইস্, প্রণয়গর্ভ আলাপের উপযুক্ত স্থলে অবস্থান করি।

(চ) বুদ্ধরক্ষিতা। সখি! লবঙ্গিকা সুন্দর বলিয়াছে।

(ছ) মদয়ন্তিকা। আমি ত এখন তোমাদের কথার অধীন।

(জ) লবঙ্গিকা। যদি এমন হয়, তবে বল—তোমার কি ভাবে সময় যাইতেছে।

(১) बुद्ध। सोहणं लवङ्गिआ भणादि। इति भिन्नः पाठः।

(२) पिअसहीओ इत्यपि पाठः।

अवि अ, तस्सिं जणे भरिदुव्वरन्त-कोदूहलुक्कण्ठा-मणोरहं हिअअं आसी (१)। (झ)

तदो विहिणिओअ-णिव्वुत्त-दंसणा भविअ, (२) दुव्वार-दारुणाआस-दुक्ख-सन्दाव-दज्झन्त--चित्त-विहडन्त--जीविदासा,

(झ) निशामय प्रियसखि!। मम बुद्धरक्षिता-पक्षपात-प्रत्ययेन प्रथममेव तस्मिन् जने अतिभूमिं गतोऽनुरागः। अपि च, तस्मिन् जने भृतोद्वर्त्तमानकौतूहलोत्कण्ठामनोरथं हृदयमासीत्।

(ञ) ततो विधिनियोग-निर्वृत्त-दर्शना भूत्वा, दुर्वार-दारुणायास-दुःख-सन्ताप-

(झ) मदेति। हे प्रियसखि! लवङ्गिके! निशामय आकर्णय। बुद्धरक्षिताया अवगतसर्ववृत्तान्ततया लवङ्गिकाया एवेदं सम्बोधनं तत एव चैकवचनमिति बोध्यम्। बुद्धरक्षितायाः पक्षपाती गुणवर्णनादिना मकरन्दपक्षग्रहणं तव प्रत्ययेन विश्वासेन। गुणज्ञा बुद्धरक्षिता न खलु निर्गुणस्य पक्षपातिनी भवितुमर्हतीति तद्विश्वासः सम्भवपर एवेति भावः। तस्मिन् जने मकरन्दे। मनसा पतिभावनिर्वर्त्तनात् मकरन्द-नामग्रहणमकृत्वा तस्मिन् जन इत्युक्तम्। अतिभूमिमाधिक्यम्। भृतमिति भावे क्तः, ततश्च भृतात् हृदयपरिपूरणात् परम् उद्वर्त्तमाना अतिरिक्तीभवन्तः, अतीवबहुला इत्यर्थः, कौतूहलोत्कण्ठामनोरथा दर्शनालापादौ कौतुकौत्सुक्याभिलाषा यत्र तादृशम्।

(ञ) तत इति। विधिनियोगेन दैवप्रेरणेन निर्वृत्तं शार्दूलाक्रमणकाले निष्पन्नं दर्शनं साक्षात्कारो यस्याः सा। दुर्वारो यत्नान्तरेण दुरुपशमो दारुणश्च य आयासो

(ঝ) মদয়ন্তিকা। প্রিয়সখি! শোন, সেই ব্যক্তির প্রতি বুদ্ধরক্ষিতার পক্ষপাতে বিশ্বাস করিয়া, তাহার প্রতি আমার অনুরাগ প্রথমেই খুব বেশী হইয়াছিল এবং সেই ব্যক্তির প্রতি কৌতুক, উৎকণ্ঠা ও অভিলাষ হৃদয়কে পরিপূর্ণ করিয়া উদ্বৃত্ত হইয়াছিল।

(१)…पञ्चण्ण पढमं एव्व तस्सिं जणे अविरलकोजहलुक्कण्ठामणहरं…इति पाठभेदः।
(२) तदो विहिणिओअअचिरणिव्वुत्तदंसणा भविअ इत्यपि पाठः।

दूर-विअम्भिआपुव्व-सव्वङ्ग-प्पज्जलण--मअण--हुदवहुद्दाम--दाह-दूसहाआस-दुम्मणाअन्त-परिअणा, (१) पच्चासा-विमोक्खमेत्त-सुलह-मिच्चु-णिव्वाण-पडिऊल--वुड्ढरक्खिदा--वअण--विवड्ढआवेअ-व्वइअर-विसंठुला इमं जीअलोअ-परिवत्तं अणुहोमि। (ञ)

दह्यमान-चित्त-विघटमान-जीविताशा, दूर-विजृम्भितापूर्व-सर्वाङ्ग-प्रज्वलन-मदन-हुतवहोद्दाम-दाह-दुःसहायास-दुर्म्मनायमानपरिजना, प्रत्याशा-विमोक्षमात्रसुलभ-मृत्यु-निर्वाण-प्रतिकूल वृद्धरक्षिता-वचन-विवर्द्धितावेग व्यतिकर-विसंष्ठुला, इमं जीवलोकपरिवर्त्तमनुभवामि।

मन्मथपीड़ा, तस्य दुःखसन्तापाभ्यां सञ्जनितकष्टपरितापाभ्यां दह्यमानात् चित्तात् विघटमाना अपसरन्ती विनश्यन्ती जीविताशा जीवनप्रत्याशा यस्याः सा। दूरविजृम्भितः अतीववृद्धिं गतः, अपूर्वं आश्चर्य्यः, सर्वाङ्गप्रज्वलनः सकलदेहावयवसन्तापकः, यो मदनहुतवहः कामानलः, तस्य उद्दामदाहेन तत्कृतविकटसन्तापेन यो दुःसह आयासः कष्टम्, तेन दुर्म्मनायमानाः प्रतीकारोपायाभावात् दुःखितमनस्काः परिजनाः परिचारिकाः यस्याः सा। तथा प्रत्याशाविमोक्षमात्रेण तस्य प्रियतमस्य लाभाशापरित्यागमात्रेण सुलभम् अनायाससप्राप्यं यत् मृत्युनिर्वाणं मरणसुखम्, तस्य प्रतिकूलानि प्रतिबन्धकानि यानि वृद्धरक्षिताया

(ঞ) তাহার পর দৈবঘটনায় তাঁহার সন্দর্শন সম্পন্ন হইল, তদনন্তর অনিবার্য্য ও ভয়ঙ্কর বেদনার দুঃখ ও সন্তাপে হৃদয় দগ্ধ হইতে লাগিল এবং তাহা হইতে জীবনের আশা দূরীভূত হইল; অত্যন্ত বৃদ্ধিপ্রাপ্ত, আশ্চর্য্য ও সর্ব্বাঙ্গসন্তাপী কামানলের দারুণ দাহে আমি অসহ্য কষ্ট পাইতে লাগিলাম, তাহাতে আমার পরিজনবর্গও দুঃখিত হইতে লাগিল এবং কেবল সেই ব্যক্তির আশা পরিত্যাগ করিলেই অনায়াসে মৃত্যু লাভ

(१) दुव्वारदारुणायङ्कदुक्खसन्दाविदकडढन्तचित्तविहडन्तजीविदा सम्भाविअम्हि। विजिम्भिदापुव्वसव्वङ्गपज्जलिअमअणामदूसहाआहुदवदुहस···इति पाठान्तरम्।

सङ्कप्प-सिविण-अन्तरेसु अ ( १ ) मणोरहुम्माद-मोहिदा पेक्खामि तं जणं। सो वि पिअसहि! मुहुत्त-णिव्वूढ़-विब्भम-विसंठुलु-व्वेल्लन्त-वित्थरन्त-ललिद-णेत्त--पुण्डरीअ--तण्डवुप्पोल-

(ट) सङ्कल्प स्वप्नान्तरेषु च मनोरथोन्मादमोहिता प्रेचे तं जनम्। सोऽपि

वचनानि 'सखि! मा भियस्व, अवश्यमेव तत्समागमो भविष्यति' इत्यभूतानि वाक्यानि, तैर्विवर्द्धितस्य आवेगस्य समागमाशावेगस्य व्यतिकरेण सम्पर्केण विसंष्ठुला विषमीकृता अस्थिरचित्तीकृता सती, इमं जीवलोकस्य जगतः परिवर्त्तं क्रमिकपरिवर्त्तनम् अनुभवामि समयमतिवाहयामीत्यर्थः। किन्तु नाद्यापि तत्समागमो जात इति भावः। तस्मिन्नहमेतावदनुरक्ता, यथा तस्य लाभाशापरित्यागमात्रेणैव ममावश्यमेव मरणं भवेत्, तथा सति च मन्मथपीड़ोपशमेन चिरनिर्वृतिः स्यात्; किन्तु बुद्धरचितायाः प्रत्याशाजनकवाक्यैर्मर्त्तुमपि न शक्नोमि, अथ च तदाशावेगेन सततमस्थिरचित्ता सती समयमतिवाहयामीति शेषविशेषणस्य सरलार्थः। एतेनातिमहती समागमोत्कण्ठा व्यज्यते।

(ट) सङ्कल्पेति। अपि चेति चार्थः। सङ्कल्पाः 'तेन सहैवमालपामि, इत्थञ्च विहरामि' इत्येवं भावनाः, स्वप्ना निद्रितावस्थायां विषयानुभवाः, तेषामन्तरेषु मध्येषु, व्यक्तिभेदाद्बहुवचनम्। मनोरथेन अभिलाषमात्रेण य उन्मादः कामोन्मत्तता, तेन मोहिता सती तं जनं मकरन्दं प्रेचे पश्यामि। सोऽपि, न केवलमहं मकरन्दोऽपि। मुहूर्त्तं निर्व्यूढ़ः सम्पन्नो यो विभ्रमो दर्शनाश्चर्यं तेन विसंष्ठुलं विषमं सातिशयं यथा

করায় আমার নির্বৃতি হইত; কিন্তু বুদ্ধরক্ষিতার বাক্যই তাহার প্রতিকূল হইয়া আমার আবেগ বাড়াইতে লাগিল, আমি তাহাতে অস্থির হইয়া এই জীবলোকের পরিবর্ত্তন অনুভব করিতে লাগিলাম।

(ট) কল্পনা ও স্বপ্নের মধ্যে কেবল ইচ্ছাতেই কামোন্মাদ উপস্থিত হয়, তাহাতে মোহিত হইয়া সেই ব্যক্তিকে দেখিতে থাকি। প্রিয়সখি! তিনিও আমাকে দেখিতে থাকেন; তখন মুহূর্ত্তমধ্যেই তাঁহার

(१) सङ्कप्पचिन्ताए सिविणन्तरेसु अ इति पाठान्तरम्।

डम्बर--पड़िरूढ़--मैरेअ--मद--घुसिअं विअ णिज्झाअदि मं (१)। (ट)

किं अ, कवलिदारविन्द-केसर-कसाअ-कण्ठ-कलहंस-घोस-घग्घर-क्खलिद-गम्भीर-तार-धीर-णाद-भरिद-कण्णविवरं "पिए !

प्रियसखि ! मुहूर्त-निर्व्यूढ़-विस्मय-विसंष्ठुलोद्वेल्लद्विस्तार्यमाण ललित-नेत्रपुण्डरीक-ताण्डवोत्पीड़-डम्बर-प्रतिरूढ़-मैरेयमद-घूर्णितमिव निध्यायति माम्।

(ठ) किञ्च, कवलितारविन्द-केसर-कषायकण्ठ-कलहंस-घोष-घर्घर-स्खलित-गम्भीर-

स्यात्तया उद्वेल्लतोरुन्नमतोः, विस्तार्यमाणयोर्दर्शनतृष्णया प्रसार्यमाणयोः ललितयोः सुन्दरयोः, नेत्रपुण्डरीकयोस्ताण्डवोत्पीड़ः नृत्यराशिः स्पन्दनसमूह इत्यर्थः स एव डम्बर आड़म्बरः, तेन प्रतिरूढ़मुत्पन्नं मैरेयमदेन मैरेयाख्यमद्यपानजनितमत्ततया घूर्णितमिव घूर्णितं घूर्णनं यस्मिन् कर्म्मणि तद्यथा तथा मां निध्यायति पश्यति।

"मैरेयं धातकीपुष्प-गुड़धानाम्लसंहितम्।" इति माधवः। "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्।" इत्यमरः।

(ठ) किञ्चेति। किञ्च अन्यच्च। कवलितैर्ग्रस्तैः खादितैः अरविन्दकेसरैः पद्म-किञ्जल्कैः कषायः सुरभिर्मनोहर इत्यर्थः कण्ठः स्वरो यस्य, तस्य तथोक्तस्य कलहंसस्य घोषो रव इव घर्घरः अस्पष्टस्वरः, स्खलितो गद्गदः "एतदुभयं साध्वसवशा"दिति

বিস্ময় জন্মে, তাহাতে তাঁহার মনোহর নয়নপদ্ম দুইটী অত্যন্ত উন্নত ও বিস্তৃত হইয়া গুরুতর নৃত্যের আড়ম্বর করিতে থাকে, তখন তাহাতে মৈরেয়নামক মদ্যপানের মত্ততাতেই যেন ঘূর্ণন উপস্থিত হয়।

(ঠ) আরও (শোন,) তিনি—"প্রিয়ে! মনস্বিকে!" এইরূপ কথা বলেন; তখন পদ্ম-কিঞ্জল্ক ভক্ষণ করায় মনোহরস্বর কলহংসের রবের ন্যায় অস্পষ্ট, গদ্গদ, গম্ভীর, উচ্চ ও অকম্পিত শব্দে আমার কর্ণবিবর

(१) तह अ, पिअसहि! मुहुत्तं उद्दूढ़विम्हअविसंठुलुव्वेल्लविव्थारिपेरन्ताल-रत्तधवलपुक्खरीअताण्डवडम्बरपरूढ़मैरेअमदघुम्मन्तसील' णिज्झएदि इति पाठभेदः।

मदअन्तिए !" त्ति वाहरदि । अध अ, पप्फुरन्त-पओहर-च्छलन्त-उत्तरीअ-अञ्चलावलम्बण-परिभवेण ससंभमुत्तरङ्गिधम-धमाअन्त-हिअअं मं समुत्तासेदि (१) । (ठ)

तार-धीर-नाद-भरित-कर्णविवरं "प्रिये ! मदयन्तिके !" इति व्याहरति । अथ च प्रस्फुरत्-पयोधरोच्छलदुत्तरीयाञ्चलावलम्बनपरिभवेन ससंभ्रमोत्तरङ्गि-धमधमायमानहृदयां मां समुत्त्रासयति ।

अगद्गदः, गम्भीरः, तार उच्चः, धीरः अकम्पितश्च यो नादः शब्दः तेन भरिते परिपूर्णे कर्णविवरे कर्णरन्ध्रद्वयं यस्मिन् कर्म्मणि तद्यथा तथा । व्याहरति वदति । अथ च अनन्तरञ्च । प्रस्फुरतोः स्पर्शवशात् स्पन्दमानयोः पयोधरयोः स्तनयोः, उच्छलत् स्पन्दनादेव विगलत् यदुत्तरीयाञ्चलं तस्यावलम्बनं धारणमेव परिभवस्तेन ससंभ्रमं सावेगम्, उत्तरङ्गि अतीवचञ्चलम्, धमधमायमानं सातिशयोद्वेगवशात् 'धम धम' इत्येवं कुर्वाणं हृदयं यस्यास्तां तथाभूतां मां समुत्त्रासयति चकितां करोति ।

पद्मकिञ्जल्ककवलनेन हंसानां स्वरो मधुरो भवतीति प्रसिद्धिः ।

"कटु-तिक्त-कषायास्तु सौरभेऽपि प्रकीर्त्तिताः ।" इति हलायुधः । "स्वरेऽपि कण्ठ आख्यात" इति हारावली । "घर्घरो ना चलद्वारिध्वानोलूकनदान्तरे । स्त्री क्षुद्रकण्ठ्यां वीणाया भेदे स्वरान्तरेऽपि च ॥" इति मेदिनी ।

धमधमायमानेति धमधमशब्दात् "अव्यक्तानुकरणा"दित्यादिना डाच्, ततश्च, "डाच्यव्यक्तानुकरणस्ये"त्यादिप्रत्ययान्तादानश् ।

পরিপূর্ণ হইয়া যায় । তাহার পর তাঁহার স্পর্শে আমার স্তনযুগল স্পন্দিত হইতে থাকে, তাহাতে উত্তরীয় বসন পড়িতে থাকে, তাহার অঞ্চলধারণ-রূপ পরাভব করায় আবেগে আমার হৃদয় নাচিতে থাকে এবং 'ধম ধম' করে ; এই অবস্থায় তিনি আমাকে চকিত করিয়া তোলেন ।

(१)···गम्भीरभारईभरिअकण्णविवरं···। अह पहावन्ती विअ उत्तरिअञ्चलवलम्बण पराहवेण इति भिन्नः पाठः ।

सहसा विसज्जिअंसुअ-प्पसरिदं तक्खण-कठोर-कमलदण्डाअ-माण-बाहु-बन्धणाववारिअ-पओहरुग्गमं, विहडन्त-विअड-मेहलावलअ-संदाणिज्जन्त-पीवरूरु--प्पडिसिद्ध--विप्पदोवगमणं, पडिउलवादिणीं वि मं अच्चाअर-पअत्तो-णिव्वत्तिद-मुहुत्त-

(ड) सहसा विसर्जितांशुकप्रसृताम्, तत्क्षण-कठोर-कमल-दण्डायमान-बाहुबन्धनाप-वारित-पयोधरोद्गमाम्, विघटमान-विकट-मेखलावलय सन्दान्यमान-पीवरोरु-प्रतिषिद्ध-

(ड) सहसेति। विसर्जितम् आकृष्य त्याजितम् अंशुकं परिहितवसनं यस्याः सा तथा प्रसृता लज्जावशात् प्रस्थातुं प्रवृत्ता, विसर्जितांशुका चासौ प्रसृता चेति ताम्। तत्-क्षणे तस्मिन् प्रस्थानारम्भसमये कठोरौ परिणतौ यौ कमलदण्डौ पद्मनालद्वयं तद्वदाचरन्तौ विपुलपुलकोदयात् तत्सदृशौ यौ बाहू भुजौ ताभ्यां बन्धनेन आलिङ्गनेन अपवारितस्तिरो-धायित आच्छादितः पयोधरयोः कुचयोः, उद्गम औन्नत्यं तुङ्गता यस्यास्ताम्। ईदृशारम्भे कथं न पलायितमित्याह विघटमानेत्यादि। विघटमानं वसनस्खलनादवस्रंस-मानम्, विकटं विशालम्, यत् मेखलावलयं वलयीकृतं काञ्चीदाम, तेन सन्दान्यमानौ बध्यमानौ संयम्यमानौ पीवरौ स्थूलौ यौ ऊरू स्वकीयमेवोरुद्वयम्, ताभ्यां प्रतिषिद्धं निवारितं विप्रतीपगमनं तदभिलषितव्यापारस्य प्रतिकूलीभूतं प्रस्थानं यस्यास्ताम् प्रतिकूलवादिनीमपि 'मैवं विधेहि' इत्यादिनिषेधकारिणीमपि। अत्यादरेण प्रयत्नेन च तदीयेनेत्यर्थः निर्वर्त्तिते निष्पादिते ये मुहूर्त्ते मुहूर्त्तव्यापिनी तादृशारम्भेण निरतिशय-

(ড) তিনি হঠাৎ আমার পরিধেয় বসন খুলিয়া ফেলান, আমি সরিতে থাকি; তখন তিনি পরিণত পদ্মদণ্ডের ন্যায় বাহুযুগলদ্বারা আলিঙ্গন করিয়া আমার স্তনযুগলের উচ্চতাকে আচ্ছাদিত করেন। বিশাল কাঞ্চীদাম খুলিয়া নীচে পড়িতে থাকে, তাহাতে আমার স্থূল উরুযুগল বদ্ধ হইয়া পড়ে, তাহাতে তাঁহার অনভিমত আমার গমন নিবারিত হইয়া যায়। তাঁহার অত্যন্ত আদর ও প্রযত্ন মুহূর্ত্তকালের জন্য আমার কোপ ও দুঃখ জন্মায়, তাহাতে আমার হৃদয় নিষ্ঠুর হইয়া

कोवोवराअ-दुक्खपरुसीकिदहिअअं, सिणिद्ध-पुणरुत्तपल्लत्थ-लोअण-विभाविदासेस-चित्तसारं उवहसदि (१)। (ड)

दिउण-बाहुदण्डावेट्टण-णिअन्तिदं पिअसहि! परूढ़-सद्दूल-कठोर-करुह-प्पहार-विअड़-पत्तावली-पसाहणुत्ताण--वच्छत्थल-

विप्रतीपगमनाम्, प्रतिकूलवादिनीमपि माम् अत्यादरप्रयत्ननिर्वर्त्तित-मुहूर्त कोपोपराग-दुःख-परुषीकृतहृदयाम्, स्निग्धपुनरुक्त-पर्य्यस्त-लोचन-विभाविताशेषचित्तसारामुपहसति।

(ढ). द्विगुण-बाहुदण्डावेष्टननियन्त्रितां प्रियसखि! प्ररूढ़-शार्दूल-कठोर-कररुह-

अयसुखलाभादल्पकालस्थायिनौ, कोपोपरागदुःखे 'कथमयमीदृशमाचरती'ति रोषसम्बन्ध-कष्टे, ताभ्यां परुषीकृतं निष्ठुरीकृतं हृदयं यस्यास्ताम्। तथा स्निग्धे सस्नेहे, पुनरुक्त-पर्य्यस्ते द्विगुणनिपातिते मदङ्गेष्वतीवगाढ़निवेशिते ये लोचने चक्षुर्द्वयं ताभ्यां विभावितः अवगतः, अशेषः समस्तः, चित्तस्य चित्तवृत्तेः सारः स्थिरांशः निश्चितांशः 'मिथ्यैवायं कोपः, प्रत्युत ईदृशाचरणे सम्पूर्णसम्मतिरस्ति' इत्येवमभिप्रायो यस्यास्तां तथोक्तां माम् उपहसति 'अयि! गन्तुमारभमाणा कथं न गच्छसि' ईदृशार्थव्यञ्जकेन मुखनयनभङ्गी-विशेषेण उपहासं करोति।

सन्दानं बन्धनरज्जुरनयोरस्तीति सन्दानौ अर्शआदित्वादत् ततश्च सन्दानौ क्रियमाणा-विति सन्दान्यमानौ करोत्यर्थेनन्तात् कर्म्मणि शानच्।

(ढ) द्विगुणेति। द्विगुणाभ्यां पृष्ठदेशे आकर्षणेनोभयहस्तस्थापनेन द्विगुणीकृताभ्यां बाहुभ्याम् आवेष्टनेन नियन्त्रितां संयमितां गाढालिङ्गनेन बद्धामित्यर्थः। प्ररूढ़ं जातं शार्दूलस्य कठोरकररुहप्रहाराः कठिननखाघातचिह्नान्येव विकटपत्रावली विस्तृतपत्ररचना-

যায়, তাই আমি তাঁহার প্রতিকূল বলিতে থাকি; তখন তিনি স্নেহের সহিত দ্বিগুণ দৃষ্টিপাত করিয়া আমার মনের সমস্ত ভাবের সার বুঝিতে পারিয়া আমাকে উপহাস করিতে থাকেন।

(१) विसज्जिद कोउरिच तक्खण···विहड़न्तिसुअमेहलावलअसंधाणिज्जन्त···णिविड़ पुणरुत्त···उवहसिअ इति पाठभेदाः।

णिट्ठुर-णिवेस-णीसहं करुअ, सावेअ-विहुअ-मत्थआविद्ध-(१) कवरी-णिहिद-करपरिग्गह-पुञ्जीकिदुण्णमिद-णिच्चल-मुहावअव-सच्छन्द-विलसिद-विअड्ढ-वअण-कमलो, (२) वामगण्डमूलो-

प्रहार-विकट-पत्रावली-प्रसाधनीत्तान-वक्षःस्थल-निष्ठुर-निवेश-निःसहां कृत्वा सावेगविधुत-मस्तकाविद्ध-कवरी-निहित--कर--परिग्रह--पुञ्जीकृतोन्नमित--निश्चल--मुखावयव--स्वच्छन्द-

श्रेणी सैव प्रसाधनं भूषणं यत्र तत्, उत्तानम् उन्नतञ्च यत् वक्षःस्थलं तत्र निष्ठुरनिवेशेन गाढ़प्रवेशनेन निःसहां जड़ाम् अपसरणादिसर्व्वकार्य्याक्षमामित्यर्थः। कृत्वा विधाय, सावेगं सत्वरं विधुतं तस्य चुम्बनबाधाविधानाय मया विशेषेणान्दोलितं यत् मस्तकं मदीयमेव शिरः, तेन आविद्धा स्खलिता या कवरी मदीयो निबद्धकेशपाशः, तस्यां निहितेन नयननासिकोपरि निपतितानां तेषां केशानामपसारणाय स्थापितेन, करेण एकस्मिन् करे समाबद्धीकरणव्यापृते सति अपरेण हस्तेन, यः परिग्रहो मदीय केशानामेव ग्रहणम्, तेन पुञ्जीकृतेषु पृष्ठतः पुञ्जीकृत्य विधृतेषु सत्सु मम केशेष्वित्यर्थः, उन्नमितास्तदाकर्षणेनैव उत्तोलिताः, निश्चलाः तत्कौशलेन स्पन्दयितुमपि सामर्थ्याभावात् सातिशयसुखपारवश्याच्च स्थिराः, ये मुखावयवा नयनाधरकपोलादयो मम वदनावयवाः, तेषु स्वच्छन्दविलसिते बाधाकरणासम्भवात् सम्भवपरं यत्र तत्र चुम्बनादियथेष्टव्यवहारे विदग्धं चतुरं वदनकमलं यस्य स तथोक्तः। दुर्विनीतानां

(ঢ) প্রিয়সখি! তিনি দ্বিগুণ বাহুযুগলদ্বারা বেষ্টন করিয়া আমাকে বন্ধন করেন এবং ব্যাঘ্রের কঠিন নখপ্রহারে সমুৎপন্ন ভয়ঙ্কর পত্ররচনা-ভূষিত ও উন্নত বক্ষঃস্থলে প্রগাঢ়ভাবে প্রবেশ করাইয়া আমাকে জড় করিয়া ফেলেন; তাহার পর আমি তাঁহার চুম্বনের বাধা জন্মাইবার জন্য বেগে মস্তক কম্পিত করিতে থাকি, তাহাতে আমার কবরী খুলিয়া যায়, তখন তিনি একহাতে আমার মুখের উপরের চুলগুলি সরাইয়া দিয়া অপর হাতে পিঠের দিকে সেই চুলগুলিকে পুঞ্জীকৃত করিয়া ধরেন,

(१)···मत्थआवविद्ध···इति पाठोऽपि दृश्यते।

(२) परिग्गहीवण्णिदुण्णमिद···सच्छन्दविब्भम इत्यपि पाठः।

वरि-णिहिद-प्पप्फुरन्त-पुञ्जिदाहर-समुग्गअ--प्फंस--णिव्भरुद्ध-स्सिद-सरीरमोहं, (१) उल्लसिद-सद्धसाणन्द-विसम-सम्भम-वलण-मोह-मन्थर-भमन्त-लोअणं, किं वि (२) दुव्विणीद-साहसाणु-रूवव्ववसाओ मं अणव्भत्थणिज्जं (३) अव्भत्थेदि। (ढ)

विलसित-विदग्ध-वदन-कमलो वामगण्ड-मूलोपरि-निहित-प्रस्फुरत्-पुञ्जिताधर-समुद्गत-मनोहर-स्पर्श-निर्भरोद्धर्षित-शरीरशोभाम्, उल्लसित-साध्वसानन्द-विषम-सम्भ्रम-वलन-मोह-मन्थर-भ्रमल्लोचनां किमपि दुर्विनीत-साहसानुरूपव्यवसायी मामनभ्यर्थनीयमभ्यर्थयते।

हठकामुकानां साहसानुरूपो हठाध्यवसायसदृशः, व्यवसायोऽध्यवसाय उद्यमो यस्य तादृशः सन्। वामगण्डमूलोपरि स्त्रीणां प्रायेण सर्वव्यवहारस्यैव वामभागे व्यवस्थापनात् मम वामकपोलमूले निहितात् स्थापितात् चुम्बनप्रवृत्तादित्यर्थः. अतएव प्रस्फुरतः स्पन्दमानात् पुञ्जिताधरात् विन्यस्तसकलांशात् तदीयोष्ठात् समुद्गतः समुत्पन्नो यो मनोहरः स्पर्शः, तेन निर्भरं सातिशयं यथा तथा उद्धर्षिता रोमाञ्चादिभिर्नितरां प्रकाशिता शरीरशोभा यस्या-स्ताम्। तथा उल्लसिताभ्यां तादृशारम्भेणोत्पन्नाभ्यां साध्वसानन्दाभ्यां भयसुखाभ्यां यो विषमसम्भ्रमो विशालावेगः, तस्य वलनेन उज्जीवनेन उत्पन्नो यो मोहो जड़ता तेन मन्थरं मन्दं यथा स्यात्तथा भ्रमन्ती घूर्णमाने लोचने चक्षुषी यस्यास्तां तथोक्तां मां किमपि लज्जया वक्तुमशक्यम्, अनभ्यर्थनीयं मम कन्यात्वदशावशात् केनापि न प्रार्थनीयं सुरत-मित्यर्थः अभ्यर्थयते याचते। इत्यन्तः स्वप्नवृत्तान्तः।

তখন আমার মুখের নয়ন, গণ্ড ও ওষ্ঠ উন্নত এবং নিশ্চল হইয়া পড়ে, সেগুলির উপরে তাঁহার মুখকমল ইচ্ছানুসারে চতুরতার সহিত কার্য্য করিতে থাকে; আমার বামগণ্ডের মূলের উপরে তিনি স্পন্দমান ও

(१)...वामगण्डमूलविरविणिहिद...समुग्गममणहरसहमसारम्भदमणहरुक्कस्सिद-सरीरसोहं इति पाठान्तराणि।

(२)...सम्भममणहरसंवलणमन्थरभमन्तचेअणं किं वि किं वि इति पाठभेदः।

(३) क्वचित् 'अणव्भत्थणिज्जं' इति पाठो नास्ति।

एव्वं णाम (१) पिअसहि ! समक्खं (२) सव्वं अणुभविअ झत्ति (३) पडिवुद्धा सुण्णारण्णसंणिहं पुणो वि मन्दभाइणी विभावेमि जीअलोअं त्ति । (ण)

लव । विहस्य । सहि मदअन्तिए ! फुडं आचक्खेहि । अध तस्सिं अवसरे सिणिद्ध-विब्भमुम्मीस-हास-विअसन्त-वुड्ढक्खिदा-

(ण) एवं नाम प्रियसखि ! समक्षं सर्वमनुभूय झटिति प्रतिबुद्धा शून्यारण्यसन्निभं पुनरपि मन्दभागिनी विभावयामि जीवलोकमिति ।

(त) सखि मदयन्तिके ! स्फुटमाचक्ष्व । अथ तस्मिन्नवसरे स्नेहविभ्रमोन्मिश्र-

(ण) एवमिति । एवम् इत्थम् । समक्षं प्रत्यक्षम् । झटिति तत्क्षणात् । प्रतिबुद्धा जागरिता । शून्यारण्यसन्निभं सहसा तादृशानुपमसुखास्वादापगमादिति भावः । मन्दभागिनी जाग्रदवस्थायां तदलाभादित्याशयः । जीवलोकं जीवलोकवैचित्र्यम्, विभावयामि चिन्तयामि । इतिशब्दस्य पूर्वोक्तनिशामयेत्यनेनान्वयः । एतेनातीवोत्कण्ठा व्यज्यते ।

পুঞ্জিত অধর স্থাপন করেন, তাহাতে মনোহর স্পর্শসুখ উৎপন্ন হয়, তাহাতে রোমাঞ্চপ্রভৃতি উৎপন্ন হওয়ায় আমার শরীরের শোভা অত্যন্ত বর্দ্ধিত হয় এবং তখন ভয় ও আনন্দ জন্মে, তাহার অত্যন্ত আবেগে জড়তা উৎপন্ন হয়, তাহাতে আমার নয়নযুগল অল্প অল্প ঘুরিতে থাকে। হঠকামুকের যেরূপ সাহস ও উদ্যম, তাঁহারও সেইরূপ সাহস ও উদ্যম দেখা যায়; সুতরাং যাহা প্রার্থনা করা উচিত নহে, তিনি তাহাই আমার নিকট প্রার্থনা করেন।

(ণ) প্রিয়সখি! আমার ভাগ্য মন্দ; তাই আমি প্রত্যক্ষে এইরূপ সমস্ত অনুভব করিয়া, হঠাৎ জাগরিত হইয়া, শূন্য অরণ্যের ন্যায় আবার জীবলোক দেখিতে থাকি।

(१) 'एव्वं णाम' इत्यपि क्वचिन्नास्ति ।

(२) समक्खं च इति क्वचित् पाठः । (३) तदो झत्ति इति भिन्नः पाठः ।

लोअण-णिरूविदं परिअणादो गोवणिज्जं दे णिअम्बस्स मूलं सअणिज्ज-पच्छदवड़ावबारिदं भोदि किं ण वेत्ति (१)। (त)

मद। अइ असंवद्धपरिहाससीले! अवेहि। (थ)

हास-विकसद्‌वुद्धरक्षिता-लोचननिरूपितं परिजनाद्‌गोपनीयं ते नितम्बस्य मूलं शयनीय-प्रच्छदपटापवारितं भवति किं न वेत्ति।

(थ) अयि असम्बद्धपरिहासशीले! अपेहि।

---

(त) लवेति। स्फुटमाचक्ष्व स्पष्टं ब्रूहि। तस्मिन्नवसरे स्वप्नसम्भोगसमये, स्नेहविभ्रमेण प्रेमविलासेन उन्मिश्रो युक्तो यो हासः, तव मुखभङ्गीप्रभृतिदर्शनेन हास्यम्, तेन विकसन्ती विस्तृते भवन्ती वुद्धरक्षितायाः सततसहचारिण्यास्तत्कालजागरिताया इत्यर्थः ये लोचने चक्षुषी, ताभ्यां निरूपितं सम्यगवलोकितम्, परिजनात् लज्जया परिचारिकाभ्योऽपि। शयनीयप्रच्छदपटेन परिहितवसनस्योत्सारणात् शय्याया आस्तरणवसनेन अपवारितं धातुक्षरणात् दृढ़संलग्नतया आच्छादितम्। पार्श्वपरिवर्त्तनादाविति भावः। एतेन किङ्करी-जनोपयोगिप्रश्नेन मालत्यपेक्षया मदयन्तिकाया अपकृष्टत्वं प्रतिपादितम्। अत्र तु ईदृशे आलापे सत्यपि समवयस्कानां गोष्ठीवशान्न अश्लीलतादोषः। प्रत्युत गुण एव। तथा चोक्तम्—

"सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः।"

(थ) मदेति। तत्सम्भोगस्य चुम्बनान्तत्वात् तत्परभाविसुरतविषयकः परिहासो-ऽयमसम्बद्ध एवेति भावः।

(ত) লবঙ্গিকা। ( হাস্য করিয়া ) সখি! মদয়ন্তিকে! স্পষ্ট বল; সেই সময়ে বুদ্ধরক্ষিতা স্নেহ ও নানাবিভ্রমমিশ্রিত এবং বিস্ফারিত নয়নে দেখিয়া ফেলে এবং পরিচারিকাগণের নিকটেও গোপন করা উচিত, এইরূপ তোমার নিতম্বের মূলদেশ শয্যার আস্তরণবস্ত্রে আবৃত হইয়া যায় কি না?।

( १ )···सिणेहविब्भमुम्मिस्सहासविअसन्तबुद्धरक्खिदालोअणणिरूविदं आसणमज्झस्स परिअणादो गोवणिज्जं होइ वा किं ण वेत्ति इति पाठान्तरम्।

बुद्ध। सहि मदअन्तिए! मालदीपिअसही क्खु ईदिसाइं ज्जेव्व मन्तिदुं जाणादि (१)। (द)

मद। सहि! (२) मा क्खु एव्वं मालदीं उवहस। (ध)

बुद्ध। सहि मदअन्तिए! पुच्छिस्सं दाणिं किं वि, (३) जइ ण मे विस्सासभङ्गं करेसि। (न)

मद। (४) किं पुणो वि पणअभङ्गेण किमावराहो अम्

(द) सखि मदयन्तिके! मालतीप्रियसखी खलु ईदृशान्येव मन्त्रयितुं जानाति।

(ध) सखि! मा खल्वेवं मालतीमुपहस।

(न) सखि मदयन्तिके! प्रक्ष्यामीदानीं किमपि, यदि न मे विश्वासभङ्गं करोषि।

(द) बुद्धेति। मालत्याः प्रियसखी लवङ्गिका। ईदृशान्येव एवमश्लीलताद्योतकान्येव वचनानि, मन्त्रयितुं वक्तुम्। येन हि लवङ्गिका मालत्या इत्थं दृष्टवती, सुतरां तत्तुलनया त्वां प्रत्यपि तथैव पृच्छतीति भावः।

(ध) मदेति। एवमित्थम्। मालत्या नितान्तनिर्दोषत्वादिति भावः। एतेन मालत्यामतीव पक्षपातो व्यज्यते।

(थ) মদয়ন্তিকা। ওলো অসম্বন্ধপরিহাসস্বভাবে! দূর হও।

(দ) বুদ্ধরক্ষিতা। সখি! মদয়ন্তিকে! মালতীর প্রিয়সখী এইরূপই বলিতে জানে।

(ধ) মদয়ন্তিকা। সখি! এইভাবে মালতীকে উপহাস করিও না।

(ন) বুদ্ধরক্ষিতা। সখি! মদয়ন্তিকে! তোমাকে এখন কোন বিষয় জিজ্ঞাসা করিব, যদি আমার বিশ্বাসভঙ্গ না কর।

(१)…मालदीपिअसही एव्व इध ईदिसाइं जाणाइ इति पाठभेदः।

(२) क्वचित् 'सहि!' इति पाठो नास्ति।

(३) भणिस्सं दाणिं दे किं वि इति कुत्रचित् पाठः।

(४) क्वचित् 'सहि!' इति सम्बोधनमत्र दृश्यते।

जणो, जेण एव्वं मन्तेसि। पिअसहि! तुमं लवङ्गिआ अ (१) सम्पदं मे हिअअं। (प)

बुद्ध। जइ दे कधं वि मअरन्दो पुणो वि दंसणपहं ओदरति, तदो किं तुए कादव्वं ?। (फ)

मद। एक्केक्कावअव-णिसग्ग-लग्ग-णिच्चले (२) चिरं लोअणे णिव्वावइस्सं। (ब)

(प) किं पुनरपि प्रणयभङ्गेन क्कतापराधोऽयं जनो येनैवं मन्त्रयसि। प्रियसखि ! त्वं लवङ्गिका च साम्प्रतं मे हृदयम्।

(फ) यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति, ततः किं त्वया कर्त्तव्यम् ?।

(ब) एकैकावयवनिसर्गलग्ननिश्चले चिरं लोचने निर्वापयिष्यामि

(प) मदेति। प्रणयभङ्गेन विश्वासभङ्गेन विश्वासभङ्गपूर्वकत्वदनुकम्पाकरणे-नेत्यर्थः। पुनरपीत्यनेन क्वचिद्बुद्धरक्षिताकृतौ मकरन्दाय स्वयमात्मार्पणानुरोधो मदयन्तिकया न रचित इति प्रतीयते। हृदयं हृदयरूपा। सुतरां युवयोर्वाक्यमिदानीमवश्यमेव मया पालनीयमिति भावः।

"प्रणयः प्रेम्णि विश्रम्भे याच्ञाप्रसरयोरपि।" इति विश्वः।

(ब) मदेति। एकैकावयवे वदनादौ, निसर्गेण तदीयानुपमसौन्दर्य्यवशात्

(প) মদয়ন্তিকা। এই ব্যক্তি বিশ্বাসভঙ্গ করিয়া আবারও কি অপরাধ করিবে, যে এইরূপ বলিতেছ। প্রিয়সখি! তুমি এবং লবঙ্গিকা এখন আমার হৃদয়।

(ফ) বুদ্ধরক্ষিতা। যদি মকরন্দ কোন রকমে আবারও তোমার দৃষ্টিপথে পতিত হ'ন, তবে তুমি কি করিবে ?।

(१) तुमं लवङ्गिकाणा सह इत्यपि पाठः।

(२)···णीसङ्गलग्गणिच्चले इति पाठोऽपि दृश्यते।

बुद्ध। अध सो मम्मह-वलक्कारिदो जइ (१) कन्दप्पजणणिं तुमं रुक्मिणिं विअ पुरिसोत्तमो सअंगाहसाहसेण सहधम्म-आरिणिं (२) करेदि, तदो कोरिसो (३) पड़िवत्ती ?। (भ)

(भ) अथ स मन्मथबलात्कारितो यदि कन्दर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयंग्राहसाहसेन सहधर्म्मचारिणीं करोति, ततः कीदृशी प्रतिपत्तिः।

स्वभावेन, लग्ने दृढ़संसक्ते, निश्चले नितान्तहमिलाभात्तवैव चिरं स्थिते, लोचने मदीय-चक्षुषी, निर्वापयिष्यामि शीतलीकरिष्यामि। एतेन महती दर्शनलालसा व्यज्यते।

(भ) बुद्धेति। मन्मथस्य बलात्कारो बलेन प्रवृत्तिः सञ्जातोऽस्येति मन्मथबलात्-कारितः नितान्तकामाविष्टः सः मकरन्दः। पुरुषोत्तमः कृष्णः पुरुषश्रेष्ठश्च। कन्दर्पजननीं भाविप्रद्युम्नमातरम्। कामविकारहेतुभूताञ्च स्वयंग्राहसाहसेन अपहरणेन। सहधर्म्म-चारिणीं पत्नीम्। ततस्तदा। प्रतिपत्तिः तव कर्त्तव्यता। तादृशापहरणे तव सम्मति-रस्ति न वेत्यर्थः।

अत्र पूर्णोपमालङ्कारः। दाक्षिण्यं नाम नाट्यलक्षणञ्च। यथा दर्पणे—

"दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्त्तनम्।"

(ब) मदयन्तिका। তবে আমার নয়নযুগলকে তাঁহার এক একটী অঙ্গে বহুকালযাবৎ স্বভাবতঃ সংলগ্ন ও নিস্পন্দ রাখিয়া উহাদিগকে শীতল করিব।

(ভ) বুদ্ধরক্ষিতা। পুরুষোত্তম কৃষ্ণ যেমন কামার্ত্ত হইয়া, কাম-জননী রুক্মিণীকে সাহসপূর্ব্বক স্বয়ং গ্রহণ করিয়া সহধর্ম্মিণী করিয়াছিলেন, সেইরূপ সেই পুরুষশ্রেষ্ঠ মকরন্দ যদি বলপূর্ব্বক কামাবিষ্ট হইয়া কামোৎ-পাদিনী তোমাকে সাহসপূর্ব্বক স্বয়ং গ্রহণ করিয়া সহধর্ম্মিণী করেন, তাহা-হইলে তোমার কর্ত্তব্য কি ?।

(१) क्वचित् 'सो वि' इति पाठोऽस्ति। जइ इति तु नास्ति।

(२) सअंगाहसहधम्मचारिणिं इति पाठान्तरम्। (३) का इत्यपि पाठः।

मद । निःश्वस्य । कीस मं एत्तिअं आसासेसि (१) । (म)

बुद्ध । सहि ! कहेहि । (य)

लव । कहिदं ज्जेव्व हिअआवेअसूअएहिं दीहणीसासेहिं । (र)

मद । सहि ! का अहं इमस्स तेण ज्जेव्व अत्ताणं पणोकदुअ दुट्ट-सद्दूल-कवलादो कड्ढिअस्स तस्स ज्जेव्व सकेरअस्स अत्तणो सरीरस्स (२) । (ल)

---

(म) केन मामेतावदाश्वासयसि ।

(य) सखि ! कथय ।

(र) कथितमेव हृदयावेगसूचकैर्दीर्घनिःश्वासैः ।

---

(म) मदेति । आत्मनो मन्दभाग्यतया तादृशव्यापारोऽसम्भव एवेति मत्वा विषादेन निःश्वस्येत्यर्थः । मम मन्दभाग्यतया तन्न भविष्यतीति भावः । एतेन तादृशव्यापारे महीयानभिप्रायोऽस्तीति व्यज्यते ।

अतएवात्र मनोरथो नाम नाट्यलक्षणम्—"मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत् ।" इति दर्पणलक्षणात् ।

(र) लवेति । कथितमेव सूचितमेव । अस्यास्तादृशापहरणे सम्मतिरस्त्येवेति भावः ।

---

(म) মদয়ন্তিকা। ( নিশ্বাস ত্যাগ করিয়া ) কেন আমাকে এতদূর আশ্বস্ত করিতেছ।

(য) বুদ্ধরক্ষিতা। সখি! বল।

(র) লবঙ্গিকা। মনের আবেগসূচক তাহা দীর্ঘ নিশ্বাসই তাহা বলিয়াছে।

---

(१) किं एत्तिअं आसासिदह्मि इति पाठभेदः ।

(२)···मिव कवलणादो···परएअस्स किअकिङ्करस्स···इति पाठभेदाः ।

लव। सरिसं क्खु (१) महाणुभावदाए। (व)

बुद्ध। सुमरेहि (२) एदं वअणं। (श)

(ल) सखि! का अहमस्य तेनैवात्मानं पणीकृत्य दुष्ट-शार्दूलकवलादाकृष्टस्य तस्यैव स्वकीयस्य आत्मनः शरीरस्य।

(व) सदृशं खलु महानुभावतायाः।

(श) स्मरैतद्वचनम्।

(ल) सखीति। तेनैव मकरन्देनैव। आत्मानं स्वदेहम्। आकृष्टस्य आकृष्य रक्षितस्य। तस्यैव मकरन्दस्यैव स्वकीयस्य स्वत्वास्पदीभूतस्य। आत्मनो मम। अहं का अपि तु कापि न, न स्वामिनीत्यर्थः। अस्य मद्देहस्य मकरन्दस्वामिकत्वात् परकीय-वस्तुनः परेण विनियोगासम्भवात् अस्यापहरणे मया किं वक्तव्यमिति भावः। एतेन मदयन्तिकया खल्वात्मनैवात्मा मकरन्दाय प्रतिपादित इति ध्वन्यते।

(व) लवेति। महानुभावतायाः उपकारिणः प्रत्युपकारकरणकामनावत्त्वात् महासच्चित्तवृत्तिप्रभावशालितायाः सदृशम् अनुरूपं योग्यमिदमुक्तमिति शेषः।

(श) बुद्धेति। एतत् मकरन्दकर्तृकात्मापहरणस्वीकारसूचकं वचनम्, स्मर सर्वदा मनसि रक्ष। तथा च तत्समये समुपस्थिते स्वयमेव न प्रतिबन्धनीया इति भावः। मया बुद्धरक्षितया मकरन्दमुद्दिश्यापीदमुक्तम्। तथा च हे मकरन्द! एतत् मदयन्तिकाया अपहरणस्वीकारसूचकं वचनं स्मर, स्मृत्वा चेदानीमेवैनामपहर्तुमुद्यमं विधेहीति ध्वनिना सङ्केतितम्। अतएवेदमेकं पताकास्थानम्। तथा च दर्पणे—

(ल) মদয়ন্তিকা। তিনিই নিজের জীবনকে পণ করিয়া দুষ্ট ব্যাঘ্রের কবল হইতে আমার শরীর আকর্ষণ করিয়া আনিয়াছিলেন; সুতরাং আমার শরীর তাঁহারই নিজের হইয়া গিয়াছে; অতএব আমি ইহার কে?।

(ব) লবঙ্গিকা। উদারতার ইহাই উপযুক্ত।

(१) क्वचित् 'क्खु' इति नास्ति। (२) सुमरेसि इति भिन्नः पाठः।

मद । कहं दुदिअ-जाम-विच्छेद-पड़हो (१) ताड़िअदि । ता जाव णन्दणं णिब्भच्छिअ सपादपड़णं वा अब्भत्थिअ (२) मालदीए उवरि अणुऊलइस्सं । इत्युत्थातुमिच्छति (३) । (ष)

मकरन्दो मुखमुद्घाट्य तां हस्ते (४) गृह्णाति ।

(ष) कथं द्वितीययामविच्छेदपटहस्ताड्यते । तद्यावत् नन्दनं निर्भर्त्स्य सपाद-पतनं वा अभ्यर्थ्य मालत्या उपर्य्यनुकूलयिष्यामि ।

"सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ॥"

(ष) मदेति । द्वितीययामस्य रात्रेर्द्वितीयप्रहरस्य विच्छेदो वियोगः अतीतता तस्य पटहः तत्सूचकध्वनिकारिणी ढक्का ताड्यते वाद्यते । तत्स्मात् अनिद्रावशादस्वास्थ्य-सम्भवेनेदानीमत्रावस्थानस्यानौचित्यादित्यर्थः । निर्भर्त्स्य "ईदृशीं सुशीलां मालतीं प्रति तवायमन्याय्यो व्यवहार" इत्थं तिरस्कृत्य । गुरुभूतस्य ज्येष्ठभ्रातुर्निर्भर्त्सनमन्याय्यमित्यभि-प्रेत्याह सपादेति । वा अथवा, सपादपतनं तस्य पादयोः पतित्वेत्यर्थः, अभ्यर्थ्य 'आर्य्य ! मालतीं प्रति प्रसन्नो भव' इति सानुनयं याचित्वा ।

(শ) বুদ্ধরক্ষিতা। এই বাক্য স্মরণ রাখিও। (মকরন্দপক্ষে স্মরণ কর)।

(ষ) মদয়ন্তিকা। দ্বিতীয়প্রহর অতীত হওয়ার ঢাক বাজাইতেছে। অতএব ভৎর্সনা করিয়া অথবা পায়ে পড়িয়া প্রার্থনা করিয়া, নন্দনকে মালতীর উপরে অনুকূল করিব। (এই বলিয়া উঠিতে ইচ্ছা করিল।)

(মকরন্দ মুখ বাহির করিয়া মদয়ন্তিকার হস্ত ধারণ করিলেন।)

(१) कधं दुदीअ-पहर-णाड़िआ-विच्छेद-पड़हो इति पाठान्तरम् ।

(२) से पादपड़णं अब्भत्थिअ इत्यपि पाठः ।

(३) इत्युत्थाय गन्तुमिच्छति इति पाठोऽपि दृश्यते । (४) हस्तेन इति क्वचित् पाठः ।

मद। सहि! मालदि! पड़िवुद्धासि (१)। विलोक्य सहर्षं ससाध्वसञ्च। अम्मो! अस्सं ज्जेव्व किं पि एदं वट्टदि (२)। (स)

मक। रम्भोरु! संहर भयं च्चमते विसोढु-
मुत्कम्पितं स्तनभरस्य न मध्यभागः (३)।
इत्थं त्वयैव कथितप्रणयप्रसादः
सङ्कल्पनिर्वृतिषु संस्तुत एष दासः ॥२॥

(स) सखि! मालति! प्रतिबुद्धासि। अहो! अन्यदेव किमप्येतद्वर्त्तते।

(स) मदेति। प्रतिबुद्धा जागरिता। प्रियतमदर्शनात् सहर्षम्, कन्यायाः पुरुषस्पर्शानौचित्यात् परावगमसंशयाद्वा ससाध्वसं सभयम्। अहो आश्चर्य्यम्। अन्यदेव मनसावधारितान्मालतीशयनाद्भिन्नमेव, किमपि असम्भवत्वादनिर्वचनीयम्, एतत् प्रियतमस्य मकरन्दस्य शयनम्।

रम्भोर्विति। हे रम्भोरु! कदलीस्तम्भसमानोरुयुगले! भयं सङ्गीतिं संहर परित्यज। येन हि मध्यभागः अतीव कृशस्तव कटिदेशः, स्तनभरस्य कुचभारस्य उत्कम्पितं भयवशात् सञ्चलनं विसोढुं न च्चमते न शक्नोति। भयं वा कथमित्याह इत्थमिति। इत्थं पूर्वोक्तप्रकारेण, त्वयैव स्वयमेव कथितः प्रणयः प्रेमैव प्रसादोऽनुग्रहो यस्मिन् सः। तथा सङ्कल्पनिर्वृतिषु गाढ़ानुरागात् बहुषु सङ्कल्पजनितसमागमसुखेषु संस्तुतः मयैव सह सततसमागमात् परिचितः, एष इत्यात्मनिर्द्देशः दासस्तव किङ्करः। सुतरां बहुपरिचितत्वात् दासत्वाच्च मद्भयं न करणीयमिति भावः।

(স) মদয়ন্তিকা। সখি! মালতি! জাগিয়াছ। (দেখিয়া হর্ষ ও ভয়ের সহিত) ও মা! এ যে অন্য কোন ব্যাপার বটে!।

(१)…विप्पबुद्धासि इति पुस्तकान्तरे पाठः।

(२) अम्महे! अण्णं एदं एव्वं वट्टइ इति पाठभेदः।

(३)…च्चमते विकार-मुत्कम्पिनः स्तनतटस्य न मध्यभागः। इति पाठभेदः।

बुद्ध। मदयन्तिकामुखमुन्नमय्य संस्कृतमाश्रित्य। (ह)

प्रेयान् मनोरथसहस्रवृतः स एष
सुप्त-प्रमत्त-जनमेतदमात्यवेश्म।
प्रौढ़ं (१) तमः कुरु कृतज्ञतयैव भद्र-
मुत्क्षिप्त-मूक-मणिनूपुरमेहि यामः॥ २॥

अत्र प्रथमवाक्यार्थं प्रति द्वितीयतृतीयवाक्यार्थयोर्हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्ग-मलङ्कारः। तथा मकरन्देनात्मनो दासत्वार्थं नियोगात् संक्षेपो नाम नाट्यलक्षणम्—

"संक्षेपो यत्तु संक्षेपादात्माऽन्यार्थे प्रयुज्यते।" इति लक्षणात्।

"संस्तवः स्यात् परिचय" इत्यमरः। वसन्ततिलका वृत्तम्॥२॥

(ह) बुद्धेति। स्वहानिभयसूचनापूर्वकमहाहिनिषिताद्योतनार्थं मुखोन्नमनम्, सखीरूपत्वाच्च संस्कृताश्रयणमिति बोध्यम्।

प्रेयानिति। यः पूर्वं मनोरथसहस्रवृतः प्रियतमत्वेन बहुतराभिलाषविषयीकृतः, स एष सन्निहितः, प्रेयान् प्रियतमो मकरन्दो वर्त्तते। सुतरामनेन सह प्रस्थाने दोषस्तु नास्त्येव, प्रत्युत चिरतराशायाः पूरणमेव स्यादिति भावः। ननु प्रस्थानकाले यदि कश्चिदवलोकयेदित्याह सुप्तेत्यादि। एतत् अमात्यस्य नन्दनस्य वेश्म पुरम्, सुप्ताः केचिन्निद्रिताः प्रमत्ता विवाहोत्सवमत्ततया अपरे जागरिता अपि विषयान्तरेष्वनवहिता जना यत्र तादृशं वर्त्तते। अतस्तेभ्यः किमपि भयं नास्तीति भावः। ननु सततसावधाना

---

মকরন্দ। হে রম্ভোরু! ভয় পরিত্যাগ কর, তোমার ক্ষীণমধ্য-ভাগ স্তনভারের কম্পন সহ্য করিতে পারিতেছে না, এইভাবে তুমিই যাহার প্রতি প্রণয়রূপ অনুগ্রহের কথা বলিয়াছ, মনে মনে কল্পনার নির্বৃতির সময়ে পরিচিত এই সেই ভৃত্য॥২॥

(হ) বুদ্ধরক্ষিতা। (মদয়ন্তিকার মুখ তুলিয়া ধরিয়া সংস্কৃতভাষা অবলম্বন করিয়া)

---

(१) अन्धमिति पाठान्तरम्।

मद। सहि! बुद्धरक्खिदे! कहिं उण (१) अम्हेहिं गन्तव्वं?। (च)

बुद्ध। जहिं ज्जेव्व मालदी गदा (२)। (क)

मद। किं णिव्वुत्तसाहसा मालदी?। (ख)

(च) सखि! बुद्धरक्षिते! कस्मिन् पुनरस्माभिर्गन्तव्यम्?।

(क) यस्मिन्नेव मालती गता।

(ख) किं निर्वृत्तसाहसा मालती?।

नगरपालकार्य्येनिग्रहीयुरित्याह प्रौढ़मिति। प्रौढ़ं तमो गाढ़ोऽन्धकारो विद्यते। तेन हि नितान्तघनैः प्रस्थाने तेभ्योऽपि शङ्का नास्तीति भावः। अतएव कृतज्ञतयैव शार्द्दूल-कवलात् परित्राणेनोपकारिणः प्रत्युपकारस्मरणेनैव भद्रं स्वकीयमङ्गलं कुरु। एतदा-चरणेनात्ममङ्गलम् उपकारिणः प्रत्युपकारश्च कृतः स्यादिति भावः। अतएव उत्क्षिप्तौ उत्तोलितौ, तेन च मूकौ निःशब्दौ नूपुरौ यस्मिन् कर्म्मणि तद्‌यथा तथा एहि आगच्छ। याम इतो वयं प्रतिष्ठामहे।

अत्र प्रस्थानसौकर्य्यं प्रति बहुकारणोपन्यासात् समुच्चयोऽलङ्कारः।

वसन्ततिलका वृत्तम् ॥३॥

তুমি সহস্র অভিলাষে যাঁহাকে বরণ করিয়াছিলে, ইনি সেই প্রিয়তম মকরন্দ; অমাত্যের এই বাড়ীতে অনেক লোক নিদ্রিত এবং অনেক লোক আমোদে মত্ত, এবং প্রগাঢ় অন্ধকার; অতএব কৃতজ্ঞতা স্মরণ করিয়া নিজের মঙ্গল কর; মণিময় নূপুরযুগলকে উপরে তুলিয়া নিঃশব্দ কর; আইস, আমরা যাই ॥৩॥

(ক্ষ) মদয়ন্তিকা। সখি! বুদ্ধরক্ষিতে! আমাদের কোথায় যাইতে হইবে?।

(ক) বুদ্ধরক্ষিতা। মালতী যেখানে গিয়াছে।

(१) पुणो दाणिं इत्यपि पाठः। (२) गदा इति पाठः क्वचिन्नास्ति।

बुद्ध। अधइं। अस्सं अ, तुमं भणासि। "का अहं इमस्स" इत्यादि पठति। (ग)

मदयन्तिका अश्रूणि पातयति। (घ)

बुद्ध। महाभाग! दिस्सं क्खु अत्ताणं पिअसहोए पड़िवज्जस्स (१)। (ङ)

(ग) अथकिम्। अन्यच्च, त्वं भणसि।

(ङ) महाभाग! दत्तं खल्वात्मानं प्रियसख्या प्रतिपद्यस्व।

(ख) मदेति। निर्वृत्तं निष्पन्नं साहसं माधवेन सममितः प्रस्थानरूपं साहसकार्य्यं यस्याः सा।

(ग) बुद्धेति। अथकिं तत्सत्यं निर्वृत्तसाहसैवेत्यर्थः। सुतरां तत्तुलनया त्वमपि तथैवानुतिष्ठेत्यभिप्रायः। भणसीत्यतीतसामीप्ये वर्त्तमाना। इतः पूर्व्वमेव त्वं "का अहं इमस्स" इत्यादि भणितवतीत्यर्थः। तथा च मकरन्देन सममिदानीमितः प्रस्थाने तत् परिपालितं भवेदिति भावः।

(घ) मदेति। अश्रूणि पातयति, पित्रादिना सम्प्रदानकाल इवात्रापि चिराय बान्धववियोगावधारणादिति बोध्यम्। एतेनात्मदानं सम्पादितमिति सूचितम्।

(ङ) बुद्धेति। प्रियसख्या मदयन्तिकया, दत्तं पित्रादिना सम्प्रदानकाल इव अश्रुपातनप्रदर्शनेन स्वयमेव तुभ्यमर्पितम्। प्रतिपद्यस्व गृहाण।

(খ) মদয়ন্তিকা। মালতী কি সাহসের কার্য্য সম্পাদন করিয়াছে?।

(গ) বুদ্ধরক্ষিতা। হঁ্যা। আরও শোন, তুমি বলিয়াছ ("আমি এই শরীরের কে—" ইত্যাদি পাঠ করিল)।

(ঘ) (মদয়ন্তিকা অশ্রুমোচন করিতে লাগিল)।

(ঙ) বুদ্ধরক্ষিতা। মহাশয়! আমার প্রিয়সখী আপনাকে আপনি দান করিলেন, আপনি গ্রহণ করুন।

(१)···दिण्णो खु सअं अप्पा पिअसहोए इति पाठान्तरम्।

मक। अद्योर्जितं विजितमेव मया किमन्य-
दद्योत्सवः फलवतो मम यौवनस्य।
यन्मे प्रसादसुमुखेन समुद्यतेयं (१)
देवेन बान्धवधुरा मकरध्वजेन ॥४॥

तदनेन पक्षद्वारेण निर्गत्य (२) साधयामः। (च)

निभृतं परिक्रामन्ति। (छ)

अद्येति। अद्य मया ऊर्जितं सबलम् अदृष्टबलादित्यर्थः विजितम् अस्याः प्रियतमाया लाभादुत्कर्षो लब्धः। अन्यत् किं वक्तव्यमित्यर्थः। तथा अद्य फलवतः प्रियतमाया लाभादेव सफलस्य मम यौवनस्य उत्सवो महानन्दो वर्त्तते। यद् यस्मात् प्रसादसुमुखेन स्वतोऽनुग्रहप्रसन्नेन मकरध्वजेन मन्मथेन देवेन, इयं मह्यं मदयन्तिकायाः प्रतिपादनरूपा बान्धवधुरा बान्धवभारो बन्धुकर्त्तव्यं समुद्यता समुद्यम्य धृता, मन्मथेनैव नियोज्य मह्यमियं दत्तेत्यर्थः।

अत्र यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणान्न विधेयाविमर्शदोषः।

बान्धवस्य धूरिति बान्धवधुरा "धुरनक्षस्ये"ति राजादित्वादत्प्रत्यये सति स्त्रियामादा।

वसन्ततिलका वृत्तम् ॥४॥

(च) तदिति। पक्षद्वारेण खड़्क्किकया। साधयामो गन्तव्यस्थानं गच्छामः।

"खड़्क्किका (स्त्री) पक्षद्वारम्। खिड़्किद्वार इति भाषा।" इति शब्दकल्पद्रुमः।
"प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते।" इति साहित्यदर्पणः।

मकरन्द। आज आमि अदृष्टेर बले जयई करिलाम; अन्य आर कि बलिब, आज आमार सफल यौवनेर उत्सव। ये हेतु, कामदेव अनुग्रहे प्रसन्न हइया, आमार एइ बान्धवेर भार वहन करिलेन ॥४॥

(চ) অতএব এই খিড়কীর দ্বার দিয়া আমরা চলিয়া যাই।

(१) यस्य प्रसादसुमुखेन समुद्धृतेव इति पाठभेदः।

(२) निर्गत्य इति पाठः क्वचिन्नास्ति।

मक। अहो ! निशीथनिःसञ्चाररमणीयता राजमार्गस्य । तथाहि सम्प्रति—(१) (ज)

प्रासादानामुपरि वलभीतुङ्गवातायनेषु
भ्रान्त्वावृत्तः (२) परिणत-(३) सुरागन्धसंस्कारगर्भः ।
माल्यामोदी मुहुरुपचित-स्फीत-(४) कर्पूरवासो
वायु-(५) र्यूनामभिमतवधूसन्निधानं (६) व्यनक्ति ॥५॥

(छ) निभृतमिति । निभृतं मन्दं मन्दं परिक्रामन्ति प्रस्थातुं पादक्षेपं कुर्वन्ति ।

(ज) अहो इति । निशीथे अर्द्धरात्रे निःसञ्चारेण प्राणिमात्रस्यैव सञ्चाराभावेन सम्भीभावेनेत्यर्थः । रमणीयता सौन्दर्य्यम् ।

प्रासादानामिति । प्रासादानां सौधानाम् उपरिभागेषु या वलभ्यश्चूड़ाभूता गृहाः, तासां तुङ्गवातायनेषु उच्चगवाक्षजालेषु भ्रान्त्वा मध्ये परिभ्रम्य आवृत्तः पुनर्निःसृतः । अतएव परिणतसुरायाः पानार्थं तत्रानीतस्य परिपक्वमद्यस्य, गन्धेन सौरभेण, संस्कारो वासना सुगन्धीकृतता गर्भे मध्ये यस्य सः । माल्यानां यूनामुपकरणीभूतानां कुसुममालानाम्, आमोदः सौरभमस्यास्तीति माल्यामोदी । तथा मुहुः पुनः पुनः, उपचितो गृहीतः, स्फीतो विपुलः कर्पूरस्य वासः सौरभं येन स तथोक्तो वायुः, यूनां तरुणानाम् अभिमत-वधूनाम् अभिलषितरमणीनां सन्निधानं तासु वलभीषु सम्भोगार्थं सामीप्यमुपस्थितिम्, व्यनक्ति सूचयति । सम्भोगोपकरणानां सुरा-माला-कर्पूराणां सौरभादानादिति भावः ।

(ছ) ( সকলে আস্তে আস্তে পাদক্ষেপ করিতে লাগিল )।

(জ) মকরন্দ। অর্দ্ধরাত্র সময়ে কাহারও গমনাগমন না থাকায় রাজপথের আশ্চর্য্য সৌন্দর্য্য হইয়াছে। তাহাই এখন বলিতেছি—

(१) सम्प्रति हि इति क्वचित् पाठः । (२) प्रासामोदः, भ्रान्त्यावृत्तः इति पाठभेदो । (३) परिचित···इत्यपि पाठः । (४)···स्फार···इति पाठान्तरम् । (५) वात इत्यपि पाठः । (६) अभिनववधूसन्निधानमिति पाठोऽपि दृश्यते ।

इति निष्क्रान्ताः सर्वे ।

# इति मालतीमाधवे नन्दनविप्रलम्भो नाम (१) सप्तमोऽङ्कः । (झ)

अत्राभिमतवधूसन्निधानसूचने वायोः सुरासौरभवत्त्वं माल्यामोदित्वं गृहीतकर्पूरवासत्वञ्च हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

शुद्धान्ते वलभी चन्द्रशाले सौधोर्द्ध्ववेश्मनि ।" इति रभसः । "वासः (पुं)···सुगन्धिः ।" इति शब्दकल्पद्रुमः ।

मन्दाक्रान्ता वृत्तम् ॥५॥

(झ) इतीति । नन्दनेन करणीये मालतीपरिणये मालती तु माधवेनैव परिणीता, प्रत्युत पुनर्नन्दनभगिन्येव मालतीपतिवयस्येन मकरन्देन कलेन निष्क्राम्य नीतेति नन्दनस्य विप्रलम्भो वञ्चना यत्रेति नन्दनविप्रलम्भः ।

अहो ! यदि पुनरयं कविः स्वयमेवान्तरान्तरा सुदीर्घसमासयोजनया सामाजिकान् सम्पूर्णरसास्वादे नावञ्चयिष्यत्, तदा खल्वयं नन्दनवञ्चनाङ्कः परमकौतुकावहोऽभविष्यत् ।

इति महामहोपाध्याय-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां मालतीमाधवटीकायां भावमनोहरायां सप्तमाङ्कविवरणं समाप्तम् ॥०॥

বায়ু, অট্টালিকাগুলির উপরের চিলে কোঠার গবাক্ষ দ্বার দিয়া ভিতরে ( প্রবেশপূর্ব্বক ) ভ্রমণ করিয়া নির্গত হইতেছে ; সুতরাং উহার ভিতরে পরিপক্ক মদ্যের গন্ধ রহিয়াছে, পুষ্পমাল্যের সৌরভ আছে এবং ঐ বায়ু কর্পূরের প্রচুর সৌরভ বারংবার গ্রহণ করিয়া ( ঐ চিলে কোঠাতে ) যুবকদিগের নিকটে, অভীষ্ট রমণীদিগের অবস্থিতি ব্যক্ত করিতেছে ॥৫॥

( ইহার পর সকলের প্রস্থান ) ।

## নন্দনবিপ্রলম্ভনামে সপ্তম অঙ্ক সমাপ্ত ।

(१) अयं पाठः क्वचिन्नास्ति ।

# अष्टमोऽङ्कः ।

——०:*:०——

ततः प्रविशत्यवलोकिता ।

अव । वन्दिदा मए णन्दणावास-(१) पड़िणिउत्ता भअवदी । ता जाव मालदीमाहवसआसं गच्छामि । परिक्रम्य । एदे दे णिव्वत्तित-(२) गोह्मदिअसावसाणमज्जणा दीहिआतड़-(३) सिलातलं अलङ्करन्ति मालदीमाहवा (४) । ता उवसप्पामि (५) ।

इति निष्क्रान्ता । (क)

(क) वन्दिता मया नन्दनावासप्रतिनिवृत्ता भगवती । तद्यावन्मालतीमाधवसकाशं गच्छामि । एतौ तौ निर्वर्त्तितग्रीष्मदिवसावसानमज्जनौ दीर्घिकातटशिलातलमलङ्कुरुतो मालतीमाधवौ । तदुपसर्पामि ।

(क) अवेति । भगवती कामन्दकी । निर्वर्त्तितं निष्पादितं ग्रीष्मदिवसावसानस्य मज्जनं स्नानं याभ्यां तौ । अलङ्कुरुत एकत्रोपवेशनेन शोभयतः ।

তদনন্তর অবলোকিতার প্রবেশ ।

(ক) অবলোকিতা। নন্দনের গৃহ হইতে প্রতিনিবৃত্ত ভগবতী কামন্দকীকে আমি বন্দনা করিয়াছি। অতএব মালতী ও মাধবের নিকট যাই। ( পাদচারণ করিয়া ) গ্রীষ্মকালের শেষবেলার অবগাহন করিয়া

(१)···णन्दणावसध···इति पाठभेदः । (२) परिणिव्वत्तिद···इत्यपि पाठः ।

(३) दीहिआतीर···इति पाठोऽपि दृश्यते ।

(४) क्वचित् 'मालदीमाहवा' इति पाठो नास्ति ।

(५) ता जाव उवसप्पिस्सं इति पाठान्तरम् ।

# प्रवेशकः। (ख)

ततः प्रविशत उपविष्टौ मालतीमाधवौ, अवलोकिता च (१)।

---

इतः प्रभृति नवमाङ्कसमाप्तिपर्य्यन्तो विमर्षसन्धिः। यथा साहित्यदर्पणे—

"यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः॥"

तथा चात्र विवाहरूपमुख्यफलस्योपायीभूतो मालतीमाधवयोरन्योन्यानुराग एकत्र-वासादिना गर्भसन्धित आधिक्येन प्रकाशितः, स च कपालकुण्डलाकर्त्तृकमालत्यपहरणेन रक्षिभटैर्माधवादीनामाक्रमणेन च सान्तराय इति।

नन्दनसम्प्रदानक-मालतीदानविषयक-राजानुरोधलक्षणविघ्ने सत्यपि कामन्दकीप्रभृतीना-मसाधारणचेष्टया तस्य पण्डीकृतत्वात् निश्चितप्राप्तिलक्षणा नियताप्तिर्नाम कार्य्यावस्था निरूपिता। तथा चोक्तम्—

"अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता।"

प्रसङ्गेनोत्पन्नं संक्षिप्तञ्च रक्षिभटानामाक्रमणलक्षणं चरितं प्रकरी नामार्थ-प्रकृतिः। यथा दर्पणे—

"प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता।
प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरम्॥"

अस्य च अपवादादीनि त्रयोदशाङ्गानि यथास्थानं प्रदर्श्य लक्षणानि वक्ष्यामः।

(ख) प्रवेशक इति। अत्र तु वन्दितेत्यादिवाक्येन वृत्तकथांशनिदर्शनम्, तद्-यावदित्यादिभिश्च वर्त्तिष्यमाणकथांशनिदर्शनमनुसन्धेयम्।

---

এই সেই মালতী ও মাধব দীঘীর পাড়ে পাথরের উপরে বসিয়া আছেন। অতএব উঁহাদের নিকটে যাই। (এই বলিয়া প্রস্থান করিল)।

## (খ) প্রবেশক।

তদনন্তর উপবিষ্ট অবস্থায় মালতী ও মাধবের এবং অবলোকিতার প্রবেশ।

---

(१) ततः प्रविशतो मालतीमाधवौ। उपविष्टावलोकिता च, इति क्वचित् पाठः।

माधवः। वयस्य! (१) नन्वनुशयस्थानमेतत्। पश्य—(फ)

दोर्भिरिति। प्राक् समराङ्गनमुपेत्यैव प्रथमम्, वीरान् क्रमेण कतिपयान् शूरान् सैनिकान्, अनुपात्य कौशलेनाकर्षणादिना भूतले निपात्य दोर्निष्पेषेण बाहुभ्यां भूतले निष्पेषणेन विशीर्णाः स्खलिताः सन्धयः सन्धिबन्धा येषां ते, ततश्च दलन्ती दोर्निष्पेषेणैव दलनं प्राप्नुवन्ती भज्यमाना इत्यर्थः कङ्काला: शरीरास्थीनि यस्मिन् कर्म्मणि तद्यथा स्यात्तथा उन्मथ्नतः तानेव वीरान् भूतले विलोडयतः, तत्प्रहरणानि तेषामस्त्राणि आच्छिद्य आक्रम्य गृहीत्वा विक्रामतः विक्रमं कुर्वतः अपरापरवीरैः सह युद्धं कुर्वत इत्यर्थः, प्रेयसी माधवस्येत्यन्वयः, पुरस्तादग्रतः, उद्वेल्लता ऊर्द्ध्वं स्पन्दमानेन घनेन निरन्तरेण रुण्डखण्ड-निकरेण कबन्धखण्डसमूहेन आकीर्णस्य व्याप्तस्य, संख्योदधेः समरसागरस्य मध्ये द्वेधा द्विप्रकारेण माधवस्य सञ्चरणदेशोभयपार्श्व इति तात्पर्य्यं स्तम्भितया भयविस्मयाभ्यां निश्चेष्टया पत्तिपङ्क्त्या पदातिश्रेण्या विकटो विशालः पन्थाः कश्चिन्मार्गः अभूत्। अतएवाश्चर्य्यमिव प्रेयसस्तेज इति भावः।

अत्र संख्योदधेरिति लुप्तोपमालङ्कारः, रुण्डखण्डेति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रासः, चतुर्थपादे एकप्रकारस्यासकृत्साम्यात् वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः।

"रुण्डः (पुं) कबन्धः" इति शब्दकल्पद्रुमः। शार्दूलविक्रीडितं वृत्तम् ॥९॥

প্রথমতঃ বীরগণকে ভূতলে নিপতিত করিয়া বাহুদ্বারা নিষ্পেষণ করিতে থাকায় তাহাদের সন্ধি-বন্ধন শিথিল হইতেছিল এবং অস্থিসমূহ বাহির হইতেছিল, এই অবস্থায় আবার তাহাদিগকে মন্থন করিতে-ছিলেন এবং তাহাদের অস্ত্র লইয়া বিক্রম প্রকাশ করিতেছিলেন; তখন যুদ্ধসমুদ্র, স্পন্দমান ঘন ঘন কবন্ধে ব্যাপ্ত হইয়া গেল এবং পদাতিশ্রেণী দুই ভাগে বিভক্ত হইয়া ভয় ও বিস্ময়ে স্তম্ভিত হইয়া রহিল; তখন সম্মুখে বড় একটা পথ প্রকাশিত হইল ॥৯॥

(ফ) মাধব। সখে! ইহা অনুতাপেরই স্থল। দেখ—

(१) क्वचित् 'माधवः' इति नास्ति, क्वचिच्च 'वयस्य' इति नास्ति।

अद्यैवेन्दुमयूखखण्डनिचितं (१) पीतं निशीथोत्सवे
यैर्लीलापरिरम्भदायिदयिता गण्डूषशेषं मधु ।
सम्प्रत्येव भवद्भुजार्गलगुरुव्यापारभग्नास्थिभि-
र्गात्रैस्ते कथयन्त्यसारभिदुरान् (२) प्रायेण संसारिणः ॥१०॥

(क) माधव इति । नन्विव्यवधारणे । एतत् जगत्, अथवा भवता वर्ण्यमानं समराङ्गनम्, अनुशयस्थानं मनस्विनामनुतापस्थलम् । कथमित्याह पश्येति ।

अद्यैवेति । अद्यैव यैर्वीरैः, निशीथोत्सवे अर्द्धरात्रीयमदनोत्सवे इन्दुमयूखखण्डैः उन्मुक्तगवाक्षमार्गेनिपतितैश्चन्द्रकिरणांशैः निचितं व्याप्तं संसृष्टम्, तथा लीलया परिरम्भदायिनीनाम् आलिङ्गनकारिणीनां दयितानां वल्लभानां गण्डूषशेषं मुखपूरणावशिष्टं मधु मद्यं पीतम् । ते वीराः सम्प्रत्येव इदानीमेव भवतो मकरन्दस्य भुजौ बाहू एव अर्गले भुजार्गले इवेति वा तयोर्गुरुव्यापारेण महत्याघातक्रियया भग्नानि अस्थीनि येषां तैस्तथोक्तैः, गात्रैः शरीरैः संसारिणो जनान् प्रायेण बाहुल्येन, असाराः स्थिरांशरहिता अतएव भिदुराः क्षणभङ्गुराः, तान् कथयन्ति सूचयन्ति । ये खल्वितः पूर्वमेव दयिताभिः सह पानमदनमहोत्सवमन्वभूवन् त एवेदानीं दीर्घनिद्राभिभूताः समराङ्गने शेरते सुतरां प्रायेण संसारिणः क्षणभङ्गुरा एव, किन्तु कतिपये भाग्यवन्त एव तादृशमहोत्सवेन माद्यन्तः सुचिरं स्थातुमर्हन्तीति जगदिदमनुतापस्थानमेवेति भावः । अतएव प्रायेणेत्युक्तम् ।

अत्र संसारिणामसारभिदुरत्वसूचनाक्रियायां तादृशपुरुषाणां कर्तृत्वसम्बन्धेनान्वयः सम्भवत्येव तेषामपि तथात्वादिति "कोऽत्र भूमिवलये" इत्यादिदर्पणोदाहृतवत् सम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः, तथा भुजार्गलेत्यत्र साधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्कर इत्यनयोः पुनरङ्गाङ्गिभावेन सङ्करः ।

"मधु मद्ये पुष्परसे" इत्यमरः । शार्दूलविक्रीड़ितं वृत्तम् ॥१०॥

অদ্যই অর্দ্ধরাত্রে মদনোৎসবের সময় যাহারা, চন্দ্রের কিরণে ব্যাপ্ত এবং লীলার সহিত আলিঙ্গনকারিণী রমণীগণের মুখপূরণের অবশিষ্ট মদ্য পান

(१)···खण्डखचितमिति भिन्नः पाठः । (२) असारविधुरानिति पाठान्तरम् ।

स्मर्त्तव्यन्तु नरपतेरस्य सौजन्यम्, यदपराद्धयोरप्यनपराद्धयोरिव नौ कृतप्रसादमधिष्ठितवान्। तदेहि, मालतीसमक्षमधुना मदयन्तिकाया हरणवृत्तान्तं विस्तरतः कथ्यमानं श्रोतुमिच्छामि। अन्यच्च, (१)　(ब)

कथयति त्वयि सस्मितमालती
वलितलोलकटाक्षपराहतम् (२)।
वदनपङ्कजमुल्लसितत्रपं
स्तिमितदृष्टि (३) सखी नमयिष्यति ॥११॥

(ब) स्मर्त्तव्यमिति। अपराद्धयोरपि मालतीमदयन्तिकयोर्हरणेन कृतापराधयोरपि। नौ आवयोः। कृतप्रसादं स्वयमनुमोदनेन भूरिवसुनन्दनयोः प्रतिबोधनेन च कृतानुग्रहं यथा तथा। कथ्यमानं निखिलव्यापारानुष्ठायिना त्वयेति शेषः। अन्यच्च तव कथने फलमित्यर्थः।

করিয়াছিল, সেই বীরগণ এখনই তোমার অর্গলতুল্য বাহুযুগলের গুরুতর আঘাতে ভগ্নাস্থি দেহদ্বারা প্রায়শঃ সংসারীদিগকেই অসার ও বিনশ্বর সূচনা করিতেছে॥১০॥

(ব) কিন্তু এই রাজার সৌজন্যটী অবশ্যই স্মরণ করিতে হইবে; যে হেতু অপরাধী হইলেও অনপরাধীর ন্যায় আমাদের উপরে অনুগ্রহ করিয়া অবস্থান করিতে লাগিলেন। অতএব আইস, তুমি মালতীর সমক্ষে মদয়ন্তিকার হরণ বৃত্তান্ত বলিতে থাকিবে, আমি এখন তাহা শুনিতে ইচ্ছা করি। আরও দেখ—

(१)···यदपराधिनोरपि···नौ कृतोपसदनं चेष्टितवान्···मदयन्तिकाहरणवृत्तान्तं···कथ्यमानमनुभवामः। पुरतोऽवलोक्य। कथं शून्या इवामी प्रदेशाः। मकरन्दः। नूनं मङ्क्षु आवयोः समरसङ्कटोद्वेगेन व्याकुलत्वादितस्ततो भ्रमन्त्यस्ता अवैवात्मानं विनोदयन्ति। माधवः। कथयति त्वयि···। इति पाठभेदाः। (२) चलितलोल इत्येव पाठः क्वचित्। (३) उल्लसितत्रपास्तिमितदृष्टि इति समासान्वितोऽपि पाठः।

इति परिक्रामत: (१)। अयमसावुद्यानवाट: । प्रवेशं नाटयत: (२)। (भ)

माधव: । कथं शून्या एव प्रदेशा: (३)। (म)

किमदित्याह कथयतीति । त्वयि मकरन्दे कथयति मदयन्तिकाया इत्यवृत्तान्तं विवक्षति सति, सख्यु: सुहृदस्तव पवीत्वात् सखी मदयन्तिका, सखितया अतीवकौतुककर-वृत्तान्तश्रवणादस्फहासान्वितया मालत्या वलितेन प्रवर्त्तितेन लोलेन चञ्चलेन कटाक्षेण पराहतं दृढ़निपाताताड़ितं गाढ़सम्बद्धमित्यर्थ:, उल्लसिता उद्गता एषा लज्जा 'मन्निमित्त-मेतौ महानुभावाविथन्तमायासमनुभूतवन्ता'विति लज्जया सङ्कोचो यत्र तत्, तथा स्तिमिता भूतले निश्चला दृष्टिर्यस्य तत्, वदनपङ्कजं स्वकीयमुखपद्मं नमयिष्यति उल्लसितत्रपत्वा-देवावनतं करिष्यति । तद्दर्शनमेवावयोरतीवकौतुककरत्वात् तव कथनस्य फलमिति भाव:।

अत्र पङ्कजस्य दृष्टेरसम्भवेन वदनं पङ्कजमिवेत्युपमितसमासाश्रयणात् लुप्तोपमालङ्कार:, नमनं प्रति उल्लसितत्रपपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्च, इत्यनयोरङ्गाङ्गि-भावेन सङ्कर:।

अत्र युक्तिर्नाम नाट्यालङ्कार:—"युक्तिरर्थावधारणा"मिति लक्षणात् ।

द्रुतविलम्बितं वृत्तम् ॥११॥

(भ) इतीति । परिक्रामत उपवनप्रवेशाय पादक्षेपं कुरुत:। असौ स:। उद्यानवाट उपवनप्राचीरम् ।

(म) माधव इति । कथमित्यादि: साशङ्कोक्ति: ।

তুমি বলিতে লাগিলে, মালতী ঈষৎ হাস্য করিয়া মদয়ন্তিকার মুখ-পদ্মের উপরে চঞ্চল কটাক্ষপাত করিতে থাকিবেন; তখন মদয়ন্তিকা লজ্জাসঙ্কুচিত ও নিশ্চলনেত্র সেই মুখপদ্মখানিকে অবনত করিবেন ॥১১॥

(ভ) (এই বলিয়া উভয়ে পদক্ষেপ করিতে লাগিলেন)। এই সেই উদ্যানের প্রাচীর। (প্রবেশ অভিনয় করিলেন।)

(ম) মাধব। এ স্থানগুলিকে শূন্যই দেখিতেছি কেন!।

(१) इति परिक्रामत इति पाठ: क्वचिन्नास्ति । (२) प्रविशत:। इति वा पाठ:।

(३) क्वचिदेष पाठो नास्ति ।

मक। नूनं शङ्के, आवयोः समरसङ्कटोद्वेगेन व्याकुलत्वादितस्ततो भ्रमन्त्यस्ता अत्रैवात्मानं विनोदयन्ति (१)। (य)

उभौ परिक्रामतः (२)।

लवङ्गिका-मदयन्तिके। सहि! मालदि!। सहसा विलोक्य सहर्षम्। दिट्ठिआ पुणो वि दे महाणुहावा दिस्सन्दि (३)। (र)

माधव-मकरन्दौ। भवत्यौ क्व सा मालती?। (ल)

(र) सखि! मालति! दिष्ट्या पुनरपि तौ महानुभावौ दृश्येते।

(य) मकेति। नूनं शङ्के निश्चितं मन्ये। समरसङ्कटोद्वेगेन युद्धविपत्तिभयेन। अत्रैव उपवनस्य कुत्रचित् प्रदेश एव।

(र) लवेति। माधवमकरन्दयोः पदशब्दमाकर्ण्य मालत्याः पदशब्दोऽयमिति सम्भावयन्त्यौ सम्बोधयतः सखि मालतीति।

(ल) माधव इति। कथञ्चिदुच्चैः स्वरान्वितं 'सहि! मालदि!' इति सम्बोधनमाकर्ण्य सन्निहितत्वे च तदसम्भवमाशङ्क्य तासीनौत्कण्ठ्या च व्याकुलौ पृच्छतो भवत्याविति।

(य) মকরন্দ। আমি মনে করি, যুদ্ধে আমাদের বিপদের ভয়ে ব্যাকুলতাবশতঃ তাঁহারা ইতস্ততঃ ভ্রমণ করতঃ এই উদ্যানের কোন স্থানেই আত্মবিনোদন করিতেছেন।

( মাধব ও মকরন্দ পাদচারণ করিতে লাগিলেন। )

(র) লবঙ্গিকা ও মদয়ন্তিকা। সখি! মালতি!। ( সহসা দর্শন করিয়া আনন্দের সহিত ) ভাগ্যবশতঃ আবারও সেই মহাত্মা দুইটীকে দেখিতেছি।

(१) मक। वयस्य! नूनमस्मद्व्यतिरेकोद्वेगपर्य्याकुलत्वादितस्ततः परिभ्रमन्त्यौ, आत्मानमत्रैवोद्यानगहने विनोदयन्त्यौ भविष्यति, तदेहि पश्यावः। इति पाठान्तरम्।

(२) क्वचिदयं पाठोऽपि नास्ति। (३) लव। सहि! मदअन्तिए! मालदि! सहसावलोक्य।...एहि...इति पाठभेदः।

उभे। कुदो मालदी। पदसद्देण अह्मे विप्पलद्धाओ मन्द-भाइणीओ। (व)

माधवः। भवत्यौ! कथं कथमपि सहस्रधेव ध्वंसते मे हृदयम्। ततः स्फुटमभिधीयताम् (१)। (श)

मम हि कुवलयाक्षीं प्रत्यनिष्टैकबुद्धे-
रविरतमनुबद्धोत्कम्प एवान्तरात्मा (२)।
स्फुरति च खलु चक्षुर्वाममेतच्च कष्टं (३)
वचनमपि (४) भवत्योः सर्व्वथा हा हतोऽस्मि ॥१२॥

(व) कुतो मालती। पदशब्देनावां विप्रलब्धे मन्दभागिन्यौ।

---

(व) उभे इति। पदशब्देन युवयोरेवेति भावः। विप्रलब्धे वञ्चिते "मालत्याः पदशब्दोऽय"मिति सम्भावनया तस्याः सम्बोधनादिति भावः।

(श) माधव इति। कथं कथमपि अनिर्वचनीयेन प्रकारेण ध्वंसते धैर्य्याद्-भ्रश्यति, विदीर्य्यते वा।

ममेति। हि यस्मात् कुवलयाक्षीं नीलोत्पलनयनां मालतीं प्रति तद्विषय इत्यर्थः, अनिष्टे एका एकताना बुद्धिर्यस्य तस्य केवलविपदाशङ्किन इति तात्पर्य्यम्, मम अन्तरात्मा

(ल) মাধব ও মকরন্দ। আপনারা বলুন, সে মালতী কোথায় ?।

(ব) লবঙ্গিকা ও মদয়ন্তিকা। কোথায় মালতী। মন্দভাগিনী আমরা আপনাদের পদশব্দে প্রতারিত হইয়াছি।

(শ) মাধব। আপনারা শুনুন, আমার হৃদয়, কোন অনির্ব্বচনীয় ভাবনায় যেন সহস্রধা বিদীর্ণ হইতেছে ; অতএব স্পষ্ট বলুন।

---

(१) माधवः। कथं कथमपि विध्वंसते मे हृदयम्, अतः स्पष्टमभिधीयताम् इति भिन्नः पाठः। (२) द्रवति हृदयमन्तस्त्रस्यतीवान्तरात्मा इति क्वचित् पाठः। (३) स्फुरति हि खलु चक्षुः स्पष्टमेतच्च वामं इति पाठोऽपि दृश्यते। (४) वचनमिह इत्यपि पाठः।

मद। तदा (१) क्खु दूदो णिग्गदे महाणुहावे बुद्धरक्खिदं अवलोइदं अ भअवदीए सआसं पेसिअ अप्पमादणिमित्तं (२) विसवेहि अज्जउत्तं त्ति लवङ्गिआ अणुप्पेसिदा। तदो उत्तम्ममाणा (३) अ एदाए मग्गं ओलोइदुं अग्गदो पसरिदा मालदी (४)। पच्छादो अहं ण अ तं पेक्खामि (५)। तदो अम्हेहिं एत्थ विहरन्तीएहिं विड़वन्तराइं जाव विचिदाइं दाव तुम्हे दिट्ठत्ति (६)। (ष)

(ष) तदा खल्विती निर्गते महानुभावे बुद्धरक्षितामवलोकिताञ्च भगवत्याः सकाशं प्रेष्य अप्रमादनिमित्तं विज्ञापयार्य्यपुत्रमिति लवङ्गिका अनुप्रेषिता। तत उत्ताम्यमाना

अन्तःकरणम्, अविरतमेव अनुबन्नीतृकम्पस्तस्या विपदाशङ्कया विधूतीतृकम्पः। वामं चक्षुश्च खलु स्फुरति स्पन्दते। एतदपि हानिसूचकमिति भावः। भवत्योर्युवयोरपि एतत् 'कुदो मालदी' इत्यादिकं वचनञ्च कष्टम् अत तस्या अविद्यमानत्वे नाशुभसूचकतया क्लेशकरम् अतीवमनोदुःखकरम्, अतएव सर्वथा हतोऽस्मि दैवहतकेनेति शेषः। "प्रेम पश्यति भयान्यपदेऽपि" इति न्यायादित्याशयः। हा धिदे।

अत्राशुभसूचनकार्य्यं प्रति वामनयनस्पन्दनरूपे एकस्मिन् कारणे सत्यपि तादृशवचनरूपतत्कारणान्तरोपन्यासात् समुच्चयोऽलङ्कारः। मालिनी वृत्तम् ॥१२॥

---

নীলোৎপলনয়না মালতীর কেবল অনিষ্টের প্রতিই আমার আশঙ্কা হয়; তাই অন্তরাত্মা অনবরত কম্পিতই হইতেছে; বাম নয়নও, স্পন্দিত হইতেছে এবং আপনাদের এই বাক্যও কষ্টজনক; হায়! সকল প্রকারেই আমি হত হইয়াছি ॥১২॥

---

(१) तह, तदो इति पाठभेदौ। (२) अप्पमत्तणिमित्तमित्यपि पाठः।

(३) उत्तम्ममाणाए इति क्वचित् पाठः।

(४) क्वचित् 'मालदी' इति पाठो नास्ति। (५)…तदो ण पेक्खामि इति पाठभेदः। (६) तदो अम्हेहिं मग्गिदा एत्थ विड़वन्तराइं जाव…इति पाठान्तरम्।

माधवः । हा प्रिये ! मालति ! ।

किमपि किमपि शङ्के मङ्गलेभ्यो यदन्य-
द्विरमतु परिहासश्चण्डि ! पर्य्युत्सुकोऽस्मि ।
कलयसि कलितोऽहं वल्लभे ! देहि वाचं
भ्रमति हृदयमन्तर्विह्वलं निर्द्दयासि ॥१२॥

च एतस्या मार्गमवलोकयितुमग्रतः प्रस्रुता मालती । पश्चादहं न च तां प्रेक्षे । तत आवाभ्यामत्र विहरन्तीभ्यां विटपान्तराणि यावद्विचितानि तावद्युवां दृष्टाविति ।

(ष) मदेति । अनुप्रेषिता भवन्तमुद्दिश्येति शेषः । उत्ताम्यमाना युद्धवार्त्ता-मवगन्तुमुत्कण्ठमाना मालती, एतस्या लवङ्गिकायाः, मार्गं प्रत्यावर्त्तनपथम् । प्रस्रुता प्रस्थिता । विहरन्तीभ्यां परिक्रामन्तीभ्याम्, विटपान्तराणि भूतलपर्य्यन्तपातिनीनां तरुशाखानामन्तरालप्रदेशाः, विचितानि मालत्या दर्शनार्थमन्विष्टानि अन्विष्टुमारब्धानीत्यर्थः । इतिशब्दो वृत्तविवरणसमाप्त्यर्थः ।

अत्र उत्कीर्त्तनं नाम नाट्यालङ्कारः—"भूतकार्य्याख्यानमुत्कीर्त्तनं मत"मिति दर्पणलक्षणात् ।

किमपीति । हे चण्डि ! अत्यन्तकोपने ! किमपि किमपि अतीवानिर्वचनीयं

(ষ) মদয়ন্তিকা। সেই সময়ে আপনি এ স্থান হইতে নির্গত হইলে, মালতী বুদ্ধরক্ষিতা ও অবলোকিতাকে ভগবতী কামন্দকীর নিকট পাঠাইয়া, "সাবধানতার নিমিত্ত আর্য্যপুত্রকে জানাও" এই কথা বলিয়া লবঙ্গিকাকে আপনার উদ্দেশে পাঠাইয়াছেন; তাহার পর উতলা হইয়া ইহারই (লবঙ্গিকারই) পথ দেখিবার জন্য চলিয়া গেল। তাহার পর আমি আর তাহাকে দেখিতেছি না। তাহার পর আমরা এইখানে বিচরণ করতঃ যখন শাখার অন্তরাল সকল অন্বেষণ করিতেছিলাম, তখন আপনাদিগকে দেখিলাম।

মাধব। হা প্রিয়ে! মালতি!।

उभे। हा पिअसहि! कहिं गदासि। (ख)

(ख) हा प्रियसखि! कस्मिन् गतासि।

मङ्गलेभ्यो यदन्यत् त्वद्विषयकममङ्गलमित्यर्थः शङ्के, अद्यापि कपालकुण्डलायाः कोपसत्त्वादिति भावः। अतएव पर्य्युत्सुकोऽस्मि तवावलोकनार्थमतीवोत्कण्ठितोऽस्मि। संयोगानन्तरमेव वियोगान्मानेन चेदात्मगोपनं कृतवती तदा तदपि न सङ्गच्छते, येन हि तथात्वेऽपि खल्वहं कपालकुण्डलाकोपविजृम्भितमेव तदिति मन्यमानो नितरामाकुलो भवामि, तदात्मप्रदर्शनेन सत्वरं मामाश्वासयेत्याशयः। परिहासार्थञ्चेदात्मगोपनं तदप्यस्मिन्नवसरे नोचितमित्याह विरमत्विति। ईदृशावसरे परिहासार्थमप्यात्मगोपनं मा कुरु इत्यर्थः। येन हि तथात्वेऽपि कपालकुण्डलाकोपविजृम्भणाशङ्कयैव पर्य्युत्सुको भवामीत्यभिप्रायः, अथ चेदनुरागपरीक्षार्थमात्मगोपनं तदप्यनावश्यकमित्याह कलयसीति। हे वल्लभे! कलयसि त्वय्यहमनुरागवान्नवेति चेत् परीक्षसे, तदपि न प्रयोजनीयमिति तात्पर्य्यम्। यतो हि अहं कलितः पूर्वमेव त्वया 'अनुरागवान्नवे'ति परीक्षितः त्वदनुरागवशादेव मया महाश्मशाने महामांसविक्रयलक्षणभीषणाध्यवसायाश्रयणात् तस्य च त्वया स्वयमेवावगतत्वादिति भावः। अतएव वाचं देहि उत्तरं कुरु। यतश्च विह्वलं तवादर्शनेन व्याकुलं मम हृदयम् अन्तर्मध्ये भ्रमति स्थैर्य्यं न लभते अधीरं जातमित्यर्थः। तथा निर्द्दयासि ममैतादृशीं दशामवलोक्याप्यनागमनादिति भावः।

अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

अं हादमङ्गलपदमुच्चारयितुमप्यशक्नुवता "मङ्गलेभ्यो यदन्य"दित्युक्तम्।

मालिनी वृत्तम् ॥१२॥

মঙ্গল হইতে যাহা ভিন্ন, আমি সেই অত্যন্ত অনির্ব্বচনীয় বিষয় ( অমঙ্গল ) আশঙ্কা করিতেছি; অতএব হে মানিনি! তোমার পরিহাস এখন থা'ক; আমি বড়ই উৎকণ্ঠিত হইয়াছি। যদি আমাকে পরীক্ষা করাই ইহার উদ্দেশ্য হয়, ( তাহাও উচিত নহে ) কারণ, পূর্ব্বেই আমাকে পরীক্ষা করিয়াছিলে। হে প্রিয়ে! উত্তর দাও; আমার ব্যাকুল মন ভিতরে অধীর হইয়াছে; তুমি বড়ই নির্দ্দয় ॥১৩॥

मक। वयस्य! किमित्यविज्ञाय वैक्लव्यमवलम्ब्यते। (ह)

माधवः। सखे! त्वमपि किं न जानासि मत्स्नेह-(१) दुःखितायास्तस्याः कातर्य्यचेष्टितानि। (क्ष)

मक। अस्त्येतत्। किन्तु भगवतीपादमूलगमनमप्याशङ्क्यते, तदेहि, तत्र तावद्गच्छाव: (२)। (क)

उभे। एदं वि (३) सम्भावीअदि। (ख)

माधवः। एवं नाम भवतु (४)। (ग)

(ख) एतदपि सम्भाव्यते।

(ह) मकेति। अविज्ञाय विशेषेणाज्ञात्वा अनवधार्य्य। वैक्लव्यं कातरता।

(क्ष) माधव इति। तस्या मालत्याः। कातर्य्यचेष्टितानि व्याकुलताप्रयुक्तव्यापारान्। नन्दनाय दाननिश्चयात् मां प्रति निराशा सती मालती मरणाध्यवसायं कृतवतीति त्वं स्वयमेव तदानीं नगरदेवतागृहे प्रत्यक्षीकृतवान्, सुतरामिदानीमपि समरे मम विपदाशङ्कया तथैव किमप्यनुष्ठातुमर्हतीति मम वैक्लव्यमिति भावः।

(क) मकेति। अस्त्येतत् सत्यमेतत् जानामीत्यर्थः।

(স) লবঙ্গিকা ও মদয়ন্তিকা। হা প্রিয়সখি! কোথায় গেলে।

(হ) মকরন্দ। বয়স্য! বিশেষরূপ না জানিয়া ব্যাকুলতা অবলম্বন করিতেছ কেন।

(ক্ষ) মাধব। সখে! আমার প্রতি অনুরাগবশতঃ দুঃখিতা মালতীর কাতর ব্যবহার তুমিও কি জান না।

(ক) মকরন্দ। ইহা আছে বটে। কিন্তু ভগবতী কামন্দকীর চরণসমীপে গমনও আশঙ্কা করা যায়; অতএব আইস; সেইখানেই যাই।

(খ) লবঙ্গিকা ও মদয়ন্তিকা। ইহাও সম্ভাবনা করিতে পারি।

(१) माधवस्नेहदुःखिताया इत्यपि पाठः। (२) आशङ्कते। पश्याव:। इति पाठभेदौ। (३) एवम्पि इति भिन्नः पाठः। (४) एवमस्तु नाम। इति परिक्रामति इति क्वचित् पाठः।

सर्वे परिक्रामन्ति (१)।

मक। विचिन्त्यात्मगतम् (२)।

याता भवेद्भगवतीभवनं सखी नो (३)
जीवन्त्यथैष्यति (४) नवेत्यभिशङ्कितोऽस्मि (५)।
प्रायेण बान्धवसुहृत्प्रियसङ्गमादि-
सौदामिनीस्फुरण-चञ्चलमेव सौख्यम् ॥१४॥

(ग) माधव इति। एवं नाम सर्वेषामस्माकं गमनम्।

यातेति। सख्युर्माधवस्य पत्नीत्वात् नोऽस्माकं सखी मालती, भगवत्याः कामन्दक्या भवनमालयं याता गता भवेत्, इति सम्भावयामीत्यर्थः। अथ किन्तु जीवन्ती प्राणान् धारयन्ती सती एष्यति आगमिष्यति न वा इति अभिशङ्कित आशङ्कितोऽस्मि। चिराहित-कोपया कपालकुण्डलया भगवत्या असन्निधाने तस्या जीवनविनाशस्यैव सम्भवपरत्वादिति भावः। ननु माधवस्य महाभाग्यवत्त्वात् तत् सौख्यं प्रति कथमीदृगाशङ्केत्याह प्रायेणेति। बान्धवा भ्रात्रादयः, सुहृदो मित्राणि, प्रियाः प्रेमास्पदीभूताः पत्न्यादयः, तेषां सङ्गमः संसर्ग-जनितं सौख्यम् आदिर्यस्य तत् तादृशं सौख्यं सुखम्, प्रायेण बाहुल्येन, सौदामिन्या विद्युतः स्फुरणवत् प्रकाशवत् चञ्चलमेव क्षणमात्रस्थितिशीलमेव। सुतरां मालत्या समागमजनितं माधवस्य सुखमपि तथा भवितुमर्हतीति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारो लुप्तोपमया सङ्कीर्यते। तथा सङ्गमशब्देन लक्षणया तादृशसङ्गमजनितं सुखं प्रतिपाद्यते, सा च लक्षणा रूढिप्रयोजना-भावादशक्तिकृतेति नेयार्थत्वदोषः, स तु 'बान्धवसुहृत्प्रियसङ्गजादि' इति पाठेन समाधेयः।

(গ) মাধব! ইহাই হউক।

( সকলে পদক্ষেপ করিতে লাগিলেন। )

(१) क्वचिदयं पाठो नास्ति। (२) स्वगतमितिमात्रः पाठः क्वचित्।

(३) सखी सा इति पाठान्तरम्। (४) जीवन्त्युपैष्यति इति पाठभेदः।

(५) न वेत्युपशङ्कितोऽस्मि इत्यपि पाठः क्वचित्।

इति निष्क्रान्ताः सर्वे ।

## इति मालतीमाधवे मालत्यपहारो (१) नामाष्टमोऽङ्कः ।

पश्चान्तरे तु प्रियायाः मालत्याः समागमजनितं माधवस्य सौख्यम्, सौदामिन्याः सौदामिनीनामिकायाः प्रथमाङ्कविष्कम्भकसूचितायाः कामन्दकीप्रथमशिष्यायाः कस्याश्चिन्महायोगिन्याः स्फुरणेन चेष्टया चञ्चलमेव माधवं प्रति पुनश्चलनशीलमेव पुनर्भविष्यत्येवेत्यर्थोऽपि सूच्यते। तथा चानुपदमेव नवमाङ्के खल्वयमर्थः स्फुटीभविष्यति। तेनेदं द्वितीयं पताकास्थानम्। तथा च साहित्यदर्पणे—

"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकन्तु तत् ॥"
"वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम् ॥"

वसन्ततिलका वृत्तम् ॥१४॥

इति महामहोपाध्याय-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां मालतीमाधवटीकायां भावमनोहरायामष्टमाङ्कविवरणं समाप्तम् ॥०॥

মকরন্দ। (চিন্তা করিয়া স্বগত) আমাদের সখী মালতী কি ভগবতী কামন্দকীর গৃহে গিয়াছেন। (যদি তাহা না হয়, তবে) জীবিত অবস্থায় ফিরিয়া আসিবেন কি না এইরূপ আশঙ্কিত হইতেছি। কারণ, বন্ধু, মিত্র ও প্রিয়জনের সম্মেলনাদি জনিত সুখ, প্রায়শই বিদ্যুৎ-প্রকাশের ন্যায় ক্ষণস্থায়ীই হইয়া থাকে ॥১৪॥

(ইহার পর সকলের প্রস্থান।)

## মালতী-অপহরণনামে অষ্টম অঙ্ক সমাপ্ত।

(१) क्वचित् 'मालत्यपहारो नाम' इति पाठो नास्ति ।

# नवमोऽङ्कः ।

——:*:——

ततः प्रविशति सौदामिनी । *

सौदा । एषास्मि सौदामिनी भगवतः श्रीपर्वतादुत्पत्य पद्मावतीमुपाश्रिता, मालतीविरहिणः संस्तुतप्रदेशदर्शनासहिष्णोः स्थानं परित्यज्य सह सुहृद्वर्गेण बृहद्द्रोणीशैलकान्तारप्रदेशं परि-

* तत इति । कपालकुण्डलातो मालतीमादाय निरापदि स्थाने तामुपस्थाप्य तद्विरहदुःखेन माधवस्यापि जीवनहानिमाशङ्क्य तदाश्वासनाय पूर्वसूचितायाः सौदामिन्याः प्रवेशमाह तत इति ।

(क) सौदेति । एषा सौदामिनी, या किल कामन्दक्या यत्नातिशयेन योगशिक्षां प्रदाय ईदृशी योगिनी कृता एषा साहं सौदामिनीत्यर्थः । सुतरां कामन्दक्याः परमस्नेह-भाजनस्य माधवस्योपकाराय मयापि सुमहान् यत्नो विधेय इति भावः । भगवतः सिद्ध-स्थानतया माहात्म्यवतः । उत्पत्य गगने उड्डीय । पद्मावतीं तदाख्यामेतां राजधानीम् उपाश्रिता समागतास्मि । संस्तुतः मालत्या सह विचरणाश्रयत्वेन परिचितो यः प्रदेशः स्थानं तस्य, दर्शनासहिष्णोः शतधाविरहदुःखोद्दीपकतया अवलोकनाक्षमस्य, स्थानं तत्-परिचितप्रदेशम्, सुहृद्वर्गेण मकरन्दादिना । बृहद्द्रोणी महानदीविशेषः शैलः पर्वतः कान्तारो दुर्गमपथस्तत्स्वरूपं प्रदेशं स्थानम् । उपयामीत्यन्तः स्वकर्त्तव्यविचारः । भो

* তদনন্তর সৌদামিনীর প্রবেশ ।

(ক) সৌদামিনী । আমি সৌদামিনী, মাহাত্ম্যশালী শ্রীপর্ব্বত হইতে উড়িয়া আসিয়া, পদ্মাবতী রাজধানীতে এই উপস্থিত হইলাম । মালতীবিরহী মাধব, পূর্ব্বপরিচিত স্থানসমূহ দেখিতে অসমর্থ হইয়া, তাহা পরিত্যাগ করিয়া, মকরন্দপ্রভৃতি সুহৃদ্‌বর্গের সহিত, বৃহৎ নদী,

भ्रमतो माधवस्याधुनान्तिकमुपयामीति । भोः ! तथाहमुत्पतिता, यथा सकल एष गिरिनगरग्रामसरिदरण्यव्यतिकरश्चक्षुषा परिच्छिद्यते । पश्चाद्विलोक्य । साधु, साधु (१) । (क)

इत्याश्चर्यं । तथा तादृशमत्युच्चदेशमित्यर्थः, उत्पतिता उड्डीना । गिरिनगरग्रामसरिदरण्यानां परिकरः समूहः । परिच्छिद्यते स्वमण्डले प्रवेश्यते क्षुद्रपदार्थसमेतः स्पष्टमवलोक्यते । पश्चाद्विलोक्येत्यनेन पद्मावतीमतीत्य किञ्चिद्‌गतेति प्रतीयते । साधु साध्वित्यनेन पद्मावतीव्यापारदर्शनेन चमत्कारातिशयो व्यज्यते ।

"द्रोणी (स्त्री)…नदीविशेषः ।" इति शब्दकल्पद्रुमः । "महारण्ये दुर्गपथे कान्तारः पुंनपुंसकम् ।" इत्यमरः ।

देवतालयाट्टालिकाराजमार्गादिमयनिरन्तरजनवसतिस्थानं नगरम् । तथा च रघुनाथः—

"देवतायतनैश्चित्रैः प्रासादापणवेश्मभिः ।
नगरं दर्शयेद्विद्वान् राजमार्गैश्च शोभनैः ॥"

क्षेत्रोपयोगिभूम्यन्तरित-विरल-साधारणजनवसतिस्थानं ग्रामः । यथा मार्कण्डेयपुराणम्—

"तथा शूद्रजनप्राया सुसमिद्धकृषीवला ।
क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिता ॥"

পর্ব্বত ও দুর্গম পথে পরিপূর্ণ স্থানে পরিভ্রমণ করিতেছেন ; এখন আমি তাহার নিকট যাই ! কি আশ্চর্য্য ! আমি সেইভাবে উড়িয়াছি, যাহাতে পর্ব্বত, নগর, গ্রাম, নদী ও অরণ্যসমূহ নয়নদ্বারা স্পষ্ট দেখিতে পাইয়াছি। ( পশ্চাদ্ভাগে দৃষ্টিপাত করিয়া ) বেশ্ বেশ্—

(१)…श्रीपर्वतादुपेत्य पद्मावतीं नव मालतीविरहिणो माधवस्य संस्तुतप्रदेशदर्शनाक्षिणीः संस्थायं परित्यज्य सह सुहृद्वर्गेण इहद्रोणीशैलकान्तारप्रदेशमुपस्थ्याधुना तदन्तिकं प्रयामि ।…सकल एव…परिविच्यते । इति पाठान्तरम् ।

पद्मावती विमलवारिविशालसिन्धु-
पारासरित्परिकरच्छलतो बिभर्त्ति।
उत्तुङ्गसौधसुरमन्दिरगोपुराट्ट-
संघट्टपाटितविमुक्तमिवान्तरीक्षम् (१) ॥१॥

अपि च,

सैषा विभाति लवणा स्खलितोर्म्मिपङ्क्ति-(२)
रभ्रागमे जनपदप्रमदाय यस्याः।
गोगर्भिणीप्रियनवोलपमालभारि-
सेव्योपकण्ठविपिनावलयो विभान्ति ॥२॥

पद्मावतीति। पद्मावती नाम इयं नगरी, विमलानि वारीणि ययोस्ते तथा विशाले महत्यौ च ये सिन्धुपारासरितौ सिन्धुपारानामकं नदीद्वयं तयोः परिकरच्छलतः परिवारच्छलेन परिवेष्टनधारणव्याजेनेत्यर्थः उत्तुङ्गानामत्युच्चानां सौधानां राजसदनानां सुरमन्दिराणां देवालयानां गोपुराणां पुरद्वाराणाम् अट्टानाम् अट्टालिकानां संघट्टेन घर्षणेन आदौ पाटितं विदारितं पश्चाद्विमुक्तं परित्यक्तम् अन्तरीक्षम् आकाशमिव बिभर्त्ति धारयति। अत्युच्चसौधादिभिर्गगनं विदार्य्य निपातितम्, तदेव जलरूपेण सत् समन्ताद्व्यापि नदीभावेनैवावस्थितमिति सरलार्थः।

अत्र वाच्या भावाभिमानिनी सापह्नवा क्रियोत्प्रेक्षालङ्कारः।

पाटितविमुक्तमिति स्नातानुलिप्तादिवत् कर्म्मधारयः। वसन्ततिलका वृत्तम् ॥१॥

सैषेति। स्खलिता उत्थिता ऊर्म्मिपङ्क्तयस्तरङ्गश्रेण्यो यस्याः सा, सा प्रसिद्धा, एषा दृश्यमाना लवणा नाम नदी विभाति राजते। अभ्रागमे जलदोदये वर्षाकाले जनपद-

এই পদ্মাবতী নগরী, নির্ম্মলজলা বৃহৎ সিন্ধুনদী ও পারানদীর পরিবেষ্টন-চ্ছলে, অত্যুচ্চ রাজগৃহ, দেবতার মন্দির, পুরদ্বার ও অট্টালিকার ঘর্ষণে প্রথমে বিদারিত পশ্চাৎ পরিত্যক্ত আকাশমণ্ডলকেই যেন ধারণ করিতেছে ॥১॥

(१) अन्तरिक्षमिति पाठभेदः। (२) स्खलितोर्म्मिपङ्क्तिरिति पाठान्तरम्।

अन्यतोऽवलोक्य। स एष भगवत्याः सिन्धोर्दारितरसातलस्तटप्रपातः (१)। (ख)

यत्रत्य एष तुमुलो (२) ध्वनिरम्बुगर्भ-
गम्भीरनूतनघनस्तनितप्रचण्डः।

प्रमदाय छायाप्रदानात् देशस्थलोकानामानन्दाय यस्या लवणायास्तीरस्था इत्यर्थः, गोगर्भिणीनां गर्भवतीनां गवां प्रियाः सुखखाद्यत्वात् सन्तोषकरा नवा नूतना ये तृणपाङ्कुरविशेषाः तेषां मालां श्रेणिं बिभ्रति धारयन्ति यास्तथोक्ताः, अतएव सेव्याः विचरणशीलानां जनानां सुखकरत्वेनाश्रयणीयाः, उपकण्ठविपिनावलयः निकटवर्त्तिवनश्रेणयः, विभान्ति राजन्ते।

अथ सा इति तच्छब्दस्य प्रसिद्धवाचित्वेन परवाक्यस्थयच्छब्दानपेक्षणात् न वाक्यगतविधेयाविमर्शदोषः।

गोगर्भिणीति "चतुष्पादो गर्भिण्या" इति कर्म्मधारयः। मालभारीति "इष्टकेषीकामालानां चिततूलभारिषु" इत्यनेन मालाशब्दस्य ह्रस्वान्तत्वम्।

वसन्ततिलका वृत्तम् ॥२॥

(ख) अन्यत इति। स पूर्वपरिचितः। भगवत्याः तीर्थत्वेन माहात्म्यशालिन्याः सिन्धोर्नद्याः। दारितं विदारितं गर्त्तीकृतं रसाया भुवस्तलं स्वरूपम् उपरिभागो येन सः। तटात् उच्चदेशात् पर्व्वतटदेशादित्यर्थः प्रपातः प्रपतनम्।

"रसा विश्वम्भरा स्थिरा।" "अधः स्वरूपयोरस्त्री तल"मिति चामरः।

আর, উদ্বেলিত তরঙ্গমালাসমন্বিত এই সেই লবণা নামক নদী; যাহার তীরবর্ত্তী সুখসেব্য বনশ্রেণী, বর্ষাকালে দেশের আনন্দের নিমিত্ত, গর্ভবতী গোদিগের প্রীতিকর নূতন তৃণসমূহ ধারণ করিয়া শোভা পায় ॥২॥

(খ) ( অন্যদিকে দৃষ্টিপাত করিয়া ) মাহাত্ম্যশালী সিন্ধু নদীর এই সেই পর্ব্বতের উপর হইতে ভূতল বিদারণকারী প্রপাত।

(१)...अयमसौ भगवत्याः सिन्धोर्दारितरसातलस्तटप्रपातः। इति पाठभेदः।

(२) तुमुलध्वनिः। इत्यपि पाठः।

पर्य्यन्तभूधरनिकुञ्जविजृम्भणेन (१)
हेरम्बकण्ठरसितप्रतिमानमेति ॥३॥

एताश्चन्दनाश्वकर्ण-सरल-पाटलप्रायतरुगहना: परिणत-मालूरसुरभयोऽरण्यगिरिभूमय: स्मारयन्ति खलु तरुणकदम्ब-जम्बूवनावनद्धान्धकार-गुरुनिकुञ्जगभीरगह्वरोद्गार--गोदावरी-रवमुखरित-विशाल-मेखलाभुवो (२) दक्षिणारण्यभूधरान्।

यवत्य इति। अम्बूनि जलानि गर्भे यस्य स: अतएव गम्भीरो गभीरनादी यो नूतनघन: नवीनमेघ:, तस्य स्तनितवत् गर्ज्जितवत् प्रचण्ड: अतीवतीव्र:, यवत्य: यत्तटप्रपात-स्थानोत्पन्न:, एष: अयमनुभूयमान:, तुमुल: सङ्कुलो ध्वनि: जलपतनशब्द:, पर्य्यन्तभूधराणां तीरसीमास्थपर्वतानां निकुञ्जेषु लताद्यावृतस्थानेषु विजृम्भणेन प्रतिध्वनिवशात् वृद्धिप्राप्त्या, हेरम्बकण्ठरसितस्य गणपते: कण्ठगर्जितस्य प्रतिमानं सादृश्यम् एति प्राप्नोति।

अत्र पूर्वार्द्धे श्रौती समासगतलुप्तोपमा, चतुर्थपादे तु आर्थी समासगतोपमा, अनयो-रङ्गाङ्गिभावेन सङ्कर:।

वसन्ततिलका वृत्तम् ॥३॥

(ग) एता इति। एता दृश्यमाना:। चन्दनाश्वकर्ण-सरल-पाटलप्रायास्तरवो यत्र तत् तादृशं गहनं वनं यासु ता:, तथा परिणतै: पक्वै: मालूरैर्बिल्वफलै: सुरभय: सौरभ-विशिष्टा:, अरण्यगिरिभूमय: वनपर्वतस्थानानि। तरुणं नवीनं यत् कदम्बजम्बूवनं तेन

জলপূর্ণ গম্ভীর নদী অভিনব মেঘের গর্জ্জনের ন্যায় তীব্র যে স্থানের এই তুমুল শব্দ, প্রান্তবর্ত্তী পর্ব্বতের নিকুঞ্জ মধ্যে বিস্তৃতি লাভ করায় গণেশের কণ্ঠশব্দের তুলনা প্রাপ্ত হইতেছে ॥৩॥

(१)···विजृम्भमाण···इति भिन्न: पाठ:।

(२)···स्मारयन्ति···वनावनद्धान्धकारगुरुगिरिनिकुञ्जगुञ्जद्गम्भीर-गद्गदोद्गार-घोर-घोषण-गोदावरीमुखरितविशालमेखलाभुव:। इति पाठान्तरम्।

अयञ्च मधुमतीसिन्धुसम्भेदपावनो भगवान् भवानीपतिरपौरुषेयप्रतिष्ठः सुवर्णविन्दुरित्याख्यायते। प्रणम्य। (ग)

---

अवनद्धो बद्धो विहितो योऽन्धकारः तेन गुरुर्निविड़ो निकुञ्जो लताद्याच्छादितस्थानं यत्र तादृशे गभीरगह्वरे अगाधगुहायाम् उद्गारः प्रवाहप्रवेशादुत्थानं यस्य तादृशेन गोदावर्य्या नद्या रवेण शब्देन मुखरिताः शब्दायमानीकृताः, विशाला महत्यः, मेखलाभुवो नितम्बस्थानानि येषां तान् तथोक्तान्, दक्षिणारण्यभूधरान् दक्षिणदिग्वर्त्तिवनसंसृष्टपर्वतान् स्मारयन्ति मामिति शेषः। एतान् गिरीनवलोक्य दक्षिणारण्यगिरीन् स्मरामीत्यर्थः। अतएवात्र स्मरणालङ्कारः।

मधुमतीसिन्ध्वोस्तदाख्ययोर्नद्योः सम्भेदं सङ्गमस्थानं पावयति अवस्थानेन पवित्रीकरोतीति सः। अपौरुषेया केनापि पुरुषेणानिष्पादिता अनादिसिद्धा प्रतिष्ठा यस्य सः। सुवर्णानां विन्दवो लिङ्गोपरि चिह्नभावेनावस्थिताः स्वर्णकणा यत्र सः। सुवर्णविन्दुरिति नाम। अस्यैव च 'कालप्रियनाथः', 'महाकालः' इत्यं नामद्वयमपि दृश्यते।

अत्र भवानीपतिरित्यनेन भवान्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमतिकारितादोषः, स च 'पार्वतीपति'रिति पाठेन समाधेयः।

---

(গ) এই বনময় ও পর্ব্বতময় স্থানে প্রায়ই চন্দন, অশ্বকর্ণ, সরল ও পাটল বৃক্ষ রহিয়াছে এবং পরিপক্ব বিল্বফল এই স্থানগুলিকে সৌরভময় করিয়াছে। সুতরাং যে সকল পর্ব্বতের বিশাল মধ্যস্থানগুলি, নূতন কদম্ববন এবং জম্বুবনজনিত অন্ধকারে পরিপূর্ণ-নিকুঞ্জসমন্বিত গভীর গুহা হইতে উত্থিত গোদাবরী নদীর শব্দে মুখরিত হইয়া থাকে, দক্ষিণারণ্যবর্ত্তী সেই সকল পর্ব্বতকে এই স্থানগুলি স্মরণ করাইয়া দিতেছে।

যিনি, মধুমতী নদী ও সিন্ধুনদীর সঙ্গমস্থানকে পবিত্র করিতেছেন, যাঁহাকে কেহ প্রতিষ্ঠা করে নাই এবং লোকে যাঁহাকে 'সুবর্ণবিন্দু' বলে, এই সেই ভগবান্ পার্ব্বতীনাথ মহাদেব। ( প্রণাম করিয়া )

जय देव ! भुवनभावन ! जय भगवन्नखिलवरद ! निगमनिधे ! ।
जय रुचिरचन्द्रशेखर! जय मदनान्तक! जयादिगुरो! (१) ॥४॥

गगनगमनमभिनीय ।

अयमभिनवमेघश्यामलोत्तुङ्गसानु-
र्मदमुखरमयूरीमुक्तसंसक्तकेकः ।
शकुनिशबल-नीड़ानोकह-स्निग्धवर्ष्मा
वितरति बृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥५॥

भक्तिविशेषोदयात् स्तौति जयेति । भुवनभावन ! चतुर्द्दशभुवनजनक ! अतो ममापि जनकत्वात् दयां कुरु इत्याशयः । अखिलानां सर्वेषां भक्तानां वरं वाञ्छितार्थं ददातीति सः, तत्सम्बोधनम् । सुतरां ममापि वाञ्छनीयां मुक्तिं देहीति भावः । निगमनिधे ! वेदादिशास्त्राणामाधार ! अतो मे शास्त्रीयतत्त्वज्ञानं प्रतिपादयेत्यभिप्रायः । रुचिरो मनोहरः, चन्द्रः सर्वबीजाधारोऽपि शशाङ्कः शेखरे यस्य तत्सम्बोधनम् । एतेन भारभूतां मामपि धारयेत्याशयः । मदनान्तक ! सर्वदोषप्रधानकामनाशक ! तेन ममापि दोषं नाशयेति भावः । ब्रह्मणोऽप्युपदेष्टृत्वादादिगुरो ! सुतरां मह्यमपि तत्त्वज्ञानमुपदिशेत्यभिप्रायः ।

अत्राभिप्रायविशेषैर्विशेषणानामुक्तत्वात् परिकरालङ्कारः । आर्य्या जातिः ॥४॥

अयमिति । अभिनवैर्मेघैः श्यामलाः श्यामवर्णाः उत्तुङ्गा अत्युच्चाः सानवः समप्रदेशा यस्य सः । मदेन मुखराभिः शब्दायमानाभिः मयूरीभिर्मुक्ताम्त्यक्ताः कृता इत्यर्थः संसक्ताः सम्मिलिताः अविच्छिन्नाः केकाः स्ववाण्यो यत्र सः शकुनिभिः पक्षिभिः शबलाः कर्वुरवर्णा ये

হে দেব ! আপনার জয় হউক ; হে জগতের সৃষ্টিকর্ত্তা ! হে মাহাত্ম্য-শালী ! হে সকলের বরদাতা ! হে সকল শাস্ত্রের আধার ! আপনার জয় হউক ; হে মনোহর চন্দ্রশেখর ! হে কামনাশক ! আপনার জয় হউক ; হে আদিগুরু ! আপনার জয় হউক ॥৪॥

(१) जय जगदादिगुरो ! । इति पाठभेदः ।

अपि च, (१)

दधति कुहरभाजामत्र भल्लूक-यूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि।
शिशिरकटुकषायः स्त्यायते शल्लकीना-
मिभदलितविकीर्ण-ग्रन्थिनिष्यन्दगन्धः ॥६॥

नीड़ानीकहा कुलायतरवः वासवृक्षा इत्यर्थः, तैः स्निग्धं वर्म्म शरीरं यस्य सः। तथा वृहन्तो विशाला अश्मानः पाषाणा यत्र सः, अयं दृश्यमानः पर्व्वतः अक्ष्णोर्यत्नुषो प्रीतिं वितरति ददाति। नानावैचित्र्यमयत्वादिति भावः। मालिनी वृत्तम् ॥५॥

दधतीति। अत्र पर्व्वते, कुहरभाजां गह्वरवासिनां भल्लूकयूनां तरुणभल्लूकानाम् अनुरसितेन प्रतिध्वनिना गुरूणि वर्द्धितानीत्यर्थः अम्बूकृतानि सनिष्ठीवशब्दाः थूत्कारशब्दा इति यावत्। थूत्कारस्तु भल्लूकानां स्वभावः। स्त्यानं वृद्धिं दधति धारयन्ति। वृहन्तः थूत्कारशब्दाः श्रूयन्त इत्यर्थः। शल्लकीनां लताविशेषाणां शिशिरः शीतलः, कटुः कटुरसः, कषायः सुरभिश्च। इभैर्हस्तिभिः, दलिता मर्द्दिताः अतएव विकीर्णा इतस्ततो विक्षिप्ता ये ग्रन्थयः संयुक्तदेशाः तेषां निष्यन्दस्य निर्यासरसस्य गन्धः स्त्यायते वर्द्धते। हस्तिमदगन्धप्रसारादिति भावः।

अत्र अम्बूकृतानां वृद्धिं प्रति अनुरसितगुरुत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्ग-मलङ्कारः। यौवने बलाधिक्यात् ध्वनेर्दीर्घत्वसूचनाय भल्लूकयूनामिति युवशब्दप्रयोगः। अतएव न अपुष्टत्वदोषः।

( আকাশগমন অভিনয় করিয়া ) যাহার উচ্চ সানুদেশ, নূতন মেঘে শ্যামবর্ণ হইয়াছে, যাহাতে থাকিয়া মদমত্ত ও শব্দকারী ময়ূরীগণ অবিচ্ছিন্ন ভাবে কেকারব করিতেছে, যাহার শরীর, পক্ষিগণের কর্ব্বুরবর্ণ বাসবৃক্ষে স্নিগ্ধ হইয়াছে এবং যাহাতে বৃহৎ বৃহৎ পাষাণ রহিয়াছে; এই সেই পর্ব্বতটী নয়নযুগলের আনন্দ দান করিতেছে ॥৫॥

(१) क्वचित् 'अपि चे'ति पाठो नास्ति।

ऊर्द्ध्वमवलोक्य। अये! कथं मध्याह्नः। तथाहि सम्प्रति—(१)

काश्मर्य्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते
नीराश्मन्तकशिम्बिचुम्बितमुखा (२) धावन्त्यपः पूर्णिकाः।
दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितं
वीरुन्नीड़कपोत-कूजितमनुक्रन्दन्त्यधः कुक्कुभाः ॥७॥

"अम्बूकृतं सनिष्ठीवम्" इत्यमरः। "कटुतिक्तकषायास्तु सौरभे च प्रकीर्त्तिता।" इति हलायुधः। "अष्टकं शल्लकीलतायां"मित्यमरकोषटीका।

श्लोकोऽयमविकल एवोत्तररामचरितमहावीरचरितयोरपि दृश्यते।

मालिनी वृत्तम् ॥६॥

काश्मर्य्या इति। कोयष्टिकः (कोड़ापाखी इति ख्यातः) पक्षिविशेषः, काश्मर्य्याः गम्भारीवृक्षात्, उद्गतानि नवोत्पन्नानि दलानि पर्णानि यस्य तं कृतमालं (सोँदालि इति ख्यातम्) आरग्वधवृक्षं टीकते गच्छति। आतपतापात् छायालाभेच्छयेति भावः। नीराश्मन्तकानां तटस्थितानां तृणविशेषाणां (अम्लकुचाइ इति प्रसिद्धानां) शिम्बिषु शिम इति ख्यातासु) चुम्बितं तद्भोजनाय संयुक्तं मुखं यासां ताः, पूर्णिकाः नामाच्छिन्नी-नामकपक्षिणः, अपो जलानि धावन्ति रवितापात् पातुं द्रुतं गच्छन्ति। दात्यूहैः (डाहुक इति ख्यातैः) पक्षिविशेषैः, तिनिशस्य (मधुरादौ तिनाश इति प्रसिद्धस्य) वृक्षविशेषस्य कोटरवति वासोपयोगिविवरविशिष्टे स्कन्धे प्रकाण्डदेशे निलीयविलीनभूत्वा

আরও, এই পর্ব্বতের গুহার ভিতরে অবস্থিত তরুণ ভল্লূকগণের থুৎকারের শব্দ, প্রতিধ্বনিতে বৃহৎ হইয়া বৃদ্ধি পাইতেছে এবং এই পর্ব্বতে হস্তিগণ শল্লকীলতার গ্রন্থি সকল ভাঙ্গিয়া ইতস্ততঃ বিক্ষিপ্ত করিয়া ফেলিয়াছে, তাহা হইতে শীতল, কটু ও মনোহর নির্যাসের গন্ধ ছড়াইয়া যাইতেছে ॥৬॥

(१) कथं मध्याह्नः। तथाप्यत्र सम्प्रति इति पाठान्तरम्।

(२)···चुम्बितमुखा इत्यपि पाठः।

तद्भवतु, माधवमकरन्दावन्विष्य यथाप्रस्तुतं साधयामि (१)।

इति निष्क्रान्ता। (घ)

## विष्कम्भकः (२)। (ङ)

स्थितम्। भावे क्तः। तथा कुक्कुभाः (पातुकुका इति ख्याताः) पक्षिविशेषाः अधस्तिष्ठन्तः, वीरुत्सु लतासु यानि नीड़ानि कुलायास्तेषु स्थितानां कपोतानां कूजितम् अव्यक्तशब्दम् अनुक्रन्दन्ति अनुकृत्य रुवन्ति। एते हि पक्षिस्वभावाः।

अत्र मध्याह्नप्रतिपादनकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः, तथा प्रथमार्द्धे छेकानुप्रासः, चतुर्थपादे वृत्त्यनुप्रासश्च इत्येषां मिथो नैरपेक्ष्यात् संसृष्टिः।

इह कोषप्रमाणान्यनुसन्धेयानि। शार्दूलविक्रीड़ितं वृत्तम् ॥७॥

(घ) तदिति। प्रस्तुतमनतिक्रम्येति यथाप्रस्तुतं माधवस्याश्वासनमित्यर्थः।

(ङ) विष्केति। अत्र "स्थानं परित्यज्य वृहद्दीर्घशैलकान्तारप्रदेशं परिभ्रमतः" इत्यनेन वृत्तकथांशनिदर्शनम्, "माधवमकरन्दावन्विष्य यथाप्रस्तुतं साधयामि" इत्यनेन च वर्त्तिष्यमाणकथांशनिदर्शनमनुसन्धेयम्। स चायं शुद्धो विष्कम्भकः, मध्यमैकपात्रप्रयोजितत्वात्। "शुद्धविष्कम्भ" इति पाठान्तरमपि।

( উপরের দিক্ দেখিয়া ) ও! মধ্যাহ্ন কাল উপস্থিত হইয়াছে। তাই এখন কোড়াপাখীগুলি, গাম্ভারী গাছ হইতে নূতন পাতায় শোভিত সোঁদালি গাছের উপর যাইতেছে। নাসাচ্ছিন্নী পাখীগুলি, অম্লকুচাইর শিমে মুখ লাগাইয়া জলের দিকে ধাবিত হইতেছে। ডাউকগুলি, কোটরযুক্ত তিনিশ গাছের দোঠালার ভিতরে লুকাইয়া রহিতেছে এবং পাত্কুকা পাখীগুলি নীচে থাকিয়া, লতার বাসায় থাকিয়া পায়রাগুলি যে রব করিতেছে, তাহারই অনুকরণ করিয়া ডাকিতেছে ॥৭॥

(ঘ) তা হউক, মাধব ও মকরন্দের অন্বেষণ করিয়া, প্রস্তাবিত বিষয় সম্পন্ন করি। ( এই বলিয়া প্রস্থান করিল। )

(१) साधयामि इति पाठान्तरम्। (२) शुद्धविष्कम्भ इति पाठभेदः।

ततः प्रविशति माधवो मकरन्दश्च।

मक। सकरुणं निश्वस्य।

न यत्र प्रत्याशामनुपतति नो वा रहयति
प्रविच्छिन्नं (१) चेतः प्रविशति च मोहान्धतमसम्।
अकिञ्चित्कुर्वाणाः पशव इव तस्या वयमहो
विधातुर्वामत्वाद्विपदि परिवर्त्तामह इमे॥८॥

न यत्रेति। चेतः अस्माकं मनः कर्तृ, यत्र विपदि, प्रत्याशां पुनरपि मालतीं प्राप्स्याम इत्येवमाशां न अनुपतति न लभते; अतश्चोऽन्वेषणेनापि तन्निर्णयाभावादिति भावः। नो वा रहयति, पुनरपि मालतीं प्राप्स्याम इत्याशां न वा परित्यजति; त्रिकालज्ञया महायोगिन्या कामन्दक्या (पश्चाद्) माधवस्य मालतीलाभावधारणादिति भावः। किञ्चेति चार्थः। प्रविच्छिन्नं संशयेन परिचालितम् अप्राप्तिशङ्कया अधीरीकृतं वा सत् (चेतः) मोह एव कर्त्तव्याकर्त्तव्यविवेकाभाव एव अन्धतमसं गाढ़ान्धकारः, तत् प्रविशति। किमिदानीं करणीयं किंवा न करणीयमित्यवधारयितुं न शक्नुम इत्यर्थः। इमे वयं विधातुर्वामत्वात् दैवस्य प्रतिकूलत्वात् पशव इव केवलाहारनिद्रापरायणा इत्यभिप्रायः, तस्या मालत्याः, अकिञ्चित्कुर्वाणाः कमप्युपकारं न कुर्वाणाः सन्तः विपदि मालत्या अनिरूपणरूपायां विपत्तौ परिवर्त्तामहे अवतिष्ठामहे। शोके अहोशब्दः, पुरुषकारवन्तोऽपि वयं प्रतिकूलदैववशादेव मालत्याः किमपि कर्त्तुं न शक्नुम इति भावः।

अत्र अनुपतति प्रभृतीनामनेकक्रियाणां चेत इत्येककर्त्तृकारकत्वाद्दीपकमलङ्कारः, पशव इवेति श्रौत्युपमा च, अनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः।

"अहो धिगर्थे शोके च" इत्यादि मेदिनी। रह इति चौरादिगणीयः।

शिखरिणी वृत्तम्॥८॥

(৬) বিষ্কম্ভক।

তাহার পর মাধব ও মকরন্দের প্রবেশ।

(१) प्रतिच्छिन्नमित्यपि पाठः।

माधवः। हा प्रिये! मालति! क्वासि, कथमविज्ञाततत्त्वमद्भुततमं (१) झटिति पर्य्यवसितासि। नन्वकरुणे! प्रसीद, सम्भावय माम्। (च)

प्रियमाधवे! किमसि मय्यवत्सला
ननु सोऽहमेव यमनन्दयत् पुरा।
स्वय-(२) मागृहीत-कमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः ॥८॥

(च) माधव इति। अविज्ञातम् अनवगतं तत्त्वं याथार्थ्यं यस्य तत् तादृशम् अद्भुततमम् अतीवाश्चर्य्यं झटिति सहसा पर्य्यवसितासि परिणतासि। मुहूर्त्तमध्य एव नितान्तनिरुद्देश्यादाश्चर्य्यतयैव त्वं परिणतेति भावः।

प्रियेति। प्रियो माधवो यस्यास्तत्सम्बोधनम्। अथवा प्रियमाधवे मयि किं कथम् अवत्सला स्नेहहीना असि। कारणाभावे तवेदमवात्सल्यमेकान्तमनुचितमिति भावः। नन्वित्यनुनये। अहं स एव; पुरा पूर्वं शङ्करगृहान्निर्गमानन्तरमित्यर्थः; आगृहीतं धृतं कमनीयं मनोहरं कङ्कणं हस्ताभरणविशेषो येन तादृशः; मूर्त्तिमान् महोत्सवो महानानन्द इव तव करः पाणिः यं स्वयमात्मनैव नत्वन्यनियोगेनेत्यर्थः अनन्दयत्

মকরন্দ। (নিশ্বাস ত্যাগ করিয়া শোকের সহিত) আমাদের চিত্ত, যে বিপদে মালতী লাভের প্রত্যাশা লাভ করিতেছে না, কিংবা সে আশা পরিত্যাগও করিতেছে না, কেবল অস্থির হইয়া মোহরূপ অন্ধকারে প্রবেশ করিতেছে। হায়! আমরা মালতীর কিছুই করিতে না পারিয়া দৈবের প্রতিকূলতাবশতঃ সেই বিপদেই এই অবস্থান করিতেছি ॥৮॥

(চ) মাধব। হা প্রিয়ে! মালতি! তুমি কোথায় আছ। যাহার তত্ত্ব বুঝা গেল না, হঠাৎ তুমি সেই আশ্চর্য্যে পরিণত হইলে কেন?। হে নির্দ্দয়ে! প্রসন্ন হও, (দর্শন দিয়া) আমাকে সন্তুষ্ট কর।

(१) अद्भुतमिति पाठभेदः। (२) अयमिति क्वचित् पाठः।

वयस्य ! मकरन्द ! दुर्लभः पुन-(१) र्जगति तावतः स्नेहस्य सम्भवः। (छ)

सरसकुसुमच्छामैरङ्गैरनङ्गमहाज्वर-
स्चिरमविरतोन्माथी सोढ़ः प्रतिक्षणदारुणः।
तृणमिव ततः प्राणान्मोक्तुं मनो विधृतं तया
किमपरमतो निर्व्यूढ़ं यत् करार्पणसाहसम् ॥१०॥

सन्तोषितवान्। सुतरां मां प्रति वात्सल्येन तव दर्शनदानमिदानीमेकान्तमुचितमिति भावः।

अत्र भावाभिमानिनी वाच्या गुणीभूतव्यङ्ग्यालङ्कारः। उत्सवस्य सुखविशेषतया गुणत्वात्।

द्वितीयार्डमुत्तररामचरितप्रथमाङ्केऽपि रामेण पठितम्, किन्तु तत्र स्वयमित्यत्र अयमिति पाठवैषम्यम्।

मञ्जुभाषिणी वृत्तम् ॥९॥

(छ) वयस्येति। तावतः तत्परिमाणस्य अतिमहतः इत्यर्थः।

स्नेहस्यातिमहत्त्वं प्रदर्शयति सरसेति। तया मालत्या, सरसानि अभिनवत्वात् मधुपूर्णानि यानि कुसुमानि तद्वत् क्षामैः अबलैः कोमलैः, अङ्गैः, अविरतोन्माथी अजस्रदुःखदायी, प्रतिक्षणदारुणः सर्वदा भयङ्करः, न तु साधारणज्वरवत् सविराम इति भावः, अनङ्गः काम एव महाज्वरः कामजनितो वा सन्तापः सोढ़ः सह्यः कृतः। ततस्तदनन्तरम्, नन्दनाय

माधव ( আমি ) ত তোমার প্রিয়; সুতরাং আমার প্রতি বাৎসল্য বিহীন হইলে কেন?। প্রিয়ে! আমি সেই মাধবই বটি; পূর্ব্বে মনোহর কঙ্কণধারী মূর্ত্তিমান্ মহোৎসবের ন্যায় তোমার হাতখানি নিজেই যাহাকে আনন্দিত করিয়াছিল ॥৯॥

(ছ) সখে! মকরন্দ! ততখানি স্নেহের পুনরায় সম্ভব, জগতে দুর্ল্লভ।

(१) खलु इत्यपि पाठः।

अपि च,

मयि विगलितप्रत्याशत्वाद्विवाहविधेः पुरा
विकलकरणैर्मर्म्मच्छेदव्यथाविधुरैरिव।
स्मरसि रुदितैः स्नेहाकूतं तथा व्यतनोदसा-(१)
वहमपि यथाऽभूवं पीड़ातरङ्गितमानसः ॥११॥

दानिनिश्चये सति मां प्रति नैराश्यानन्तरमित्यर्थः, तृणमिव प्राणान् मोक्तुं परित्यक्तुं मनो विधृतं चित्तं स्थिरीकृतम् इच्छा कृतेत्यर्थः, तन्तु मया शङ्करायतने निभृतस्थितेनावगतमिति भावः। ततश्च यत् करार्पणसाहसम् आत्मना पाणिग्राहणसाहसं निर्व्यूढं मालत्याः सकाशान्निष्पन्नम् अतः अपरं स्नेहस्य महत्त्वं किं ब्रूम इति शेषः। स्नेहवशादेव पित्रादीननपेक्ष्य स्वयमेव मालत्या स्वपाणिर्मया ग्राहितः सुतरामितोऽधिकः स्नेहो जगति नास्त्येवेति भावः।

अत्र सरसकुसुमश्यामैरिति लुप्तोपमा, तृणमिवेति श्रौत्युपमा, अनयोः परस्पर-निरपेक्षत्वात् संसृष्टिः।

"श्यामः (त्रि)…शबल" इति शब्दकल्पद्रुमः। हरिणी वृत्तम् ॥१०॥

मयीति। हे वयस्य मकरन्द! असौ मालती, विवाहविधेः पुरा नन्दनेन सह विवाहानुष्ठानात् पूर्व्वम्, मयि विगलितप्रत्याशत्वात् नन्दनेन सह विवाहनिश्चयेन मम लाभे नैराश्यात्, मर्म्मच्छेदव्यथया हृदयविदारणवेदनया विधुरैः विह्वलैरिव सद्भिः विकलकरणैः स्वस्वविषयग्रहणासमर्थैरिन्द्रियैरुपलक्षिता सतीत्यर्थः, रुदितैः क्रन्दनैः, तथा तादृशं साति-

মালতী, আর্দ্র কুসুমের ন্যায় কোমল অঙ্গে, সর্ব্বদা দুঃখকর এবং প্রতিক্ষণে ভয়ঙ্কর কামসন্তাপরূপ মহাজ্বর বহুকাল সহ্য করিয়াছিলেন; তাহার পর তৃণের ন্যায় প্রাণ পরিত্যাগ করিবার নিমিত্ত মন স্থির করিয়াছিলেন। তদনন্তর নিজেই যে পাণিগ্রহণরূপ সাহস করিলেন, ইহা অপেক্ষা অনুরাগের মহত্ত্ব আর কি হইতে পারে? ॥১০॥

(१) तथाव्यतनोदसाविति पाठभेदः।

सावेगम्। अहोनुखलुभोः!। (ज)

दलति हृदयं गाढ़ोद्वेगं द्विधा तु न भिद्यते,
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्म्मच्छेदी न कृन्तति जीवितम् ॥१२॥

मयमिति तात्पर्य्यम्, स्वे ह्याकूतं मयि प्रेमाभिप्रायं व्यतनीत् विस्तारितवती रोदनव्याजेन मयि तादृशं प्रणयाभिलाषं प्रकटितवतीत्यर्थः, यथा येन स्वे ह्याकूतेन अहमपि, पीड़या तदीयासह्यवेदनादर्शनजनितकष्टेन तरङ्गितमानसः चञ्चलचित्तः अधीरः अभूवं भूतवानस्मि। इति त्वं स्मरसि? इति काकुः। सुतरां जगति तावतः स्वेहस्य पुनः सम्भवो दुर्लभ एवेति भावः।

अत्र मर्म्मच्छेदव्यथाविधुरैरिवेति वाच्या भावाभिमानिनी गुणोत्प्रेक्षालङ्कारः। वैधर्म्यस्य दुःखरूपत्वेन गुणत्वात्।

हरिणी वृत्तम् ॥११॥

(ज) सावेगमिति। तत्तत्स्मरणेन विशेषशोकोदयात् सावेगमिति। 'अहोनुखलुभोः' इत्येकमेवाव्ययं महाविषादे।

दलतीति। गाढ़ उद्वेगो मालतीविरहजनितं दुःखं यत्र तत्, हृदयं दलति तदुद्वेगेनामर्द्दितं भवति, तु किन्तु द्विधा न भिद्यते द्विखण्डं न भवति। तथात्वे न खल्वीदृशं दुःखमनुभवेयमिति भावः। विकलः शोकविह्वलः कायो देहः मोहं मूर्च्छां वहति

আরও দেখ, নন্দনের সহিত বিবাহের অনুষ্ঠানের পূর্ব্বে আমার প্রতি নৈরাশ্যবশতঃ মর্ম্মচ্ছেদের বেদনায় বিহ্বল হইয়া যেন মালতীর ইন্দ্রিয়গুলি বিকল হইয়া গিয়াছিল; তখন মালতী রোদনদ্বারা সেইভাবে সানুরাগ অভিপ্রায় প্রকাশ করিয়াছিলেন, যাহাতে আমিও দুঃখে চঞ্চলচিত্ত হইয়াছিলাম ॥১১॥

(জ) (শোকাবেগের সহিত) হায়!

मक। वयस्य ! माधव ! (१) निरवग्रहं (२) दहति दैवमिव

भजते, किन्तु चेतनां चैतन्यं न मुञ्चति चिराय न परित्यजति। तदापि दुःसहदुःखानुभवी न स्यादिति भावः। अन्तर्दाहः अन्तःकरणशोकसन्तापः तनुं शरीरं ज्वलयति सन्तापयति, किन्तु भस्मसात् भस्मनि सम्पद्यमानां भस्मीभूतां न करोति। तथा सत्यपि शोकाग्नेरुपशमो भवेदिति भावः। तथा मर्म्मच्छेदी हृदयविदारी, विधिः दैवं प्रहरति ताड़यति, किन्तु जीवितं जीवनं न कृन्तति न छिनत्ति न विनाशयतीत्यर्थः। एवमपि सति दुःखनिवारणं भवेदिति भावः। मालतीविरहेण दुःसहदुःखानुभवान्ममेदानीं मरणमेव श्रेय इत्यभिप्रायः सर्वत्र।

अत्र हृदयामर्द्दनरूपकारणे सत्यपि द्विधाभेदरूपफलाभावात्, मूर्च्छाप्राप्तिरूपहेतौ विद्यमानेऽपि चैतन्यत्यागरूपकार्य्याभावात्, देहज्वलनलक्षणकारणे वर्त्तमानेऽपि भस्मरूपतत्फलाभावात्, प्रहारात्मककारणे सत्यपि जीवनविनाशरूपफलाभावाच्च चत्वारो विशेषोक्त्यलङ्काराः, तेषाञ्च परस्परनैरपेक्ष्यस्थितेः संसृष्टिः।

अत्र खेदो नाम विमर्षसन्ध्यङ्गम्। यथा दर्पणे—"मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः।" दर्पणकारेणापि तदेदमेवोदाहृतम्।

"उद्वेगो विरहजन्यदुःख"मिति रसमञ्जरी।

श्लोकोऽयमुत्तररामचरिततृतीयाङ्केऽपि रामेण पठितः, किन्तु तत्र '···गाढ़ोद्वेगो द्विधा न तु ···' इतिमात्रं पाठवैषम्यं दृश्यते।

हरिणी वृत्तम् ॥१२॥

---

তীব্র উদ্বেগে হৃদয় বিদলিত হইতেছে, কিন্তু দুইভাগে বিভক্ত হইতেছে না। বিহ্বল শরীর মূর্চ্ছা অবলম্বন করিতেছে, কিন্তু চৈতন্য পরিত্যাগ করিতেছে না। মনের সন্তাপ শরীর দগ্ধ করিতেছে, কিন্তু একেবারে ভস্ম করিয়া ফেলিতেছে না এবং মর্ম্মচ্ছেদকারী বিধাতা প্রহার করিতেছেন বটে, কিন্তু একেবারে জীবন নাশ করিতেছেন না ॥১২॥

---

(१) क्वचित् "वयस्य ! माधव !" इति पाठो नास्ति।

(२) निरवग्रह इत्यपि पाठः।

दारुणो विवस्वान्; इयञ्च ते शरीरावस्था; तदस्य पद्मसरसः परिसरे मुहूर्त्तमास्यताम्। अत्र हि—(ञ)

उन्नाल-बाल-कमलाकर-माकरन्द-
निष्यन्द-संवलित-(१) मांसल-गन्धबन्धुः।
त्वां प्रीणयिष्यति पुरः (२) परिवर्त्तमान-
कल्लोल-शीकर-तुषार-जड़ः समीरः॥१३॥

इति परिक्रम्योपविशतः।

---

(ञ) मकेति। निरवग्रहं दुर्निवारम्। दैवं विधिः। इयं नितान्तक्लान्तरूपा। पद्मसरसः पद्मप्रधानदीर्घिकायाः, परिसरे तीरे, मुहूर्त्तं कियन्तं कालम्, आस्यताम् उपविश्यताम्। दारुणं दुर्निवारं दुर्दैवं यथेदानीमस्मान् सन्तापयति तथैव सूर्य्योऽपीत्यर्थः।

अत्र पूर्णोपमालङ्कारः। तथा दैवं विवस्वानिति लिङ्गभेदात् "सुधेव विमलश्चन्द्र" इति दर्पणोदाहृतवत् भग्नप्रक्रमतादोषः, स तु 'निरवग्रहो दहति विधि'रिवेति पाठेन समाधेयः।

उन्नालेति। उद्गतानि ग्रीष्मावसाने जलाल्पत्वादुत्थितानि नालानि येषां ते, बाला नूतनाः, ये कमलाकराः पद्मसमूहाः तेषां माकरन्दनिष्यन्देन मधुक्षरणेन संवलितः सम्मिलितः यो मांसलगन्धः परिपुष्टं सौरभं तेन बन्धुः सुहृत्स्वरूपः। पुरः अग्रतः परिवर्त्तमानाः दीर्घिकाजले सर्व्वतः समुत्पद्यमानाः, ये कल्लोला विशालतरङ्गाः तेषां शीकरैर्विन्दुभिः तुषारवत् नीहारवत् जड़ः शीतलः समीरो वायुः, त्वां प्रीणयिष्यति श्रान्तिमपनीय सन्तोषयिष्यति। अतएवात्रोपवेशनमेकान्तमुचितमिति भावः।

अत्रारोप्यमाणस्य बन्धुत्वस्य प्रकृतप्रीणनोपयोगित्वात् परिणामालङ्कारः, तथा "सुषीमः

---

(ঞ) মকরন্দ। সখে! মাধব! দুর্নিবার দৈবের ন্যায় ভয়ঙ্কর সূর্য্যও, দগ্ধ করিতেছেন; তোমার শরীরের অবস্থাও এই; সুতরাং এই পদ্ম-সরোবরের তীরে কিছুকাল উপবেশন কর। কারণ,

---

(१)…संवलन…इति पाठान्तरम्। (२) पुनरिति पाठोऽपि दृश्यते।

मक। स्वगतम्। भवतु, एवं तावदन्यतः प्रक्षिपामि (१)। प्रकाशम्। वयस्य! माधव!। (ञ)

एतस्मिन् मदकल-मल्लिकाक्ष-पक्ष-
व्याधूत-स्फुरदुरुदण्डपुण्डरीकाः।
वाष्पाम्भःपरिपतनोद्गमान्तराले
दृश्यन्तामविरहितश्रियो विभागाः ॥१४॥

शिशिरो जड़ः। तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः।" इत्यमरकोषप्रामाण्येन आपाततस्तुषारजड़योः पौनरुक्त्यप्रतीतेः, परञ्च "तुषारस्तुहिनं हिम"मित्यनेन तुषारशब्दस्य नीहारपरत्वावगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारस्य अनयोरङ्गाङ्गि-भावेन सङ्करः। वृत्त्यनुप्रासच्छेकानुप्रासावपीति समुदाये संसृष्टिः।

"आकरो निवहे खनौ" इति हेमचन्द्रः। मकरन्दानामयमिति माकरन्दः, इदमर्थेऽण्, स चासौ निष्यन्दश्चेति माकरन्दनिष्यन्दः।

वसन्ततिलका वृत्तम् ॥१३॥

(ञ) मकेति। एवमनेन प्रकारेण, अन्यतः प्रक्षिपामि अन्यस्मिन् विषये माधवस्य मनः सञ्चालयामि। अन्यथा केवलमालतीविषये मनःसन्निवेशे माधवस्यातीव विषमावस्था सम्पद्यतेति भावः।

---

এখানে ( জল কমিয়া যাওয়ায় ) যাহার নাল উচু হইয়াছে সেই নূতন পদ্মসমূহের মধু নিঃসরণবশতঃ প্রচুর সৌরভে বন্ধুস্বরূপ এবং সম্মুখে উত্থিত বিশাল তরঙ্গের বিন্দুসমূহে হিমের ন্যায় শীতল বায়ু, তোমাকে সন্তুষ্ট করিবে ॥১৩॥

( ইহার পর উভয়ে কতিপয় পদক্ষেপ করিয়া উপবেশন করিলেন। )

(ঞ) মকরন্দ। ( স্বগত ) হউক, এইভাবে ইহার মন অন্য দিকে প্রেরণ করি। ( প্রকাশ্যে ) সখে! মাধব!

---

(१) एवं तावदाक्षिपामि। इति पाठभेदः।

मक। कथं प्रतिपत्तिशून्य-(१) मुत्थायान्यतः प्रवृत्तः। निश्वस्योत्थाय (२)। सखे! प्रसीद। पश्य—(ट)

एतस्मिन्निति। एतस्मिन् सरसि मदकला मदमत्ता ये मल्लिकाख्या मलिनचञ्चुचरणयुक्ता हंसाः, तेषां पक्षैः व्याधूतानि कम्पितानि स्फुरन्ति प्रकाशमानानि उद्दण्डानि बृहन्मृणालानि पुण्डरीकाणि श्वेतपद्मानि येषु ते। अतएव अविरहिता अपरित्यक्ता श्रीः शोभा यैस्ते, सुश्रीका इत्यर्थः, विभागा जलमयप्रदेशाः, बाष्पाम्भसां अश्रुजलानां परिपतनं क्षरणम्, उद्गमः पुनरुत्पत्तिः तयोरन्तराले मध्ये, एको बाष्पाम्बुविन्दुः पतितः यावदन्य उत्पद्यते तावत्कालमध्य इत्यर्थः, एतेनाविरतरोदनं ध्वनितम्। दृश्यन्तां चित्तविनोदनाय इति भावः।

अत्र दण्डपुण्डे ति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रासोऽलङ्कारः।

श्लोकोऽयमुत्तररामचरितप्रथमाङ्केऽपि रामेण पठितः, किन्तु तत्र 'संहृष्टाः कुवलयिनो भुवो विभागाः' इति चतुर्थचरणवैषम्यम्।

प्रहर्षिणी वृत्तम् ॥१४॥

(ट) मकेति। प्रतिपत्तिशून्यम् अन्यमनस्कतया मद्वाक्यार्थज्ञानरहितं यथा स्यात्तथा उत्थाय, अन्यतः प्रवृत्तः, अन्यत्र गन्तुमारभते। प्रसीद मां प्रति प्रसन्नः सन् मद्वाक्यं शृणु इत्यर्थः।

অশ্রুজলের পতন ও উত্থান ইহার মধ্য সময়ে, এই সরোবরের সুশ্রী স্থানগুলিকে দেখ; এই স্থানসমূহে বিশাল দণ্ডসমন্বিত ও প্রস্ফুটিত শ্বেতপদ্ম রহিয়াছে, সেগুলি মদমত্ত হংসগণের পক্ষের বায়ুতে কম্পিত হইতেছে ॥১৪॥

(ট) মকরন্দ। হায়! আমার কথা না বুঝিয়াই যে উঠিয়া অন্য দিক্ যাইতে আরম্ভ করিলেন। (নিশ্বাস ত্যাগপূর্ব্বক উঠিয়া) বয়স্য! প্রসন্ন হও। দেখ—

(१) निष्प्रतिपत्तिशून्यमिति पाठान्तरम्।

(२) निःश्वस्योत्थाय च इत्यपि पाठः।

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः
पर्य्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनिह (१)
प्राग्भागेषु (२) शिखण्डिताण्डवविधौ मेघैर्वितानाय्यते (३) ॥१५॥

वानीरेति। निकुञ्जयुक्ताः सरित इति निकुञ्जसरितः शाकपार्थिवादित्वान्मध्यपदलोपी समासः। निकुञ्जसरितां लताद्याच्छादितस्थानान्वितानां नदीनां पयो जलं वानीरप्रसवैः वेतसपुष्पैः करणैः आसक्तो लग्नो वासः सौरभं यत्र तत् आसक्तवासं सत् वर्त्तते। पर्य्यन्तेषु च तीरप्रान्तेषु च यूथिकासुमनसां यूथिकापुष्पाणां जालकैः कलिकाभिः उज्जृम्भितं विकसितं भावे क्तः। मेघैः उन्मीलतां विकसतां कुटजानां कुटजकुसुमानां प्रकृष्टो हासः प्रहासः शोभा एषामस्तीति तेषु, गिरेः पर्व्वतस्य प्राग्भागेषु ऊर्द्धदेशेषु सानून् समदेशान् आलम्ब्य आश्रित्य शिखण्डिताण्डवविधौ मयूरनृत्यानुष्ठानविषये वितानाय्यते आच्छादकत्वात् चन्द्रातपवत् आचर्य्यते।

अत्र काव्येण उन्मीलन्मदानां तरुणानां कौतुकहासविशिष्टे सभामण्डपे नर्त्तक-नृत्यविधौ प्रसारितस्य वितानस्य व्यवहारसमारोपात् समासोक्तिरलङ्कारः, स च एकदेशगतोपमा-ऽनुप्राणित इत्यङ्गाङ्गिभावेन सङ्करः।

शार्दूलविक्रीड़ितं वृत्तम् ॥१५॥

নিকুঞ্জসমন্বিত নদীর জল, বেতসপুষ্পে সৌরভযুক্ত হইতেছে; তীরের নিকট যুঁইফুলের কলিকা সকল ফুটিয়া রহিয়াছে। আর, পর্ব্বতের উপরি ভাগে কুটজপুষ্প প্রস্ফুটিত হওয়ায় তাহার বড়ই শোভা হইয়াছে এবং সেই স্থানের সমতল দেশ অবলম্বন করিয়া মেঘ সকল, ময়ূরের নৃত্য কার্য্য চন্দ্রাতপের ন্যায় আচরণ করিতেছে ॥১৫॥

(१) सानूनितः इति पाठभेदः। (२) प्राग्भारेषु इति पाठोऽपि दृश्यते।
(३) वितानायते इति क्वचित् पाठः।

अपि च,

जृम्भा-जर्जर-डिम्ब-डम्बर-घन-श्रीमत्कदम्बद्रुमाः
शैलाभोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः।
उद्यत्कन्दल-कान्तकेतकभृतः कच्छाः सरित्स्रोतसा-
माविर्भूत-(१) शिलीन्ध्र-लोध्र-कुसुमस्मेरा वनानां ततिः॥१६॥

जृम्भेति। शैलाभोगभुवः पर्व्वतप्रान्तविस्तृतभूमयः, जृम्भया विकासेन जर्जरः विश्लिष्ट-दलः, यो डिम्बडम्बरः पुष्पगोलकसमूहः, तेन घनश्रीमन्तः निविड़शोभाविशिष्टाः कदम्बद्रुमा नीपवृक्षा यासु तास्तथाभूता भवन्ति। ककुभो दिशः कादम्बिन्या मेघमालया श्यामलाः श्यामवर्णा भवन्ति। तथा सरित्स्रोतसां नदीप्रवाहाणां कच्छा जलप्रायप्रदेशाः, उद्यद्भि-र्मूलत उत्पद्यमानैः कन्दलैः नवाङ्कुरैः कान्ता मनोहरा ये केतकाः (केया इति ख्याताः) केतकीवृक्षाः तान् बिभ्रतीति ते तथोक्ता भवन्ति। तथा वनानां ततिः श्रेणिः, आविर्भूतैः प्रकाशितैः शिलीन्ध्रलोध्रयोः कदलीलोध्रवृक्षयोः कुसुमैः स्मेरा हास्ययुक्ता भवति। एतानि वर्षाकालस्वभावजसौन्दर्य्याणि पश्य, तेन चात्मानं विनोदयेति भावः।

अत्र वर्षाकालस्य वर्णनीयत्वेन प्रस्तुतानां तादृशशैलाभोगभूप्रभृतीनामेकया भवन्तीति क्रियया कर्तृतयाभिसम्बन्धात्तुल्ययोगितालङ्कारः, वृत्त्यनुप्रासश्च अनयोः संसृष्टिः।

"जृम्भा जृम्भे विकासे च" इति विश्वः। "डिम्बोऽस्त्रेऽपि च गोलके" इति धरणिः। "कन्दलन्तु नवाङ्कुरे" इत्यादि हेमचन्द्रः।

शार्दूलविक्रीड़ितं वृत्तम्॥१६॥

আরও দেখ, পর্ব্বতের নিকটবর্ত্তী বিস্তৃত ভূমিতে বহুতর কদম্ববৃক্ষ আছে; তাহার কলিকাসমূহ প্রস্ফুটিত হওয়ায় তাহার দলগুলি পরস্পর বিশ্লিষ্ট হইয়া গিয়াছে; তাহাতে ঐ কদম্ববৃক্ষসমূহের অত্যন্ত শোভা হইয়াছে। মেঘমালায় সমস্ত দিক্ শ্যামবর্ণ হইয়াছে। নদীপ্রবাহের নিকটবর্ত্তী জলপ্রায় স্থানগুলিতে বহুতর কেতকবৃক্ষ আছে, তাহার মূল

(१) आविर्गन्ध···इति भिन्नः पाठः।

माधवः । सखे ! पश्यामि, किन्तु दुरालोकरमणीयाः सम्प्रत्यरण्यभूमयः (१) । तत् किमेतत् । साखम् । अथवा किमन्यत् । (ঠ)

उत्फुल्लार्जुनसर्जवासित-वहत्-पौरस्त्यझञ्झाऽनिल-(२)
प्रेङ्खोल-स्खलितेन्द्रनील-शकल-स्निग्धाम्बुदश्रेणयः ।
धारासिक्तवसुन्धरासुरभयः प्राप्तास्त एवाधुना
घर्म्माम्भोविगमागमव्यतिकर-श्रीवाहिनो वासराः ॥१७॥

(ঠ) माधव इति । पश्यामि तवानुरोधादिति भावः । सम्प्रति मालत्या विच्छेद-काले । दुरालोकाश्च ता रमणीयाश्चेति ताः, रमणीया अपि क्षरोद्दीपकतया मा:दृश्यानां दुःखेन दृश्या इत्यर्थः । तत् तस्मात् एतत् किम् अशान्तिकराणामेव पदार्थानां शान्त्युपाय-तया तवोदाहरणं किमर्थमित्यर्थः । ममाशान्तिकरपदार्थानामिदानीं स्वयमेवोप-स्थितत्वात् मकरन्दं प्रति दोषारोपो नितरामन्याय्य एवेति ज्ञानोदयेनानिवार्य्यशोकोदयात् सास्रमिति । किमन्यत् ममाशान्तिकरादन्यत् किमस्तीत्यर्थः ।

तदेव प्रतिपादयन्नाह उत्फुल्लेति । अधुना, उत्फुल्लैर्विकसितैः अर्ज्जुनसर्ज्जैः अर्ज्जुनपुष्पशालपुष्पैः, वासितः सुगन्धीकृतः, वहन् प्रवहन्, पौरस्त्यः पूर्व्वदिग्वर्त्ती, यो झञ्झानिलः प्रचण्डवायुः, तस्य प्रेङ्खोलेन आन्दोलनेन स्खलिता विच्युता चलिता इन्द्रनील-

হইতে নূতন অঙ্কুর উৎপন্ন হওয়ায় সেগুলি বড়ই সুন্দর হইয়াছে এবং শিলীন্ধ্র (ব্যাঙের ছাতি) ও লোধ্র পুষ্প প্রকাশিত হওয়ায় বনশ্রেণী হাসিতেছে ॥১৬॥

(ঠ) মাধব। বয়স্য! দেখিতেছি বটে; কিন্তু বনভূমি মনোহর হইলেও, বর্ত্তমান সময়ে আমার পক্ষে তাহা দুর্দৃশ্য। অতএব এ সব কি। (অশ্রুমোচনের সহিত) অথবা আর কি হইবে।

(१) अरण्यगिरितटभूमयः इति पाठान्तरम् । (२)…झञ्झामरुत्…इति पाठभेदः ।

हा प्रिये! मालति!

तरुणतमाल-नील-बहुलोन्नमदम्बुधराः
शिशिर-समीरणावधुत-नूतन-वारिकणाः।
कथमवलोकयेयमधुना हरिहेतिमतो-
र्मदकल-नीलकण्ठ-कलहैर्मुखराः ककुभः ॥१८॥

निश्वस्य (१) शोकार्त्तिं नाटयति।

---

शकलवत् मरकतमणिखण्डवत् स्निग्धा अम्बुदश्रेणिर्मेघमाला येषु ते। धारया वृष्टिधारया सिक्ता या वसुन्धरा भूमिः तया सुरभयः नानाविधाङ्कुरोद्गमैः सौरभविशिष्टीकृताः। तथा घर्म्माम्भसोर्विगमागमयोर्घर्म्मस्य ग्रीष्मस्य विगमः अतीतत्वम्, अम्भसो वृष्टेरागम उपस्थितिः तयोरित्यर्थः, व्यतिरेकेण आनन्तर्य्यात् सम्पर्केण या श्रीः शोभा तां वोढुं शीलं येषां ते तथोक्ताः, त एव येषु मालत्या सह विहरिष्यामीति पूर्वं सङ्कल्पितं त एव वासरा वर्षाकालीयदिवसाः प्राप्ता उपस्थिताः। सुतरामिदानीं मालतीविरहसमये इतोऽधिकं किमशान्तिकरमस्तीति भावः।

अत्र द्वितीयपादे लुप्तोपमालङ्कारः। वृष्टीति विशेषे अभिधातव्ये अम्भ इति सामान्याभिधानात् विशेषे अविशेषाख्यदोषः, स तु 'ग्रीष्मप्रावृडपागमागमकृतश्रीवाहिनो वासराः' इति पाठेन समाधेयः।

शार्दूलविक्रीडितं वृत्तम् ॥१७॥

---

যে সকল দিনে প্রস্ফুটিত অর্জ্জুন পুষ্প ও শাল পুষ্পে সুবাসিত হইয়া প্রচলিত পূর্ব্বদিগ্‌বর্ত্তী প্রচণ্ড বায়ুর আন্দোলনে, ইন্দ্রনীলমণিখণ্ডের ন্যায় স্নিগ্ধ মেঘমালা চলিতে থাকে; বৃষ্টিধারাসিক্ত ভূমির গন্ধ, যে দিনগুলিকে সুগন্ধময় করিয়া থাকে এবং গ্রীষ্মকাল গিয়াছে, বর্ষাকাল আসিয়াছে, এতদুভয়ের সম্পর্কে যে দিনগুলি, শোভা ধারণ করে; সেই সকল দিনই এখন উপস্থিত হইয়াছে ॥১৭॥

(१) क्वचित् 'निश्वस्य' इति पाठो नास्ति।

मक । कोऽप्यतिदारुणो दशाविपाको वयस्यस्य सम्प्रति वर्त्तते । मालम् । मया पुनरज्ञानेन वज्रमयेन किल विनोदः

नवेति । नवाः तमालवत् नवीनतमालवृक्षवत् नीलाः श्यामलाः, बहुलाः अम्बुधरा मेघा यासु ताः । शिशिरसमीरणैः शीतलवायुभिः अवधुना विकिरणाः नूतना वारिकणाः वृष्टिजललवा यासु ताः । हरेरिन्द्रस्य हेतिरस्त्रं धनुरित्यर्थः, तद्वतीः, तथा मदकलानां मदमत्तानां नीलकण्ठानां मयूराणां कलहैः कोलाहलैः मुखराः शब्दायमानाः, ककुभो दिशः, अधुना मालतीविच्छेदकाले कथमवलोकयेयं केन प्रकारेण द्रष्टुं शक्नुयाम् । नितान्तोद्दीपकतया कथमपि नेत्यर्थः ।

अत्रापि प्रथमे पादे लुप्तोपमालङ्कारः । तथा इन्द्रधनुरिति विशेषे वाच्ये हरिहेतीति सामान्यवचनात् विशेषे अविशेषाख्यदोषः, 'हरिचापवती'रिति पाठे तु तत्समाधानम् । अत्र दिष्टं नाम नाट्यलक्षणम्—"देशकालस्वरूपेण वर्णनादिष्टमुच्यते ।" इति दर्पणलक्षणात् ।

"कलहं कलकलेऽपि च" इति जगद्धरधृतविश्वः । "हेतिः स्यादायुधज्वाला सूर्य्यतेजःसु योषिति ।" इति मेदिनी ।

नर्द्दटकं वृत्तम्—"यदि भवतो नजौ भजजला गुरु नर्द्दटक"मिति लक्षणात् ॥१८॥

(ङ) मकेति । कोऽपि अनिर्वचनीयः, दशाविपाकः अवस्थापरिणामः । अज्ञानेन ज्ञानहीनेन शोकोद्दीपकपदार्थस्यैव विनोदनोपायत्वेनोपन्यासादिति भावः । वज्रमयेन नितान्तकठिनहृदयेनेत्यर्थः, वयस्यस्य ईदृगदर्शनेऽपि जीवनधारणादिति भावः । विनोदः

হা প্রিয়ে! মালতি! যে সকল দিকে নূতন তমালবৃক্ষের ন্যায় নীলবর্ণ বহুতর মেঘ উঠিতেছে এবং শীতল বায়ু নূতন জলবিন্দুসমূহকে ছড়াইয়া দিতেছে, আর যে সকল দিক্ মদমত্ত ময়ূরগণের কোলাহলে মুখরিত হইতেছে, ইন্দ্রধনুযুক্ত সেই সকল দিক্‌গুলিকে আমি এখন কি করিয়া দর্শন করি ॥১৮॥

(নিশ্বাস ত্যাগ করিয়া, শোকজনিত পীড়ার অভিনয় করিতে লাগিলেন)।

प्रारब्धः। निश्वस्य। एवञ्च पर्य्यवसितप्रायैव नो माधवप्रत्याशा। सभयं विलोक्य। कथं प्रमुग्ध एव। हा सखि! मालति! किमपरम्। निरनुक्रोशासि (१)। (ড)

अपहस्तितसर्व्वबान्धवे! त्वया विहितं साहसमस्य तृष्णया।
तदिदानपराधिनि प्रिये सखि! कोऽयं करुणोज्झितः क्रमः॥१८॥

सान्त्वनोपायः। नोऽस्माकम्। पर्य्यवसितप्रायैव प्रायेण परिसमाप्तैव। इतः परं माधवस्य जीवनधारणासम्भवादिति भावः। प्रमुग्ध एव मूर्च्छित एव। किमपरं ब्रवीमीति शेषः। गतप्रायमस्य जीवनमित्याशयः। अतएव निरनुक्रोशा निर्द्दयासि। यः खलु स्वजीवनममतां विहाय त्वामघोरघण्टहस्तात् परित्रातवान्, तस्यैव त्वदर्थं जीवननाशे प्राप्ते अनागमनात् त्वं निर्द्दयैवासीति भावः।

अत्र द्युतिर्नाम विमर्षसन्ध्यङ्गम्—"तर्ज्जनोद्वेजने प्रोक्ता द्युति"रिति लक्षणात्।

अपेति। अपहस्तिता अगणिताः, बान्धवाः पित्रादयो यया तत्सम्बोधनम्। सख्युर्जायात्वेन "शरीरार्द्धं स्मृता जाया" इति बृहस्पतिस्मरणात् सखीति सम्बोधनम्। त्वया अस्य माधवस्य तृष्णया लाभलोभेन साहसं विहितं स्वयमेव पाणिग्रहणात् साहसं कृतम्।

(ড) মকরন্দ। বর্ত্তমান সময়ে সখার অনির্ব্বচনীয় ও অত্যন্ত ভয়ঙ্কর অবস্থার পরিণাম উপস্থিত হইয়াছে। ( অশ্রুপাতের সহিত ) আমি নির্ব্বোধ ও বজ্রতুল্য কঠিন; তাই এইভাবে সান্ত্বনার উপায় আরম্ভ করিয়াছি। ( নিশ্বাস ত্যাগ করিয়া ) ইহাতে মাধবের জীবনের প্রতি আমাদের প্রত্যাশা প্রায় পরিসমাপ্তই হইয়া আসিল! ( ভয়ের সহিত দর্শন করিয়া ) হায়! মূর্চ্ছিতই হইয়াছেন। হা সখি! মালতি! আর বলিব কি; তুমি দয়াবিহীন হইয়াছ।

(१)···सम्प्रति वयस्यस्य। मया पुनर्वज्रमयेन कोऽपि विनोद आरब्धः। निश्वस्य। एवं पर्य्यवसितप्रायैव नो माधवं प्रति प्रत्याशा।···एव···। आकाशे। सखि!···इति पाठान्तरम्।

कथमद्यापि नोच्छ्वसिति । हन्त ! मुषितोऽस्मि दैवेन (१)। (ढ)

मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥२०॥

तत्तस्मात् अनपराधिनि इह अस्मिन् प्रिये वल्लभे माधवे, करुणोज्झितः दयाहीनः कोऽयं क्रमः कस्तवायं व्यवहारः, यदासन्नमरणसमयेऽपि दर्शनं न ददासीत्यर्थः । नितान्तमनुचितमेतदिति भावः ।

अत्र अपराधाभावेऽप्यपराधकार्य्यनिर्द्दयव्यवहारोत्पत्तेर्विभावनालङ्कारः । तथा अनुरागविपरीतनिर्द्दयव्यवहारात् गुणातिपातो नाम नाट्यलक्षणम् । तथा च दर्पणे—

"गुणातिपातः कार्य्यं यत् विपरीतं गुणान् प्रति ।"

अपगतौ हस्तौ हस्तक्षेपः कर्त्तृत्वं येषां ते अपहस्ताः । अपहस्ताः कृता इति करोत्यर्थे णयन्तात् कर्म्मणि क्तः ।

सुन्दरी वृत्तम् ॥१९॥

(ढ) कथमिति । नोच्छ्वसिति चैतन्यं न लभते । मुषितोऽस्मि वयस्यरत्नहरणात् चोरितोऽस्मि ।

मातरिति । कामन्दकीमुद्दिश्य मातर्मातरिति सम्बोधनम् । विषादे च द्विरुक्तिः । हृदयं कर्त्तृ दलति विदीर्य्यते । सर्वत्र वयस्यविच्छेदशोकेनेति भावः । देहबन्धः शरीर-

সখি! তুমি ইহার লোভে বান্ধবগণকে গণনা না করিয়া সাহস করিয়াছিলে; অতএব এখন অনপরাধী প্রিয়তমার প্রতি এই নির্দ্দয় ব্যবহার উচিত নহে ॥১৯॥

(ঢ) উঃ! এখনও চৈতন্য লাভ করিতেছেন না। হায়! বিধাতা আমার সর্ব্বস্ব হরণ করিলেন।

(१) क्वचित् दैवेन इति पाठो नास्ति ।

कष्टं भोः! कष्टम्। (ण)

बन्धुता हृदयकौमुदीमहो मालतीनयनपूर्णचन्द्रमाः (१)।

सोऽयमद्य मकरन्दनन्दनो जीवलोकतिलकः प्रलीयते ॥२१॥

ग्रन्थिः ध्वंसते विनश्यति स्खलति वा। जगत् भुवनं शून्यं पदार्थरहितम् अथ च अविरता अविश्रान्ता ज्वाला सन्तापो यस्मिन् तत् तथोक्तं मन्ये अनुभवामि, अन्तः मध्ये ज्वलामि अन्तरं दग्धं भवतीत्यर्थः। विधुरो विह्वलः अन्तरात्मा जीवः सीदन् अवसन्नः सन् अन्धे अन्धङ्करणे गाढ़ इत्यर्थः, अन्धकारे मज्जतीव लीयत इव, तथा मोहः अस्मानं विष्वक् समन्तात् सकलपदार्थानित्यर्थः, स्थगयति आवृणोति मोहावरणात् किमपि न मे ज्ञान-विषयीभवतीति तात्पर्य्यम्। अतएव मन्दभाग्योऽहं कथं किं करोमि। कमपि प्रति-कारोपायं न पश्यामीति भावः।

अत्र दारुणदुःखरूपकार्य्यं प्रति बहूनां कारणानामुक्तत्वात् समुच्चयोऽलङ्कारः, तथा मन्दभाग्यः किं करोमीति वाक्यार्थं प्रति पूर्ववर्त्तिवाक्यार्थानां हेतुत्वात् काव्यलिङ्गम्, ज्वालाया दुःखरूपत्वेन गुणत्वात् मन्ये पदप्रयोगाच्च भावाभिमानिनी वाच्या गुणोत्प्रेक्षा, मज्जतीवेति अपरा तादृशी क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

उत्तररामचरितहतीयाङ्केऽपि रामेणायं श्लोकः पठितः, किन्तु तत्र "हा हा देवि! स्फुटति हृदयं स्रंसते देहबन्धः" इति प्रथमपादवैषम्यम्। मन्दाक्रान्ता वृत्तम् ॥२०॥

(ण) कष्टमिति। भोः इति विषादार्थकमव्ययम्। कष्टमिति तस्यैवातिशये द्विरुक्तिः।

---

মা! মা! আমার হৃদয় বিদীর্ণ হইতেছে; দেহের গ্রন্থিগুলি স্খলিত হইতেছে, জগৎকে শূন্য অথ চ সর্ব্বদা জ্বালাপরিপূর্ণ মনে করিতেছি, অন্তরে দগ্ধ হইতেছি, বিহ্বল অন্তরাত্মা অবসন্ন হইয়া যেন গাঢ় অন্ধকারে মগ্ন হইতেছে এবং মূর্চ্ছা আসিয়া সকল দিক্ আবৃত করিতেছে। সুতরাং মন্দভাগ্য আমি, এখন কি করি ॥২০॥

(ণ) কি কষ্ট, হায়! কি কষ্ট।

(१)···मुग्धचन्द्रमा इति पाठभेदः।

हा वयस्य! माधव!

गात्रेषु चन्दनरसो दृशि शारदेन्दु-
रानन्द एव हृदये मम यस्त्वमासीः।
तं त्वां (१) निकामकमनीयमकाण्ड एव
कालेन जीवितमिवोद्धरता हतोऽस्मि॥२२॥

बन्धुतेति। बन्धुताया बान्धवसमूहस्य हृदये कौमुदीमहः ज्योत्स्नोत्सवस्वरूपः, मालत्या नयनयोः पूर्णचन्द्रमाः नितरामाह्लादकत्वात् पूर्णचन्द्रस्वरूपः। मकरन्दस्य मम, नन्दनः आनन्दयिता, तथा जीवलोकस्य जगत्संसारस्य तिलकः तिलकस्वरूपः अयं मत्प्रत्यक्षी-भूतः स गुणप्रसिद्धो माधवः, अद्य प्रलीयते प्रियाविच्छेदशोकात् विनश्यति।

अत्र निरङ्गं मालारूपकमलङ्कारः। गुणातिशयो नाम नाट्यलक्षणञ्च,—"यः सामान्य-गुणोद्रेकः स गुणातिशयो मतः।" इति दर्पणलक्षणात्।

बन्धुतेति "ग्रामजने"त्यादिना समूहार्थे तल्।

रथोद्धता वृत्तम्॥२१॥

गात्रेष्विति। हा वयस्य माधव! यस्त्वम् आलिङ्ग्यमानो मम गात्रेषु चन्दनरसः मलयजद्रवस्वरूप आसीः, अतीवशीतलत्वादिति भावः। दृश्यमानो मम दृशि चक्षुषि शारदेन्दुः शरच्चन्द्र आसीः, तद्वदाह्लादजनकत्वादित्याशयः। तथा विभाव्यमानो मम हृदये आनन्द एव आसीः। कालेन अन्तकेन जीवितमिव मम जीवनमिव स्थितं निकाम-कमनीयं परमसुन्दरं तं त्वाम् अकाण्ड एव अनवसर एव असमय एव उद्धरता अपहरता सता हतोऽस्मि अहमपि नाशितोऽस्मि। माधवशोकादितः परमपि न जीवेयमिति भावः।

अत्रापि निरङ्गं मालारूपकमलङ्कारः, श्रौत्युपमा चानयोर्मिथो नैरपेक्ष्यात् संसृष्टिः।

যিনি বন্ধুগণের হৃদয়ে কৌমুদী মহোৎসব, মালতীর নয়নের পূর্ণচন্দ্র, জীবলোকের তিলক এবং মকরন্দের আনন্দজনক ছিলেন, এই তিনি 'আজ লয় পাইতেছেন॥২১॥

---

(१) तत्त्वां इति पाठान्तरम्।

अपृच्छ्य । (त)

अकरुण ! वितर स्मितोज्ज्वलां
दृशमतिदारुण ! देहि मे गिरम् ।
सहचरमनुरक्तचेतसं
प्रियमकरन्द ! कथं न मन्यसे ॥२३॥

माधवः संज्ञां लभते ।

तथा आनन्द एवेति नियमस्यानावश्यकत्वेऽपि तदभिधानादनियमे नियमाख्यदोषः, किञ्च समुच्चयवाचकस्य चकारस्यानभिधानात् न्यूनपदतादोषश्च, चकारस्य समुच्चयद्योतकता-वादिमते तु वाच्यानभिधानतादोषः, तेन 'चित्ते च सम्मदमयी मम यत्नमासीः' इति पाठेन तयोः समाधानं विधेयम् ।

वसन्ततिलका वृत्तम् ॥२२॥

(त) अपृच्छ्येति । माधवशरीरमिति शेषः ।

अकरुणेति । हे अकरुण ! निर्दय ! स्मितोज्ज्वलाम् ईषद्धास्यशोभितां दृशं दृष्टिं वितर, पूर्ववदीषद्धास्यपूर्वकं दृष्टिपातं कुरु इत्यर्थः । हे अतिदारुण ! मत्कृत-प्रार्थनायां कृतायामपि उत्तरादानात् मम जीवननाशहेतुत्वेन भयङ्करस्वभाव ! स्मितोज्ज्वलां गिरं वाचं मे मह्यं देहि । पूर्ववत् स्मितपूर्वकमालप्य मामाश्वासयेत्यर्थः । प्रियो मकरन्दो यस्य तत्सम्बोधनम् । अनुरक्तचेतसं न तु केवलबाह्यिकानुरागप्रदर्शयितारमिति भावः, सहचरं सखायं मां कथं न मन्यसे न जानासि पूर्ववदनुरक्तचेतसं सहचरं मां मन्यमानः प्रियसम्भाषणं विधेहीति तात्पर्य्यम् ।

इदम् अपरवक्त्रं नाम वृत्तम्—"अयुजि ननरला गुरुः, समे तदपरवक्त्रमिदं नजौ जरौ" इति लक्षणात् ॥२३॥

---

হা বয়স্য ! মাধব ! যে তুমি আমার গাত্রে চন্দনের রস, নয়নে শরচ্চন্দ্র এবং হৃদয়ে সাক্ষাৎ আনন্দই ছিলে ; আমার জীবনের ন্যায় পরম-, সুন্দর সেই তোমাকে অসময়েই অপহরণ করতঃ যম, আমাকেও নিহত করিলেন ॥২২॥

মক। সোচ্ছাসম্। অয়মচিরধৌতরাজপট্ট-রুচিরমাংসলচ্ছবি-নবজলধরস্তোয়শীকরাসারেণ মে বয়স্যং জীবয়তি; দিষ্ট্যা জগদুচ্ছ্বসিতং তাবত্ (১)। (থ)

মাধবঃ। তত্কথমত্র বিপিনে প্রিয়াবার্ত্তাহরং করোমি। বিলোক্য। সাধু সাধু (২)। (দ)

(থ) মকেতি। মাধবস্য চৈতন্যদর্শনাত্ উচ্ছ্বাসেন আনন্দোদ্বেলনেন সহেতি সোচ্ছ্বাসম্। অচিরধৌতঃ সদ্যঃ প্রক্ষালিতঃ পরিষ্কৃতো যো রাজপট্টঃ নীলমণিবিশেষঃ তদ্বত্ রুচিরা মনোহরা মাংসলা পরিপুষ্টা চ ছবিঃ কান্তির্যস্য সঃ, নবজলধরঃ নবীনমেঘঃ, তোয়শীকরাসারেণ জলবিন্দুধারাসম্পাতেন। জীবয়তি সংজ্ঞাপয়তি, অতীতসামীপ্যে বর্ত্তমানা। দিষ্ট্যা ভাগ্যেন জগদুচ্ছ্বসিতং বয়স্যস্য উচ্ছ্বাসেন সমাপ্যুচ্ছ্বসনাত্ জগদুচ্ছ্বসিতং মন্য ইত্যর্থঃ।

(দ) মাধব ইতি। তত্কথমিত্যেকমব্যয়ং প্রশ্নে। প্রিয়ায়া মালত্যাঃ, বার্ত্তাহরং

(ত) (মাধবের দেহ স্পর্শ করতঃ) হে নির্দ্দয়! ঈষদ্ হাস্য শোভিত দৃষ্টি দান কর, হে অতিদারুণস্বভাব! আমার বাক্যের উত্তর দাও। মকরন্দ ত তোমার প্রিয়; সুতরাং সেই সহচরকে অনুরক্তচেতা বলিয়া মনে করিতেছ না কেন ॥২৩॥

(মাধব চৈতন্য লাভ করিলেন।)

(থ) মকরন্দ। (আনন্দোচ্ছ্বাসের সহিত) সদ্য পরিষ্কৃত নীলমণির ন্যায় যাহার কান্তি অতিশয় মনোহর, এই সেই নূতন মেঘ, জলবিন্দু বর্ষা করিয়া আমার সখার চৈতন্য সম্পাদন করিয়াছে। ভাগ্যবশতঃ জগৎ-সংসারই এখন চৈতন্য লাভ করিল।

(১)···শীকরাসারেণ সঞ্জীবয়তি মে প্রিয়বয়স্যম্। দিষ্ট্যা সমুচ্ছ্বসিতস্তাবত্ ইতি পাঠান্তরম্।

(২) বিলোক্য। সাধু সাধু ইতি পাঠঃ ক্বচিন্নাস্তি।

फलभरपरिणाम-श्यामजम्बूनिकुञ्ज-
स्खलन-(१) तनुतरङ्गामुत्तरेण स्रवन्तीम् ।
उपचितवनमाल-प्रौढ़तापिञ्छनील:
श्रयति शिखरमद्रे र्नूतनस्तोयवाहः ॥२४॥

दूतम् । मालत्याः समीपे दूतं कृत्वा कं नाम प्रेषयामीत्यर्थः । मेघमवलोक्य तस्य दौत्यं सम्भावयन्नानन्देनाह साधु साध्विति ।

फलेति । फलभराणां स्वकीयजम्बुफलसमूहानां परिणामेन पक्वतया श्यामानां श्यामलानां जम्बूनां जम्बूवृक्षाणां यो निकुञ्ज आवृतदेशः, तत्र स्खलनेन पतनेन तनवः भङ्गात् क्षुद्रीभूतास्तरङ्गा यस्यास्ताम्, स्रवन्तीं प्रवहन्तीं नदीम्, उत्तरेण अदूरे उत्तरस्यां दिशि । उपचिता वर्षागमात् वृद्धिं प्राप्ता घना निविड़ा माला श्रेणिर्यस्य सः तादृशः, प्रौढ़ः वृद्धिं गतो यः तापिञ्छः तमालतरुः, तद्वन्नीलः, नूतनः नवीनः तोयवाहो मेघः, अद्रेः पर्व्वतस्य शिखरं शृङ्गं श्रयति अवलम्बते । तदेनमेव दूतं विधाय प्रियायाः समीपे प्रेषयामीति भावः ।

अत्र लुप्तोपमालङ्कारः ।

स्रवन्तीमिति "द्वितीयैनेन" इति द्वितीया । उत्तरेणेति "अदूरे एनोऽपञ्चम्याः" इत्येन-प्रत्ययः । प्रथमचरणमुत्तररामचरितेऽपि दृश्यते ।

मालिनी वृत्तम् ॥२४॥

(द) माधव । এই বনে আমি কাহাকে প্রিয়তমার নিকট সংবাদ-বাহক করিব । (দেখিয়া) বেশ্ বেশ্ ।

ফলগুলি পাকিয়া যাওয়ায় শ্যামবর্ণ জামবনের ভিতরে প্রবেশ করায় যাহার তরঙ্গ, ক্ষুদ্র ক্ষুদ্র হইয়া যাইতেছে, প্রবাহিনী সেই নদীর অদূরে উত্তর দিকে, ঘনশ্রেণীবদ্ধ ও বৃদ্ধিপ্রাপ্ত তমালতরুর ন্যায় নীলবর্ণ নূতন মেঘ, পর্ব্বতের শৃঙ্গ অবলম্বন করিতেছে ॥২৪॥

(१)···स्खलित···इति पाठभेदः ।

सरभस-(१) मुत्थायोन्मुखः कृताञ्जलिः । (ध)

कच्चित् सौम्य ! प्रियसहचरी विद्युदालिङ्गति त्वां ?
आविर्भूतप्रणयसुमुखाश्चातका वा भजन्ते ? ।
पौरस्त्यो वा सुखयति मरुत् साधु संवाहनाभिः ?
विष्वग्विभ्रत् (२) सुरपतिधनुर्लक्ष्म लक्ष्मीं तनोति ? (३) ॥२५॥

(ध) सरभसमिति । सरभसम् इच्छामात्रदूतलाभात् सहर्षम् ।

कच्चिदिति । हे सौम्य ! शान्तमूर्त्ते ! मेघ ! प्रियसहचरी विद्युत् त्वामालिङ्गति कच्चित्, आश्लिष्यति किम्, सर्व्वत्र इत्यहं वेदितुमिच्छामीत्यर्थः, न वा मालती मामिव विद्युदपि त्वां विहायादर्शनं गतेति भावः । एतेन महती प्रियालिङ्गनलालसा व्यज्यते । आविर्भूतेन अन्तरुत्पन्नेन प्रणयेन स्नेहेन सुमुखाः प्रसन्नवदनाः चातका वा त्वां भजन्ते कच्चित्, सेवन्ते किम्, न वा मकरन्द इव मामपहाय स्वार्थवशादन्यत्र गता इति भावः । एतेन बलवती मकरन्दसान्निध्यस्पृहा व्यज्यते । उन्मादवशात् सन्निहितमेव मकरन्दमजानत उक्तिरियम् । अतएवानुपदं मकरन्दो वक्ष्यति—"कथमिदानीमुन्मादोपरागो माधवेन्दुमास्कन्दती"ति । वा किंवा, पौरस्त्यः पूर्वदिग्वर्त्ती मरुत् वायुः संवाहनाभिः सञ्चालनाभिः करेणाङ्गप्रत्यङ्गमर्द्दनैश्च, साधु सम्यक् सुखयति कच्चित्, त्वाम् आनन्दयति किं किंवा कलहंसी मामिव विहायान्यत्र भ्रमतीत्याशयः । अनेन कलहंसकृतशुश्रूषाभिलाषः सूच्यते । किंवा, विष्वक् सर्वतः लक्ष्मीं शोभां बिभ्रत् धारयत् नानावर्णमयत्वेनातीवसुन्दरमित्यर्थः, सुरपतेरिन्द्रस्य धनुः कर्त्तृ, लक्ष्म तव चिह्नं तनोति कच्चित्, तव सौन्दर्य्यलक्षणं विस्तारयति किम् ? न वा ममेदानीमाभरणमिव कुत्रापि निभृतमवतिष्ठते इत्यभिप्रायः । एतेनाभरणधारणेच्छापि व्यज्यते । उन्मादवशान्नानाविधा मतिरिति बोध्यम् ।

अत्र प्रथमचरणे मेघविद्युतोः पुंस्त्रीलिङ्गाभ्याम् आलिङ्गनकार्य्येण च नायकनायिकाव्यवहारसमारोपात्, तथाऽन्यत्र भजन-संवाहन शोभाविस्तारणरूपकार्य्यैः क्रमेण चातक-

(१) सादरम् इत्यपि पाठः । (२) विश्वं बिभ्रत् इति पाठान्तरम् ।
(३)···धनुर्ल क्षमवदीतत् इति पाठभेदः ।

आकर्ण्य। अये! अयं (१) प्रतिरवभरितकन्दरानन्दितोत्कण्ठ-नीलकण्ठकलकेकानुबन्धिना मन्द्रहुङ्कृतेन मामनुमन्यते, यावदभ्यर्थये। भगवन्! जीमूत! (न)

---

मरुदिन्द्रधनुःषु वयस्यदासाभरणानां व्यवहारसमारोपात् चत्वार एव समासोक्त्यलङ्काराः, तेषाञ्च मिथो नैरपेक्ष्यात् संसृष्टिः। सा पुनस्त्वमत्तोमिति च्छेकानुप्रासेनापि संसृज्यते।

वर्षासमये प्रायेणैव पूर्वतो वायुसम्भवात् पौरस्त्य इति स्वरूपोक्तिः।

"कच्चित् कामप्रवेदने।" इत्यमरः।

मन्दाक्रान्ता वृत्तम् ॥२५॥

(न) आकर्ण्येति। प्रतिरवेण प्रतिध्वनिना भरितासु पूर्णासु कन्दरासु गुहासु स्थितानामित्यर्थः, आनन्दितानां स्वध्वनिश्रवणेनैवामोदितानाम् अतएव उत्कण्ठानाम् उद्ग्रीवाणां नीलकण्ठानां मयूराणां कलकेकां केकाख्यं मधुरास्फुटशब्दम् अनुबन्धुम् अनुवर्त्तुं शीलं यस्य तेन, एकस्मिन् गर्जने सति मयूराः केकारवं कृतवन्तः, ततः परमुत्पद्यमानेनेत्यर्थः: मन्द्रहुङ्कृतेन गम्भीरेण 'हु' इति शब्देन, मामनुमन्यते मां प्रति आत्मनो विद्युदालिङ्गनादिकमङ्गीकरोतीत्यर्थः। यथा केनचित् पृष्टं कञ्चिदर्थं कश्चित् 'हु' इति शब्देनाङ्गीकरोति तद्वदिति भावः। अभ्यर्थये एनमेव दौत्यं प्रार्थये उक्तसद्व्यवहारेण विश्वस्तत्वादिति भावः। पूज्यत्वारोपणेन प्रसन्नतां प्रतिपाद्य स्वप्रार्थनीयदौत्यस्वीकारार्थं मेघस्य भगवन्निति पूज्यसम्बोधनम्। जीमूत! मेघ!

(ধ) ( আনন্দের সহিত উঠিয়া, মেঘাভিমুখে কৃতাঞ্জলি হইয়া )

হে শান্তিমূর্ত্তি মেঘ! তোমার প্রিয় সহচরী বিদ্যুৎ তোমাকে আলিঙ্গন করিতেছে ত? স্নেহ উৎপন্ন হওয়ায় প্রসন্নবদন চাতকগণ তোমাকে সেবা করিতেছে ত? পূর্ব্বদিকের বায়ু, সঞ্চালনদ্বারা তোমাকে সম্যক্ সুখী করিতেছে ত? এবং ইন্দ্রধনু সকল দিকে শোভা ধারণ করিয়া তোমার চিহ্ন বিস্তার করিতেছে ত? ॥২৫॥

(१)···क्वचित् अयं इति पाठो नास्ति।

दैवात् पश्येर्जगति विचरन्निच्छया मत्प्रियां (१) चेत्
आश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम् ।
आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः
प्राणत्राणं कथमपि करोत्यायताच्याः स एकः ॥२६॥

मेघस्य दौत्यं प्रतिपादयन् कर्त्तव्यमाह दैवादिति । हे मेघ ! इच्छया स्वेच्छया स्वेच्छानुसारेण जगति विचरन् दैवात् मम सौभाग्यात् चेद् यदि मत्प्रियां मालतीं पश्येः, तदा आदौ आश्वास्य 'माधवो जीवति, तातादयश्च ते सुस्थास्तिष्ठन्ति' इत्थं तां सान्त्वयित्वा, तदनु ततः परं माधवीयाम् इमाम् अवस्थां तद्विरहेणोपस्थिताम् अतीवविह्वलां दशां कथयेस्त्वम् । किञ्चेति चार्थः । कथयता मदवस्थां ब्रुवता त्वया, आशातन्तुः मया सह तस्याः पुनः सङ्गमाशासूत्रम्, अत्यन्तं न उच्छेदनीयः माधवस्य मृत्युदशा समुपस्थिता इत्युक्त्या सम्पूर्णरूपेण न छेदनीयः । कथमित्याह प्राणेति । आयताच्याः दीर्घनयनायास्तस्या मालत्याः, एकः केवलः स आशातन्तुः कथमपि नितान्तायासेनेत्यर्थः, प्राणत्राणं जीवनरक्षां करोति । तद्विरहेण मन्मरणसम्भावनाकथने तदाशानाशात् सैव पूर्वं मरिष्यतीति भावः ।

अत्र चतुर्थपादोक्तकारणेन तृतीयपादोक्तकार्य्यस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः ।

इयन्तं कालं यावत् सा जीवति न वेति संशयेन दैवादित्युक्तम् । चतुर्थचरणानुरूपा कालिदासोक्तिर्यथा मेघदूते—

"आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥"

मन्दाक्रान्ता वृत्तम् ॥२६॥

(न) (শ্রবণ করিয়া) ওহে ! প্রতিধ্বনিতে পরিপূর্ণ গুহার ভিতর ময়ূরগণ উদ্‌গ্রীব হইয়া আনন্দে যে মধুর ও অস্পষ্ট কেকারব করিতেছে ; তাহার পিছে পিছে গম্ভীর হুঙ্কারদ্বারা এই মেঘ, আমার জিজ্ঞাসিত বিষয়গুলির অঙ্গীকার করিতেছে। সুতরাং ইহার নিকটই দৌত্য প্রার্থনা করি।

(१)···विचरन् मत्प्रियां मालतीं चेत् इत्यपि पाठः ।

सहर्षम्। अहो! प्रचलितः। तदन्यत्र सञ्चरामि। परि-क्रामति (१)। (प)

मक। सोद्वेगम्। कथमिदानीमुन्मादोपरागो माधवेन्दु-मास्कन्दति। हा तात! हा अम्ब! हा भगवति! परित्रायस्व माम्, (२) पश्य माधवस्यावस्थाम्। (फ)

(प) सहर्षमिति। तत्क्षणादेव मेघस्य प्रचलनदर्शनात् 'मत्प्रार्थितं दौत्यमङ्गी-कृत्यैवायं प्रचलती'ति मननात् सहर्षमिति बोध्यम्। प्रचलितः मालत्यै मद्वार्त्तामाख्यातु-मित्याशयः। तदन्यत्र सञ्चरामि व्रजामि, कर्त्तव्यस्य निष्पत्तेरिदानीमत्रावस्थाने प्रयोजना-भावादिति भावः।

(फ) मकेति। उन्माद एव उपरागो राहुकर्त्तृकग्रहणं सः, माधव एव इन्दुश्चन्द्रः तम्, आस्कन्दति अभिभवति। कथमन्यथा अचेतनं मेघमुद्दिश्यायं प्रलापः सम्भवतीति भावः। मन्धुलिनाम्नी माधवादभिन्नतया माधवस्यैव मातापितरावुद्दिश्य हा तात! हा अम्बेति सम्बोधनम्, आत्ममातापित्रपेक्षया तयोरेव माधवं प्रति स्नेहातिरेकसम्भवात्,

হে মাহাত্ম্যশালী মেঘ! তুমি ইচ্ছানুসারে জগতে বিচরণ করতঃ দৈববশতঃ আমার প্রিয়া মালতীকে যদি দেখিতে পাও, তবে তাঁহাকে আগে আশ্বস্ত করিয়া, পরে মাধবের অবস্থা বলিবে। কিন্তু তুমি বলিতে বলিতে তাঁহার আশাসূত্রটুকুকে একেবারে ছিঁড়িয়া ফেলিও না; কারণ, দীর্ঘনয়না মালতীর একমাত্র সেই আশাটুকুই কোন রকমে প্রাণ রক্ষা করিতেছে ॥২৬॥

(প) (হর্ষের সহিত) ভাল, মালতীর নিকট আমার বৃত্তান্ত বলিবার নিমিত্তই চলিয়াছে। অতএব অন্যত্র যাই। (পাদক্ষেপ করিতে লাগিলেন।)

---

(१) सहर्षम्। अयि! प्रचलितः। तदन्यतः सम्भावयामि। इति परिक्रामन्ति। इति पाठान्तरम्। (२) परित्रायस्व परित्रायस्व इति द्विरुक्तिः क्वचित्।

माधवः। धिक् प्रमादः (१)। (ब)

नवेषु लोध्रप्रसवेषु कान्तिर्दृशः कुरङ्गीषु (२) गतं गजेषु।
लतासु नम्रत्वमिति प्रमथ्य व्यक्तं विभक्ता विपिने प्रिया मे ॥२७॥

तथा भगवतीति कामन्दकीसम्बोधनम्, तस्या अपि मालतीऽपि माधवं प्रति स्नेहातिशय-दर्शनादिति बोध्यम्। मां माधवविपदैव विपन्नमिति भावः।

अत्र प्रथमवाक्ये उन्मादे उपरागत्वारोपो माधवे चन्द्रत्वारोपहेतुरिति श्लिष्टशब्द-निबन्धनं परम्परितरूपकमलङ्कारः।

(ब) माधव इति। धिगित्यात्मनिन्दायाम्। प्रमादः निरूपणविषये ममैवानव-धानता। येन हि न खलु सा दूरे विद्यत इति भावः।

तर्हि निकटे कुत्रेत्याह नवेष्विति। नवेषु सद्यःप्रस्फुटितेषु लोध्रस्य प्रसवेषु कुसुमेषु कान्तिः तस्या गौरकान्तिर्वर्त्तते। कुरङ्गीषु हरिणीषु दृशौ दृष्टयो विद्यन्ते, गजेषु हस्तिषु गतं गमनं वर्त्तते। तथा लतासु नम्रत्वं विद्यते इति हेतोः, विपिने अस्मिन् वने प्रमथ्य निष्पीड्य मे मम प्रिया मालती, व्यक्तं स्पष्टं यथा स्यात्तथा विभक्ता विभज्य गृहीता, लोध्रप्रसवादिभिरिति शेषः। तथा च मालतीं निष्पीड्य तद्देहात् लोध्रप्रसवा गौरकान्तिम्, हरिण्यश्चञ्चलदृष्टिपातान्, हस्तिनी मन्थरगमनानि, लताश्च नम्रत्वं विभज्य जगृहुः; अन्यथा कथमेषां तादृशगौरकान्त्यादयः सम्भवन्तीति सरलार्थो भावार्थश्च।

अत्र भ्रुवादिशब्दवत् व्यक्तशब्दस्योत्प्रेक्षावाचकत्वात् वाच्या भावाभिमानिनी क्रियोत्-प्रेक्षालङ्कारः न तु निदर्शनापि, लोध्रप्रसवादिकान्त्यादिषु उन्मत्तमाधवेन मालतीगत-

(फ) মকরন্দ। ( উদ্বেগের সহিত ) হায়! এখন উন্মাদরূপ গ্রহণ, মাধবরূপ চন্দ্রকে আক্রমণ করিল। হা পিতঃ! হা মাতঃ! হা ভগবতি! কামন্দকি! আমাকে রক্ষা কর, মাধবের অবস্থা দেখ।

(ব) মাধব। আমার অনবধানতাকে ধিক্। ( কারণ, )

(१) द्विपदिकया सर्वतोऽवलोक्य। धिक् प्रमादः इति क्वचित् पाठः।

(२) कुरङ्गेषु इति पाठभेदः।

हा प्रिये! मालति!। इति मूर्च्छति (१)। (भ)

मक। सुहृदि गुणनिवासे प्रेयसि प्राणनाथे
कथमिव सहपांसुक्रीड़नप्रौढ़सख्ये।
प्रियजनविरहाधिव्याधिखेदं (२) दधाने
हतहृदय! विदीर्य्य त्वं द्विधा न प्रयासि ॥२८॥

कान्त्यादितादात्म्यस्यैवावधारणेन सादृश्याक्षेपाभावात्। तथा विभक्तेत्यस्य कर्त्तृपदनिर्द्देशा-भावात् न्यूनपदत्वदोषः, स च 'व्यक्तं विभक्ताऽत्र मम प्रियेति'ति पाठेन समाधेयः। अस्ति भवत्यादीनामध्याहारे न न्यूनपदत्वदोष इति वामनमतम्। तेन प्रथमपादत्रये वर्त्तत इत्यादिक्रियाऽध्याहारेऽपि न न्यूनपदत्वदोष इति भाव्यम्।

उपेन्द्रवज्रेन्द्रवज्रयोर्मेलनादुपजातिवृत्तम् ॥२७॥

(भ) हेति। उक्तरूपेण मालत्या मरणावधारणात् विलपति 'हा प्रिये! मालती'ति मूर्च्छति चेति बोध्यम्।

सुहृदीति। गुणनिवासे रूपविद्याविनयादीनां गुणानामाश्रये। अथ तादृशगुणवा-नपरोऽप्यस्ति कथं तदर्थो नाक्षेप इत्याह प्रेयसीति। प्रेयसि प्रियाणां मध्ये प्रधानभूते; सा प्रीतिरपि न प्रियप्रधानभूतसोदरादि-साधारणीत्याह प्राणनाथ इति। प्राणनाथे प्राणानां नियन्तरि यस्याः प्रीतेः कृते प्राणानपि परित्यक्तुमर्हामि तादृशासाधारणप्रीतिभाजन इत्यर्थः। तादृशप्रीतिरपि नाचिरजातेत्याह सहेत्यादि। सहपांसुक्रीड़नात् मिलित्वा धूलिखेलातः शैशवादवधीत्यर्थः, प्रौढ़ं गाढ़भावेनोत्पन्नं सख्यं बन्धुता यस्मिन् तस्मिन् तथोक्ते। सुहृदि

নূতন লোধ্রপুষ্পে মালতীর কান্তি, হরিণীগণে দৃষ্টি, হস্তিগণে গমন এবং লতাসমূহে নম্রতা রহিয়াছে। সুতরাং আমি সুস্পষ্টভাবে মনে করি যে, ইহারা আমার প্রিয়তমা মালতীকে এই বনের ভিতরে নিষ্পীড়িত করিয়া, বিভাগ করিয়া লইয়াছে ॥২৭॥

(ভ) হা প্রিয়ে! মালতি! (এই বলিয়া মূর্চ্ছিত হইলেন।)

(१) इति मूर्च्छति इति पाठः क्वचिन्नास्ति। (२)···वेगं इत्यपि पाठः।

माधवः। आश्वस्योत्थाय (१)। सुलभानुकारः खलु जगति वेधसो निर्म्माणसन्निवेशः। भवतु, एवं तावत्। उच्चैः। अयमहं भोः! प्रणिपत्य (२) भूधरारण्यचारिणः सत्त्वान् विज्ञापयामि। मुहूर्त्त-मवधानदानेन मामनुगृह्णन्तु भवन्तः। (म)

---

मित्रे अस्मिन् माधवे, प्रियजनस्य वल्लभाया मालत्याः, विरहेण य आधिर्मानसी व्यथा स एव व्याधिः रोगः, तस्य खेदं तज्जनितां दारुणयातनां दधाने वहति अनुभवति सति, हे हतहृदय! निराशचित्त! त्वं द्विधा विदीर्य्य कथमिव कथं न प्रयासि न गच्छसि। ईदृशदुःखानुभवात् मां विहाय तव गमनमेव श्रेय इति भावः।

अत्राभिप्रायविशेषैर्विशेषणानामुपन्यासात् परिकरोऽलङ्कारः। कथमिवेति इवशब्दो वाक्यालङ्कारे। मालिनी वृत्तम् ॥२८॥

(म) माधव इति। आश्वस्य कियतः समयात् परं स्वयमेव चैतन्यमुपेत्य। वेधसो विधातुः, निर्म्माणसन्निवेशः सृष्टिप्रकारः सृष्टपदार्थप्रकारः इत्यर्थः, सुलभः अनायासलभ्यः अनुकारः सादृश्यं येन सः, एकेनापरस्य सादृश्यं स्वत एव लभ्यत इति तात्पर्य्यम्, तेन च मालतीगतकान्त्यादीनां सादृश्यमेव लोध्रप्रसवादिकान्त्यादिषु वर्त्तते, न पुनः सा तैः प्रमथ्य विभक्ता इति न तस्या मरणनिश्चय इति भावः। एवं तावत् क्रियत इति शेषः। भूधरारण्यचारिणः पर्व्वतवनचारिणः, सत्त्वान् जन्तून्। अवधानदानेन मद्वाक्यश्रवणे मनोयोगार्पणेन।

মকরন্দ। একত্র ধূলিখেলা হইতে আরম্ভ করিয়া যাঁহার সহিত প্রগাঢ় সখিত্ব জন্মিয়াছিল, গুণাধার ও প্রাণের পর্য্যন্ত নিয়ন্তা সেই প্রিয়সখা, প্রিয়জনের ( মালতীর ) বিরহে মনোবেদনারূপ ব্যাধির যাতনা ভোগ করিতেছেন, হে নিরাশ হৃদয়! ইহাতেও তুমি দুইভাগে বিদীর্ণ হইয়া চলিয়া যাইতেছ না ॥২৮॥

(१) आश्वस्योत्थाय इति पाठोऽपि क्वचिन्न दृश्यते।

(२) पुस्तकान्तरे प्रणिपत्य इति कविवाक्यत्वेन सन्निविष्टम्।

भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-
रिहस्थैर्दृष्टा वा ? विदितमथवाऽस्याः किमभवत् ?।
वयोऽवस्थां तस्याः शृणुत सुहृदो ! यत्र मदनः
प्रगल्भव्यापारश्चरति हृदि मुग्धश्च वपुषि ॥२८॥

विज्ञापनीयमाह भवद्भिरिति। इहस्थैः भूधरारण्यस्थितैः, भवद्भिः सत्त्वैः, सर्वेषु अङ्गेषु मुखाद्यवयवेषु प्रकृत्या स्वभावेनैव रमणीया मनोहरा, न त्वाभरणादिना कृत्रिम-सौन्दर्य्यवतीति भावः, कुलवधूः काचित् कुलाङ्गना, लज्जाविनयादिभिरनुमेयकुलवधूभावेति भावः, दृष्टा वा ? अवलोकिता किमिति काकुः। अथवा अस्याः कुलवध्वाः किमभवत् मरणं जीवनम् अन्येन ग्रहणं वा किं जातम्, तत् विदितम् ? साक्षाद्दर्शनाभावेऽपि श्रोतपरम्परया श्रुत्वा ज्ञातं किमित्यर्थः। ननु सा कीदृशीत्यपेक्षायां किञ्चिदभिज्ञानमाह वय इत्यादि। हे सुहृदः ! इदानीमेकत्रावस्थानात् हे सखायः ! भूधरारण्यचारिणो जन्तवः ! तस्या मत्प्रश्नविषयीभूतायाः कुलवध्वाः वयोऽवस्थां शृणुत। यत्र वयोऽवस्थायां मदनः, प्रगल्भव्यापार उत्कटोद्यमः सन् हृदि चित्ते चरति, वपुषि देहे च मुग्धो हावभावादिना मनोहरः सन् चरति। प्रथमावतीर्णयौवना सा इत्यभिज्ञानमिति भावः।

अत्र यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणात् न वाक्यगतविधेयाविमर्शदोषः "आत्मा जानाति, यत् पाप"मिति दर्पणोदाहृतवत्।

तथा पृच्छा नाम नाट्यलक्षणम्—"अभ्यर्थनापरैर्वाक्यैः पृच्छाऽर्थान्वेषणं मतम्।" इति दर्पणलक्षणात्। इहस्थैरित्यनेन सत्त्वानां मालत्या दर्शनज्ञानयोर्योग्यता दर्शिता।

शिखरिणी वृत्तम् ॥२८॥

(म) মাধব। ( চৈতন্যলাভের পর উঠিয়া ) জগতে বিধাতার সৃষ্টির মধ্যে একের অনুকরণ অন্যের পক্ষে সুলভই বটে। হউক, এইরূপ করি ( উচ্চৈঃস্বরে ) ওহে ! এই আমি ( প্রণিপাত করিয়া ) পর্ব্বত ও বনচারী প্রাণিগণকে জানাইতেছি যে, আপনারা মুহূর্ত্তকালের জন্য ( আমার বাক্যে ) মনোযোগ দিয়া আমাকে অনুগৃহীত করুন।

कष्टं भोः ! कष्टम् (१)। (य)

केकाभिर्नीलकण्ठस्तिरयति वचनं ताण्डवादुच्छिखण्डः,
कान्तामन्तःप्रमोदामभिसरति मदभ्रान्ततारश्चकोरः ।
गोलाङ्गूलः कपोलं छुरयति रजसा कौसुमेन प्रियायाः,
किं (२) याचे यत्र तत्र ध्रुवमनवसरग्रस्त एवार्थिभावः ॥३०॥

(य) कष्टमिति । कष्टं दुःखम् एभिर्मद्वाक्यस्याप्यश्रवणादिति भावः । तस्यातिशये द्विरुक्तिः । 'भोः' इति विषादार्थकमव्ययम् ।

अश्रवणप्रकारमाह केकाभिरिति । ताण्डवात् नृत्यार्त्तीः उच्छिखण्डः उत्थितपिच्छभारः, नीलकण्ठो मयूरः केकाभिः स्ववाणीभिः स्वकीयशब्दैः, वचनं मदीयप्रश्नवाक्यं तिरयति आच्छादयति, दीर्घतरेण स्वशब्देन मम वाक्यस्याधःकरणात् तन्न शृणोतीत्यर्थः । मदभ्रान्ते काममदेन घूर्णिते, तारे कनीनिके यस्य सः, चकोरः पक्षिविशेषः, अन्तरन्तःकरणे प्रमोदो रिरंसानन्दो यस्यास्तां कान्तां चकोरीम् अभिसरति अभिगच्छति । सुतरामयमपि अन्यत्रासक्तमनस्कतया मद्वाक्यं नाकर्णयतीति भावः । तथा गोरिव लाङ्गूलं यस्य सः गोलाङ्गूलः वानरः, कौसुमेन रजसा पुष्पपरागेण प्रियाया वानर्य्याः कपोलं गण्डं छुरयति रञ्जयति । अतएवैषोऽपि कौतुकाक्रान्तचित्ततया मम वचनं न शृणोतीति भावः । अतएव किं कथं याचे एतेषामन्तिके प्रियाया अनुसन्धानं प्रार्थयामि, एभिरन्यमनस्कैः, प्रियानुसन्धानदानन्तु दूर एवापास्तं मद्वाक्यस्याप्यश्रवणात् एतेषामन्तिके तत्प्रार्थनमेवानर्थकमिति भावः । तथा च अर्थिभावो याचकत्वम्, यत्र तत्र सर्वत्रैवेत्यर्थः, ध्रुवं निश्चितम्

---

আপনারা এখানে থাকিয়া, স্বভাবতই সর্ব্বাঙ্গসুন্দরী কোন কুলরমণীকে দেখিয়াছেন কি? অথবা ইহার কি হইল তাহা জানেন কি? হে বন্ধুগণ! তাহার বয়সের অবস্থা শুনুন, যে বয়সে মদন, প্রবলোত্তম হইয়া হৃদয়ে, আর সুন্দর হইয়া দেহে বিচরণ করিয়া থাকে ॥২৯॥

(য) কষ্ট, হায়! কি কষ্ট।

---

(१) कष्टं भोः इतिमात्रः पाठः क्वचित्। (२) कं इति पाठभेदः।

अयञ्च,

दन्तच्छदारुणिमरञ्जितकान्तदन्त-(१)
मुन्नम्य चुम्बति वलीवदनः प्रियायाः।
काम्पिल्यक-(२) प्रसवपाटल-गण्डपालि-
पाकारुणस्फुटितदाड़िमकान्ति वक्त्रम् ॥३१॥

अनवसरग्रस्त एव अवकाशाभावाक्रान्त एव। सर्वत्र सर्व एव इत्थं स्वस्वाभीष्टकर्म्मासक्ताः सुतरां कुत्र याचकतायाः अवकाश इति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, छेकानुप्रासवृत्त्यनुप्रासौ च, इत्येतेषां परस्परनैरपेक्ष्यात् संसृष्टिः।

प्रतिषेधो नाम विमर्षसन्ध्यङ्गम्—"ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते।" इति लक्षणात्।

"प्लवङ्गकीशप्लवगशाखामृगवलीमुखाः" इत्यमरमाला।

स्रग्धरा वृत्तम् ॥३०॥

दन्तेति। अयञ्च वलीवदनो वानरः, दन्तच्छदयोरोष्ठयोः अरुणिम्ना रक्तत्वेन रक्त-वर्णेन रञ्जिता अतएव कान्ता मनोहरा दन्ता यत्र तत्। काम्पिल्यकः गुण्डारोचनीनाम सुगन्धिद्रव्यं (कमलागुँड़ी इति यस्य भाषा) तस्य प्रसवेन फलेन तत्फलभस्मवर्णेनेत्यर्थः,

ময়ূর, নৃত্য হেতু পুচ্ছদেশ উত্তোলন করিয়া, স্বকীয় কেকারবে আমার বাক্য তিরোহিত করিতেছে; মদবশতঃ যাহার নয়নের তারা দুইটী ঘুরিতেছে, সেই চকোর পক্ষী, অন্তরে আনন্দিত কান্তার (চকোরীর) প্রতি যাইতেছে; বানর পুষ্পরেণুদ্বারা প্রিয়তমার (বানরীর) গণ্ডদেশ রঞ্জিত করিয়া দিতেছে। সুতরাং আমি ইহাদের নিকট প্রার্থনা করি কেন? কারণ, যাচকতা যেখানে সেখানেই (সকল স্থানেই) অনবসরগ্রস্ত (কোন স্থানেই প্রার্থনা করিবার অবসর নাই) ॥৩০॥

(१)···दन्तमालम् इति पाठान्तरम्। (२) काम्पिल्लक···इति पाठभेदः।

এষ প্রিয়তমাস্কন্ধবিশ্রান্তকরো রোহিণ্যানোকহস্কন্ধবিশ্রান্ত-কন্ধরঃ করী। কথমত্রাপ্যনবসরঃ (১)। (র)

অথবা তৎফলবৎ পাটলৌ শ্বেতরক্তবর্ণৌ গণ্ডপালী কপোলপ্রান্তৌ যস্য তৎ, তথা পাকেন পরিপক্কতয়া অরুণং রক্তবর্ণম্, স্ফুটিতং বীজোচ্ছ্বাসাৎ বিদীর্ণঞ্চ যৎ দাড়িমং ফলং তস্য কান্তিরিব কান্তির্যস্য তৎ, তাদৃশং প্রিয়ায়া বানর্য্যা বক্ত্রং মুখম্ উন্নম্য করাভ্যাং কিয়দুত্তোল্য চুম্বতি। সুতরামস্যান্তিকেঽপি মম প্রার্থনাবকাশো নাস্তীতি ভাবঃ।

অত্র লুপ্তোপমাচ্ছেকানুপ্রাসয়োঃ সংসৃষ্টিরলঙ্কারঃ।

"কাম্পিল্যঃ (পুং) গুণ্ডারোচনীনাম সুগন্ধিদ্রব্যম্" ইতি শব্দকল্পদ্রুমঃ। তস্মাৎ স্বার্থে কপ্রত্যয়ঃ।

বসন্ততিলকা বৃত্তম্ ॥৩১॥

(র) এষ ইতি। এষ করী হস্তী প্রিয়তমায়াঃ করিণ্যাঃ স্কন্ধে বিশ্রান্তঃ অবস্থিতঃ করঃ শুণ্ডা যস্য সঃ। তথা রোহিণ্যানোকহস্য বটবৃক্ষস্য স্কন্ধে প্রকাণ্ডদেশে বিশ্রান্তা স্থিতা কন্ধরা গ্রীবা যস্য সঃ তাদৃশঃ সন্ বর্ত্ততে। অতএবাত্রাপি অস্য সমীপে-ঽপি অনবসরঃ মৎপ্রশ্নস্যানবকাশঃ। কৌতুকক্রিয়াব্যাপৃতত্বেনাস্যাপি পূর্ব্বময়ূরাদিবৎ শ্রবণাসম্ভবাদিতি ভাবঃ।

যাহার দন্তসমূহ, ওষ্ঠদ্বয়ের রক্তিমায় রঞ্জিত হইয়া মনোহর হইয়াছে; যাহার গণ্ডযুগল, কমলাগুঁড়ীফলের ন্যায় পাটলবর্ণ এবং যাহার কান্তি পক্কতানিবন্ধন রক্তবর্ণ ও বিদীর্ণ দাড়িম ফলের তুল্য; এই বানর, প্রিয়তমা বানরীর সেই মুখমণ্ডল উত্তোলন করিয়া চুম্বন করিতেছে ॥৩১॥

(র) এই হস্তী প্রিয়তমা হস্তিনীর স্কন্ধদেশে শুঁড়টী রাখিয়া, বট-গাছের দোঠালার ভিতরে গ্রীবা স্থাপন করিয়াছে। হায়! ইহার নিকটেও জিজ্ঞাসা করিবার অবকাশ নাই।

(১) অযম্ব রোহিণ্যানোকহস্কন্ধবিশ্রান্তকণ্ঠঃ করী। কথমত্রাপ্যনবসরঃ। ইতি পুস্তকান্তরে পাঠঃ।

कण्डू-कुट्मलितेक्षणां सहचरीं दन्तस्य कोट्यालिखन्
पर्य्यायव्यतिकीर्णकर्णपवनैराह्लादिभिर्वीजयन्।
जग्धार्द्धैर्नवशल्लकी-(१) किसलयैरस्याः स्थितिं कल्पयन्
धन्यो (२) वन्यमतङ्गजः परिचयप्रागल्भ्यमभ्यस्यति ॥३२॥

अन्यतो विलोक्य (३)। अयन्तु

नान्तर्वर्त्तयति (४) ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात् सरसः करोति कवलानावर्जितैः शैवलैः।

विशेषतस्त्वाह कण्डू इति। अयं धन्यः पुण्यवान्, कथमन्यथा निःशङ्कमीदृग् विहर्त्तु-मर्हतीति भावः। वन्यमतङ्गजो वनजातो हस्ती, दन्तस्य कोट्या अग्रभागेन, कण्डूा कण्डूयनेन कुट्मलिते मुकुलिते मुद्रिते ईक्षणे चक्षुषी यया ताम्, सहचरीं प्रियां हस्तिनीम् आलिखन् ईषदीषत् कण्डूयन्, आह्लादिभिः सुखजनकैः, पर्य्यायेण क्रमेण व्यतिकीर्णयोः विक्षिप्तयोः सञ्चालितयोः कर्णयोः, पवनैर्वायुभिः, वीजयन् वीजितां कुर्वन्, तथा जग्धं स्वयं भुक्तम् अर्द्धं येषां तैः, नवशल्लकीकिसलयैः नूतनैः गजभक्ष्याख्यवृक्षविशेषपल्लवैः अस्याः करिण्याः स्थितिं वृत्तिं जीविकां कल्पयन् सम्पादयन् नवशल्लकीकिसलयानि करिणीं खादयन्नित्यर्थः, परिचयप्रागल्भ्यं प्रणयनैपुण्यम्, अभ्यस्यति असकृदनुतिष्ठति। सुतरा-मस्यान्तिके कथमपि न मम प्रस्तावकाश इति भावः।

अत्र स्वभावोक्तिरलङ्कारः। "परिचयः (पुं)···प्रणयः।" इति शब्दकल्पद्रुमः।

शार्दूलविक्रीड़ितं वृत्तम् ॥३२॥

পুণ্যবান্ বন্য হস্তী, কণ্ডূয়নবশতঃ মুদ্রিতনয়না সহচরী হস্তিনীকে দন্তের অগ্রদ্বারা কণ্ডূয়ন করতঃ, ক্রমে সঞ্চালিত কর্ণদ্বয়ের সুখকর বায়ু-দ্বারা ব্যজন করতঃ এবং অর্দ্ধভুক্ত নূতন শল্লকীপল্লবদ্বারা উহার জীবিকা সম্পাদন করতঃ, প্রণয়নৈপুণ্য অভ্যাস করিতেছে ॥৩২॥

(१) नवसल्लकी···इति क्वचित् पाठः। (२) अन्यः इति भिन्नः पाठः।
(३) क्वचित् 'अन्यतो विलोक्य' इति पाठो नास्ति। (४) वर्द्धयति इति पाठभेदः।

दान-ज्यानि-विषाद-मूक-मधुप-व्यासङ्ग-दीनाननो
नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥३३॥

अलमनेनाप्यायासितेन (१)। सानन्दम् (२)। एष सानन्द-सहचरी-समाकर्ण्यमान-मधुर-गम्भीर--कण्ठगर्जित--ध्वनिरपरो-

नान्तरिति। दानस्य मदजलस्य या ज्यानिः हानिः प्राप्त्यभावः, तया यो विषादस्तेन मूका निःशब्दा ये मधुपा भ्रमरास्तेषां व्यासङ्गेन सम्भाव्यमानोत्पत्तिक-मदजललाभाशा-वशात् सम्यक् संसर्गेण उपवेशनेन दीनं मलिनम् आननं यस्य सः, अयन्तु स्तम्बेरमो हस्ती, जलदेषु मेघेषु ध्वनत्सु गर्जत्सु सत्सु, अन्तस्तन्मध्ये आमन्द्रमतीवगम्भीरम् उद्गर्जितम् उच्चैःस्वरेण गर्जनं न वर्त्तयति न प्रवर्त्तयति कालान्तर इव न करोति। तथा आसन्नात् सरसः समीपवर्त्तिनोऽपि सरोवरात् आवर्जितैरानीतैः शैवलैः शैवालैः कवलान् पूर्ववत् ग्रासान् न करोति। अतएव नूनं निश्चितम्, प्राणसमायाः प्रियतमाया हस्तिन्याः वियोगेन विरहेण विधुरो व्याकुलः सन् ताम्यति सन्तापमनुभवति। प्रियतमावियोगव्यतिरेकेण एतादृशो विषयोपरतिर्न सम्भवतीति भावः।

अत्र गर्जनाकरणकवलाग्रहणरूपसाधनेन प्राणसमावियोगवैधुर्य्य-सन्तापरूपसाध्यज्ञाना-दनुमानालङ्कारः। यथायथस्वभाववर्णनावशाद्विच्छित्तिरनुसन्धेया।

ज्यानीति ज्याधातोः क्तिप्रत्यये "ह्वा ज्या म्लाभ्यश्चे"ति क्तेस्तकारस्य नत्वम्।

शार्दूलविक्रीड़ितं वृत्तम् ॥३३॥

( अन्यदिके दृष्टिपात करिया ) मदजल ना पाओयाय विषादवशतः नीरव अवस्थाय भ्रमरगणेर अवस्थाने मलिनवदन एइ हस्ती, मेघगर्ज्जन करिले ताहार मध्ये उच्चैःस्वरे गम्भीर गर्ज्जन करितेछे ना, किंवा निकटवर्त्ती सरोवर हइते शैवाल आनिया ताहा भक्षण करितेछे ना; सुतरां निश्चयइ प्राणतुल्य प्रियतमा हस्तिनीर विरहे विह्वल हइया सन्ताप अनुभव करितेछे ॥३३॥

(१) अनेनायासितेन इति क्वचित् पाठः। (२) विलोक्य इति पाठान्तरम्।

ऽपि (१) मत्तमातङ्गयूथपालः (२) प्रत्यग्र-विकसित-कदम्ब-सङ्घात-सुरभि-शीतलामोद-बहुल-संवलित-मांसल-कपोल-निष्यन्द-कर्द्दमित-कषाय-करटः, समुद्दलित-कमलिनीखण्ड-विप्रकीर्ण-पर्ण-कमलकेसर-मृणाल-कन्द-कोमलाङ्कुरमाहरन्, अनवरत-प्रवृत्त-

(ल) अलमिति। आयासितेन मालतीप्रश्नजिज्ञासया विरक्तीकरणेन। येन हि, मत्समानः खल्वयं विरही प्रियतमाचिन्तया किञ्चिदाराममनुभवतीति भावः। सानन्दया रमणसम्भावनावशादामोदान्वितया सहचर्य्या हस्तिन्या समाकर्ण्यमानः श्रूयमाणः मधुरो गम्भीरश्च कण्ठगर्जितध्वनिर्यस्य सः। प्रत्यग्रविकसितानाम् अभिनवप्रस्फुटितानां कदम्बानां कुसुमानां सङ्घातस्य समूहस्य च सुरभिर्मनोज्ञो यः शीतलामोदः शीतलगन्धः, तेन बहुलं यथा स्यात्तथा संवलितः संसृष्टो विश्लिष्टः, यो मांसलकपोलाभ्यां स्थूलगण्डद्वयात् निष्यन्दः मदस्रावः क्षरितमदजलमित्यर्थः, तेन कर्द्दमितौ सञ्जातकर्द्दमीकृतौ स्वस्यैव कर्द्दमभावेन परिणतस्याश्रयीकृतौ अतएव कषायौ सौरभान्वितौ करटौ गण्डौ यस्य सः। समुद्दलितायाः आमर्द्दितायाः कमलिन्याः पद्मलतायाः खण्डे छेदसमये विप्रकीर्णानि इतस्ततो विक्षिप्तानि पर्णानि दलानि यस्य तादृशस्य कमलस्य पद्मस्य केसरः किञ्जल्कश्च, मृणालञ्च, कन्दो मूलञ्च, कमलाङ्कुरश्च तत् तथोक्तम्, समाहारद्वन्द्वसमासादेकवचनम्। तत् आहरन् भोजनार्थमानयन्। अनवरतम् अविच्छिन्नं प्रवृत्तं सञ्जातं कमनीयं सुन्दरं कर्णतालयोः हस्तपरिमित-

(ল) ইহাকেও বিরক্ত করার প্রয়োজন নাই। ( আনন্দের সহিত ) এই আর একটী মত্ত হস্তিশ্রেষ্ঠ, মধুর ও গম্ভীর গর্জ্জন করিতেছে, আনন্দিত হস্তিনী তাহা শুনিতেছে। নব প্রস্ফুটিত কদম্বসমূহের মনোহর ও শীতল গন্ধের সহিত বহু পরিমাণে মিশ্রিত স্থূল গণ্ডদ্বয়ের মদজলে ঐ হস্তীর গণ্ডদ্বয় কর্দ্দমিত ও সুগন্ধিত হইয়াছে। পদ্মলতা ছিঁড়িবার সময়ে পদ্মের পাতাগুলি ছড়াইয়া পড়িতেছে ; তখন ঐ হস্তী পদ্মের কেসর, মৃণাল, মূল ও কোমল অঙ্কুর আহরণ করিতেছে, আবার হস্তপরিমিত

(१) अपरः इत्येव पाठः क्वचित्। (२)···वर्गपालकः इति भिन्नः पाठः।

कमनीय-कर्ण-ताल-ताण्डव--प्रचल-जर्जरित--जलतरङ्ग--वितत-नीहारं समुत्त्रस्तकुरर-सारसं सरोऽवगाह्य विहरति (१)। (ख)

भवतु, एन-(२) माभाषे। महाभाग! नागपते! श्लाघ्ययौवनः खल्वसि। कान्तानुवृत्तिचातुर्य्यमप्यस्ति भवतः। सापवादम्। (ब)

कर्णयोः यत् ताण्डवम् उद्धतनृत्यम्, तेन प्रचलेभ्यः चलितेभ्यः, जर्जरितेभ्यः चूर्णीकृतेभ्यश्च जलतरङ्गेभ्यः, वितता विस्तृतभावेन जलोपरिपतिताः, नीहारा जलविन्दवो यत्र तत्। तथा समुत्त्रस्तास्तस्मादेव गजात् भीताः कुरराः (कुरल इति ख्याताः) सारसाश्च पक्षिविशेषा यत्र तत्, सरः सरोवरम्, विहरति क्रीड़ति।

"तालः कालक्रियामानेऽस्त्रमानद्रुमभेदयो"रिति हेमचन्द्रः।

(ब) भवत्विति। एनं नागेन्द्रम् आभाषे आलपामि। श्लाघ्ययौवनः प्रियवियोगाभावादिति भावः। एतेन मालतीविरहादात्मनो यौवनमश्लाघ्यमिति ध्वनितम्। कान्तानुवृत्तिचातुर्य्यमपि भार्य्यानुनयनैपुण्यमपि। सापवादम् अनुवृत्तेरसम्पूर्णत्वात् सनिन्दम्।

कर्णद्वয়ের অবিশ্রান্ত নৃত্য ( সঞ্চালন ) হইতেছে, তাহাতে জলের তরঙ্গ চলিতে চলিতে জর্জ্জরিত হইতেছে, তাহা হইতে জলবিন্দুসকল ছড়াইয়া পড়িতেছে এবং বাজকুরুল ও সারস পাখী ভীত হইয়া পলাইয়া যাইতেছে, এই অবস্থায় ঐ হস্তী সরোবরে অবগাহন করিয়া বিহার করিতেছে।

(ব) হউক, ইহার সহিত আলাপ করি। হে মহাত্মন্! হস্তি-শ্রেষ্ঠ! আপনার যৌবন শ্লাঘ্যই হইয়াছে এবং প্রিয়তমার প্রতি আপনার অনুনয়নৈপুণ্যও আছে। ( নিন্দার সহিত )

(१)···कदम्बसंवादि···कट्टमिततीरं, समुत्तुङ्गकमलिनीखण्डप्रकीर्णकेसरमृणाल-कन्दाङ्कुरनिकरं···प्रचलकर्ण···विततनीहारवित्रस्तकुररसारसं क्रीड़ति। इति पाठान्तरम्।

(२) एवमित्यपि पाठः।

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्न स्नेहादनरालनाल-(१) नलिनीपत्रातपत्रं धृतम् ॥३४॥

अथ सम्पूर्णत्वं प्रदर्शयन्नाह लीलोत्खातेति। लीलया अवहेलया अनायासेनेति यावत्, उत्खाता उत्पाटिता ये मृणालकाण्डाः मृणालखण्डाः, तेषां कवलच्छेदेषु ग्रासार्थखण्डेषु करिणीमुखवर्त्तिष्वित्यर्थः, पुष्यद्भिः पुष्टीभवद्भिः पुष्करैः पद्मैः वासितस्य सुगन्धीकृतस्य पयसो जलस्य गण्डूषाणां मुखपूरितजलानां संक्रान्तयः सञ्चाराः सम्पादिताः कृताः, करिणीमुखवर्त्तिषु मृणालकवलेषु निजमुखपूरितं जलं वेगेन विक्षिप्तमित्यर्थः। तथा शीकरिणा जलविन्दुशालिना करेण शुण्डादण्डेन सेकः करिण्या गात्रोपरि सेचनं कामं पर्य्याप्तं यथा स्यात्तथा विहितः कृतः। पुनः किन्तु विरामे सेकावसाने स्नेहात् प्रणयवशात् अनरालम् अवक्रं सरलं नालं यस्य तादृशं यत् नलिनीपत्रं पद्मपत्रं तदेव आतपत्रं छत्रं न धृतं शुण्डया करिण्या गात्रोपरि न विधृतम्। अतएव छत्रधारणाभावादनुरक्तेरसम्पूर्णत्वमिति भावः।

अत्र स्वभावोक्तिरलङ्कारः, तथा नलिनीपत्रातपत्रमिति निरङ्गं केवलं रूपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः, तथा छेकानुप्रासवृत्त्यनुप्रासौ चेति समुदाये संसृष्टिः।

श्लोकोऽयम् उत्तररामचरितहृतीयाङ्केऽपि रामेण पठितः। किन्तु अत्र चतुर्थपादे 'न' इत्यत्र 'यत्' इति वैषम्यम्। शार्दूलविक्रीड़ितं वृत्तम् ॥३४॥

হস্তিনী লীলানুসারে মৃণালখণ্ড তুলিয়া মুখমধ্যে রাখিয়াছে, তাহার উপরে ঐ হস্তী নিজমুখপূরিত ও পুষ্টপদ্ম-সুবাসিত জলবিন্দুসকল নিক্ষিপ্ত করিতেছে এবং জলবিন্দুবর্ষী শুণ্ডদ্বারা হস্তিনীর গাত্রের উপরে যথেষ্ট বর্ষণ করিতেছে ; কিন্তু সেই বর্ষণের পর প্রণয়বশতঃ সরলদণ্ড পদ্মপত্রের ছত্র ধারণ করিতেছে না ॥৩৪॥

(१)···बाल···इति क्वचित् पाठः।

कथमवधीरणानीरसं व्रजति । हन्त ! मूढ़ एवास्मि, यो-ऽस्मिन् वनचरेऽपि वयस्यमकरन्दोचितं व्याहरामि । हा प्रियवयस्य ! मकरन्द ! (१) (श)

धिगुच्छ्वसितवैशसं मम यदित्थमेकाकिनो
धिगेव रमणीयवस्त्वनुभवान् वृथाभाविनः (२) ।
त्वया सह न यस्तया च दिवसः, स विध्वंसतां
प्रमोदमृगतृष्णिकां धिगपरत्र या जायते (३) ॥३५॥

(श) कथमिति । अवधीरणया मद्वाक्यं प्रति कर्णपाताकरणात् अवज्ञया, नीरसं निःस्नेहं मां प्रति स्नेहरहितं यथा स्यात्तथा व्रजति एष यूथपतिरिति शेषः ।

अत्र छादनं नाम विमर्षसन्ध्यङ्गम् । यथा दर्पणे—

"...तदाहुश्छादनं पुनः । कार्य्यार्थमपमानादेः सहनं खलु यद्भवेत् ॥"

धिगिति । एकाकिनो मम इत्थमित्थम्प्रकारं यत् उच्छ्वसितं जीवनमेव वैशसं दुःखं तत् धिक् । पापेनैव मालतीमकरन्दयोर्विरहावस्थायामपि सत्त्वादिति भावः । तथा एकाकिनो मम वृथाभाविनः सुखजनकत्वाभावात् निष्फलोत्पादिनः, रमणीयवस्त्वनुभवान् तरुलतादिसुन्दरपदार्थप्रत्यक्षाणि च धिगेव । मालतीमकरन्दसाहित्येनाकृतत्वेन सुख-जनकत्वाभावात् प्रत्युत दुःखजनकत्वादिति भावः । त्वया मकरन्देन, तया मालत्या च सह विद्यमानस्य मम यो दिवसो न जातः युवयोर्विरहावस्थायां मम यो दिवसो जात इत्यर्थः, स विध्वंसतां विनश्यतु । तादृशदिवसस्य मत्पक्षे केवलदुःखजनकत्वादित्याशयः । प्रमोदः

(শ) হায় ! এই হস্তী অবজ্ঞা করিয়া স্নেহবিহীনভাবে চলিয়া গেল । হায় ! আমি মূর্খই বটি ; কারণ, যে আমি এই বনচর পশুর প্রতি সখা মকরন্দকে বলিবার যোগ্য কথা বলিতেছি । হা প্রিয়বয়স্য ! মকরন্দ !

(१) हन्त ! मूढ़ एवास्मि वनेचरे वयस्यमकरन्दोचितं व्यवहरामि । हा वयस्य ! इति पाठभेदः । (२) धिगेव रमणीयतां त्वदनुभावभावादृते, धिगेव रमणीयवस्त्वनु-भवादवृथाभाविनः इति पाठभेदौ । (३) धिगपरत्र का मानुषे इति पाठान्तरम् ।

मक । अये ! उन्मादमोहान्तरितोऽपि मां प्रति कुतश्चिद्-

---

कुतश्चिदुपजायमानोऽपि य आमोदः स एव मृगतृष्णिका मत्पक्षे वास्तविकत्वाभावात् मरीचिका ; तामपि धिक् ; या प्रमोदमृगतृष्णिका अपरत्र युवाभ्यामन्यत्र वस्तुनि जायते । यः खलु युवामवलम्ब्य प्रमोदः समुत्पद्यते स एव मम यथार्थः प्रमोदः, दुःखलेशस्यापि स्पर्शाभावात्, यस्तु विषयान्तरमवलम्ब्य युवयोर्विरहावस्थायां जायते, स किल मत्पक्षे सर्वथैव मृगतृष्णिकावदयथार्थः, युवयोर्विरहजनितगाढदुःखेनोत्पत्तिमात्रमेवोच्छिद्यमानत्वादित्यभिप्रायः ।

अत्र यतो ममैकाकिन उच्छ्वसितम् अतएव तद्दुःखं तस्य च धिक्कारः, तथा यतो ममैकाकिनो वृथाभाविनश्च रमणीयवस्त्वनुभवाः अतएव तान् धिक्, इति पदार्थहेतुकं काव्यलिङ्गमलङ्कारद्वयम्, प्रमोदमृगतृष्णिकेति निरङ्गं केवलरूपकञ्च, इत्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः । एकस्यैव धिक्शब्दस्य पुनःपुनरुपादानादनवीकृतत्वदोषः, स तु 'भवन्तु न मनोज्ञवस्त्वनुभवा वृथाभाविनः' 'मुदा तु मृगतृष्णिका भवति या पदार्थान्तरे' इत्यं द्वितीयचतुर्थपादयोः परिवर्त्तनेन समाधेयः । "सुखमानन्दथुर्मुदा ।" इति शब्दरत्नावली । न च द्वितीयपादस्याष्टमाक्षरे यत्यभावाद्यतिभङ्गदोषोऽपीति वाच्यं स्वरसन्धिविधाने तद्दोषानङ्गीकारात् प्रत्युत तत्र शोभाया एवाङ्गीकारात् । तथा च छन्दोमञ्जरी—

"पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां
यथा कृष्णः पुष्यात्वतुलमहिमा मां करुणया ।"

पृथ्वी वृत्तम् ॥३५॥

---

একাকী আমার এইভাবে জীবিত থাকাই দুঃখ ; সুতরাং সে জীবনকে আমি ধিক্কার করি। নিষ্ফল সুন্দর বস্তু দর্শনকেও ধিক্কারই করি। তোমার ( মকরন্দের ) সহিত ও মালতীর সহিত একত্র থাকা অবস্থায় আমার যে দিন উৎপন্ন হইয়াছে, সে দিন বিনষ্ট হউক এবং তোমাদের ছাড়া অন্য বস্তুতে আমার যে আমোদ-মরীচিকা জন্মে, তাহাকেও ধিক্ ॥৩৫॥

व्यञ्जकात् प्रबुद्ध एवास्य सहजस्नेहसंस्कारः (१)। तदसन्निहित-मेव मां मन्यते (२)। पुरतः स्थित्वा। एष पार्श्वचर एव ते स मकरन्दो मन्दभाग्यः। (ष)

माधवः। हा प्रियवयस्य! सम्भावय, परिष्वजस्व माम्। प्रियां मालतीं प्रति तु निराश एव संवृत्तोऽस्मि (३)। इति मूर्च्छति (४)। (स)

(ष) मकेति। उन्माद एव मोहस्तेन अन्तरितोऽपि तिरोहितोऽपि। सहजस्नेह-संस्कारः स्वाभाविकस्नेहविषयकभावनाख्यसंस्कारः। व्यञ्जकादुद्बोधकात्, प्रबुद्ध एव जागरित एव। देवदत्तनामोच्चारणलक्षणादुद्बोधकात् देवदत्तस्मरणमिवेति भावः। तत्तस्मादुन्माद-मोहाद्धेतोः। मन्दभाग्यः, तवेदृशदुरवस्थादर्शनादिति भावः।

(स) माधव इति। सम्भावय दर्शनदानेन सञ्जीवय।

(ষ) মকরন্দ। ও! আমার প্রতি মাধবের স্বাভাবিক স্নেহ-সংস্কারটী, উন্মাদরূপ মোহে তিরোহিত থাকিলেও, কোনরূপ উদ্বোধক-বশতঃ আবার জাগরিতই হইয়াছে। সেই উন্মাদমোহবশতই আমাকে অসন্নিহিত বলিয়া মনে করিতেছে। ( সম্মুখে থাকিয়া ) সেই মন্দভাগ্য মকরন্দ, এই তোমার পার্শ্বেই বিচরণ করিতেছে।

(স) মাধব। হা প্রিয়বয়স্য! ( দর্শন দান করিয়া ) আমাকে জীবিত কর, আমাকে আলিঙ্গন কর। মালতীর বিষয়ে কিন্তু আমি নিরাশই হইয়াছি। ( এই বলিয়া মূর্চ্ছিত হইলেন )।

---

(१) अयि! उन्मादमोहान्तरितोऽपि सम्प्रत्ययं मां प्रत्यनुकूलः, यतः···। इति क्वचित् पाठः। (२) तत्सन्निहितमेव मां मन्यते इत्यपि पाठः।

(३)···प्रियान्तु मालतीं प्रति निराशः परिश्रान्तोऽस्मि इति भिन्नः पाठः।

(४) क्वचित् 'इति मूर्च्छति' इति पाठो नास्ति।

मक। एषोऽहं (१) सम्भावयामि जीवितेश्वरम्। विलोक्य सकरुणम्। हा कष्टम्! आविर्भूत-(२) मत्परिष्वङ्गोत्कण्ठ एव निश्चेतनः संवृत्तः। तत् कृतमिदानीं जीविताशाव्यसनेन। सर्वथा नास्ति मे प्रियवयस्य इति युक्तः परिच्छेदः (३)। हा वयस्य!। (ह)

(ह) मकेति। जीवितेश्वरं निरतिशयसुखास्पदत्वात् जीवननियन्तारम्। सम्भावयामि आलिङ्गनेन सञ्जीवयामि आविर्भूता उत्पन्ना मत्परिष्वङ्गोत्कण्ठा ममालिङ्गनोत्सुक्यं यस्य तादृश एव सन् निश्चेतनः अचेतन्यः मूर्च्छितः। तत्तस्मात्, इदानीं जीविताशाव्यसनेन अस्य जीवनं स्थास्यतीत्याशायामासक्त्या कृतम् अलम्। तत्र कारणमाह सर्वथेत्यादि। परिच्छेदो निश्चयः। वारं वारं मूर्च्छापन्नत्वात्, एतदवस्थापरिवर्त्तनोपायभूताया मालत्याश्चाभावादिति भावः।

अत्र विरोधनं नाम विमर्षसन्ध्यङ्गम्—"कार्य्यात्ययोपगमनं विरोधनमिति स्मृत"मिति लक्षणात्। तथा जीवितेश्वरशब्दः प्राणवत् प्रियतमार्थस्य न वाचक इति "दिनं मे त्वयि सम्प्राप्तं ध्वान्तच्छन्नापि यामिनी" इत्यादिवदवाचकत्वदोषः, तेन 'प्राणप्रियतम'मिति पाठः साधीयान्।

. (হ) মকরন্দ। এই আমি জীবননিয়ন্তাকে সঞ্জীবিত করিতেছি। (দর্শন করিয়া শোকের সহিত) হায় কি কষ্ট!। আমার আলিঙ্গনের প্রতি ঔৎসুক্য জন্মিবামাত্রই অচৈতন্য হইয়া পড়িলেন। অতএব এখন মাধবের জীবনের আশার আসক্তিতে আর প্রয়োজন নাই। 'আমার প্রিয়বয়স্য নাই' এইরূপ নিশ্চয় করাই সর্ব্বপ্রকারে যুক্তিসঙ্গত। হা সখে!

(१) एवं इति पाठान्तरम्। (२) कष्टम्। कथमाविर्भूत⋯इति पाठभेदः।

(३) तत् किमिदानीमाशाव्यसनेन। सर्वथैव मे नास्ति वयस्य इति परिच्छेदो युक्त इति भिन्नः पाठः।

यत् स्नेहसंज्वरवता हृदयेन नित्य-
माबद्धवेपथु विनाऽपि निमित्तयोगात् ।
त्वय्यापदो गणयता (१) भयमन्वभावि
तत्सर्वमेकपद एव मम प्रनष्टम् (२) ॥३६॥

सखे ! (३) वरं तावन्त एवातिक्रान्ता मुहूर्त्ताः, तथाविध-मपि भवन्तं येषु चेतयमानमनुभूतवानस्मि । इदानीन्तु मम (४) । (च)

यदिति । स्नेहसंज्वरो वात्सल्यजनितः सन्तापः 'कदा किं भवे'दित्याशङ्केत्यर्थः तद्वता हृदयेन मम मनसा, निमित्तयोगाद्विनापि आपत्कारणसम्बन्धाभावेऽपि नित्यं सर्वदा त्वयि त्वद्विषये आपदो गणयता "स्नेहः पापमाशङ्कते" "प्रेम पश्यति भयान्यपदेऽपि" इति न्यायात् विपत्तीर्भावयता सता, आबद्धो धृतः वेपथुः कम्पो यस्मिन् कर्म्मणि तद्यथा तथा सकम्पम्, यत् भयम् अन्वभावि अनुभूतम् । मम तत् सर्वं भयम्, एकपद एव सहसैव, प्रनष्टम् अद्य दैववशाद्विनष्टम् । तवैवाभावादिति भावः ।

अत्र निमित्तयोगं विनापि भयोत्पत्तेर्विभावनालङ्कारः ।

"तत्क्षणैकपदे तुल्ये" इति हलायुधः ।

वसन्ततिलका वृत्तम् ॥३६॥

(च) सखे इति । अतिक्रान्ता इतः पूर्वं गताः मुहूर्त्ताः द्वादशक्षणपरिमितकालाः अत्यल्पाल्पसमया इत्यर्थः । वरम् एतत्समयापेक्षया ईषत्प्रिया आसन्निति शेषः । येषु

স্নেহবশতঃ আশঙ্কিত চিত্তে, কম্পিতভাবে বিনা কারণেও, সর্ব্বদা তোমার বিপদ ভাবিয়া, যে ভয় অনুভব করিয়াছি, সহসাই আমার সেই সকল বিনষ্ট হইল ॥৩৬॥

(१) त्वद्यापदो गणयतो भयमन्वभावि इत्यपि पाठः ।

(२) प्रशान्त' इति क्वचित् पाठः । (३) अथवा इति पाठोऽपि दृश्यते ।

(४) क्वचित् 'मम' इति पाठो नास्ति ।

भारः कायो, जीवितं वज्रकीलं,
काष्ठाः शून्या, निष्फलानीन्द्रियाणि ।
कष्टः कालो मां प्रति त्वत्प्रयाणे
ध्वान्तालोकः सर्वतो जीवलोकः ॥३७॥

मुहूर्त्तेषु भवन्तं तथाविधमपि मालतीविरहादुन्मत्तप्रायमपि सन्तम्, चेतयमानं सचेतनम्, अनुभूतवान् प्रत्यक्षीकृतवानस्मि ।

चेतयमानमिति "चित सञ्चेतने" इति चौरादिकात्मनेपदिनश्चितधातोः प्रयोगः ।

भार इति । तव प्रयाणे मर्त्यलोकात् प्रस्थाने मरणे सति, मां प्रति लक्ष्यीकृत्य ममेत्यर्थः । कायो देहः, भारो दुर्वह इव प्रतीयते । तेन देहत्याग एव शान्तिरिति सूचितम् । जीवितं जीवनम्, वज्रो वज्रमयः कीलः शङ्कुर्यत्र तत् वज्रकीलं वज्रमय-शङ्कुना देहेन सह संविद्धमिव प्रतीयत इत्यर्थः । कथमन्यथा ईदृशदुःखताड़नैरपि न यातीति भावः । एतेन जीवनापगम एव साम्प्रतमभिप्रेत इति ध्वनितम् । काष्ठा दिशः शून्याः पदार्थरहिता इव प्रतीयन्ते । मोहावरणादिति भावः । इन्द्रियाणि चक्षुरादीनि, निष्फलानि मोहागमेन स्वस्वविषयाग्रहणात् प्रयोजनहीनानीव प्रतीयन्ते । कालः समय एव कष्टो दुःखकर इव प्रतीयते । येनास्मिन् काल एवेदृशी दुःखोत्पत्तिरिति भावः । तथा जीवलोकः संसारः सर्वतः सर्वासु दिक्षु ध्वान्तालोक आलोकरहित इव प्रतीयते । आलोकरूपस्य तवैवाभावात्, अथवा मोहागमेन तमसाच्छन्नत्वादिति भावः ।

अत्र इवशब्दाद्यभावात् अत्रा प्रतीयमानोत्प्रेक्षाणां मिथो नैरपेक्ष्यात् संसृष्टिरलङ्कारः ।

शालिनी वृत्तम् ॥३७॥

---

(ক) সখে ! অতীত সেই সকল মুহূর্ত্তগুলিই আমার পক্ষে ভাল ছিল, যখন সেরূপ ( শোককাতর ) হইলেও তোমাকে সচেতনই দেখিয়াছি । কিন্তু এখন আমার—

( মর্ত্ত্যলোক হইতে ) তোমার প্রস্থান হইলে, শরীর যেন দুর্ব্বহ বলিয়া বোধ হইতেছে, জীবন যেন বজ্রময় শঙ্কুদ্বারা দেহের সহিত বিদ্ধ

विचिन्त्य । तत् किन्नु खलु माधवास्तमयसाक्षिणा मया भवितव्यमिति जीवामि (१)। तदस्माद्गिरिशिखरात् पाटलावत्यां निपत्य माधवस्य मरणाग्रेसरो भवामि । सकरुणं परिवृत्यावलोक्य च । कष्टम् (२)। (क)

तदेतदसितोत्पलद्युति शरीरमस्मिन्नभू-(३)
न्ममातिदृढ़पीड़नैरपि न तृप्तिरालिङ्गनैः ।

(क) विचिन्त्येति । मया, माधवस्य अस्तमयोऽस्तगमनं मरणं तस्य साक्षी द्रष्टा तेन, भवितव्यं भूयते, इति हेतोः, किंनु खलु जीवामि । तत् कथमपि नेत्यर्थः । तत्तस्मादिती: अस्माद्दृश्यमानात् । पाटलावत्यां पाटलावतीनामिकायां निम्नप्रवाहिन्यां नद्याम् । मरणे मृत्यौ भाविनि अग्रेसरः अग्रगामी भवामि । माधवमरणदर्शनभयेन पूर्वमहमेव म्रिये इत्यर्थः । सकरुणं सशोकम्, परिवृत्य स्नेहाकर्षणेन पुनरावृत्य, अवलोक्य माधवस्य देहमिति शेषः ।

अत्र व्यवसायो नाम विमर्शसन्धेरङ्गम्—"व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः ।" इति लक्षणात् । प्रतिज्ञा नाम नाट्यालङ्कारश्च—"प्रतिज्ञाध्यवसायकः ।" इति लक्षणात् ।

বলিয়া প্রতীতি হইতেছে, দিক্ সকল যেন শূন্য বলিয়া ধারণা জন্মিতেছে এবং জীবলোকের সকল দিকের আলোকই যেন নিবিয়া গিয়াছে বলিয়া মনে হইতেছে ॥৩৭॥

(ক) (চিন্তা করিয়া) তবে কি আমি মাধবের মৃত্যুর সাক্ষী হইব বলিয়া জীবিত থাকিব (কখনই নহে)। অতএব এই পর্ব্বতের শৃঙ্গ হইতে পাটলাবতী নদীতে পড়িয়া, মাধবের মৃত্যুর অগ্রগামী হই। (শোকের সহিত ফিরিয়া দেখিয়া) কি কষ্ট!

(१) तत् किन्नु, माधवास्तमयः साक्षिणा भवितव्यमित्यतो जीवामीति पाठभेदः ।

(२) भवतु, अमुष्मादेव···सकरुणं निवृत्यावलोक्य । कष्टं भोः ! कष्टम् । इति पाठान्तरम् । (३) ममापि इति क्वचित् पाठः ।

यदुल्लसितविस्मया (१) वत निपीतवत्यः पुरा,
नवप्रणयविभ्रमाकुलितमालतीदृष्टयः ॥३८॥

आश्चर्य्यम्! एतस्यां तनावचरमे वयसि तावतो गुण-समाहारस्य सन्निवेशः कथमिवाभूत्। सखे! माधव! (ख)

तदिति। एतत् दृश्यमानम्, तत् प्रसिद्धम्, असितोत्पलस्य नीलोत्पलस्य द्युतिरिव द्युतिर्यस्य तत्, शरीरं माधवस्य वपुः, धरातले निस्पन्दमास्ते। अस्मिन् शरीरे अतिदृढ़-पीड़नैरपि आलिङ्गनैः, मम तृप्तिर्नाभूत्। इदं शरीरमतिगाढ़मालिङ्ग्यापि न मे तृप्ति-निवृत्तिरासीदित्यर्थः। पुरा इतः पूर्वम्, उल्लसितः अलौकिकसौन्दर्य्यदर्शनादुत्पन्नः, विस्मय आश्चर्य्यं यासु ताः। नवप्रणयेन नवीनप्रेम्णा ये विभ्रमा विलासास्तैराकुलिता व्याप्तास्ता: मालत्या दृष्टयो दृष्टिपाताश्चेति ताः, यत् शरीरं निपीतवत्यः निरतिशया-दरेण प्रत्यक्षीकृतवत्यः। वत खेदे।

अत्र वात्सल्यशृङ्गाररसौ प्राकरणिककरुणरसस्याङ्गभूताविति रसवदलङ्कारः, स पुनरसितोत्पलद्युतीति लुप्तोपमया सङ्कीर्य्यते। तथा स्वकीयालिङ्गनसादरमालतीदर्शन-कार्य्ययोरनेन संगृहीतत्वादादानं नाम विमर्षसन्ध्यङ्गम्। तथा चोक्तम्—

"कार्य्यसंग्रह आदानम्…।"

पृथ्वी वृत्तम् ॥३८॥

(ख) आश्चर्य्यमिति। तनौ माधवस्य शरीरे। अचरमे नवीने। तावतः प्रचुर-परिमाणस्येत्यर्थः। गुणानां रूपादीनां समाहारस्य समूहस्य।

নীলোৎপলের ন্যায় কান্তিসমন্বিত এই সেই শরীর (ভূতলে নিস্পন্দ হইয়া রহিয়াছে); এই শরীরে, অতি গাঢ় আলিঙ্গনেও, আমার তৃপ্তি হয় নাই। হায়! পূর্ব্বে মালতীর দৃষ্টি, নূতন প্রেমের বিলাসে আকুল হইয়া সবিস্ময়ে, আদরের সহিত যাহা দর্শন করিয়াছিল ॥৩৮॥

(খ) কি আশ্চর্য্য! এই শরীরে নবীন বয়সে, কি করিয়া ততগুলি গুণসমষ্টির সন্নিবেশ হইয়াছিল। সখে! মাধব!

(१) यदुल्लसितविभ्रमा इत्यपि पाठः।

আপূর্ণস্য কলাভিরিন্দুরমলো, যাতস্য রাহোর্মুখং
সঞ্জাতস্য ঘনাঘনো জলধরঃ, শীর্ণস্য বায়োর্জবাৎ।
নির্বৃত্তস্য ফলেগ্রহিদ্রুমবরো দগ্ধস্য দাবাগ্নিনা
ত্বং চূড়ামণিতাং গতস্য জগতঃ, প্রাপ্তস্য মৃত্যোর্বশম্ ॥৩৮॥

আপূর্ণ ইতি। অমল ইন্দুর্নির্ম্মলশ্চন্দ্রঃ কলাভিঃ ষোড়শভিঃ, আপূর্ণশ্চ পরিপূর্ণশ্চ, রাহোর্মুখঞ্চ যাতো গতশ্চ। চকারদ্বয়ং যৌগপদ্যসূচনায় যদৈব ষোড়শকলাপরিপূর্ণস্তদৈব রাহোর্মুখং গত ইত্যর্থঃ। এবমন্যত্রাপি বোধ্যম্। জলধরো মেঘঃ ঘনাঘনো বর্ষুকঃ, সঞ্জাতশ্চ, বায়োর্জবাৎ পবনস্য বেগাৎ শীর্ণশ্চ খণ্ডখণ্ডীকৃত্যেতস্ততঃ সঞ্চালনাৎ ক্ষীণশ্চ। তথা দ্রুমবর উত্তমতরুঃ, ফলেগ্রহিঃ ফলবান্ নির্বৃত্তো নিষ্পন্নশ্চ দাবাগ্নিনা দগ্ধশ্চ। তথা ত্বং জগতশ্চূড়ামণিতাং বিদ্যাদিনা শিরোমণিতাং প্রাধান্যং গতশ্চ, মৃত্যোর্বশম্ অধীনতাং প্রাপ্তশ্চ। যথা চন্দ্রঃ ষোড়শকলাপরিপূর্ণঃ সন্ অবসরাভাবাৎ লোকাননানন্দয়ন্নেব রাহুমুখং গচ্ছতি, যথা বা মেঘো জলপূর্ণঃ সঞ্জায়মানো বর্ষণাৎ প্রাগেব বায়ুবেগাৎ বিশীর্য্যতে। যথা চ সহকারাদ্যুত্তমতরুঃ ফলবান্ সন্ তদ্ভক্ষণদ্বারা লোকানপ্রীণয়ন্নেব দাবাগ্নিনা দহ্যতে; তথা ত্বমপি রূপবিদ্যাদিনা গুণসমূহেন জগতঃ প্রধানঃ সন্ অবসরা-প্রাপ্তত্বাৎ স্বজনানসন্তোষয়ন্নেব মৃত্যুবশং গতোঽসীত্যতঃ কিমস্তি নিদারুণদুঃখমিতি ভাবার্থঃ সরলার্থশ্চ।

অতএবাত্র দৃষ্টান্তালঙ্কারঃ ক্রিয়াসমুচ্চয়শ্চ, অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

"বর্ষুকাব্দো ঘনাঘনঃ।" ইত্যমরঃ। ফলানি গৃহ্লাতীতি ফলেগ্রহিঃ "ফলে-মলরজঃসু গ্রহে"রিতি ইপ্রত্যয়ঃ। "সুব্নিপাতনাদেত্ব"মিতি দুর্গসিংহঃ।

শার্দূলবিক্রীড়িতং বৃত্তম্ ॥৩৮॥

নির্ম্মল চন্দ্র, যেই ষোড়শ কলায় পরিপূর্ণ হইল, অমনি সে রাহুর মুখে প্রবেশ করিল; মেঘ যেই বর্ষণশীল হইল, অমনি সে বায়ুর বেগে খণ্ড খণ্ড হইয়া গেল এবং উৎকৃষ্ট বৃক্ষ যেই ফলবান্ হইল, অমনি সে দাবাগ্নিতে দগ্ধ হইল; আর তুমিও যেই জগতের চূড়ামণি হইয়া উঠিলে, অমনি মৃত্যুর বশতাপন্ন হইলে ॥৩৮॥

तत् परिष्वजे तावदेवं गतमपि प्रियवयस्यम् (१)। अर्थित-स्थानेन सम्प्रत्ययमेवार्थः। परिष्वज्य। हा वयस्य! विमल-विद्यानिधे! (२) गुणगुरो! मालतीस्वयंग्राहजीवितेश्वर! हा सौन्दर्य्यविनिर्जितरतिरमणच्छाय! हा कामिनीहृदयमन्मथ! हा बान्धवपयोनिधिशरच्चन्द्र! (३) हा कामन्दकीमकरन्दा-

(ग) तदिति। एवं गतमपि ईदृशावस्थामपि मूर्च्छितमपीत्यर्थः, परिष्वजे आलिङ्गामि। कथं मूर्च्छितमालिङ्गसीत्याह अर्थितस्येति। अनेन माधवेन, सम्प्रति अयमेवार्थः ममालिङ्गनमेव अर्थितः "प्रियवयस्य! सम्भावय परिष्वज मा"मित्यनेनाहं याचितः। अत ईदृशमप्यालिङ्गामीति भावः। गुणैर्विद्याविनयादिभिः गुरुः। प्रायेण सर्वस्यैव शिक्षकस्तत्सम्बोधनम्। मालत्याः स्वयंग्राहेण आत्मना ग्रहणेन न पुनः पित्रादिप्रदानेनेत्यर्थः जीवितेश्वरः पतिः, तत्सम्बोधनम्। तादृशोत्तमरमण्या स्वयमेव पतित्वेन गृहीतत्वात् त्वमलौकिकगुणवानासीरिति भावः। सौन्दर्य्येण विनिर्जिता रति-रमणस्य मदनस्य छाया कान्तिर्येन तत्सम्बोधनम्। कामिनीहृदयमन्मथेत्यनेन तदुन्मादक-रूपवत्त्वं ध्वनितम्। बान्धवाः पित्रादय एव पयोनिधयः समुद्रास्तेषु शरच्चन्द्रः, तत्सम्बोधनम्।

(গ) অতএব এইরূপ অবস্থা হইলেও প্রিয়সখাকে আলিঙ্গন করিব। কারণ, এখন উনি ইহাই প্রার্থনা করিয়াছিলেন। (আলিঙ্গন করিয়া) হা বয়স্য! নির্ম্মল বিদ্যার আধার! সমস্ত গুণেরই শিক্ষক! মালতী আপনাআপনিই তোমাকে জীবিতেশ্বর করিয়াছিল; হায়! তুমি সৌন্দর্য্যে কামদেবের সৌন্দর্য্যকে জয় করিয়াছিলে; হায়! তুমি কামিনী-গণের হৃদয়ে কামদেবস্বরূপ ছিলে; হায়! তুমি বান্ধবরূপ ক্ষীরোদ-সাগরের শরচ্চন্দ্রস্বরূপ ছিলে; হায়! তোমার মুখচন্দ্র, কামন্দকী ও

(१) (विचिन्त्य) तत् परिष्वजे अहं···वयस्यम्। इति पाठभेदः।

(२) विमलकलानिधे! इत्यपि पाठः।

(३) पुस्तकान्तरे सौन्दर्य्येत्यादि सम्बोधनत्रयं नास्ति।

नन्दनमुखचन्द्र ! (१) माधव ! अयमत्र ते जन्मन्यपश्चिमः पश्चिमावस्थां प्रापितो (२) मकरन्दबाहुपरिष्वङ्गः । स एष मकरन्दो मुहूर्त्तमपि जीवतीति मैवं मंस्थाः (३) । (ग)

आजन्मनः सहनिवासितया (४) मयैव
मातुः पयोधरपयोऽपि समं निपीय ।
त्वं पुण्डरीकमुख ! बन्धुतया निरस्त-
मेको निवापसलिलं पिबसीत्ययुक्तम् ॥४०॥

---

तद्ददानन्दोल्लासजनकत्वादिति भावः । अत्र परम्परितरूपकमलङ्कारः । अत्र जन्मनि, अयं मया क्रियमाणः अपश्चिमः अशेषोऽपि इतः परमपि कर्त्तुमभिलष्यमाणोऽपीत्यर्थः, पश्चिमावस्थां शेषतां प्रापितो दैवेन नीतः शेषः इत्यर्थः मकरन्दस्य बाहुभ्यां परिष्वङ्ग आलिङ्गनम् । ननु कथमयं शेषः परिष्वङ्ग इत्याह स एष इति । जीवति त्वां विना इति शेषः । इत्येवं मा मंस्थाः न मनसि कुर्य्याः । इदानीमेवाहमपि म्रिये इति भावः ।

आजन्मन इति । हे पुण्डरीकमुख ! सिताम्भोजवन्मनोहरवदन ! आजन्मनो जन्मावधि सहनिवासितया एकत्रावस्थायितया हेतुना मयैव समं सह मातुः पयोधरपयोऽपि स्तनदुग्धमपि निपीय पीत्वा, इदानीं त्वमेकः, बन्धुतया पित्रादि बन्धुसमूहेन निरस्तं निक्षिप्तं दत्तं निवापसलिलं प्रेततर्पणजलं पिबसि, पास्यसीति भविष्यत्सामीप्ये वर्त्तमाना

---

মকরন্দকে আনন্দিত করিত। মাধব! বাহুদ্বারা মকরন্দের এই আলিঙ্গন, শেষ না হইলেও, বিধাতা ইহাকেই তোমার এই জন্মে শেষ অবস্থা প্রাপ্ত করাইয়াছেন। সেই এই মকরন্দ (তোমাকে ছাড়িয়া) মুহূর্ত্তকালও জীবিত থাকিবে এইরূপ মনে করিও না।

(१) कामन्दकीमकरन्दानन्दजनक ! इति पाठान्तरम् ।

(२) पश्चिमावस्थाप्रार्थितः इति पाठान्तरम् ।

(३) सखि ! सम्प्रति मुहूर्त्तमपि मकरन्दो जीवतीति मैव मंस्थाः । कुतः । इति पाठभेदाः । (४) सहनिवासतया इति क्वचित् पाठः ।

सकरुणं विमुच्य परिक्रम्य च। इयमधस्तात् पाटलावती। भगवत्यापगे! (घ)

प्रियस्य सुहृदो यत्र मम तत्रैव सम्भवः।
भूयादमुत्र (१) भूयोऽपि भूयासमनुसञ्चरः ॥४१॥

इति पतितुमिच्छति।

---

इत्युक्तम् इदमसङ्गतम्। अत्रापि मम सहभावस्यौचित्यादिति भावः। एतेनाहमपि जीवनं विमुच्य तव सहचरी भवामीति व्यज्यते।

"पितृदानं निवापः स्या"दित्यमरः। अन्भु तयेति समूहार्थे तनप्रत्ययः।

वसन्ततिलका वृत्तम् ॥४०॥

(घ) सकरुणमिति। विमुच्य मृतं माधवशरीरं परित्यज्य। अधस्तादर्त्तत इति शेषः। भगवति! तीर्थत्वान्माहात्म्यशालिनि! आपगे! नदि!

प्रियस्येति। प्रियस्य सुहृदः प्रियसखस्य माधवस्य यत्र स्थाने सम्भव उत्पत्तिर्भवेत्, ममापि तत्रैव स्थाने सम्भवो भूयात्। इति प्रार्थयामीति भावः। तथा भूयः पुनरपि, अमुत्र जन्मान्तरे, अनुसञ्चरः माधवस्यानुचरः, भूयासं भवेयम्। इति च प्रार्थयामीति भावः।

अत्र परार्द्धे वृत्त्यनुप्रासोऽलङ्कारः। तथा ममापीत्यपि शब्दोऽवश्यं वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानदोषः, तथा पूर्वार्द्धान्वितस्य भूयादित्यस्य परार्द्धे पाठादर्द्धान्तरैकपदतादोषश्च; तयोर्निरासाय श्लोकोऽयमेवं पठनीयः—

---

হে পদ্মবদন! জন্মাবধি একত্রই ছিলাম বলিয়া, আমারই সহিত মাতার স্তন্য দুগ্ধও পান করিয়া, এখন তুমি বন্ধুজনপ্রদত্ত তর্পণের জল একাকী পান করিবে, একথা যুক্তিসঙ্গত নহে ॥৪০॥

(ঘ) (শোকের সহিত মাধবকে ছাড়িয়া দিয়া, কতিপয় পদক্ষেপ করিয়া) নীচের দিকে এই পাটলাবতী নদী। হে মাহাত্ম্যবতি! নদি!

(१) अमुष्य इत्यपि पाठः।

प्रविश्य सहसा सौदामिनी। वारयित्वा। वत्स! अलं साहसेन (१)। (ङ)

मक। विलोक्य। अम्ब! कासि?। किमहं त्वया प्रतिषिद्धः?।

सौदा। आयुष्मन्! त्वं किं मकरन्दः?।

मक। मुग्ध, स एवास्मि मन्दभाग्यः।

---

"सख्युर्यत्र भवेज्जन्म भूयास्तत्रैव मेऽपि तत्।
अमुत्रामुष्यभूयोऽपि भूयासमनुचरः॥"

"प्रेत्यामुत्र भवान्तरे।" इत्यमरः। भूयात् भूयासमित्युभयत्रापि प्रार्थनायामाशीर्लिङ्। उक्ताहिविधेव च प्रार्थनेति बोध्यम्॥४१॥

(ङ) प्रविश्येति। सहसा द्रुतं प्रविश्येत्यन्वयः। साहसेन गिरिशिखरात् नद्यां पतनरूपेणात्महत्याजनकसाहसकर्म्मणा।

---

প্রিয়সখা মাধবের যেখানে জন্ম হইবে, আমারও যেন সেইখানেই জন্ম হয়। পরলোকে আমি, আবারও ইহার অনুচর হইব॥৪১॥

( এই বলিয়া পড়িতে ইচ্ছা করিলেন। )

(ঙ) সৌদামিনী হঠাৎ প্রবেশ করিয়া। ( বারণ করিয়া ) বৎস! সাহসের কার্য্যে প্রয়োজন নাই।

মকরন্দ। ( দেখিয়া ) মা! তুমি কে? তুমি কেন আমাকে নিষেধ করিলে?।

সৌদামিনী। আয়ুষ্মন্! তুমি কি মকরন্দ?।

মকরন্দ। ছাড়ুন, সেই মন্দভাগ্যই আমি।

---

(१) सौदामिनी। प्रविश्य सहसा वारयित्वा। वत्स! अलं साहसेन। इति पाठभेदः।

सौदा। वत्स! योगिन्यस्मि; मालत्या अभिज्ञानञ्च धारयामि (१)। इति बकुलमालां दर्शयति। (च)

मक। सोच्छ्वासं सकरुणम्। आर्य्ये! (२) अपि जीवति मालती?।

सौदा। अथकिम्। वत्स! किमत्याहितं माधवस्य? यदनिष्टे व्यवसितोऽसि, इत्याकम्पितास्मि। अथ माधवः क्व? (३)। (छ)

(च) सौदेति। योगिन्यस्मि काचिदिति शेषः। अभिज्ञानं चिह्नम्।

(छ) सौदेति। अत्याहितं जीवानपेक्षि कर्म्म, जीवनाशारहितः कोऽपि व्यापारो जातः किमित्यर्थः। यद्यस्मात्, अनिष्टे पर्व्वतात् पतनरूपे व्यापारे व्यवसितः प्रवृत्तः।

"अलं साहसेन" इत्याद्येतदन्ते सन्दर्भे मकरन्दस्य मरणोद्यमोपसंहारप्रदर्शनात् प्ररोचना नाम विमर्षसन्ध्यङ्गम्। तथा च दर्पणे—

"प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी।"

(চ) সৌদামিনী। বৎস! আমি একজন যোগিনী। আমি মালতীর চিহ্ন, সঙ্গে রাখিয়াছি। (এই বলিয়া বকুলের মালা দেখাইলেন।)

মকরন্দ। (উচ্ছ্বাস ও শোকের সহিত) আর্য্যে! মালতী কি জীবিত আছেন?।

(ছ) সৌদামিনী। হাঁ। বৎস! মাধবের কোন অত্যাহিত হইয়াছে কি? যে, তুমি অনিষ্টে (মরণে) প্রবৃত্ত হইয়াছ; ইহাতে কিন্তু আমি কম্পিত হইয়াছি। মাধব কোথায়?

(१) मालतीप्रत्यभिज्ञानञ्च धारयामि…। इति क्वचित् पाठः।

(२) क्वचित् 'आर्य्ये!' इति पाठो नास्ति।

(३)…यदनिष्टे…इति पाठभेदः। अथ माधवः क्व। इति च नास्ति।

मक। आर्य्ये! तमहं प्रमुग्धमेव वैराग्यात् परित्यज्यागतः। तदेहि, तूर्णं सम्भावयावः। त्वरितं परिक्रामतः। (ज)

माधवः। आश्वस्य। अये! प्रतिबोधित एवास्मि केनापि। विचिन्त्य। नूनमस्याभिनवजीमूतजलवाहिनः प्रभञ्जनस्यानपेक्षितास्मदवस्थोऽयं व्यापारः। (झ)

मक। दिष्ट्या पुनः प्रत्यापन्नचेतनो वयस्यः।

---

(ज) मकेति। प्रमुग्धं मूर्च्छितम्। वैराग्यात् तज्जीवनं प्रति नैराश्यात्। सम्भावयावः सञ्जीवयितुं चेष्टावहे। परिक्रामतो माधवान्तिकं गन्तुं पादक्षेपान् कुरुतः सौदामिनीमकरन्दाविति शेषः।

(झ) माधव इति। आश्वस्य सचेतनो भूत्वा। नूनं निश्चितम्। अभिनवजीमूतजलवाहिनः नूतनमेघजलबिन्दुवाहिनः, प्रभञ्जनस्य वायोः; न अपेक्षिता न अवगता अस्माकमवस्था मालतीविरहजनितदुर्द्दशा यस्मिन् व्यापारविषये सः। अयं व्यापारः मच्चैतन्यसम्पादनरूपं कार्य्यम्। तथा च वायुर्यदि मदीयदुरवस्थामज्ञास्यत्, तदा मम मूर्च्छाभङ्गानन्तरपुनर्दारुणदुःखानुभवसम्भावनया मां सचेतनं नाकरिष्यदिति भावः। एतेन मालतीविरहदुःखानुभवसम्भवाभावेन मूर्च्छैवेदानीं वाञ्छनीयेति ध्वन्यते।

---

(জ) মকরন্দ। আর্য্যে! আমি নৈরাশ্যবশতঃ মূর্চ্ছিত অবস্থায়ই তাঁহাকে পরিত্যাগ করিয়া আসিয়াছি। অতএব আসুন, শীঘ্র তাঁহার চৈতন্য সম্পাদন করি। (উভয়ে তাড়াতাড়ি পদক্ষেপ করিতে লাগিলেন)।

(ঝ) মাধব। (চৈতন্য লাভ করিয়া) ওহে! কেহ আমাকে চৈতন্যলাভ করাইয়া দিয়াছে। (চিন্তা করিয়া) নিশ্চয়ই আমার অবস্থানভিজ্ঞ নবীনমেঘজলবাহী এই বায়ুরই এই কার্য্য হইবে।

মকরন্দ। ভাগ্যবশতঃ আমার সখা পুনরায় চৈতন্যলাভ করিয়াছেন।

सौदा। विलोक्य। संवदत्युभयोर्मालतीनिवेदितः शरीराकारः। (ञ)

माधवः। भगवन्! पौरस्त्यपवन! (१)। (ट)

भ्रमय जलदानम्भोगर्भान्, प्रमोदय चातकान्,
कलय शिखिनः केकोत्कण्ठान्, कठोरय केतकान्।
विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथामकरुण! पुनः संज्ञाव्याधिं विधाय किमीहसे ॥४२॥

(ञ) सौदेति। उभयोर्माधवमकरन्दयोः। संवदति प्रत्यक्षतः सम्मिलति। सुतरामिमावेव माधवमकरन्दौ, नात्यत्र संशय इति भावः।

(ट) माधव इति। पौरस्त्यपवन! पूर्व्वदिग्वर्त्तिवायो!

भ्रमयेति। अम्भोगर्भान् जलमध्यान् जलदान् मेघान् भ्रमय जगदुपकारार्थं वर्षणाय इतस्ततः सञ्चालय। चातकान् पक्षिणः प्रमोदय जलदानेनानन्दय। केकायां स्वध्वनावुत्कण्ठा औत्सुक्यं येषां तान्, शिखिनो मयूरान् कलय गर्जितेन नर्त्तय। तथा केतकान् केतकीवृक्षान् कठोरय जलवर्षणेन प्रौढ़ान् कुरु। एतेष्वपकाराभावात् काचिदपि नात्यापत्तिरिति भावः। पुनः किन्तु हे अकरुण! निर्द्दय! मूर्च्छां लब्ध्वा व्यथां विरह-

(ঞ) সৌদামিনী। (দেখিয়া) মালতীকথিত শরীরের আকার দুই জনেরই মিলিতেছে।

(ট) মাধব। হে মাহাত্ম্যশালী পূর্ব্বদিগ্‌বর্ত্তী বায়ু!

(१) त्वरितं परिक्रामत इत्यनन्तरं

मकरन्दः। (विलोक्य) दिष्ट्या प्रत्यापन्नचेतनो वयस्यः।

सौदामिनी। संवदत्युभयो···।

माधवः। (आश्वस्य) अये! प्रतिबोधितवानस्मि केनापि। (विचिन्त्य) नूनमस्यायं नवजलधरप्रभञ्जनस्यानवेक्षितास्मदवस्थो व्यापारः। भगवन्! पौरस्त्यवायो! इति पुस्तकान्तरे पाठस्य विन्यासस्य च वैषम्यं दृश्यते।

मक । सुविहितमनेनाखिलजन्तुजीवनेन मातरिश्वना (१) । (ठ)

वेदनां विनोदयसि अपनुदसि, विरहिणि जने संज्ञा चेतनैव व्याधिः पीड़ा तं विधाय कृत्वा किं फलम् ईहसे लब्धुं चेष्टसे । संज्ञायां सत्यां पुनर्विरहवेदनानुभवेन तत्कर्त्तृक-तत्संज्ञाविधान एव मद्धत्यापत्तिरिति भावः । एतेन मम मूर्च्छैवेदानीं सर्व्वथा प्रार्थनीयेति व्यज्यते ।

अत्राप्रस्तुताञ्जनसामान्यात् प्रस्तुतस्य विशेषस्य स्वस्य माधवस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, संज्ञाव्याधिमिति निरङ्गं केवलरूपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः । तथा भगवन्निति सम्बोधनेन वायोर्गुरुत्वमङ्गीकृत्य शोकावेगवशात् पुनररुत्तयेति सम्बोधनादिना तस्य व्यतिक्रमात् द्रवो नाम विमर्षसन्ध्यङ्गम् । तथा च दर्पणे—

"द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा ।"

तथा विशेषणं नाम नाट्यलक्षणञ्च—"अर्थान् सिद्धान् बहूनुक्त्वा विशेषोक्तिर्विशेषण" मिति लक्षणात् ।

हरिणी वृत्तम् ॥४२॥

---

तुमि जलपूर्ण मेघगुलिके भ्रमण कराও, চাতকগণকে আনন্দিত কর, কেকারব করিবার নিমিত্ত উৎকণ্ঠিত ময়ূরদিগকে নৃত্য করাও এবং কেতকীবৃক্ষগুলিকে বর্দ্ধিত কর, ( তাহাতে আপত্তি নাই ) কিন্তু বিরহী লোক মূর্চ্ছা লাভ করিয়া বেদনার শান্তি করিতে লাগিলেন, হে নির্দ্দয়! আবার তাহার সংজ্ঞা-রোগ জন্মাইয়া কি লাভ করিতে চাও ॥৪২॥

---

(१) सुहृत्तमखिल···इति पाठभेदः । कुत्रचित् पुस्तके मातरिश्वना इत्यतः परमयं श्लोको दृश्यते—

एते केतकसूनसौरभजुषः पौरप्रगल्भाङ्गना-
व्यालोलालकवल्लरीविलुठन व्याजोपभुक्ताननाः ।
किञ्चोन्निद्रकदम्बकुड्मलपुरीधूलीलुठत्षट्पद-
व्यूहव्याहतिहारिणो विरहिणः कर्षन्ति वर्षानिलाः ॥

माधवः । देववायो ! तथापि भवन्तमेव (१) प्रार्थये—(ड)

विकसत्कदम्बनिकुरम्ब-(२) पांशुना

सह जीवितं वह मम (३) प्रिया यतः ।

अथवा तदङ्गपरिवासशीतलं

मयि किञ्चिदर्पय भवान् हि (४) मे गतिः ॥४३॥

कृताञ्जलिः प्रणमति ।

(ठ) मकेति । अखिलानां जन्तूनां प्राणिनां जीवनेन जीवनस्वरूपेण, अनेन मातरिश्वना वायुना, सुविहितं माधवस्य चैतन्यसम्पादनेन सुष्ठु कार्य्यं कृतम् । अखिल-जन्तुजीवनेन माधवस्य प्रत्युज्जीवनमुचितमेवेति भावः ।

(ड) माधव इति । तथापि संज्ञाव्याधिविधानेन प्रातिकूल्येऽपि ।

विकसदिति । यतो यत्र स्थाने प्रिया मालती वर्त्तते, तत्रेत्यर्थः, विकसतः प्रस्फुटतः कदम्बनिकुरम्बस्य कदम्बकुसुमसमूहस्य पांशुना परागेण सह मम जीवितं जीवनं वह नय । तत्काले बाहुल्येन कदम्बकुसुमस्यैव विकाशात् तद्वहनस्य च स्वाभाविकत्वात् प्रथमपादोक्तिः । एवमपि धन्यो भवेयमिति भावः । ननु तव जीवनहरणे मरणेन महापापं स्यादिति चेत्तत्राह अथवेति । अथवा तस्या मालत्या अङ्गेषु परिवासेन अवस्थानेन शीतलं किञ्चित् विरहदुःखेन भूतलावलुण्ठनकाललग्नधूल्यादिकं वस्तु मयि अर्पय । तदापि जीवनधारणसम्भवेन महानुपकारः कृतः स्यादिति भावः । ननु त्वदर्थं कथमीदृशं परिश्रमं करोमीत्याह भवानित्यादि । यस्मात् भवान् मे मम गतिरिदानीमाश्रयः । सुतरामाश्रयेण आश्रितस्योपकारः करणीय एवेति भावः ।

मञ्जुभाषिणी वृत्तम् ॥४३॥

---

(ঠ) মকরন্দ। সকল প্রাণীর জীবনস্বরূপ এই বায়ুই চৈতন্যসম্পাদন করিয়াছেন।

---

(१) भवन्तमेवमिति पाठान्तरम् । (२)…निकुरम्बपांसुना इत्यपि पाठः ।
(३) घटय मे इति क्वचित् पाठः । (४) भवांस्तु इति भिन्नः पाठः ।

सौदा । सुसमाहितः खल्वभिज्ञानार्पणस्यावसरः । अञ्जलौ वकुलमालामर्पयति (१) । (ढ)

माधवः । साकूतविस्मयहर्षम् (२) । कथमियमस्मद्विरचिता प्रियायाः स्तनोत्सङ्गे दुर्ललितमूर्त्तिरनङ्गमन्दिराङ्गनवकुलप्रसवमाला । निरूप्य सहर्षम् (३) । कः सन्देहः । तथाहि स एवायमस्याः—(ण)

(ढ) सौदेति । अभिज्ञानार्पणस्य मालतीचिह्नरूपवकुलमालाप्रदानस्य, सुसमाहित उपयुक्तः खल्वयमवसरः समयः । अञ्जलौ वायुप्रार्थनार्थं कृते माधवस्याञ्जलौ ।

(ण) माधव इति । आकूतेन 'इयं सैव वकुलमाला भवतु' इत्यभिप्रायेण, विस्मयेन निरुद्देशमालत्याङ्गसङ्गिन्यास्तस्या वकुलमालायाः कथमत्र सम्भव इत्याश्चर्य्येण, हर्षेण तदङ्गसङ्गिन्या एव मालाया लाभादानन्देन च सहेति साकूतविस्मयहर्षम । प्रियाया मालत्याः, स्तनयोरुत्सङ्गेन उन्नत्या दुर्ललिता बाहुल्येन वसनघर्षणात् किञ्चिन्मालिन्यहीना मूर्त्तिर्यस्याः सा । अनङ्गमन्दिरस्य मन्मथभवनस्य यदङ्गनं चत्वरं तत्र यो वकुलस्तवकस्य

(ড) মাধব। হে বায়ুদেব! তথাপি আপনাকে প্রার্থনা করি—আমার প্রিয়তমা মালতী যেখানে আছেন, বিকসিত কদম্বপুষ্পের রেণুর সহিত আমার জীবনকে সেইখানে লইয়া যাউন। অথবা, তাঁহার সহিত অবস্থান করিবার জন্য শীতল যে কিছু বস্তু (ধূলিপ্রভৃতি) আমাকে অর্পণ করুন। কারণ, আপনিই এখন আমার আশ্রয় ॥৪৩॥

(কৃতাঞ্জলি হইয়া বায়ুকে নমস্কার করিতে লাগিলেন।)

(ঢ) সৌদামিনী। মালতীর চিহ্নস্বরূপ বকুলমালা দান করিবার এই-ই উপযুক্ত সময়। (মাধবের অঞ্জলিতে বকুলমালা দান করিলেন।)

(ণ) মাধব। (অভিপ্রায়, বিস্ময় ও হর্ষের সহিত) ইহা যে

(१)···अभिज्ञानदर्शनस्य···। ···मालां मुञ्चति । इति पाठभेदः ।

(२) साकूतं सहर्षं सविस्मयञ्चेति पाठान्तरम् ।

(३)···प्रियास्तनीत्सङ्ग···वकुलपादपकुसुममाला (सम्यक् निरूप्य) इति भिन्नः पाठः ।

मुग्धेन्दुसुन्दर-तदीयमुखावलोक-
हेला-विशृङ्खल-कुतूहल-निह्नवाय।
दुर्न्यस्त-पुष्प-रचितोऽपि लवङ्गिकाया-
स्तोषं ततान विषमग्रथितोऽपि (१) भागः ॥४४॥

प्रसवमाला पुष्पमाल्यम्। निरूप्य निःशेषेणावलोक्य। कः सन्देहः, सैवेयं माला इत्यर्थे कः संशयः। अस्या मालायाः स एवायं भाग इति श्लोकस्थेनान्वयः।

मुग्धेन्दिति। मुग्धेन्दुवत् मनोहरचन्द्रवत् सुन्दरं यत् तदीयमुखं मालतीवदनं तस्य अवलोकेन दर्शनेन या हेला शृङ्गारभावजनितक्रिया अविरततन्मुखदृष्टिपातरूपः कम्परूपश्च विकार इत्यर्थः, तथा विशृङ्खलम् अनियतभावेनोत्पन्नम्, कुतूहलं मुखमुन्नमय्योन्नमय्य तन्मुखदर्शनकौतुकम्, तयोर्निह्नवाय गोपनाय, मालाग्रथनेन तत्रैवास्याभिनिवेशो नान्यत्रे-त्यन्येषां सम्भावनाजननार्थमित्यर्थः, दुर्न्यस्तैः मालतीदर्शनोत्कण्ठया मनोयोगाभावेन विपरीतमुखतया समर्पितैः, पुष्पैः रचितोऽपि निर्म्मितोऽपि, तथा विषमं यथा स्यात्तथा ग्रथितो-ऽपि मध्ये मध्ये क्षुद्राणां वृहताञ्च पुष्पाणां विन्यासादसमानभावेन गुम्फितोऽपि, अस्या मालायाः, स एवायं भाग एकदेशः, लवङ्गिकायाः तोषं ततान 'मालत्यामुत्कण्ठावशा-देवेदं वैषम्यं जात'मिति बुध्यमानायाः लवङ्गिकाया आनन्दं विस्तारयामास। सुतरां 'सैवेयं माला' इत्यर्थे नास्ति कश्चित् संशय इति भावः।

अत्र मुग्धेन्दुसुन्दरेति लुप्तोपमाच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करालङ्कारः। मेघावरणादिना कदाचिच्चन्द्रस्य असौन्दर्य्यमपि स्यात् तन्निरासाय मुग्धपदम्। अतएव नाधिकपदत्वदोषः।

वसन्ततिलका वृत्तम् ॥४४॥

আমারই নির্ম্মিত এবং প্রিয়তমার স্তনের উচ্চতানিবন্ধন কিঞ্চিৎ ম্লানমূর্ত্তি, মদনমন্দিরের চত্বরে (উঠানে) উৎপন্ন সেই বকুলপুষ্পের মালা! (বিশেষরূপে দেখিয়া) এ বিষয়ে আর সন্দেহ কি? কারণ,

(१) विभागः इत्यपि पाठः।

सहर्षोन्मादमुत्थाय। प्रिये! मालति! नन्वियं वीक्ष्यसे (१)।
सकोपमिव। अयि मदवस्थानभिज्ञे! (त)

प्रयान्तीव प्राणाः, सुतनु! हृदयं ध्वंसत इव,
ज्वलन्तीवाङ्गानि, प्रसरति समन्तादिव तमः।
त्वराप्रस्तावोऽयं, न खलु परिहासस्य विषयः,
तदक्ष्णोरानन्दं वितर, मयि माभूरकरुणा (२) ॥४५॥

(त) सहर्षोन्मादमिति। ऽवेयं मालेति निश्चयोदयात् हर्षोन्मादेन सहेति तत्, नन्वित्यवधारणे। इयं वीक्ष्यसे, इदानीमेवान्विष्य मया त्वं दृश्यसे इत्यर्थः। पुरतः क्वचिद्वर्त्तमाना मालती, कौतुकाय ममाञ्जली मालामिमामपि तवतीति मन्यमानस्य माधवस्योक्तिरियम्।

प्रयान्तीति। शोभना तनुर्यस्याः सा सुतनुः। हे सुतनु! मालति! प्राणाः ममासवः प्रयान्तीव तव विरहेण गच्छन्तीव। हृदयं हृदयदेशो वक्षः, ध्वंसते विदीर्य्यत इव। अङ्गानि विरहानलेन ज्वलन्तीव। तथा तमोऽन्धकारः समन्तात् सर्वासु दिक्षु प्रसरतीव मोहागमात् व्याप्तं भवतीव अतएव अयं त्वराप्रस्ताव इदं शीघ्रतायाः प्रकरणम्, अतिसत्वर-

মনোহর চন্দ্রের ন্যায় সুন্দর মালতীর মুখমণ্ডল দর্শন করায় আমার কম্পপ্রভৃতি যে বিকার ও অনিয়তভাবে যে কৌতুক জন্মিয়াছিল, তাহা গোপন করিবার নিমিত্ত বিপরীতমুখ পুষ্পদ্বারা নির্ম্মিত হইলেও এবং অসমানভাবে গ্রথিত হইলেও, এই মালার সেই অংশই লবঙ্গিকার আনন্দ জন্মাইয়াছিল ॥৪৪॥

(ত) ( আনন্দোন্মাদের সহিত উঠিয়া ) প্রিয়ে! মালতি! নিশ্চয়ই এই তোমাকে দেখিতেছি। ( কোপের সহিতই যেন ) ওহে! আমার অবস্থা জানিতেছ না—

(१) अयि! मालति! इयं विलोक्यसे इति क्वचित् पाठः।
(२) अकरुणा इति क्वचित् पाठः।

सर्वतो दृष्ट्वा सनिर्वेदम्। कुतोऽत्र मालती। वकुलमालां प्रति (१)। अयि प्रियाप्रणयिनि! वकुलमाले! उपकारिण्यसि, अतः स्वागतं भवत्याः? (२)। (घ)

मागत्य दर्शनदानमावश्यकमित्यर्थः। किन्तु परिहासस्य परिहासायात्मगोपनस्य न खलु विषयः अवसरः। तथात्वे मम मरणमवश्यम्भावीति भावः। तस्मात् अक्ष्णोर्मत्तयोः, आनन्दं दर्शनदानेनामोदं वितर देहि, मयि अकरुणा आत्मगोपनेन निर्दया मा भूः न भव। मालती खल्वात्मगोपनं विधाय मया सार्द्धं परिहासं कुरुते, इति मत्वोक्तिरियम्।

अत्र तृतीयचरणवाक्यार्थं प्रति प्रथमार्द्धगतवाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, प्रथमार्द्धे चतस्रः क्रियोत्प्रेक्षाश्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। त्वराप्रस्तावोऽयमित्यनन्तरं भेदबोधकः किन्तुशब्दस्तुशब्दो वा वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानदोषः, किन्तुशब्दतुशब्दयोर्भेदवाचकतावादिमते तु न्यूनपदत्वदोषः। तावुभौ प्रसजन्तावपि गुणतामेव भजेते। "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः।" इति साहित्यदर्पणात्। एकजातीयतया तत्र वाच्यानभिधानस्यापि ग्रहणौचित्यात्।

तथा 'अयि मदवस्थानभिज्ञे!' इत्यनेन 'त्वराप्रस्तावोऽय'मित्यादिना च भर्त्सनाकरणात् परीवादो नाम नाट्यालङ्कारः—"भर्त्सना तु परीवाद" इति लक्षणात्।

शिखरिणी वृत्तम्॥४५॥

(घ) सर्वत इति। निर्वेदेन मालत्यप्राप्तेरात्मावमाननया सहेति सनिर्वेदम्।

হে সুন্দরি! আমার প্রাণ যেন যাইতেছে, হৃদয় যেন বিদীর্ণ হইতেছে, অঙ্গ যেন জ্বলিতেছে এবং অন্ধকার যেন সকল দিকেই ব্যাপ্ত হইতেছে। অতএব ইহা তাড়াতাড়ি করিবার সময়; কিন্তু পরিহাসের বিষয় নহে; অতএব আমার নয়নযুগলের আনন্দ দান কর, কিন্তু আমার প্রতি নির্দ্দয় হইও না॥৪৫॥

(१) उद्दिश्य इत्यपि पाठः।

(२) अयी प्रियाप्रणयिनि! परमोपकारिण्यसि। इतिमात्रः पाठः क्वचित्।

निष्प्रत्यूहाः प्रियसखि ! यदा दुःसहाः सम्बभूवुः
देहोद्दाहव्यसनगुरवो मन्मथोन्माथवेगाः (१) ।
तस्मिन् काले कुवलयदृशस्त्वत्समाश्लेष एव (२)
प्राणत्राणं प्रगुणनमभू-(३) न्मत्परिष्वङ्गकल्पः ॥४६॥

उपकारिण्यसि मम कथञ्चिदाश्वासनादिति भावः। अत उपकारिवस्तुन आदरकरणस्यौचित्यात् स्वागतप्रश्नेनादरप्रतीतिः।

निष्प्रत्यूहा इति। हे प्रियसखि ! सखीवत् प्रीतिकारित्वादिति भावः, वकुलमाले ! यदा यस्मिन् काले कुवलयदृशः नीलोत्पलनयनायाः मालत्याः, निष्प्रत्यूहा निर्विघ्नाः केनाप्यप्रतिहताः, देहोद्दाहव्यसनेन शरीरसन्तापनरूपविपदा गुरवो महान्तः, अतएव दुःसहाः, मन्मथोन्माथवेगाः मदनवेदनावेगाः सम्बभूवुः, मामवलोक्येति शेषः। तस्मिन् काले मत्परिष्वङ्गकल्पः ममालिङ्गनतुल्यः, त्वत्समाश्लेष एव तव वकुलमालया आलिङ्गनमेव, प्राणानां त्राणं रक्षणं यस्मात् तत् प्राणत्राणं प्रगुणनम् आनुकूल्यकारी, अभूत् मालत्या इति शेषः। दारुणमदनवेदनावेगान्मृतप्राया मालती तदानीं ममालिङ्गनमिव तवालिङ्गनं प्राप्य प्राणानधारयत्, सुतरां परमोपकारिण्यास्तव स्वागतप्रश्नेनादरकरणमेकान्तावश्यकमिति भावः।

अत्र मत्परिष्वङ्गकल्प इत्यार्थीयमुपमा, तथा देहोद्दाहेति मन्मथोन्माथेति च्छेकानुप्रासश्चेत्यनयोः संसृष्टिरलङ्कारः।

मन्दाक्रान्ता वृत्तम् ॥४६॥

(থ) (সকল দিকে দৃষ্টিপাত করিয়া আত্মাবমাননার সহিত) কোথায় এখানে মালতী। (বকুলমালার প্রতি) হে প্রিয়তমার প্রণয়িনি! বকুলমালে! তুমি আমার উপকারিণী হইয়াছ; অতএব তোমার শুভাগমন ত ?

(१) मोहोन्मादव्यसनगुरवो मन्मथोन्मादवेगाः। इति पाठान्तरम्।

(२)···त्वत्समाङ्गसङ्गं वा इति पाठभेदः। (३)···प्रगुणममवत्···इति भिन्नः पाठः।

সকাতর্যং নিশ্বস্য (১)।

আনন্দনানি মদনজ্বরদীপনানি (২)
গাঢ়ানুরাগরসবন্তি তদা তদা চ।
স্নেহাকরাণি মম মুগ্ধদৃশশ্চ কণ্ঠে
কষ্টং স্মরামি তব তানি গতাগতানি ॥৪৩॥

হৃদয়ে নিধায় মূর্চ্ছতি।

---

আনন্দনানীতি। হে বকুলমালে! আনন্দনানি আবয়োরুভয়োরেব পরস্পরগুণ-পরিচয়নির্বাহকত্বাৎ আমোদজনকানি। মদনজ্বরদীপনানি ক্রমেণ সঙ্গমসম্ভাবনাঙ্করণাৎ কামসন্তাপোদ্দীপকানি। গাঢ়ানুরাগো নিতান্তাসক্তিরেব রসস্তদ্বন্তি জনকতয়া তদ্বন্তীনি সম্মিলনবিষয়ে পরস্পরনিতান্তেচ্ছাজনকানীত্যর্থঃ। স্নেহং পরস্পরপ্রণয়ম্ আকুর্বন্তি সম্যগ্ জনয়ন্তীতি স্নেহাকরাণি। তানি সঙ্ঘটিতানি তদা তদা চ তস্মিন্ তস্মিন্নেব কালে, মম মাধবস্য, মুগ্ধদৃশো মনোহরনয়নায়া মালত্যাশ্চ কণ্ঠে গলে, তব গতাগতানি যাতায়াতানি কষ্টং যথা স্যাত্তথা স্মরামি। অদ্ভুতমেব তব চরিত্রমিতি ভাবঃ।

অত্র সাদৃশ্যাভাবেঽপি রাঘবানন্দমহাপাত্রমতে স্মরণালঙ্কারঃ, "শিরীষমৃদ্বী"ত্যাদি দর্পণোদাহৃতবৎ।

অত্র প্রথমং মাধবকণ্ঠাল্লবঙ্গিকাহস্তেন মালতীকণ্ঠং গতেতি গতম্, পুনর্মালত্যা লবঙ্গিকাধর্মেণ মাধবকণ্ঠে বিন্যস্তা, ইত্যাগতমিত্যেকং গতাগতম্। চৌরিকাবিবাহসময়ে

---

হে প্রিয়সখি! বকুলমালে! বাধাবিহীন এবং দেহে সন্তাপ উৎপাদনরূপ বিপদদ্বারা গুরুতর কামবেদনার বেগ, যখন নীলোৎপল-নয়না মালতীর পক্ষে দুঃসহ হইয়াছিল; সেই সময়ে আবার আমার আলিঙ্গনের তুল্য তোমার আলিঙ্গনই, মালতীর প্রাণরক্ষক আনুকূল্য-কারী হইয়াছিল ॥৪৬॥

---

(১) নির্বর্ণ্য ইত্যপি পাঠঃ।

(২) আনন্দমিশ্রমদনজ্বরদীপনানি ইতি পাঠান্তরম্।

मक । उपसृत्य वीजयन् । समाश्वसिहि सखे ! समाश्वसिहि (१) ।

माधवः । समाश्वस्य (२) । मकरन्द ! किं न पश्यसि, कुतोऽपि सहसैव मालतीस्नेहं वहतो वकुलदाम्नो लाभः (३) । तत् कथं नु मन्यसे किमेतदिति । (द)

च माधवेन मालतीकण्ठे दत्ता, मालत्या च माधवकण्ठे, विवाहे माल्यपरिवर्त्तनव्यवहारादित्थं द्वितीयं गतागतमनुक्तमपि जातमिति मन्तव्यम । पुनश्च प्रणयवशान्माधवेन मालतीकण्ठे समर्पितेति गतम् ( षष्टमाङ्के ) इदानीञ्च सौदामिनीहस्तेनागतेत्यागतमिति तृतीयं गतागतमित्यतो बहुवचनं प्रयुक्तम् । अनुक्तत्वाद्द्वितीयगतागतानङ्गीकारे तु गमनगतद्वित्वेनागमनगतद्वित्वेन च बहुत्वाद्बहुवचनसङ्गतिरिति बोध्यम् ।

वसन्ततिलका वृत्तम् ॥४७॥

(द) माधव इति । एतदिति सामान्यत्वान्नपुंसकम् । कथमयं वकुलदाम्नो लाभो जात इत्यर्थे त्वं किं मन्यसे इत्यर्थः । निकृष्टेशं गताया मालत्याः कण्ठगतेयं माला कथमत्रागतेति हेतुनिर्णयानर्हत्वात् आनन्दविस्मयसंशयैराकुलोऽस्मीति भावः ।

( শোকের সহিত নিশ্বাস ত্যাগ করিয়া ) হে বকুলমালে ! সেই সেই সময়ে আমার ও মনোহরনয়না মালতীর কণ্ঠে, তোমার যে সকল যাতায়াত আনন্দ জন্মাইত, কামসন্তাপের উদ্দীপনা করিত, অত্যন্ত আসক্তি উৎপাদন করিত এবং স্নেহ জন্মাইত ; ( আজ ) তোমার সেই সকল যাতায়াত কণ্ঠে স্মরণ করিতেছি ॥৪৭॥

( বকুলমালা হৃদয়ে ধারণ করিয়া মূর্চ্ছিত হইলেন ) ।

মকরন্দ । ( নিকটে যাইয়া বায়ু সঞ্চালন করতঃ ) আশ্বস্ত হও সখে ! আশ্বস্ত হও ।

(१) मकरन्दः । ( उपसृत्य ) सखे ! समाश्वसिहि । इति क्वचित् पाठः ।

(२) आश्वस्य इति पाठः क्वचित् । (३)⋯सहसैव मालती कण्ठे इस्तहस्तस्य लाभः । तत् कथं मन्यसे किमेतदिति । इति भिन्नः पाठः ।

मक। वयस्य! इयमार्य्या योगेश्वरी अस्य मालत्यभिज्ञान-स्योपनेत्री (१)। (ध)

माधवः। विलोक्य (२) सकरुणं कृताञ्जलिः। आर्य्ये! प्रसीद, कथय, जीवति मे प्रिया? (३)। (न)

सौदा। वत्स! समाश्वसिहि। जीवति सा कल्याणी (४)।(प)

माधवमकरन्दौ। समुच्छ्वस्य। आर्य्ये! यद्येवम्, तत् कथय, कथमेष वृत्तान्त इति (५)। (फ)

(ध) मकेति। मालत्यभिज्ञानस्य वकुलमालारूपस्य, उपनेत्री उपस्थापयित्री आनेत्री।

(न) माधव इति। मे मम प्रिया मालती जीवति किमिति काकुः।

(प) सौदेति। कल्याणी मङ्गलवती सती जीवतीत्यर्थः।

(द) মাধব। (আশ্বস্ত হইয়া) মকরন্দ! দেখিতেছ না কি? হঠাৎ কোথাও হইতে মালতীর স্নেহবাহী বকুলমালার লাভ হইয়াছে। অতএব কি মনে করিতেছ, এ ঘটনাটা কি?

(ধ) মকরন্দ। পূজনীয়া এই যোগেশ্বরী, মালতীর এই চিহ্ন আনয়ন করিয়াছেন।

(ন) মাধব। (দেখিয়া, শোকের সহিত কৃতাঞ্জলি হইয়া) আর্য্যে! প্রসন্ন হউন, বলুন, আমার প্রিয়তমা জীবিত আছেন ত?

(প) সৌদামিনী। বৎস! আশ্বস্ত হও। তিনি জীবিত আছেন, কুশলেও আছেন।

(१) क्वचित् 'वयस्य' इति नास्ति।···नेत्री इति पाठः।

(२) कुत्रचित् 'विलोक्य' इति नास्ति। (३) प्रिया सा इति कुत्रचित् पाठः।

(४) समाश्वसिहि समाश्वसिहि जीवति सा कल्याणी इति पाठभेदः।

(५)···इष्टा उच्छ्वास्य।···क एष···इत्यपि पाठः।

सौदा। पुरा किल करालायतने मालतीमुपहरन्नघोरघण्टः करवालपाणिना माधवेन व्यापादितः (१)। (ब)

माधवः। सोद्वेगम्। आर्य्ये! विरम, परिज्ञातो (२) वृत्तान्तः। (भ)

मक। क इव? (३)। *

माधवः। सखे! (४) किमन्यत्। सकामा कपालकुण्डला। (म)

(फ) माधव इति। यद्येवं सा कल्याणी सती जीवति चेत्। तत्तदा। एष वृत्तान्तः मालत्या निरुद्ध्यव्यापारः कथं सङ्घटित इति शेषः।

(ब) सौदेति। मालतीमुपहरन् करालायै बलिभावेन प्रयच्छन् छिन्दन्नित्यर्थः। करवालपाणिना खड्गहस्तेन।

(भ) माधव इति। विरम पुनस्तद्‌घटनाविवरणपरिश्रमात् विरता भव। येन हि परिज्ञातो वृत्तान्तः, मया स्वयमेवेदानीमवगतो वृत्तान्तः।

* मकेति। क इव तावन्मावीन्या को वृत्तान्तः परिज्ञात इत्यर्थः।

(म) माधव इति। सकामा सफलकामा। कपालकुण्डलया खलु व्यापादयितुं

(ফ) মাধব ও মকরন্দ। ( সম্যক্ আশ্বস্ত হইয়া ) আর্য্যে! যদি এমন হইয়া থাকে, তবে বলুন, এ ঘটনা কি করিয়া ঘটিল।

(ব) সৌদামিনী। পূর্ব্বে অঘোরঘণ্ট করালার নিকটে মালতীকে বলি দিতেছিলেন, তখন তরবারিহস্তে মাধব তাঁহাকে হত্যা করেন।

(ভ) মাধব। ( উদ্বেগের সহিত ) আর্য্যে! বিরত হউন, ঘটনা বুঝিতে পারিয়াছি।

* মকরন্দ। কি রকম?।

---

(१) सौदामिनी। अस्ति पुरा करालायतनेऽघोरघण्टः। कृपाणपाणिव्यापादितः। इति पाठभेदः। (२) ज्ञातः इत्यपि पाठः। (३) सखे! क एव। इति पाठोऽपि दृश्यते। (४) क्वचित् 'सखे!' इति पाठो नास्ति।

मक। आर्य्ये! अप्येवम्?। (य)

सौदा। एवं यथा निवेदितं वत्सेन। (र)

मक। कष्टं भोः! कष्टम् (१)।

कुमुदाकरेण शरदिन्दुचन्द्रिका
यदि रामणीयकगुणाय सङ्गता।
सुकृतं तदस्तु, कतमस्त्वयं विधि-
र्यदकालमेघविततिर्व्ययुज्जत् ॥४८॥

मालत्यपहृतेति भावः। तथा च "तदवश्यमनुभविष्यसि कपालकुण्डलाकोपस्य फल"मिति षष्ठाङ्कविष्कम्भकवाक्यं पञ्चमाङ्केऽप्यघोरघण्टवधानन्तरं कपालकुण्डलया माधवमुद्दिश्याभिहितमिति मन्तव्यम्, तत् संस्मृत्य माधवस्योक्तिरियम्।

(य) मकेति। माधवमुखात् पूर्वमेव श्रुताघोरघण्टवधवृत्तान्तो मकरन्दस्तत्कालीनं माधवेनावधारितमात्रं पृच्छति अप्येवमिति। माधवेनानुमानादयथावधारितम्, अयं वृत्तान्त एवं किमित्यर्थः।

(र) सौदेति। वत्सेन माधवेन यथा निवेदितम् अनुमानेनोक्तम्, अयं वृत्तान्त एवम्, तथैवेत्यर्थः।

कुमुदेति। शरदिन्दुचन्द्रिका शरच्चन्द्रज्योत्स्ना, रामणीयकगुणाय सौन्दर्य्यगुणार्थं यदि दैवात् कुमुदाकरेण कैरवसमूहेन सह सङ्गता मिलिता। तत् सुकृतं सुष्ठु कृतम्, सुतरां तदस्तु परस्परयोग्यत्वात्तत्र न कस्यचिदापत्तिरिति भावः। तु किन्तु अयं कतमो

---

(ম) মাধব। সখে! অন্য আর কি, কপালকুণ্ডলার কামনা সফল হইয়াছে।

(য) মকরন্দ। আর্য্যে! এইরূপ কি?।

(র) সৌদামিনী। বৎস মাধব যাহা বলিয়াছে; এইরূপই বটে।

মকরন্দ। কষ্ট, হায়! কি কষ্ট।

(१) भोः! कष्टमित्येतत् इति क्वचित् पाठः।

माधवः । हा प्रिये ! मालति ! कष्टमतिबीभत्समापन्नासि (ल) ।

कथमिव (१) तदाभवस्त्वं कमलमुखि ! कपालकुण्डलाग्रस्ता ।
उत्पातधूमलेखाक्रान्तेव कला शशधरस्य ॥४८॥

विधिः (विधातुर्विधानम्, यत् अकालमेघविततिः असमयोत्पन्ना मेघपङ्क्तिः व्ययुयुजत् अभ्यन्तरावरणेन शरच्चन्द्रिकाकुमुदाकरौ वियोजितवती । कुमुदाकरेण शरच्चन्द्रिकाया इव माधवेन सह मालत्या मिलनं परस्परयोग्यत्वादतीवानन्दकरम् । किन्तु मेघमालया शरच्चन्द्रिकाकुमुदाकरयोरिव कपालकुण्डलया मालतीमाधवयोर्व्यवधानविधानमतीवदुःखकरमिति भावः ।

अतएवात्र समाभ्यामप्रस्तुताभ्यां शरच्चन्द्रिकाकुमुदाकराभ्यां प्रस्तुतयोः समयोर्मालतीमाधवयोः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः ।

"आकरो निवहे खना"विति हेमचन्द्रः ।

मञ्जुभाषिणी वृत्तम् ॥४८॥

(ल) माधव इति । कष्टमस्माकं महद्दुःखमेतत्, यत् त्वम् अतिबीभत्सम् अतिगर्हितं यथा स्यात्तथा आपन्नासि आपत्प्राप्तासि मन्ये, त्वमतिगर्हितभावेनैव निहतासीत्यर्थः । "जीवति सा कल्याणी" इति सौदामिनीवाक्यं शोकावेगाद्विस्मृत्योक्तिरियम् ।

"आपन्न आपत्प्राप्तः स्या"दित्यमरः ।

कथमिति । हे कमलमुखि ! पद्मसदृशवदने मालति । तदा तस्मिन् समये

সৌন্দর্য্যলাভের নিমিত্ত, শরচ্চন্দ্রের জ্যোৎস্না যদি কুমুদসমূহের সঙ্গে মিলিত হইয়া থাকে, তাহা ত ভালই করিয়াছে; সুতরাং তাহা হউক। কিন্তু বিধাতার এই বিধানটা কি, যে অকাল মেঘসমূহ আসিয়া তাহাদিগকে বিযুক্ত করিয়া দিল ॥৪৮॥

(ল) মাধব। হা প্রিয়ে! মালতি! হায় কি কষ্ট! তুমি অতি গর্হিতভাবে বিপন্ন হইয়াছ?

(१) कथमपीति पाठान्तरम् ।

भगवति ! कपालकुण्डले ! (ब)

निर्म्माणमेव हि तदादरलालनीयं (१)

मा पूतनात्वमुपगाः शिवतातिरेधि (२)।

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा

मूर्द्धि स्थितिर्न चरणैरवताड़नानि (३) ॥५०॥

कपालकुण्डलया ग्रस्ता गृहीता त्वम्, उत्पातधूमलेखया उत्पातसूचकधूमकेतुरेखया आक्रान्ता आच्छन्ना शशधरस्य चन्द्रस्य कला इव कथमिव अभवः कीदृशी आसीः। अतीवाकुला आसीरिति भावः।

श्रौतोपमालङ्कारः। तथा शशधरस्य कला न केवलं तथाभूताऽभवत्, अपि तु सर्वदैव भवितुमर्हतीति कालभेदात्, तथा त्वमभवः कला तु अभवदिति पुरुषभेदाच्च भग्नप्रक्रमता-दोषः, अस्य दृष्टान्तस्तु साहित्यदर्पणेऽनुसन्धेयः। 'तस्मिन् कथमिव भूता' इति पाठे तु तत्समाधानम्। भूतेत्यस्य क्तप्रत्ययान्ततया योग्यताप्रतिपादनेन कालान्तरसम्बन्धसम्भवात्।

आर्य्या जातिः ॥४९॥

(ब) भगेति। योगमाहात्म्यवत्त्वात् प्रणिपाताभिप्रायाच्च भगवतीति सम्बोधनम्।

निर्म्माणमिति। तत् निर्म्माणमेव सा मालतीसम्बन्धिनी सृष्टिरेव सा मालत्येवेत्यर्थः, आदरेण यत्नेन लालनीयं सर्व्वरैव परिपालनीयम्। अलौकिकरूपलावण्यशालित्वादिति भावः। पूतनात्वं तद्विनाशेन राक्षसीत्वं मा उपगाः न प्राप्नुहि, किन्तु शिवतातिः तत् कल्याणकारिणी एधि भव। तथाहि, सुरभिणः सुगन्धशालिनः कुसुमस्य नैसर्गिकी

হে পদ্মমুখি ! তুমি কপালকুণ্ডলার কবলিত হইয়া, উৎপাতসূচক ধূমকেতুর রেখাকর্ত্তৃক আক্রান্ত চন্দ্রকলার ন্যায় তখন কি রকম হইয়াছিলে ( যে, তাহা বলা যায় না ) ॥৪৯॥

(ব) হে মাহাত্ম্যশালিনি ! কপালকুণ্ডলে !

(१)···तदा तव लालनीयं इति पाठभेदः।

(२)···शिवतातिरेव इत्यपि पाठः। (३)···न मुसलैरवकुट्टनानि इति क्वचित् पाठः।

सौदा। वत्स! अलमावेगेन

अकरिष्यदसौ पापमतिनिष्करुणैव सा।
नाभविष्यमहं तत्र यदि तत् परिपन्थिनी ॥५१॥

स्वाभाविकी मूर्द्धि स्थितिः मस्तके अवस्थानम्, सिद्धा सर्व्वत्र प्रचलिता, किन्तु चरणैरव-ताड़नानि पादैरवमर्द्दनानि न सिद्धानीत्यर्थः।

अत्र दृष्टान्तोऽलङ्कारः। तथा प्रथमपादे हिशब्दोपादानस्य वृत्तिपूरणमात्रप्रयोजनकत्वेन निरर्थकत्वदोषः, स तु 'सा सृष्टिरेव परमादरलालनीया' इति पाठेन समाधेयः।

अस्य श्लोकस्य द्वितीयार्द्धम् अविकलमेव उत्तररामचरितप्रथमाङ्केऽपि रामेण पठितम्।

"हरीतकी राक्षसी च पूतना" इति त्रिकाण्डशेषः। "शिवतातिः (स्त्री) कल्याण-कारिणी" इति शब्दकल्पद्रुमः। वसन्ततिलका वृत्तम् ॥५०॥

अकरिष्यदिति। असौ कपालकुण्डला पापम् "अवध्याश्च स्त्रियं प्राहुस्तिर्य्यग्योनि-गतेष्वपि" इति स्त्रीहत्यानिषेधात् मालतीहत्यारूपं पापकार्य्यम् अकरिष्यत्। यतः सा कपालकुण्डला अतिनिष्करुणैव नितान्तनिर्द्दयैव। तत्र हत्याविषये अहं यदि तस्याः कपालकुण्डलायाः परिपन्थिनी विरोधिनी न अभविष्यम्। तथा च अहमुपस्थाय कपाल-कुण्डलया क्रियमाणां मालत्या हत्यां न्यवर्त्तयमिति सुस्था सा जीवतीति त्वया न शोकः कर्त्तव्य इति भावः।

अत्र प्रथमचरणवाक्यार्थं प्रति द्वितीयचरणवाक्यार्थो हेतुरिति काव्यलिङ्गमलङ्कारः। तथा "पुरा किल करालायतने" इत्यादावेतदन्ते सन्दर्भे मालतीविषये सातिशयकीर्त्तनात् प्रसङ्गो नाम विमर्षसन्ध्यङ्गम्—"प्रसङ्गो गुरुकीर्त्तन"मिति लक्षणात् ॥५१॥

---

সেই সৃষ্টিটাই (মালতী) আদরে পরিপালনীয়; তাহার প্রতি তুমি রাক্ষসীর ভাব অবলম্বন করিও না, কল্যাণকারিণী হও। কারণ, সুগন্ধি কুসুমের স্বভাবতঃ মস্তকে অবস্থিতিই প্রসিদ্ধ; কিন্তু পদাঘাত প্রসিদ্ধ নহে ॥৫০॥

সৌদামিনী। বৎস! শোক করিও না; (কারণ,)

उभौ। प्रणम्य। अतिप्रसन्नमार्य्यापादैः। तत् कथय, का पुनस्त्वमस्माकमेवंविधो बन्धुः (१)। (अ)

सौदा। ज्ञास्यथः (२) खल्वेतत्। उत्थाय। इयमिदानीमहं,

गुरुचर्य्या-तपस्तन्त्र-मन्त्र-योगाभियोगजाम्।
इमामाकर्षिणीं (३) सिद्धिमातनोमि शिवाय वः ॥५२॥

इति समाधका निष्क्रान्ता। (ब)

(अ) उभाविति। उभौ माधवमकरन्दौ। आर्य्याया एव पादैश्चरणैः गौरवाद्बहुवचनम्, अतिप्रसन्नं सातिशयप्रसन्नीभूतम्। भावे क्तः। अयाचितैर्ह्यस्मदुपकारकरणादिति भावः।

गुर्विति। वो युष्माकं शिवाय मङ्गलाय गुरुचर्य्या गुरुशुश्रूषा, तपो जपोपवासादिर्वैधक्लेशः, तन्त्रं पवनसाधनं प्राणायामः, मन्त्रः कालिकादिमन्त्रः, योगः समाधिः चित्तवृत्तिनिरोधः सबीजो निर्बीजश्च, तेषामभियोगादभ्यासाज्जायत इति ताम्। इमाम् आकर्षिणीं तदाख्यां सिद्धिम्, आतनोमि आविर्भावयामि।

ঐ কপালকুণ্ডলা, মালতীর হত্যারূপ পাপকার্য্য করিত বটে; যে হেতু সে অবশ্যই অত্যন্ত নির্দ্দয়া। কিন্তু আমি যদি সে বিষয়ে তাহার প্রতিবন্ধক না হইতাম ॥৫১॥

(অ) মাধব ও মকরন্দ। (প্রণাম করিয়া) আর্য্যার চরণকমল, আমাদের প্রতি অত্যন্ত অনুগ্রহ করিয়াছে। অতএব বলুন, কে আপনি আমাদের এইরূপ বন্ধু হইলেন।

সৌদামিনী। তোমরা অবশ্যই ইহা জানিতে পারিবে। (উঠিয়া) এখন এই আমি,

(१) माधवमकरन्दौ।···आर्य्याचरणैः। तत् कथय, कथं पुनस्त्वमेवास्माकं बन्धुः। इति पाठभेदः। (२) ज्ञास्यथ इति विसर्गशून्यः पाठः क्वचित्।

(३) आक्षेपणीं इत्यपि पाठः।

मक । आश्चर्य्यमाश्चर्य्यम् (१) ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।

विलोक्य सभयम् ।

कथमिह न वयस्यस्तत् किमेतत् (विचिन्त्य) किमन्यत्
प्रभवति हि महिम्ना स्वेन योगीश्वरीयम् (२) ॥५३॥

तपो वै धर्म्म इति प्रायश्चित्ततत्त्वे स्मार्त्ताभिप्रायः । "तत्त्वं पवनसाधन"मित्यनेकार्थ-ध्वनिमञ्जरी । "योगश्चित्तवृत्तिनिरोधः" इति पातञ्जलसूत्रम् । तस्य सवीजादिभेदस्तु तत्रैव द्रष्टव्यः । आकर्षिणी सिद्धिस्तन्त्रसार-षट्कर्म्मदीपिकादावनुसन्धेया ॥५२॥

(ष) इतीति । समाधवा माधवमुत्तोल्य गृहीत्वेत्यर्थः । इदन्तु तत्तेजसा चक्षुः-प्रतिघातान्मकरन्दो न जानातीति बोध्यम् ।

व्यतिकर इति । भीमो भयङ्करः, अतएव उपहता प्रतिहता चक्षुर्वृत्तिः रूपग्राहिक-रूपा नेत्रवृत्तिर्येन स ताद्दशः कश्चित्तेजःपुञ्ज इति शेषः, तमसोऽन्धकारस्यायमिति तामसः, विद्युतस्तड़ितोऽयमिति वैद्युतः, व्यतिकरो मिश्रीभाव इव, उद्भूय उत्पद्य क्षणं शान्तः ततृक्षणात् विरतो निर्वाणं गतः । विलोक्य पार्श्वं माधवो नास्तीति दृष्ट्वा, 'तत् किं कपालकुण्डलाया एवेयं माया' इत्याशङ्कावशात् सभयमित्यर्थः । इह स्थाने वयस्यो माधवः कथं नास्ति, तत् तस्मात्, एतत् किं कोऽयं व्यापारः । विचिन्त्य विविच्य । अन्यत् किं भवेत्, अपि तु किमपि नेत्यर्थः । हि तथाहि, इयं योगीश्वरी दृष्टपूर्वा कपालकुण्डला-

তোমাদের মঙ্গলের নিমিত্ত—গুরুশুশ্রূষা, তপস্যা, প্রাণায়াম, মন্ত্র ও যোগের অভ্যাস হইতে উৎপন্ন এই আকর্ষিণী সিদ্ধি প্রকাশ করিলাম ॥৫২॥

(ষ) (এই বলিয়া মাধবকে লইয়া নিষ্ক্রান্ত হইলেন ।)

মকরন্দ । আশ্চর্য্য আশ্চর্য্য ।

(१) आश्चर्य्यं इतिमात्रः पाठः क्वचित् । (२) योगीश्वरीयमिति पाठान्तरम् ।

सवितर्कम् । किमयमनर्थं इति सम्प्रति मूढ़ोऽस्मि (१) । अपि च, (स)

भिन्नेव महायोगिनी, स्वेन स्वकीयेन महिम्ना सिद्धिमाहात्म्येन प्रभवति मालत्यन्तिके माधवमपहरन्त्यात्मनः प्रभावं प्रकाशयति । तथा च यदीयं कपालकुण्डला भवेत्, तदा माधवस्य दुःखं विधातुं तत्कर्तृभागित्वात् मालतीमिव मामप्यपहरेत् किन्तु न केवलं माधवमपहरेत्; सुतरां कपालकुण्डलाभिन्नेव दृष्टपूर्वा महायोगिनी मालत्या सह सम्मेलनार्थमेव माधवमपहृतवतीति भावः ।

अत्र प्रथमार्द्धे उपमालङ्कारः । तथा विशिष्यभूतोपमेयवाचकपदानुपादानात् न्यूनपदत्वदोषः, स च 'मह उपहतचक्षुर्वृत्तिरुद्भूय शान्त' इति पाठेन समाधेयः । अत्राकारान्तः पुंलिङ्गस्तेजोवाची महशब्दः ।

प्रथमचरणमुत्तररामचरितपञ्चमाङ्केऽपि चन्द्रकेतुना पठितम् । मालिनी वृत्तम् ॥५३॥

(स) सवितर्कमिति । अथवा, गुरुणाऽघोरघण्टेन तत्तुष्टत्वात् तत्सङ्कल्पितबलिदानार्थमेव मालत्यपहरणम्, गुरुवधप्रतिशोधार्थं माधवापहरणम्, मम तु निरपराधत्वात् परित्याग इत्यतः कपालकुण्डलैवेयमिति वितर्केण सहेति सवितर्कम् । अनर्थः माधवस्य निरुद्दिष्टतारूपा विपत् । इत्यस्मिन् विषये । मूढ़ोऽस्मि निर्णयानर्हत्वादिति भावः ।

अत्र योगिनीकर्तृकमाधवापहरणमिष्टायानिष्टाय वेति संशयेन पूर्वावधारिततत्पक्षपातित्वरूपविचारस्यान्यथाभावात् विपर्ययो नाम नाट्यलक्षणम् । तथा च दर्पणे—

"विचारस्यान्यथाभावः सन्देहात्तु विपर्ययः ।"

অন্ধকার ও বিদ্যুতের সম্মেলনের ন্যায় ভয়ঙ্কর কোন তেজঃপুঞ্জ, চক্ষুর বৃত্তি বিনাশপূর্ব্বক উৎপন্ন হইয়া, ক্ষণকালের মধ্যে আবার বিরত হইল। (দেখিয়া ভয়ের সহিত) এখানে বয়স্য মাধব নাই কেন? (চিন্তা করিয়া) অন্য আর কি হইবে; এই যোগেশ্বরীই স্বকীয় মাহাত্ম্যে এই প্রভাব বিস্তার করিয়াছেন ॥৫৩॥

(স) (বিতর্কের সহিত) ইহা কি অনর্থই ঘটিল; এ বিষয়ে আমি এখন বিবেকশূন্যই হইয়াছি। আরও—

(१) मुग्धोऽस्मि इति भिन्नः पाठः ।

अस्तोकविस्मयमपस्मृत-पूर्व्ववृत्त-(१)
मुद्भूतनूतनभयज्वर-जर्जरं नः ।
एकक्षणत्रुटित-सङ्घटित-प्रमोह-
मानन्दशोकशबलत्वमुपैति चेतः (२) ॥५४॥

अस्तोकेति। अस्तोकः अनल्पो महान् विस्मयः 'माधवः खल्वयं दृष्टः, अयञ्च नाद्यो'त्याश्चर्य्यं यत्र तत्। अपस्मृतं विस्मृतं पूर्ववृत्तं मालतीनिरुद्दिष्टतावृत्तान्तो येन तत्। मालत्यपहरणापेक्षया माधवापहरणस्य गुरुतरत्वादिति भावः। उद्भूतम् उत्पन्नं यत् नूतनभयं माधवानिष्टाशङ्का, तेन यो ज्वरः सन्तापः, तेन जर्जरं जीर्णम् आकुलमित्यर्थः। तथा एकस्मिन्नेव क्षणे त्रुटितः "जीवति सा कल्याणी" इत्याद्याश्वासवचनेन विनाशितः, तथा सङ्घटितो माधवापहरणेन पुनरुत्पादितः, प्रमोहो मोहो विवेकराहित्यं यस्मिन् तत् तथोक्तम्। नोऽस्माकं ममेत्यर्थः चेतश्चित्तं कर्त्तृ, आनन्दशोकशबलत्वं हर्षविषादमिश्रितत्वम् एति प्राप्नोति। "जीवति सा कल्याणी" इत्यादिवाक्यश्रवणादानन्दः, अकस्मान्माधव-हरणाच्च शोक इति भावः। अथवा अस्मत्पक्षपातिन्या कयाचिद्योगिन्या मालत्या सह सम्मेलनार्थमेव माधवो नीत इत्यस्मान्नोदयादानन्दः, पुनर्मायया कपालकुण्डलयैव गुरुवध-प्रतिशोधार्थमपहृत इति भावनायां शोक इति भावः।

वसन्ततिलका वृत्तम् ॥५४॥

আমার চিত্ত অত্যন্ত আশ্চর্য্যান্বিত হইয়াছে, পূর্ব্ববৃত্তান্ত ভুলিয়া গিয়াছে, নূতন ভয় ও সন্তাপ উৎপন্ন হওয়ায় জর্জ্জরিত হইয়াছে এবং এক সময়েই উহার মোহ বিনাশ করিয়া, আবার উহা জন্মাইয়া দিয়াছে; তাই আমার চিত্ত এখন আনন্দ ও শোকের মিশ্রীভাব প্রাপ্ত হইয়াছে ॥৫৪॥

(१)…अविस्मृतपूर्ववृत्तमिति पाठान्तरम्।
(२) आनन्दशोकशबलं समुपैति चेत इति पाठभेदः।

तदत्रैव कान्तारगहने सहास्मद्वर्गेण प्रविष्टां भगवतीमन्विष्य तस्या वृत्तान्तमेनं कथयिष्यामि (१)। (ङ)

इति निष्क्रान्तः (२)।

## इति मालतीमाधवे सौदामिनीदर्शनो नाम (३) नवमोऽङ्कः। (च)

(ङ) तदिति। तत्तस्मात्। कान्तारगहने दुर्गमारण्ये, अस्मद्वर्गेण लवङ्गिकादिना प्रविष्टां मालत्यन्वेषणार्थमेवागताम्, भगवतीं कामन्दकीम्। तस्याः समीपे, एनं माधवनिरुद्देशताविषयकम्। कथयिष्यामि। येन खलुतिमहायोगिनी सा स्रुलेमं वृत्तान्तमवश्यमेवास्य कमपि प्रतीकारं कुर्य्यादिति भावः।

अत्राश्रयी नाम नाट्यालङ्कारः—"ग्रहणं गुणवत् कार्य्यहेतोराश्रय उच्यते।" इति लक्षणात्।

(च) इतीति। सौदामिन्यास्तदाख्याया योगिन्या दर्शनं साक्षात्कारो यत्र सः। अस्मिन्नङ्के कालिदासकृतविक्रमोर्वशीनाटकस्य च्छाया बाहुल्येन परिलक्षितेति सुधीभिरनुसन्धेयम्।

इति महामहोपाध्याय-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां मालतीमाधवटीकायां भावमनोहरायां नवमाङ्कविवरणं समाप्तम्।

(ङ) অতএব, ভগবতী কামন্দকী আমাদের বন্ধুবর্গের সহিত এই দুর্গম বনমধ্যেই প্রবেশ করিয়াছেন, তাঁহাকে অন্বেষণ করিয়া, তাঁহার নিকট এই বৃত্তান্ত বলি।

( এই বলিয়া প্রস্থান করিলেন। )

(চ) সৌদামিনীদর্শননামে নবম অঙ্ক সমাপ্ত।

(१) तदत्र कान्तारावसाने···भगवतीमनुसृत्य···कथयामि। इति भिन्नः पाठः।

(२) इति निष्क्रान्ताः सर्वे इति क्वचित् पाठः।

(३) सौदामिनीदर्शनो नाम इति पाठः पुस्तकान्तरे नास्ति।

# दशमोऽङ्कः ।

ततः प्रविशति कामन्दकी मदयन्तिका लवङ्गिका च ।

काम । सास्रम् (१) । हा वत्से ! मालति ! मदङ्कालङ्कारिणि ! (२) क्वासि ; देहि मे प्रतिवचनम् । (क)

(क) कामिति । मम अङ्कं क्रोड़म् अलङ्कर्त्तुम् उपवेशनेन भूषयितुं शीलं यस्याः तत्सम्बोधनम् । प्रतिवचनं प्रत्युत्तरम् ।

इतः प्रभृति दशमाङ्कसमाप्तिपर्य्यन्तो निर्व्वहणसन्धिः ( उपसंहारसन्धिः ) । तदुक्तं साहित्यदर्पणे—

"बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
एकार्थमुपनीयन्ते यत्र निर्व्वहणं हि तत् ॥"

तथा च प्रथमाङ्कादावुपनिबद्धानामनुरागरूपबीजाद्यर्थानां स्वस्वस्थानविनिवेशितानामत्र मालतीलाभरूपैकप्रयोजनसाधनतया योजनं "यत्प्रागेव" इत्यादिनवमाणकामन्दकी-वाक्यात् । मालतीलाभ एव कार्य्यं नामार्थप्रकृतिः । यथा तत्रैव—

"अपेक्षितन्तु यत् साध्यमारम्भो यन्निबन्धनः ।
समापनन्तु यत् सिद्ध्यै तत्कार्य्यमिति सम्मतम् ॥"

मकरन्दस्य मदयन्तिकालाभेन सह माधवस्य मालतीलाभश्च फलावस्था । यथा—

"सावस्था फलयोगः स्याद् यः समग्रफलोदयः ।"

अत्रापि सन्धिप्रभृतीनि चतुर्द्दशाङ्गानि यथास्थानं निवेश्य लक्षणानि वक्ष्यामः ।

---

তাহার পর কামন্দকী, মদয়ন্তিকা ও লবঙ্গিকার প্রবেশ ।

(ক) কামন্দকী । ( অশ্রুজলের সহিত ) হা বৎসে ! মালতি !

---

(१) सकरुणं सास्रमिति पाठभेदः । (२) मदङ्कालङ्कारकारिणि ! इति पाठान्तरम् ।

आजन्मनः प्रतिमुहूर्त्त-विशेषरम्या-
ण्याचेष्टितानि तव सम्प्रति तानि तानि।
चाटूनि चारुमधुराणि च संस्मृतानि
देहं दहन्ति हृदयञ्च विदारयन्ति ॥१॥

अपि च, पुत्रि! (१)

अनियत-रुदितस्मितं विराजत्-
कतिपयकोमल-दन्तकुट्मलाग्रम्।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमुग्धजल्पितं ते ॥२॥

आजन्मन इति। आजन्मनो जन्मप्रभृति, प्रतिमुहूर्त्तं प्रतिक्षणं, विशेषेण अतिशयेन रम्याणि मनोहराणि, तानि तानि पूर्वानुभूतानि, तव आचेष्टितानि अङ्कावलुण्ठनपाणिपल्लव-धूनन-मृदुहास्य-धूलिखेलाप्रभृतीनि चरितानि, चारुमधुराणि सुन्दरस्वादूनि, एतेन तच्चाटुषु पीयूषतुल्यत्वं व्यज्यते, चाटूनि प्रियवाक्यानि च संस्मृतानि सन्ति, देहं दहन्ति हृदयञ्च विदारयन्ति भिन्दन्ति। इदानीं तवाभावाच्छोकानलेन शोकशङ्कुना चेति भावः।

अत्र प्रस्तुतानामाचेष्टितचाटूनामेकदहनक्रियायामेकविदारणक्रियायाञ्च कर्तृतयाभि-सम्बन्धात्तुल्ययोगितालङ्कारद्वयस्य मिथो नैरपेक्ष्यात् संसृष्टिः। वसन्ततिलका वृत्तम् ॥१॥

अनियतेति। अनियते अनिर्द्दिष्टे रुदितस्मिते क्रन्दनहास्ये यस्मिन् तत् हेतुं विनैव

আমার ক্রোড়ের অলঙ্কারকারিণি! কোথায় তুমি; আমার প্রত্যুত্তর দাও।

জন্ম হইতে তোমার চরিত্রগুলি, প্রত্যেক মুহূর্ত্তে বিশেষভাবে মনোহর হইতেছিল; এখন সেই সেই গুলি এবং মৃদুমধুর প্রিয়বাক্য-গুলি স্মরণ করিলে তাহা দেহ দগ্ধ করে এবং হৃদয় বিদীর্ণ করে ॥১॥

(१) (आकाशे) अपि च, पुत्रि! इति क्वचित् पाठः।

इदानीमेव वदत् इदानीमेव च हसदित्यर्थः। विराजन्ति शोभमानानि, कतिपयकोमल-दन्ताः कुड्मलाग्राणि मुकुलाग्रभागा इव यस्मिन् तत्। स्खलत् सम्पूर्णोच्चारणसामर्थ्याभावा-दसम्पूर्णाक्षरम्। तथा असमञ्जसम् अनुरूपपदयथायथवाक्यज्ञानत्वादसम्बद्धं 'मया गच्छति, त्वं पिबामि' इत्येवं कर्तृक्रियादीनां व्याकरणानुसारि-योग्यसमावेशरहितमित्यर्थः, तथापि मुग्धं सुश्राव्यत्वान्मनोहरं जल्पितं भाषितं यस्मिन् तत् तथोक्तम्, शिशोः "दन्तजननं सप्तमे मासि" इति स्मृतेः सप्तममासादिशैशवावस्थायां स्थितायाः, ते तव वदनं कमलमिव तत् वदनकमलकं पद्मवत् सुन्दरं मुखं स्मरामि। सौन्दर्यातिशयेन तव सततचिन्तावेशादिति भावः।

अत्र यथावद्वस्तुवर्णनात् स्वभावोक्तिरलङ्कारः, तथा रुदितस्मितादीनां मुख एव सम्भवेन उपमासाधकत्वात् रूपकस्य च बाधकत्वात् लुप्तोपमाद्वयम्, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। तथा तृतीयपादे वाक्यसमाप्तावपि तदन्तर्गतस्य "वदनकमलकम्" इत्यस्य विशेषणतया चतुर्थपादोपादानात् समाप्तपुनरात्ततादोषः, स च चतुर्थपादं तृतीयस्थाने तृतीयपादञ्च चतुर्थस्थाने पठित्वा समाधेयः।

अस्मिन् श्लोके वाच्यार्थवत् शब्दानामपि सौकुमार्यात् पदोच्चयो नाम नाट्यलक्षणम्—

"सञ्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः।" इति लक्षणात्।

"समञ्जसं समाख्यातमभ्यक्तोचितयोरपि।" इत्यजयः।

रुदित-स्मित-जल्पितपदानिभावेक्तप्रत्ययान्तानि। वदनकमलकमित्यल्पार्थे कप्रत्ययः।

श्लोकोऽयमुत्तररामचरितचतुर्थाङ्केऽपि जनकेन पठितः। अस्यानुरूपः श्लोको यथा शाकुन्तले—

"आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति॥"

पुष्पिताग्रा वृत्तम्॥२॥

---

আরও, কন্যে! যাহাতে অনির্দ্দিষ্টভাবে রোদন ও হাস্য ছিল, কতিপয় কোমল দন্তমুকুলের অগ্র শোভা পাইতেছিল এবং অসম্পূর্ণ, অসংলগ্ন অথ চ মনোহর বাক্য নির্গত হইত, তোমার শৈশব অবস্থার সেই মুখপদ্মখানি স্মরণ করিতেছি॥২॥

इतरे। सास्रम् (१)। हा पिअसहि! सुप्पसस्समुहचन्दसुन्दरि! कहिं गदासि। को वा सिरीसकुसुमसुउमारस्स दे सरीरस्स अअं देव्वदुव्विणअपरिणामो एक्किआए उवगदो (२)। महाभाअ माहव! उवत्थिदत्थमिदमङ्गसवो दे जीअलोओ संवुत्तो। (ख)

काम। सविशेषखेदम्। हा वत्सौ!। (ग)

(ख) हा प्रियसखि! सुप्रसन्नमुखचन्द्रसुन्दरि! कस्मिन् गतासि। को वा शिरीषकुसुमसुकुमारस्य ते शरीरस्य अयं दैवदुर्विनयपरिणाम एकिकायां उपगतः। महाभाग माधव! उपस्थितास्तमितमहोत्सवस्ते जीवलोकः संवृत्तः।

(ख) इतरे इति। इतरे मदयन्तिकालवङ्गिके। दैवदुर्विनयेन विधेर्दुर्व्यवहारेण परिणामः अवसानम्। उपगत उपस्थितः। एकिकाया इत्यनेन तया सार्द्धमात्मनोऽपि तदवस्थाप्राप्तिरुचितासीदिति व्यज्यते। उपस्थित एव अस्तमितो लुप्तो महोत्सवो यस्मिन् सः। मालतीलाभादुपस्थितो महोत्सवः पुनस्तत्क्षणादेव तस्या विलोपात् सोऽस्तमित इति भावः।

(ग) कामेति। वत्सौ! मालतीमाधवौ!।

(খ) মদয়ন্তিকা ও লবঙ্গিকা। (অশ্রুজলের সহিত) হা প্রিয়সখি! নির্ম্মলমুখচন্দ্রমনোহরে! কোথায় গিয়াছ। একাকী তোমার শিরীষকুসুমের ন্যায় কোমল শরীরের এই কোন্ দৈবদুর্ব্যবহারের পরিণাম উপস্থিত হইল। হে মহাত্মা মাধব! জীবলোকে তোমার মহোৎসব উপস্থিত হইবামাত্রই তাহা অস্তমিত হইয়া গেল।

(গ) কামন্দকী। (বিশেষ খেদের সহিত) হা বৎসে! মালতি! হা বৎস! মাধব!

(१) मदयन्तिकालवङ्गिके। (सास्रमाकाशे) इति पाठभेदः।

(१) कीदे सरीरस्स देव्वदुव्विलासपरिणामो एक्काकिणीए उवगदो इत्यपि पाठः।

अभिनवरागरसोऽयं भवतोः कृतकौतुकः परिष्वङ्गः ।
लवलीलवङ्गयोरिव नियतिमहावात्यया निहतः (१) ॥३॥

लव । सोद्वेगम् । हदास ! वज्जमअहिअअ ! सव्वहा णिसंसेसि ।

इति हृदयमाहत्य पतति । (घ)

(घ) हताश ! वज्रमयहृदय ! सर्वथा नृशंसमसि ।

अभिनवेति । लवली लवलीआख्या ( नोयारि, लोयाइल इति यस्याः प्रसिद्धिः ) लवङ्गतरुश्च, तयोरिव भवतोर्युवयोर्मालतीमाधवयोः, अभिनवो नूतनो रागोऽनुराग एव रसो यस्मिन् सः, तथा कृतं सम्पादितं कौतुकं माल्यपरिवर्तनादि कौतूहलं यस्मिन् सः, अयमचिरजातः, परिष्वङ्गः सम्मेलनम्, नियतिर्दैवं महावात्येव तया निहतो विनाशितः । अतीवदुःखकारणमेतदिति भावः ।

अत्रोपमालङ्कारः, नियतिमहावात्ययेत्यत्रापि लुप्तोपमैव न तु रूपकम्, पूर्वोपमानुसारादित्यनयोरङ्गाङ्गिभावेन सङ्करः ।

तथा प्रथमोपदर्शितानुरागरूपबीजोपस्थितेः सन्धिर्नाम निर्वहणसन्ध्यङ्गम्—"बीजोपगमनं सन्धि"रिति लक्षणात् ।

आर्या जातिः ॥३॥

(घ) लवेति । नृशंसं क्रूरमसि । येनेदृशदारुणशोकेऽपि न विदीर्य्यसे इति भावः ।

যাহাতে নূতন অনুরাগ হইয়াছিল এবং মালা পরিবর্ত্তনপ্রভৃতি কৌতুকের কার্য্য করা হইয়াছিল, লবলী ও লবঙ্গের ন্যায় মালতীর সহিত তোমার সেই সম্মেলন দৈবরূপ মহাবাত্যায় ( ঝড়ে ) নিহত হইল ॥৩॥

(ঘ) লবঙ্গিকা। ( উদ্বেগের সহিত ) হে নিরাশ ! বজ্রময় হৃদয় ! তুমি সর্ব্বপ্রকারেই নৃশংস হইয়াছ। ( এই বলিয়া বক্ষে তাড়ন করিয়া পতিত হইল। )

---

(१) अभिहत इति भिन्नः पाठः ।

मद। सहि! लवङ्गिए! णं भणामि खणमेत्तं वि दाव समस्सस। (ङ)

लव। सहि! किं करेमि। दिढ़वज्जलेवपरिवद्धणिच्चलं विअ जीविदं मं ण परिच्चअदि (१)। (च)

काम। वत्से! मालति! जन्मनः प्रभृति वल्लभा ते लवङ्गिका। तत् किमेनामुज्जिहानजीवितां वराकीं नानुकम्पसे। इयं हि—(२) (छ)

(ङ) सखि! लवङ्गिके! ननु भणामि, क्षणमात्रमपि तावत् समाश्वसिहि।

(च) सखि! किं करोमि। दृढ़वज्रलेपप्रतिबद्धनिश्चलमिव जीवितं मां न परित्यजति।

(ङ) मदेति। नन्वित्यनुनये। क्षणमात्रमित्यनेनाविरतरोदनादिकं व्यज्यते। अतएवात्रार्थापत्तिर्नाम नाट्यलक्षणम्—"अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते।" इति लक्षणात्।

(च) लवेति। दृढ़ेन वज्रलेपेन अतिगाढ़संयोगजनकीभूतलेपविशेषेण प्रतिबद्धमाबद्धम् अतएव निश्चलम्। अन्यथा ईदृशशोकताड़नायां सत्यां मामपरित्यज्य स्थातुं न शक्नुयादिति भावः।

(ঙ) মদয়ন্তিকা। সখি! লবঙ্গিকে! আমি বলিতেছি—তুমি অন্ততঃ ক্ষণকালমাত্র আশ্বস্ত হও।

(চ) লবঙ্গিকা। সখি! করিব কি। আমার জীবন যেন দৃঢ় বজ্রলেপদ্বারা আবদ্ধ হইয়া, নিশ্চল হইয়া রহিয়াছে; তাই আমাকে পরিত্যাগ করিতেছে না।

(१)···मदअन्तिए!···णिच्चलं मम जीविदं···इति पाठभेदः।

(२)···वल्लभतरा। तत् किमुज्जिहानजीविता···इति पाठान्तरम्।

उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते।
मलीमसमुखी वर्त्तिः प्रदीपशिखया यथा ॥४॥

कथं कल्याणि! कामन्दकीं जहासि। नन्वकरुणे! मदीय-चीवरांशुकेणैव ते प्रगुणीकृतान्यङ्गानि (१)। (ज)

(छ) कामेति। उज्जिहानं तव शोकेन गच्छत् जीवितं जीवनं यस्यास्ताम्। वराकीं दीनाम्। इयं लवङ्गिका। उज्जिहानेति "शोकाकुलता"वित्यस्यानुभाव रूपम्।

उज्ज्वलेति। उज्ज्वल आलोको द्युतिर्यस्यास्तया, प्रदीपशिखया त्यक्ता, अतएव दाहात् मलीमसमुखी मलिनाग्रदेशा, स्निग्धा तैलाक्ता वर्त्तिर्दशा, यथा, तथा उज्ज्वला-लोकया त्वया त्यक्ता, अतएव शोकात् मलीमसमुखी मलिनवदना, स्निग्धा त्वत्प्रेमवती इयं लवङ्गिका न राजते न शोभते।

अत्र श्रौती पूर्णोपमालङ्कारः ॥४॥

(ज) कथमिति। मदीयचीवरांशुकेणैव मम कौपीनीवाससैव, ते तव अङ्गानि प्रगुणीकृतानि पुष्टीकृतानि।

अत्र गर्हणं नाम नाट्यलक्षणम्—"दूषणोद्घोषणायान्तु भर्त्सना गर्हणन्तु तत्।" इति लक्षणात्।

---

(छ) কামন্দকী। বৎসে! মালতি! লবঙ্গিকা জন্ম হইতেই তোমার ভালবাসার পাত্র; সে জীবন ত্যাগ করিতেছে; সুতরাং এই দীনার প্রতি দয়া করিতেছ না কেন।

যেমন উজ্জ্বল আলোকসম্পন্ন প্রদীপ শিখাকর্ত্তৃক পরিত্যক্ত হইয়া, মলিনাগ্রা ও তৈলবতী বর্ত্তিকা (দীপের সল্‌তা) শোভা পায় না; সেইরূপ উজ্জ্বল কান্তিসম্পন্না তোমাকর্ত্তৃক পরিত্যক্ত হইয়া মলিনবদনা ও স্নেহশালিনী (এই লবঙ্গিকা) শোভা পাইতেছে না ॥৪॥

(१) कथं त्वं कल्याणि! कामन्दकीं त्यजसि। नन्वकरुणे! मदीयचीवराञ्चलेनैव ते प्रगुणितान्यङ्गानि इति भिन्नः पाठः।

স্তন্যত্যাগাৎ প্রভৃতি সুমুখী দন্তপাঞ্চালিকেব
ক্রীড়াযোগং তদনু বিনয়ং প্রাপিতা বর্দ্ধিতা চ।
লোকশ্রেষ্ঠে গুণবতি বরে স্থাপিতা ত্বং ময়ৈব
স্নেহো মাতুর্ময়ি সমধিকস্তেন যুক্তস্তবাপি ॥৫॥

স্তন্যেতি। হে মালতি! ময়ৈব, ন তু ত্বৎপিত্রাদিনা ইতি ভাবঃ। স্তন্যত্যাগাৎ প্রভৃতি মাতুঃ স্তন্যদুগ্ধপানপরিত্যাগাদবধি, সুমুখী শোভনবদনা ত্বম্, দন্তপাঞ্চালিকেব গজদন্তাদিনির্ম্মিতপুত্তলিকেব ক্রীড়াযোগং বাল্যখেলাসম্বন্ধং প্রাপিতা, তদনু ততঃ পরং ততোঽপি কিঞ্চিদ্বয়োবাহুল্যে সতীত্যর্থঃ, বিনয়ং শিল্পকলাদিশিক্ষাং প্রাপিতা। বর্দ্ধিতা চ লালনাদিনা বৃদ্ধিঞ্চ নীতা। তদনু চ লোকশ্রেষ্ঠে সৌন্দর্য্যৌদার্য্যাদিনা সকলজনেভ্য উৎকৃষ্টে, গুণবতি বিদ্যাবীর্য্যাদিগুণশালিনি, বরে জামাতরি স্থাপিতা রক্ষিতা। তেন হেতুনা, তবাপি মাতুরাত্মজনন্যাঃ সকাশাৎ ময়ি সমধিকঃ অতিরিক্তঃ স্নেহো বাৎসল্যং যুক্ত উচিতঃ। সুতরাং স ত্বয়া ইয়ন্তং কালং যাবৎ কৃতশ্চ; কথমিদানীং তৎস্নেহশূন্যা সতী দর্শনং ন দদাসীতি ভাবঃ।

যথা লোকঃ স্বকামোদানুভবায় গজদন্তাদিনা কাঞ্চিৎ স্ত্রীপুত্তলিকাং নির্ম্মায় তস্যা বাল্যখেলাদিকং বিধায় নির্ম্মিততাদৃশপুরুষপুত্তলিকান্তরে তাং সমর্পয়তি তদ্বদিতি সরলার্থঃ।

অতএবাত্রোপমালঙ্কারঃ। তথা দর্শনদানরূপার্থসিদ্ধয়ে তৎকারণীভূতস্নেহোপন্যাসাদর্থাপত্তির্নাম নাট্যালঙ্কারঃ। তদুক্তং দর্পণে—

"উপপত্তির্মতা হেতোরুপন্যাসোঽর্থসিদ্ধয়ে।"

"পাঞ্চালী শালভঞ্জিকা" ইতি হেমচন্দ্রঃ।

মন্দাক্রান্তা বৃত্তম্ ॥৫॥

(জ) হে কল্যাণি! তুমি কামন্দকীকে পরিত্যাগ করিতেছ কেন। হে নির্দ্দয়ে! আমার কৌপীনের উষ্ণতাই তোমার অঙ্গকে পুষ্ট করিয়াছিল।

হে মালতি! আমিই, গজদন্তনির্ম্মিত পুত্তলিকার ন্যায় শোভনবদনা তোমাকে, স্তন্যত্যাগের পর হইতে বাল্যখেলা, তাহার পর শিল্পকলাদি-

सवैक्लव्यम्। हा चन्द्रमुखि! सम्प्रति निराशास्मि संवृत्ता (१)। (भ)

अकारणस्मेरमनोहराननः (२) शिखाललाटार्पितगौरसर्षपः।
तवाङ्कशायी परिवृत्तभाग्यया मया न दृष्टस्तनयः स्तनन्धयः ॥६॥

(भ) सवैक्लव्यमिति। वैक्लव्येन शोकविह्वलतया सहेति सवैक्लव्यम्।

कथं निराशेत्याह अकारणेति। परिवृत्तभाग्यया विपर्यस्तादृष्टया मया, अकारणं यथा स्यात्तथा दृष्टकारणं विनापि, स्मेरम् ईषद्धास्ययुक्तम् अतएव मनोहरम् आननं यस्य सः। शिखायां ललाटे च अर्पितौ भूतग्रहनिवर्त्तनाय दत्तौ गौरसर्षपौ यस्य सः। स्तनौ धयति पिवतीति स्तनन्धयः स्तनपायी, अङ्कशायी क्रोड़वर्त्ती तव तनयः कश्चित् पुत्रो न दृष्टः। मम हि चिरायैव तव पुत्रदर्शनाशासीत्, किन्त्विदानीं तवैवाभावात् तत्र निराशास्मीति भावः।

अत्र तादृशतनयदर्शनाभावं प्रति परिवृत्तभाग्यत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा कारणाभावेऽपि स्मेरत्वकार्य्योदयाद्विभावना च अनयोरङ्गाङ्गिभावेन सङ्करः।

"सर्षपस्तन्तुभो गौरः सिद्धार्थो भूतनाशनः। कटुस्नेहो ग्रहघ्नश्च कण्डुघ्नो राजिकाफलः॥" इति राजनिर्घण्टः। वंशस्थविलं वृत्तम् ॥६॥

শিক্ষা করাইয়াছি, বর্দ্ধিত করিয়াছি এবং লোকমধ্যে শ্রেষ্ঠ ও গুণবান্ বরের হস্তে স্থাপন করিয়াছি। সুতরাং তোমারও, আমার উপরে মাতা হইতে সমধিক স্নেহ করা যুক্তিসঙ্গতই হইয়াছিল ॥৫॥

(ঝ) (বিহ্বলতার সহিত) হা চন্দ্রবদনে! এখন আমি নিরাশা হইয়াছি। (কারণ,)

বিনা কারণে হাস্য করায় যাহার মুখখানি মনোহর দেখা যাইবে, যাহার শিখায় ও ললাটে শ্বেত সর্ষপ বাঁধা থাকিবে এবং যে ক্রোড়ে শয়ন

(१) (सवैक्लव्यम्) चन्द्रमुखि! सम्प्रति निराशास्मि इतिमात्रः पाठः क्वचित्।

(२) अकारणस्मेरमनोहराननः। इत्यपि पाठः।

लव। भअवदि! पसीद। णीसहह्मि सम्पदं जीवणु-व्वहणे। ता इमादो गिरिसिहरादो अत्ताणं अवधुणिअ णिव्वुदा भविस्सं। तधा मे भअवदी आसिसं करेदु, जेण जम्मन्तरे वि दाव पिअसहीं पेक्खिस्सं (१)। (ञ)

काम। ननु लवङ्गिके! कामन्दक्यापि नातः परं वत्सा-वियोगेन जीवितव्यम् (२)। समस्त्वायमुत्कण्ठावेग आवयोः। किञ्च, (ट)

---

(ञ) भगवति! प्रसीद। निःसहास्मि साम्प्रतं जीवनीवहने। तदस्माद्गिरि-शिखरादात्मानमवधूय निर्वृता भविष्यामि। तथा मे भगवती आशिषं करोतु, येन जन्मान्तरेऽपि तावत् प्रियसखीं प्रेक्षिष्ये।

---

(ञ) लवेति। प्रसीद मत्प्रार्थनीयस्यानुमत्या आशीर्वादेन च प्रसन्ना भव। निःसहा अक्षमा। आत्मानं स्वदेहम्, अवधूय पातयित्वा। निर्वृता मरणेन शोकाभावे सति सुस्था। प्रियसखीं मालतीम्।

अत्र मरणकार्य्यान्वेषणाद्विरोधो नाम सन्ध्यङ्गम्—"विरोधः कार्य्यमार्गणा"मिति लक्षणात्। मालतीदर्शनाशाकरणादाशीर्नाम नाट्यालङ्कारश्च—"आशीरिष्टजनाशंसा" इति लक्षणात्।

(ट) कामेति। आवयोः तव मम च। मरण एव युक्तिमभिधातुमाह किञ्चेति।

---

করিয়া স্তন পান করিবে, তোমার এইরূপ একটী পুত্রকে আমি ভাগ্যবিপর্য্যয়বশতঃ দেখিতে পাইলাম না ॥৬॥

(ঞ) লবঙ্গিকা। ভগবতি! আপনি প্রসন্ন হউন; আমি এখন জীবন ধারণ করিতে অসমর্থ হইয়াছি। তাই, এই পর্ব্বতের শৃঙ্গ হইতে দেহকে নিপাতিত করিয়া নির্বৃতা হইব। আপনি আমাকে সেইরূপ আশীর্ব্বাদ করুন যে, জন্মান্তরেও আমি যেন প্রিয়সখীকে দেখিতে পাই।

---

(१)···जीविदुव्वहणे। ताइं इमादो···।···आसिप्पसादं···। इति पाठभेदः।

(२)···कामन्दक्यपि···जीविष्यतीति पाठान्तरम्।

সঙ্গমঃ কর্ম্মণাং ভেদাদ্ যদি ন স্যান্ন নাম সঃ (১)।
প্রাণানান্তু পরিত্যাগে সন্তাপোপশমঃ (২) ফলম্ ॥৭॥

লব। জধা তুম্মে আণাবেধ। ইত্যুত্তিষ্ঠতি। (ঠ)

কাম। সদয়ং বীক্ষ্য। বৎসে! মদয়ন্তিকে!। (ড)

(ঠ) যথা যূয়মাজ্ঞাপয়থ।

সঙ্গম ইতি। যদি কর্ম্মণাং ভেদাৎ স্বতৎকর্ম্মণাং বৈষম্যাৎ পরলোকে মালত্যা সহ সম্মেলনজনকীভূত-শুভাদৃষ্টাভাবাদিত্যর্থঃ, সঙ্গমো ন স্যাৎ পরলোকে মালত্যা সহাস্মাকং সম্মেলনং ন ভবেৎ, তদা স সঙ্গমঃ ন নাম ভবত্বিতি শেষঃ। ততো নাস্মাকং কাচিৎ ক্ষতিরিতি ভাবঃ। তর্হি কথং মরণেচ্ছা ক্রিয়ত ইত্যাহ প্রাণানামিতি। তু কিন্তু, প্রাণানাং পরিত্যাগে মরণে সতি, সন্তাপস্য মালত্যাঃ শোকানলসন্তাপস্য উপশমঃ শান্তিঃ ফলং মরণপ্রয়োজনং ভবেদ্বিতি শেষঃ। সুতরামিদানীমস্মাকং মরণমেব সর্ব্বথা শ্রেয় ইতি ভাবঃ।

অত্র 'পরলোকে' 'অস্মাকম্' 'মালত্যা সহ' ইত্যাদীনাং পদানামভাবেঽপি ন ন্যূনপদত্ব-দোষঃ, বিষাদময্যা কামন্দক্যা উক্তত্বাৎ। তৎপ্রমাণান্তরম্ ॥৭॥

(ড) কামেতি। বীক্ষ্য মরণায় গচ্ছন্তীং লবঙ্গিকাং দৃষ্ট্বা। 'বৎসে! মদয়ন্তিকে! লবঙ্গিকাং ধারয়' ইত্যন্তবাক্যোচ্চারণাৎ প্রাগেব মহাবেগাৎ মদয়ন্তিকা ব্রবীতীতি বোধ্যম্।

(ট) কামন্দকী। লবঙ্গিকে! বৎসা মালতীর বিচ্ছেদে ইহার পর কামন্দকীও জীবিত থাকিবে না। (কারণ,) তোমার ও আমার এই উৎকণ্ঠার বেগ সমানই। আরও (শুন—)

দুরদৃষ্টবশতঃ মালতীর সহিত যদি সম্মেলন না হয়, তবে না-ই হউক; কিন্তু প্রাণ পরিত্যাগ করিলে সন্তাপের নিবৃত্তিই তাহার ফল হইবে ॥৭॥

(ঠ) লবঙ্গিকা। আপনি যেমন আদেশ করেন। (এই বলিয়া উঠিল।)

(১) যদি ন স্যান্নু নাম নঃ। ইতি পাঠান্তরম্। (২) সন্তাপোপরম ইত্যপি পাঠঃ।

मद। किं आणवेध अग्गेसरी होहि (१) त्ति। ता जाव (२) अवहिदह्मि। (ढ)

लव। सहि! पसीद। विरम एत्तो अत्तणो वावादणादो। मा एदं (३) जणं विसुमरेसि। (ण)

मद। सकोपमिव। अवेहि। णह्मि दे वसंवदा। (त)

(ढ) किमाज्ञापयथ अग्रेसरी भवेति। तद् यावदवहितास्मि।

(ण) सखि! प्रसीद। विरम एतस्मादात्मनो व्यापादनात्। मा एतं जनं विस्मरसि।

(त) अपेहि। नास्मि ते वशंवदा।

(ढ) मदेति। अग्रेसरी मरणे अग्रवर्त्तिनी। अवहितास्मि अग्रे मरणे सावधानास्मि।

"सङ्गमः कर्म्मणां भेदा"दित्याद्यै तदन्तसन्दर्भे कर्त्तव्यस्य मरणस्य कथनात् ग्रथनं नाम निर्वहणसन्धेरङ्गम्—"उपन्यासस्तु कार्य्याणां ग्रथन"मिति लक्षणात्।

(ण) लवेति। एतं जनं मां न विस्मरसि न विस्मर। अग्रे त्वं न म्रियस्व तथात्वे तवापि शोकानुभवावश्यम्भावात्, किन्तु युगपदेव वयं म्रियामह इति भावः।

(त) मदेति। अपेहि दूरं गच्छ। वशंवदा अधीना नास्मि। येन तव वाक्य- ·मनुसरामीति भावः। एतेनाग्र एव मया मर्त्तव्यमिति ध्वनितम्।

(ড) কামন্দকী। ( দয়ার সহিত দৃষ্টিপাত করিয়া ) বৎসে! মদয়ন্তিকে!।

(ঢ) মদয়ন্তিকা। কি আদেশ করিতেছেন, 'তুমি আগে যাও' ইহা?। আমি ত ( সে বিষয়ে ) একাগ্রচিত্ত হইয়াই আছি।

(ণ) লবঙ্গিকা। সখি! প্রসন্ন হও; এই আত্মহত্যা হইতে বিরত হও। এই ব্যক্তিকে বিস্মৃত হইও না।

(१) अग्गेसरी होदु इति क्वचित् पाठः। (२) ता जाव इति क्वचिन्नास्ति।
(३) माअ एअं इति पाठोऽपि दृश्यते।

काम। स्वगतम्। हन्त! निश्चितं वराक्या। (थ)

मद। स्वगतम्। णाह! मअरन्द! णमो दे (१)। (द)

लव। भअवदि! अअं ज्जेव्व महुमदीसोत्तसन्दाणिद-पवित्तमेहलो महीहरविडङ्को। (ध)

काम। कृतमिदानीं प्रस्तुतान्तरायेण। (न)

सर्वाः पतितुमिच्छन्ति।

(द) नाथ! मकरन्द! नमस्ते।

(ध) भगवति! अयमेव मधुमतीस्रोतःसन्दानितपवित्रमेखलो महीधरविटङ्कः।

(थ) कामेति। वराक्या दीनया मदयन्तिकया, निश्चितं मरणमित्यर्थः। एतेन महायोगिनी त्रिकालज्ञा कामन्दकी सर्वमेव विषयं यथायथं पश्यन्त्यपि आत्मगोपनायैव साधारणवद्व्यवहरतीति बोध्यम्।

(द) मदेति। मकरन्दाय दत्तात्मतया तदन्तिके मरणानुमतियाचनार्थं मरणकाले स्मरणात् जन्मान्तरेऽपि तल्लाभार्थञ्च नमस्कार इति ज्ञेयम्।

(ध) लवेति। मधुमत्याख्याया नद्याः स्रोतसा सन्दानिता बद्धा संसृष्टा, पवित्रा मेखला नितम्बदेशो यस्य सः महीधरस्य पर्व्वतस्य विटङ्कं कपोतपालिका ( পায়রার খোপ इति यस्य प्रसिद्धिः ) तत्प्रदेश इत्यर्थः। अत्रैव पताम इति भावः।

(ত) মদয়ন্তিকা। ( কোপের সহিতই যেন ) দূর হও; আমি তোমার অধীন নহি।

(থ) কামন্দকী। (স্বগত) হায়! বালিকা মরণই নিশ্চয় করিয়াছে।

(দ) মদয়ন্তিকা। ( স্বগত ) নাথ! মকরন্দ! আপনাকে নমস্কার করি।

(ধ) লবঙ্গিকা। মধুমতী নদীর স্রোত, যাহার নিতম্বদেশ পবিত্র করিয়া চলিয়াছে, এই সেই পর্ব্বতের পায়রার খোপ।

(१) णमो दे णमो इति भिन्नः पाठः।

নেপথ্যে। আশ্চর্য্যমাশ্চর্য্যম্ (১)। (প)

ব্যতিকর ইব ভীমস্তামসো বৈদ্যুতশ্চ
ক্ষণমুপহতচক্ষুর্বৃত্তিরুদ্ভূয় শান্তঃ।

কাম। বিলোক্য সাদ্ভুতহর্ষম্। (ফ)

কথমিহ মম বৎসস্তৎ কিমেতৎ—

প্রবিশ্য মকরন্দঃ। ... ... ... কিমন্যৎ,

প্রভবতি হি মহিম্না স্বেন যোগীশ্বরীয়ম্ (২) ॥৮॥

(ন) কামেতি। প্রস্তুতস্য প্রকৃতস্য মরণস্য, অন্তরায়েণ বিঘ্নাচরণেন, কৃতম্ অলম্। ইদানীমিতঃ পতিত্বা সর্ব্বা এব বয়ং ম্রিয়ামহে ইতি ভাবঃ।

অত্র বিসর্পো নাম নাট্যালঙ্কারঃ—"বিসর্পো যৎ সমারব্ধং কর্ম্মানিষ্টফলপ্রদম্।" ইতি লক্ষণাৎ।

(প) নেপথ্য ইতি। অকস্মাদুপস্থিতং তেজোমণ্ডলং তন্নির্ব্বাণঞ্চাবলোক্য নেপথ্যে কশ্চিদ্বদতীত্যর্থঃ।

(ফ) কামেতি। বিলোক্য আগচ্ছন্তং মকরন্দম্ অকস্মাদুপস্থিততিরোভূতং তেজোমণ্ডলঞ্চ দৃষ্ট্বা।

---

(ন) কামন্দকী। এখন প্রস্তাবিত বিষয়ের বিঘ্ন করিবার প্রয়োজন নাই।

( সকলে পড়িতে ইচ্ছা করিল। )

(প) নেপথ্যে। আশ্চর্য্য! আশ্চর্য্য!

অন্ধকার ও বিদ্যুতের মিশ্রণের ন্যায় ভয়ঙ্কর তেজঃপুঞ্জ, নয়নের বৃত্তি প্রতিহত করিয়া, ক্ষণকালের মধ্যেই উৎপন্ন হইয়া আবার নিবৃত্তি পাইয়াছে।

(ফ) কামন্দকী। ( দেখিয়া বিস্ময় ও হর্ষের সহিত )

---

(১) ক্বচিৎ দ্বিরুক্তির্নাস্তি। (২)...যোগীশ্বরীয়মিত্যপি পাঠঃ।

नेपथ्ये । कथमतिदारुणो जनसम्मर्द्दो वर्त्तते (१) । (ब)

मालत्यपायमधिगम्य विरक्तचेताः
सांसारिकेषु विषयेषु च जीविते च (२) ।
निश्चित्य वह्निपतनाय सुवर्णविन्दु-
मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥८॥

कथमिति । इह अस्मिन् स्थाने, मम वत्सो मकरन्दः, कथम्, दुर्गमत्वात् केन प्रकारेणागतः । तदेतत् दृष्टं तेजोमण्डलञ्च किं कुत आगतम् । सहसा प्रविश्य मकरन्दः, 'तत्किमेत'दितिमावस्नुत-कामन्दकीप्रश्नस्योत्तरमाह किमन्यदिति ।

अन्यत् पुनः किं किमपि नेत्यर्थः । इयं हि काचिद्योगीश्वरी स्वेन महिम्ना प्रभवति । तदीयमिदं तेजोमण्डलमिति भावः । सौदामिन्यास्तेजोमण्डलस्य परिचितपूर्व्वत्वादयं मकरन्दस्य निर्णय इति बोध्यम् ।

अतएवात्र निर्णयो नाम निर्वहणसन्धेरङ्गम् ।—निर्णयः पुनः । अनुभूतार्थ-कथनम्···।" इति दर्पणलक्षणात् ।

मालतीमाधवौ समादायागच्छन्त्याः सौदामिन्यास्तेजोमण्डलमिति दूरतो मालती-माधवावागच्छन्तौ विलोक्य सर्वा एव पतनाद्विरता इति च प्रत्येतव्यम् ॥८॥

(ब) नेपथ्य इति । नेपथ्ये कश्चिद्वनेचरो वदतीति परवर्त्तिमाधववाक्यादवगन्तव्यम् विषादे कथंशब्दः । जनसम्मर्द्दः दर्शनार्थागतलोकसङ्घर्षः ।

मालत्यपायमिति । भूरिवसुर्मालत्याः पिता, मालत्या अपायं विनाशम् अधिगम्य

---

এখানে আমার বৎস মকরন্দ কি প্রকারে আসিল ? তবে এ কি ? ( এ তেজঃপুঞ্জ কোথা হইতে আসিল ? । )

মকরন্দ । ( প্রবেশ করিয়া )·········আর কি । এই যোগীশ্বরী স্বকীয় মাহাত্ম্যে প্রভাব বিস্তার করিয়াছেন ॥৮॥

(ব) নেপথ্যে । হায় ! অতি ভয়ঙ্কর লোকসঙ্ঘর্ষ হইয়াছে ।

---

(१)···जनावमर्द्दः सम्प्रवर्त्तते इति पाठभेदः । (२) जीवितेषु इति क्वचित् पाठः ।

मदयन्तिकालवङ्गिके । झत्ति मालदीमाहवाणं दंसणमहूसवो, (१) झत्ति अच्चाहिदं अ । (भ)

कामन्दकीमकरन्दौ । दिष्ट्या, कष्टं भोः ! आश्चर्य्यम् (२) । (म)

---

(भ) झटिति मालतीमाधवयोर्दर्शनमहोत्सवः, झटिति अत्याहितञ्च ।

ज्ञात्वा सांसारिकेषु विषयेषु आयव्ययादिषु च जीविते आत्मजीवने च विरक्तचेताः निवृत्तचित्तः सन्, वह्निपतनाय मरणार्थमग्नौ प्रवेशाय निश्चित्य, सुवर्णविन्दुं महाकालकालप्रियनाथापरपर्य्यायं महादेवम्, महातीर्थत्वात्तदायतनमित्यर्थः, अभ्येति आगच्छति । इति हेतोरधुना वयं हताः स्मः । प्रतिपालकभूरिवसोरपि वियोगादिति भावः ।

वसन्ततिलका वृत्तम् ॥९॥

(भ) मदेति । झटिति हठात् । अत्याहितं महाभीतिः । भूरिवसोर्वह्निपतनोद्यमेनेति भावः । दूरादागच्छन्तौ मालतीमाधवौ विलोक्य 'मालत्यपाय'मित्यादि वाक्यञ्च श्रुत्वा किलोक्तिरियम् ।

(म) कामेति । दिष्ट्या भाग्येन पुनर्मालतीमाधवयोर्दर्शनम् । कष्टं भूरिवसोर्वह्निपतनोद्यमश्रवणात् । आश्चर्य्यं तयोरभावनीययोर्युगपदुपस्थितेरिति च भावः ।

---

ভূরিবসু, মালতীর বিনাশবৃত্তান্ত জানিয়া, সাংসারিক বিষয় ও জীবনের প্রতি বিরক্তচিত্ত হইয়া, অগ্নিতে পতন নিশ্চয় করিয়া, সুবর্ণ-বিন্দুর ( কালপ্রিয়নাথের ) নিকট আসিতেছেন। এজন্য এখন আমরা মরিলাম ॥৯॥

(ভ) মদয়ন্তিকা ও লবঙ্গিকা। হঠাৎ মালতী ও মাধবের দর্শন-মহোৎসব, আবার হঠাৎ মহাবিপদ উপস্থিত!

(ম) কামন্দকী ও মকরন্দ। ভাগ্যও বটে, হায়! কষ্টও বটে, আশ্চর্য্যও বটে।

---

(१) दंसणब्भुदओ इति पाठभेदः ।

(२) ( सहर्षं ) हा धिक् कष्टमाश्चर्य्यम् इति पाठान्तरम् ।

किमयमसिपत्र-चन्दनरसच्छटासार-युगपदवपातः ।
अनलस्फुलिङ्गकलितः किमयमनभ्रः सुधावर्षः ॥१०॥
सञ्जीवनौषधि-विषव्यतिकरमालोकतिमिरसम्भेदम् ।
अद्य विधिरशनिशशधरमयूखसंवलनमनुकुरुते ॥११॥

किमिति । अयं भूरिवसोर्वह्निपतनश्रवणेन सह मालतीमाधवदर्शनमहोत्सवः, असयः कृपाणा इव पत्राणि सुधारत्वात्, अथवा असय एव पत्राणि इत्यसिपत्राणि, तथा चन्दनरसच्छटा चन्दनद्रवसमूहश्च, तेषामासारो धारावृष्टिः, तस्य युगपदेकदा अवपातः पतनं किम् । तथा अयम्, अनलस्फुलिङ्गकलितः वह्निकणसंयुक्तः, अनभ्रो मेघरहितः, सुधावर्षः अमृतवृष्टिः किं भवति । तथा च यथा असिपत्रचन्दनरसयोर्युगपदवपाते युगपदेव वेदना सुखञ्चानुभूयते । तथा भूरिवसुवह्निपतनश्रवण-मालतीमाधवदर्शनयोः युगपदुपस्थितत्वाद्युगपदेव वेदना सुखञ्चानुभूयते । यथा वा वह्निकणमिश्रसुधावृष्टौ युगपदेव देहदाहशैत्ययोरनुभवः, तथा भूरिवसुवह्निपतनश्रवण-मालतीमाधवदर्शनयोर्यौगपद्येऽपि युगपदेव मनःसन्तापसुखयोरनुभवो जात इति सरलार्थो भावार्थश्च ।

अत्रोपमेये उपमानसंशयात् "किं तारुण्यतरोरिय"मित्यादिदर्पणोदाहृतवत् शुद्धसन्देहोऽलङ्कारः । संशयो नाम नाट्यलक्षणञ्च—"संशयो ज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः ।" इति लक्षणात् । केचित्तु किंशब्दस्योत्प्रेक्षावाचकतामङ्गीकृत्य क्रियोत्प्रेक्षामाहुः ॥१०॥

सञ्जीवनौषधीति । विधिर्विधाता अस्माकं दैवं वा, अद्य, भूरिवसोर्वह्निपतनश्रवणं मालतीमाधवयोर्दर्शनञ्च युगपदेव सङ्घटयन्नित्यर्थः, सञ्जीवनौषधिविषयोर्व्यतिकरं संयोगम्, आलोकतिमिरयोः दीप्त्यन्धकारयोः सम्भेदं सम्मेलनम्, तथा अशनिशशधरमयूखयोः वज्रचन्द्रकिरणयोः संवलनं सम्मिश्रणम् अनुकुरुते उपमास्थलं करोतीव । भूरिवसुवह्निपतनश्रवणमालतीमाधवदर्शनयोरपि सञ्जीवनौषधिविषव्यतिकरादिवत् युगपदेव सुखदुःखोभयजनकत्वादिति भावः ।

---

এটা কি একদাই, অসিপত্র ও চন্দনজলের ধারাবৃষ্টি ! কিংবা এটা বিনা মেঘে অগ্নিস্ফুলিঙ্গের সহিত অমৃতবৃষ্টি ॥১০॥

नेपथ्ये। हा ताद! विरम, दंसणुसम्रङ्गि दे वम्रणकमलस्स, पसीद, सम्भावेहि मं। कहं मम कारणादो समत्यलोम्रालोम्रान्तराल-विक्खाद-णिम्मल-कुलेक्क-मङ्गल-पदीवभूदं म्रत्ताणम्ं परिच्चम्रसि। मए उण म्रणज्जाए णिरणुक्कोसा तुम्हे त्ति सम्भाविदं म्रासि (१)। (य)

(य) हा तात! विरम, दर्शनोत्सुकाक्षि ते वदनकमलस्य, प्रसीद, सम्भावय माम्। कथं मम कारणात् समस्तलोकालोकान्तराल-विख्यात-निर्म्मल-कुलैक-मङ्गलप्रदीपभूत-मात्मानं परित्यजसि। मया पुनरनार्य्यया निरनुक्रोशा यूयमिति सम्भावितमासीत्।

अत्र प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः। अभिप्रायो नाम नाट्यलक्षणञ्च—"अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना।" इति लक्षणात्।

अनयोरार्य्या जातिः ॥११॥

(य) नेपथ्य इति। विरम वह्निपतनोद्यमादिति शेषः। सम्भावय दर्शनदानेनोल्लासय। समस्तं सकलं यत् लोकालोकस्य पृथिवीप्राचीरभूतस्य लोकालोकपर्वतस्य अन्तरालं मध्यदेशः, तत्र विख्यातम् उत्कृष्टतया प्रथितं निर्म्मलं निर्द्दोषं यत् कुलं वंशः, तस्य मङ्गलप्रदीपभूतं मङ्गलदीपतुल्यम्, आत्मानं स्वदेहम्। अनार्य्यया अशिक्षितया बुद्धिशून्यया, यूयं निरनुक्रोशाः ममान्वेषणाभावात् निर्द्दया इतीत्थं सम्भावितं मनसा स्थिरीकृतम् आसीत्। इदानीन्तु मम शोकेनैव तव प्राणत्यागोद्यमश्रवणात् मां प्रति त्वत्तुल्यो दयावान् कश्चिदपि नास्तीति सम्भाव्यत इति भावः।

अत्रानार्य्ययेत्यनेनात्मनः परिवादकरणात् परिभाषणं नाम निर्वहणसन्ध्यङ्गम्—

অদ্য বিধাতা, সঞ্জীবনী ওষধি ও বিষের সম্মিশ্রণ, আলোক ও অন্ধকারের সম্মেলন এবং বজ্র ও চন্দ্রকিরণের সংযোগ—ইহাদের অনুকরণ করিতেছেন ॥১১॥

(१)···उस्सुअच्छि।···अन्तरालविक्खाम···। अणज्जाए णिरणुक्कोसाए तुम्हे परिच्चत्ता इति भिन्नः पाठः।

কাম। হা বৎসে! মালতি! (১)।
জন্মান্তরাদিব পুনঃ কথমপি লব্ধাসি যাবদয়মপরঃ (২)।
উপরাগ ইব শশিকলাং কবলয়িতুমুপস্থিতোঽনর্থঃ ॥১২॥

"পরিবাদকৃতং বাক্যং বদন্তি পরিভাষণ"মিতি লক্ষণাৎ। তথা সমস্তেত্যাদিনা বহ্নিপতননিবারণরূপার্থসাধনাৎ প্রসিদ্ধির্নাম নাট্যলক্ষণঞ্চ—"প্রসিদ্ধির্লোকবিখ্যাতৈ-র্বাক্যৈরর্থপ্রসাধন"মিতি লক্ষণাৎ।

জন্মেতি। হে বৎসে! মালতি! ত্বং জন্মান্তরাদিব পুনর্লাভে অসম্ভাব্যমানত্বাৎ লোকান্তরাদিব কথমপ্যতিকষ্টেন যাবৎ পুনর্লব্ধাসি, তাবদেব অয়মপরঃ অনর্থঃ ত্বৎপিতু-র্ভূরিবসোঃ বহ্নিপতনীয়মরূপা বিপৎ, উপরাগো রাহুঃ শশিকলামিব ত্বাং কবলয়িতুং গ্রসিতুম্ উপস্থিতঃ। কিমিদানীং করণীয়মিতি ভাবঃ।

অনীপমালঙ্কার উৎপ্রেক্ষয়াঙ্গভূতয়া সঙ্কীর্য্যতে।

"উপরাগো রাহুগ্রস্তার্কচন্দ্রয়োঃ। বিগানে দুর্নয়ে রাহা"বিতি হেমচন্দ্রঃ।

আর্য্যা জাতিঃ ॥১২॥

---

(য) নেপথ্যে। হা পিতঃ! বিরত হউন, আমি আপনার মুখকমল দেখিবার জন্য উৎকণ্ঠিত হইয়াছি, প্রসন্ন হউন, (দর্শন দিয়া আমাকে) আশ্বস্ত করুন। লোকালোকপর্ব্বতের সমস্ত অভ্যন্তরদেশে যে নির্ম্মল বংশ বিখ্যাত রহিয়াছে, তাহার একমাত্র মঙ্গলপ্রদীপস্বরূপ আত্মাকে আমার জন্য পরিত্যাগ করিতেছেন কেন। আমি অশিক্ষিতা, তাই আপনাদিগকে নির্দ্দয় বলিয়া মনে করিয়াছিলাম।

কামন্দকী। হা বৎসে! মালতি!

জন্মান্তর হইতেই যেন যেই তোমাকে কোন রকমে আবার লাভ করিলাম; তখনই রাহু যেমন চন্দ্রকলাকে গ্রাস করে, সেইরূপ এই আর এক বিপদ তোমাকে গ্রাস করিবার জন্য উপস্থিত হইল ॥১২॥

---

(১) ক্বচিৎ মালতীতি পাঠো নাস্তি। (২) ভীরু! যাবদয়ং ইত্যপি পাঠঃ।

इतरे (१)। हा पिअसहि!। (र)

ततः प्रविशति प्रमुग्धां मालतीं धारयन् माधवः। *

माधवः। कष्टं भोः! कष्टम्।

एषा प्रवासं कथमप्यतीत्य
याता पुनः संशयमन्यथैव।
को नाम पाकाभिमुखस्य जन्तो-(२)
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥१२॥

(र) हा प्रियसखि!।

* तत इति। प्रमुग्धां भूरिवसीर्वाक्यपतनीयमश्रवणात् तच्छोकेन मूर्च्छिताम्।

एषेति। एषा मालती कथमप्यतिकष्टेन प्रवासं देशान्तरावस्थानदुःखं कपालकुण्डलाक्रान्ततया जीवनसंशयमित्यर्थः, अतीत्य सौदामिन्याः कृपया अतिक्रम्य अन्यथैव अन्यप्रकारेणैव पितृशोकेनैव संशयं जीवनमरणयोः सन्देहं याता प्राप्ता। तथाहि, को नाम जनः, जन्तोः प्राणिनः पाकाभिमुखस्य परिणामोन्मुखस्य फलोत्पादनप्रवृत्तस्य, दैवस्य नियतेः, द्वाराणि प्रसरणमार्गान् पिधातुम् आच्छादयितुम् अवरोद्धुम् ईष्टे प्रभवति शक्नोति, अपि तु कोऽपि नेत्यर्थः; तथा च दैववशादेवेयं दशा समुपस्थितेति नास्ति प्रतीकारोपाय इति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, स चार्थापत्त्या सङ्कीर्य्यते।

फलोत्पादनप्रवृत्तेः पूर्वमवगतस्य दुर्दैवस्य स्वस्त्ययनादिना शान्तिरपि विधातुं शक्यते, फलोत्पादनप्रवृत्तस्य तु कथमपि नेति प्रतिपादनार्थं पाकाभिमुखस्येत्युक्तम्।

(র) মদয়ন্তিকা ও লবঙ্গিকা। হা প্রিয়সখি!।

* তাহার পর মূর্চ্ছিত মালতীকে ধারণ করিয়া মাধবের প্রবেশ।

মাধব। কষ্ট, হায়! কি কষ্ট।

(१) लवङ्गिका इति पाठान्तरम्। (२) जन्तुरिति प्रथमान्तः पाठः क्वचित्।

मक। (१) सखे! अथ क्व सा योगिनी ?।

माधवः।

श्रीपर्वतादिहाहं सत्वरमपतं तयैव सह सद्यः।

करुणवनेचरवचनादन्तरितां (२) तां न पश्यामि ॥१४॥

अस्य द्वितीयार्द्धमुत्तररामचरितसप्तमाङ्केऽपि भागीरथ्या पठितम्।

इन्द्रवज्रा वृत्तम् ॥१३॥

श्रीपर्वतादिति। अहं तया योगिन्यैव सह, श्रीपर्वतात् इह अस्मिन् स्थाने सत्वरम् अपतम् आगच्छम्। इतो मध्ये करुणं सशोकं यत् वनेचरस्य वचनं "मालत्यपाय-मधिगम्य" इत्यादि कस्यचित् वनचारिणो जनस्य वाक्यम्, तस्मात् तच्छ्रवणाद्धेतोः सद्यस्तत्-क्षणात् अन्तरितामन्तर्हितां तां योगिनीं न पश्यामि। आश्चर्य्यमेतदिति भावः।

अत्र यतोऽन्तरिता अतस्तां न पश्यामीति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। तथा परार्द्धान्वितस्य सद्य इत्येकपदस्य पूर्वार्द्धे पाठादर्द्धान्तरैकपदतादोषः, स च, सद्य इत्यस्योपा-दानावश्यकताऽभावात्तत्र 'वयस्य!' इति सम्बोधनान्तपाठेनैव समाधेयः।

आर्य्या जातिः ॥१४॥

এই মালতী, দেশান্তরে থাকার দুঃখ, কোন রকমে অতিক্রম করিয়া, আবার অন্য রকমে জীবন সংশয় প্রাপ্ত হইলেন। কোন্ ব্যক্তি প্রাণি-গণের সুখ বা দুঃখ উৎপাদন করিতে প্রবৃত্ত দৈবের দ্বার অবরোধ করিতে সমর্থ হয়? ॥১৩॥

মকরন্দ। সখে! সে যোগিনী এখন কোথায়?।

মাধব। আমি শ্রীপর্ব্বত হইতে এখানে তাঁহারই সহিত সত্বর আসিতেছিলাম; হঠাৎ তিনি বনচরের করুণ বাক্য শুনিয়া অন্তর্হিত হইয়া গেলেন, আর তাঁহাকে দেখিতেছি না ॥১৪॥

(१) अद्यसोपस्त्य माधवं प्रति इत्यधिकः पाठः क्वचित्।

(२) अनन्तरं इति पाठान्तरम्।

कामन्दकीमकरन्दौ। महाभागे! पुनः परित्रायस्व नः (१)। किमर्थमन्तर्हितासि।

मदयन्तिकालवङ्गिके। सहि! मालदि! णं भणामि सहि! (२) मालदि त्ति। सोत्कण्ठम् (३)। भअवदि! परित्ताहि। चिरणिरुद्धणिस्सासणिच्चलं (४) से हिअअं। हा अमच्च! हा पिअसहि! तुह्मे दुवेवि परप्परावसाणस्स कारणं जादा। (ल)

(ल) सखि! मालति! ननु भणामि सखि! मालतीति। भगवति! परित्रायस्व। चिरनिरुद्धनिश्वासनिश्चलमस्या हृदयम्। हा अमात्य! हा प्रियसखि! द्वावपि युवां परस्परावसानस्य कारणं जातौ।

(ल) मदेति। मालती सचेतन्या न वेति ज्ञानाय नन्वित्यादिवाक्यमापेक्षिकदीर्घस्वरेण पुनरुच्चारितमिति बोध्यम्। चिरं निरुद्धौ मोहेन बहुकालमवरुद्धौ निश्वासौ तेन निश्चलं निष्पन्दम्। परस्परावसानस्य अन्योन्यमरणस्य। मालत्याः शोकेन भूरिवसोर्मरणप्रसङ्गात्, तच्छोकेन च मालत्या मोहप्राप्तेरिति भावः।

कारणमित्यस्य विधेयत्वेन प्राधान्यात् क्लीवैकत्वप्रसक्तावपि "उद्देश्यविधेययोरुद्देश्यवचनलिङ्गमाख्यातस्ये"ति न्यायादुद्देश्यतया युवामित्यनुसारादेव जाताविव द्वित्वं पुंस्त्वञ्च। अत्राख्यातस्य प्रधानक्रियाया इत्यर्थः।

কামন্দকী ও মকরন্দ। মহাভাগে! আবার আমাদিগকে রক্ষা করুন। অন্তর্হিত হইলেন কেন।

(ল) মদয়ন্তিকা ও লবঙ্গিকা। সই মালতি! ওলো! আমি ডাকিতেছি সই মালতি!। (উৎকণ্ঠার সহিত) ভগবতি! পরিত্রাণ করুন। বহুকাল পর্য্যন্ত নিশ্বাস অবরুদ্ধ থাকায় উহার হৃদয় নিষ্পন্দ হইয়া

(१) (सप्रणयमाकाशे) महाभागे! पुनस्त्रायस्व…। इति पाठान्तरम्।

(२) क्वचित् 'सहि' इति पुनः पाठो नास्ति। (३) सोत्कम्पम् इत्यपि पाठः।

(४)…णिच्चलं इति पाठभेदः।

काम । हा वत्से ! मालति ! ।

माधवः । हा प्रिये ! ।

मक । हा प्रियसखि ! ।

सर्वे मोहमुपगम्य पुनः संज्ञां लभन्ते ।

काम । ऊर्द्ध्वमवलोक्य । तत् किमेष पाट्यमानादिवाम्बुदादम्बुनिवहः परिस्खलन्नस्मान् प्रीणयति (१) । (ब)

माधवः । सोच्छ्वासम् । अये ! प्रत्यापन्नचेतना (२) मालती । तथाह्यस्याः—

(ब) कामेति । पाट्यमानात् केनचिद्विदार्य्यमाणात् । अम्बुदात् मेघात् । एतेन मेघजलेनैव सर्व्वेषां संज्ञालाभ इति बोध्यम् ।

গিয়াছে। হা অমাত্য! হা প্রিয়সখি! তোমরা দুইজনেই পরস্পর মৃত্যুর কারণ হইলে।

কামন্দকী। হা বৎসে! মালতি!।

মাধব। হা প্রিয়ে!।

মকরন্দ। হা প্রিয়সখি!।

( সকলেই মূর্চ্ছিত হইয়া আবার চৈতন্য লাভ করিল। )

(ব) কামন্দকী। ( উপরের দিকে চাহিয়া ) মেঘগুলিকে কেহ যেন বিদীর্ণ করিয়া দিতেছে, তাহা হইতেই এই জলধারা পতিত হইতে থাকিয়া আমাদিগকে সচৈতন্য করিয়াছে কি ?।

মাধব। ( আশ্বাসের সহিত ) ওহে! মালতী চৈতন্য লাভ করিয়াছেন। তাহার প্রমাণ—

(१)···परिस्रवन्···इति भिन्नः पाठः । (२) प्रत्यापन्नचेतनेव इति क्वचित् पाठः ।

भवति विततश्वासा नासा प्रवृत्तपयोधरं (१)
हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम्।
तदनु वदनं मूर्च्छाच्छेदात् प्रसादि विराजते
परिगतमिव प्रारम्भेऽह्नः श्रिया सरसीरुहम् ॥१५॥

भवतीति। नासा नासिका, वितती निरोधानन्तरत्वात् विस्तृतभावेन वहन् श्वासो यस्यां सा तादृशी भवति। हृदयं वक्षोऽपि, प्रवृत्तौ श्वासप्रश्वासाभ्यां स्पन्दितौ पयोधरौ स्तनौ यस्मिन् तत्तथोक्तं भवति; चक्षुश्च स्निग्धं सत् निजप्रकृतौ स्वकीयस्वभावे स्थितम्। मूर्च्छाकाले तु रूक्षमासीदिति भावः। तदनु ततः परम्, वदनं मुखं कर्त्तृ, मूर्च्छाच्छेदात् मोहापगमाद्धेतोः, अह्नः प्रारम्भे दिवसोत्पत्तौ प्रातःकाले, श्रिया स्वाभाविकशोभया परिगतं परिव्याप्तं सरसीरुहं पद्ममिव प्रसादि प्रसन्नं मोहमालिन्यापगमेन निर्म्मलं सत् विराजते शोभते। एभिर्लिङ्गैः प्रत्यापन्नचेतनेत्यनुमीयत इति भावः।

अत्र भवतीत्येकक्रियया प्रस्तुतानां नासादीनां कर्त्तृतयाभिसम्बन्धात्तुल्ययोगिता, तथा प्रत्यापन्नचेतनत्वानुमानकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयः, तदुभयकृतविच्छित्ति-वशात् 'मालती प्रत्यापन्नचेतना विततश्वासकृन्नासादिमत्त्वात्' इति ज्ञानादनुमानालङ्कारः। तथा प्रकृतिशब्देनैव स्वभावाभिधानात् निजपदमधिकमित्यधिकपदतादोषः, स च 'चक्षुः पुनः प्रकृतौ स्थित'मिति पाठेन समाधेयः।

तथा प्राप्तचैतन्यस्य स्थिरीकरणात् कृतिर्नाम सन्ध्यङ्गम्—"लब्धार्थागमनं कृति"रिति लक्षणात्।

दृष्टान्तो नाम नाट्यलक्षणञ्च। तदुक्तं दर्पणे—

"दृष्टान्तो यस्तु पक्षार्थसाधनाय निदर्शनम्।"

हरिणी वृत्तम् ॥१५॥

ইহার নাসিকা হইতে বিস্তৃত শ্বাস নির্গত হইতেছে, হৃদয়ের স্তনযুগল কাঁপিতেছে, স্নিগ্ধনয়ন প্রকৃতিস্থ হইয়াছে, তাহার পর, প্রাতঃকালে দিবস-

(१) प्रसन्नपयोधरं इति पाठान्तरम्।

नेपथ्ये। अविगणय्य नृपं सहनन्दनं
चरणयोर्नतमग्निचये (१) पतन्।
सपदि भूरिवसुर्विनिवर्त्तितो
मम गिरा गुरुसम्मदविस्मयः॥१६॥

माधवमकरन्दौ। ऊर्द्ध्वमवलोक्य सविस्मयम् (२)। भगवति! दिष्ट्या वर्द्धसे। (ग)

अविगणय्येति। भूरिवसुः, चरणयोर्नतं वह्निप्रवेशनिवारणाय पादयोः पतितं नन्दनेन तदाख्येन नर्म्मसुहृदा सहेति सहनन्दनं नृपं राजानम् अविगणय्य शोकावेगादवमत्य तयोरनुनयवचनमगृहीत्वेत्यर्थः, अग्निचये वह्निराशौ पतन् प्रविशन् सन् सपदि तत्क्षणात् मम गिरा 'वह्निप्रवेशं मा कुरु, जीवति ते मालती, सुस्था च मयानीता' इत्येवं मम वचनेन, गुरू महान्तौ सम्मदविस्मयौ आनन्दाश्चर्य्ये यस्य स तथाभूतः सन् विनिवर्त्तितो वह्निपतनान्निवारितः। इयतो युवमप्याश्वसितेति भावः। नेपथ्यात् सौदामिन्या उक्तिरियम्।

अत्र मम गिरेति साहङ्कारोक्त्या गर्वो नाम नाट्यालङ्कारः—"गर्वोऽवलेपजं वाक्य"मिति लक्षणात्।

द्रुतविलम्बितं वृत्तम्॥१६॥

(ग) माधव इति। भगवतीति कामन्दक्याः सम्बोधनम्।

---

শোভায় পরিব্যাপ্ত পদ্মের ন্যায় মুখমণ্ডল, মূর্চ্ছাভঙ্গ হওয়ায় প্রসন্ন হইয়া শোভা পাইতেছে॥১৫॥

নেপথ্যে। ভূরিবসু, নন্দনের সহিত নিজ চরণে অবনত রাজাকে গণনা না করিয়া অগ্নিরাশিতে পতিত হইতেছিলেন; কিন্তু আমার আশ্বাসবাণী, হঠাৎ তাঁহাকে নিবৃত্ত করিয়াছে এবং তাঁহার গুরুতর আনন্দ ও বিস্ময় জন্মাইয়া দিয়াছে॥১৬॥

---

(१) अग्निमुखे इति पाठभेदः।

(२) क्वचित् 'ऊर्द्ध्वमवलोक्य सविस्मयम्' इति पाठो नास्ति।

सा योगिन्यम्बरतो विघटितजलदाऽभ्युपैत्ययं यस्याः (१) ।
वागमृतजलासारो जलदजलासारमतिशेते ॥१७॥

सेति । सा आवयो रक्षाकर्त्री योगिनी, विघटितजलदा अपसारितमेघा सती, अम्बरात् आकाशात् अभ्युपैति अस्माकमन्तिकमागच्छति । यस्या योगिन्याः, अयम् इदानीमेव श्रुतः, वागमृतजलासारः अविगणय्येत्यादिवचनामृतरसधारासम्पातः जलदजलासारं मेघजलधारासम्पातम् अतिशेते उपकारविषये अतिक्रामति । तेनैव सर्वेषामेवास्माकमाश्वासनादिति भावः ।

अत्रातिशेत इत्यनेनोपमानादुपमेयस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः, स च वागेवामृतजलमिति निरङ्गकेवलरूपकेण सङ्कीर्य्यते । तथा जलदशब्दस्य जलासारशब्दस्य च द्विरुक्ततया पुनरुक्तत्वदोषद्वयम् । तेन

"सा योगिन्यम्बरतो विघटितमेघाभ्युपैत्ययं यस्याः ।
वागमृतरसासारो जलदजलधारामतिशेते ॥"

इति पाठान्तरयोः समाधानम् । तच्छब्देन पूर्वानुभूतोपस्थापनात् परवर्त्तियच्छब्दस्य चोत्तरवाक्यगतत्वेन तत्तच्छब्दानपेक्षणात् न वाक्यगतविधेयाविमर्शदोषः । अयं यस्या इति परार्द्धान्वितस्य पूर्वार्द्धे पाठादपि नार्द्धान्तरैकपदतादोषः, तादृशैकपदपाठ एव तद्दोषाङ्गीकारात् । अत्र उपगूहनं नाम निर्वहणसन्ध्यङ्गञ्च । तदुक्तं दर्पणे—

"···तद्भवेदुपगूहनम् । यत् स्यादद्भुतसम्प्राप्तिः···।"

आर्य्या जातिः ॥१७॥

(श) माधव ও মকরন্দ। ( উপরের দিকে চাহিয়া বিস্ময়ের সহিত ) ভগবতি! ( কামন্দকি! ) ভাগ্যবশতঃ আপনার মঙ্গল হইয়াছে।

সেই যোগিনী, মেঘগুলিকে অপসারিত করিয়া, আমাদের অভিমুখে আসিতেছেন ; যাঁহার এই বাক্যামৃতের ধারাবৃষ্টি, মেঘের ধারাবৃষ্টিকে অতিক্রম করিয়াছে ॥১৭॥

---

(१) सा योगिनीयमतिरयविघटितजलदाऽभ्युपैति नौ यस्याः । इति क्वचित् पाठः ।

काम। प्रियं नः प्रियम् (१)। (ष)

मालती। दिट्ठिआ चिरस्स पच्चुज्जीविदह्मि (२)। (स)

काम। सहर्षबाष्पम्। एह्येहि पुत्रि!।

मालती। कधं (३) भअवदी। इति पादयोः पतति। (ह)

काम। उत्थाप्यालिङ्ग्य मूर्द्ध्नि उपाघ्राय।

जीव, जीवितसमाय जीवितं देहि, जीवतु सुहृज्जनस्य ते।
अङ्गकैस्तुहिनसङ्गशीतलैः पुत्रि! मां प्रियसखीश्च जीवय ॥१८॥

(स) दिष्ट्या चिरस्य प्रत्युज्जीवितास्मि।

(ह) कथं भगवती।

(ष) कामेति। प्रियं भूरिवशीर्वङ्गिपतनाभिवर्त्तनमित्यर्थः। प्रीतेरतिशये द्विरुक्तिः।

(स) मालतीति। चिरस्य बहुकालात् परम्। आत्मनः परित्राणेन पितुश्च जीवनलाभेन सर्वदुःखस्यैवापगमादिति भावः। तेनात्र समयो नाम निर्वहणसन्ध्यङ्गम्—"समयो दुःखनिर्याण"मिति दर्पणलक्षणात्।

(ह) मालतीति। अत्र हर्षे कथंशब्दः।

जीवेति। हे पुत्रि! आत्मजारूपे मालति! त्वं स्वयं जीव। तेन च जीवितसमाय प्राणतुल्याय प्रियतमाय माधवाय जीवितं जीवनं देहि। तथा ते तव सुहृज्जनो बान्धवजनः

(ষ) কামন্দকী। আমাদের বড়ই প্রীতিকর হইয়াছে।

(স) মালতী। ভাগ্যবশতঃ বহুকালের পর বাঁচিয়াছি।

কামন্দকী। ( আনন্দবাষ্পের সহিত ) আয় আয় মা! ( কন্যে! ) ।

(হ) মালতী। কে ভগবতী! ( এই বলিয়া তাঁহার চরণে পতিত হইলেন। )

কামন্দকী। ( উঠাইয়া, আলিঙ্গনপূর্ব্বক মস্তকে আঘ্রাণ করিয়া )

(१) क्वचित् प्रियं प्रियमिति द्विरुक्तिर्नास्ति। (२) पच्चुज्जीविदम्ह इति पाठान्तरम्।

(३) हा कहं इत्यपि पाठः।

माधवः। वयस्य! मकरन्द! सम्प्रत्युपादेयो माधवस्य (१) जीवलोकः संवृत्तः। (ख)

मक। सहर्षम्। एवमेवैतत् (२)।

पिव्रादिश्च जीवतु। तव जीवननाम्नस्तया एते खलु ताधन्तं कालं यावन्मृतप्राया एवासन्, इदानीन्तु तव जीवनात् सर्व एवैते जीविता इव जाता इति भावः। एतेन त्वयि सर्वेषामेव स्नेहस्य पराकाष्ठा विद्यत इति वस्तुना वस्तुध्वनिः। तथा तुहिनसङ्ग-शीतलैः हिमसंसर्गेणेव शीतलीभूतैः अङ्गकैर्देहावयवैः मां प्रियसखीं लवङ्गिकाञ्च जीवय आलिङ्गनेन समुच्छ्वासय।

अत्र जीवितसमायेत्यार्थीयमुपमालङ्कारः। तथा जीवितशब्दस्य द्विरुक्ततया पुनरुक्तता-दोषः, स तु जीवितमित्यत्र जीवनमिति पाठेनैव समाधेयः।

'कथं भगवती' इत्याद्यनन्तरं सन्दर्भे प्रसादो नाम निर्वहणसन्ध्यङ्गम्। तथा चोक्तं—

"शुश्रूषादिः प्रसादः स्यात्।"

रथोद्धता वृत्तम् ॥१८॥

(ख) माधव इति। उपादेयः परमरमणीयः। प्राणप्रियाया मालत्यास्तत्पितुश्च विपन्निवृत्तेरिति भावः।

अत्र प्रहर्षो नाम नाट्यालङ्कारः। तथा च दर्पणे—

"प्रहर्षः प्रमदाधिक्यम्।"

তুই জীবিত থাক্, জীবনতুল্য পতিকে জীবন দান কর্ এবং তোর্ বন্ধুজনও জীবিত হউক, আর পুত্রি! হিমের সংসর্গবশতই যেন শীতল স্বকীয় অঙ্গদ্বারা আমাকে এবং প্রিয়সখী লবঙ্গিকাকে জীবিত কর্ ॥১৮॥

(ক) মাধব। সখে! মকরন্দ! এখন জীবলোক মাধবের পক্ষে উপাদেয় হইল।

মকরন্দ। ( আনন্দের সহিত ) ইহা এইরূপই ( সত্যই ) বটে।

(१) क्वचित् 'माधवस्य' इति पाठो नास्ति। (२) एवमेतत् इति पाठभेदः।

मदयन्तिकालवङ्गिके (१)। पिअसहि! मणोरहादिक्कन्तदंसणे! सम्भावेहि अह्मे परिस्सङ्गेण। (क)

मालती। हा पिअसहिओ!। इत्युभे आलिङ्गति (२)। (ख)

काम। वत्सौ! किमेतत्?। (ग)

माधवमकरन्दौ। भगवति!

---

(क) प्रियसखि! मनोरथातिक्रान्तदर्शने! सम्भावयास्मान् परिष्वङ्गेन।

(ख) हा प्रियसख्यौ!।

(क) मदेति। मनोरथमपि अतिक्रान्तं दर्शनं यस्यास्तत्सम्बोधनम्। त्वमीदृश-मदर्शनं गतासीर्यथा तव पुनर्दर्शनेच्छापि कर्त्तुमसम्भाविताऽसीदित्यर्थः। मृत्योरिव निश्चितत्वा-दिति भावः। परिष्वङ्गेन आलिङ्गनेन। सम्भावय समुच्छासय।

अत्रालिङ्गने मालत्या योजनात् प्रोत्साहनं नाम नाट्यालङ्कारः। तदुक्तं दर्पणे—

"प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम्।"

(ख) मालतीति। उभे मदयन्तिकालवङ्गिके।

(ग) कामेति। वत्सौ! माधवमकरन्दौ! एतत् मालत्या अदर्शनं पुनर्दर्शनञ्च किं कथं जातमित्यर्थः। माधवेन मालत्या आनयनात् मकरन्देन च योगिनीविषय-विवरणात् तौ प्रति प्रश्नोऽयं युज्यत एव।

---

(क) মদয়ন্তিকা ও লবঙ্গিকা। প্রিয়সখি! তোমার দর্শনটী ইচ্ছারও অতীত বিষয় ছিল। অতএব আলিঙ্গনদ্বারা আমাদিগকে উজ্জীবিত কর।

(খ) মালতী। হা প্রিয়সখি!। (এই বলিয়া উভয়কে আলিঙ্গন করিলেন।)

(গ) কামন্দকী। বৎস মাধব! বৎস মকরন্দ! এ ব্যাপারটা কি?।

---

(१) इतरे इति क्वचित् पाठः। (२) उभे आलिङ्गतः इति पाठान्तरम्।

कपालकुण्डलाकोप-दुर्जातजनितापदः ।
वयमभ्युद्धृताः (१) कृच्छ्रान्निर्बन्धेनार्य्ययानया ॥१८॥

काम । कथमघोरघण्टवधविजृम्भितमेतत् । (घ)

मद । अह्मो (२) अच्चरीअं ! पुणरुत्तदारुणस्स परिणाम-रमणिज्जं विहिणो विलसिदं (३) । (ङ)

---

कपालेति । अनया नातिदूरं दृश्यमानया, आर्य्यया माननीयया योगिन्या, कपाल-कुण्डलायाः कोपात् यत् दुर्जातं व्यसनम्, वधाय मालत्यपहरणात्मकं साहसाख्यं क्रोधज-व्यसनमित्यर्थः, तेन जनिता आपदः मरणोपस्थितिरूपा विपत्तयो येषां ते तथोक्ताः । वयं मालतीमाधवमकरन्दाः, निर्बन्धेन आग्रहातिशयेन कृच्छ्रात् कष्टात् तत्तद्विपद्भ्य इत्यर्थः अभ्युद्धृता उत्तारिताः । एतत् सर्वं वक्ष्यमाणमालतीवाक्येन स्फुटीभविष्यति ।

"दुर्जातं व्यसने क्लीवम् असम्यग् जातवस्तुनि ।" इति केशवः ।

क्रोधजव्यसनमाह मनुः—

"पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् ।
वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥" ॥१८॥

(घ) कामेति । अघोरघण्टस्य यो वधः माधवेन कृत्या, तस्य विजृम्भितं फलम् । माधवेन गुरोरघोरघण्टस्य वधात् क्रुद्धा कपालकुण्डला माधवस्यैवापकारार्थं वधाय मालतीमपहृतवतीत्यधुना सर्वमवगतमिति भावः ।

---

মাধব ও মকরন্দ । ভগবতি !

কপালকুণ্ডলার ক্রোধজনিত সাহসে আমাদের বিপদ জন্মাইয়াছিল ; তাহার পর এই আর্য্যা, আগ্রহ করিয়া সেই বিপদ হইতে আমাদিগকে উদ্ধার করিয়াছেন ॥১৯॥

(ঘ) কামন্দকী । ও ! অঘোরঘণ্টবধের ফল এইটা ।

---

(१) वयमप्युद्धृता इति पाठोऽपि दृश्यते । (२) लवङ्गिए ! इत्यपि पाठः ।
(३)···रमणिज्जत्तणं विहिणो इतिमात्रः पाठः क्वचित् ।

प्रविश्य सौदामिनी। उपसृत्य। भगवति! स एष वश्चिरन्तनोऽन्तेवासिजनः प्रणमति (१)। (च)

काम। अये! भद्रा सौदामिनी?।

माधवमकरन्दौ। सविस्मयम्। कथमियं भगवत्या पक्षपातस्थानमाद्या शिष्या सौदामिनी। तत् सर्वमधुना सङ्गच्छते (२)। (छ)

(ङ) अहो आश्चर्य्यम्! पुनरुक्तदारुणस्य परिणामरमणीयं विधेर्विलसितम्।

(ङ) अहेति। पुनरुक्तदारुणस्य द्विगुणभयङ्करस्य विधेर्दैवस्य विलसितं व्यवहारः परिणामरमणीयं मालत्याः पुनःप्राप्तिविधानेन अवसाने शोभनं जातम्। सुतरामीदृशो विधिर्नोपालम्भविषय इति भावः।

(च) प्रविश्येति। उपसृत्य कामन्दक्याः समीपं गत्वा। चिरन्तनः पुरातनः। अन्तेवासिजनः शिष्यजनः। वो युष्मान्।

गुरुनमस्कारस्य शास्त्रीयत्वादेव नीतिर्नाम नाट्यालङ्कारः—"नीतिः शास्त्रेण वर्त्तन"मिति लक्षणात्।

(छ) माधव इति। पक्षपातस्य स्नेहेन हृदयाकर्षणस्य स्थानमाश्रयः। तत्तस्मात् सर्वं मालत्याः परित्राणादिकम्। सर्वेषामेवास्माकं कामन्दकीस्नेहपात्रत्वेनावगमादिति भावः।

(ঙ) মদয়ন্তিকা। কি আশ্চর্য্য! অত্যন্ত ভয়ঙ্কর দৈবের ব্যবহার পরিণামে মনোহর হইয়াছে।

(চ) প্রবেশ করিয়া সৌদামিনী। (নিকটে যাইয়া) ভগবতি! এই সেই আপনার পুরাতন ছাত্র প্রণাম করিতেছে।

কামন্দকী। ও! ভদ্রা সৌদামিনী!।

(१) सौदामिनी। प्रविश्य। भगवति! स एष चिरन्तनोऽन्तेवासी जनः प्रणमति। इति पाठभेदः।

(२) सा भगवत्या…आद्यशिष्या।…यतः सर्वं…। इति पाठभेदः।

কাম। এহ্যেহি ভূরিজন-(১) জীবিতদানপুণ্য-
সম্ভারধারিণি! চিরাদসি হন্ত দৃষ্টা।
দত্তপ্রমোদমপি নন্দয় (২) মে শরীর-
মালিঙ্গ্য সৌহৃদনিধে! বিরম প্রণামাত্ ॥২০॥

অপি চ, বন্দ্যা ত্বমেব জগতঃ স্পৃহণীয়সিদ্ধি-
রেবংবিধৈর্বিলসিতৈরতিবোধিসত্ত্বৈঃ।

এহ্যেহীতি। ভূরিজনানাং মাধবপ্রভৃতীনামস্মাকমনেকলোকানাং জীবিতানাং মালতী-শোকেন গমনোদ্যতানাং জীবনানাং দানেনার্পণেন মালতীং পরিত্রায় রক্ষণেন যঃ পুণ্যসম্ভারো ধর্ম্মসমূহঃ তং ধারয়তীতি সা, তত্সম্বোধনম্। এহ্যেহি। হন্ত হর্ষে। চিরাদ্বহুকালাত্ পরং ময়া দৃষ্টাসি। দত্তো দর্শনদানেনৈবার্পিতঃ প্রমোদঃ প্রমোদজনিতরোমাঞ্চো যস্মিন্ তাদৃশমপি মে মম শরীরমালিঙ্গ্য নন্দয় পুনশ্চিত্তমানন্দয়। হে সৌহৃদনিধে! সাতিশয়-বাত্সল্যপাত্রীভূতে! প্রণামাত্ বিরম।

অত্রালিঙ্গনকার্য্যপ্রবর্ত্তনাত্ প্রবর্ত্তনং নাম নাট্যালঙ্কারঃ। তদুক্তম্—

"প্রবর্ত্তনন্তু কার্য্যস্য যত্ স্যাত্ সাধুপ্রবর্ত্তনম্।"

বসন্ততিলকা বৃত্তম্ ॥২০॥

---

(ছ) মাধব ও মকরন্দ। (বিস্ময়ের সহিত) ও! ইনি, ভগবতীর স্নেহের স্থান প্রথম শিষ্যা সৌদামিনী!। অতএব এখন সকলই সঙ্গত বলিয়া বোধ হইল।

কামন্দকী। এস এস; তুমি বহুলোকের জীবন দান করার পুণ্য-সমূহ ধারণ করিতেছ; হায়! বহুকালের পর তোমাকে দেখিলাম। তুমি দর্শন দান করিয়াই আনন্দ দান করিয়াছ, তথাপি আলিঙ্গন করিয়া আমার চিত্ত আনন্দিত কর, হে বাৎসল্যের আধার! প্রণাম হইতে বিরত হও ॥২০॥

(১) ভূরিবস্তু···ইতি ক্বচিত্ পাঠঃ। (২) অভিনন্দয় ইতি পাঠান্তরম্।

यस्याः पुरा परिचयप्रतिवद्धवीज-
मुद्भूतभूरिफलशालि विजृम्भितं ते (१) ॥२१॥

मदयन्तिकालवङ्गिके। इअं सा अज्जा सोदामिणी। (ज)

(ज) इयं सा आर्य्या सौदामिनी।

कथं प्रणामाद्विरमामीत्याह वन्द्येति। एवंविधैरीदृशैर्मालतीपरित्राणप्रभृतिरूपैः, बोधिसत्त्वं बुद्धविशेषं तच्चरितमित्यर्थः अतिक्रान्तैः निःस्वार्थभावेन परोपकारकरणविषये अतिक्रम्य स्थितैः, विलसितैः व्यवहारैः, स्पृहणीया अस्माकमपि वाञ्छनीया सिद्धिः मन्त्र-श्वर्य्यादिसिद्धिर्यस्याः सा, तादृशी त्वमेव जगतः सर्वलोकस्य वन्द्या प्रणामयोग्या। सुतरां मम मत्प्रणामकरणमनुचितमिव प्रतिभातीति भावः। यस्मात्ते तव पुरा एकत्राध्ययनकाले परिचयः तव मम च परस्परस्नेहपात्रत्वेन विशेषज्ञानम्, स एव प्रतिबद्धमुत्पन्नं वीजं यस्य तत् तादृशम् इदं विजृम्भितं चेष्टितं मालतीपरित्राणादिव्यवहार इत्यर्थः, उद्भूतैरुत्पन्नैः भूरिभिः प्रचुरैः फलैः माधवादीनामस्माकं जीवनरक्षारूपैः शालते अन्वीयत इति तत् तथोक्तं जातमिति शेषः। आवयोस्तदानीन्तनपरिचयजनितपरस्परप्रणय एव तव मालती-परित्राणकार्य्यस्य वीजम्, तेन च मालतीपरित्राणेन माधवादयो वयमपि पुनर्मालतीं प्राप्य तच्छोकेन गमनीयतजीवनरक्षणक्षमाः सञ्जाताः, सुतरां त्वं धन्यासीति सरलार्थो भावार्थश्च।

अत्र विजृम्भिते श्लिष्टविशेषणसाम्यात् प्रथमबद्धवीजानन्तरफलशालिधान्यादिव्यवहार-समारोपेण समासोक्तिरलङ्कारः। तथा अनुवृत्तिर्नाम नाट्यालङ्कारः। तथा च दर्पणे—

"···प्रश्रयादनुवर्त्तनम्। अनुवृत्तिः···।"

वसन्ततिलका वृत्तम् ॥२१॥

আরও ( শুন, ) তোমার এই ব্যবহারগুলি বুদ্ধদেবের ব্যবহারকেও অতিক্রম করিয়াছে এবং তোমার সিদ্ধি সকলেরই বাঞ্ছনীয়; যে তোমার এই ব্যবহারের বীজ, পূর্ব্ব পরিচয়ে রোপণ করিয়াছিল, এখন তাহা উৎপন্ন-প্রচুর-ফলশালী হইয়াছে ॥২১॥

(জ) মদয়ন্তিকা ও লবঙ্গিকা। ইনি সেই আর্য্যা সৌদামিনী।

(१) विजृम्भितेन इत्यपि पाठः।

मालती। बाढ़ं। इमाए क्खु भअवदीसम्बन्धपक्खवादिणीए णिब्भच्छिअ कवालकुण्डलां अत्तणो आवसधं उवणिअ मं भअवदीणिव्विसेसं समासासिदह्मि (१)। किञ्च, केसरावली-साहिण्णाणहत्थाए इह आगत्तुण सव्वे तुम्हे सन्धारिदा मरणादो। सा एसा जीविदप्पदाइणी सौदामिणी (२)। (ञ)

(ञ) बाढ़म्। अनया खलु भगवतीसम्बन्धपक्षपातिन्या निर्भर्त्स्य कपालकुण्डलाम् आवसथमुपनीय माम्, भगवतीनिर्विशेषं समाश्वासितास्मि। किञ्च, केशरावलीसाभिज्ञान-हस्तया इह आगत्य सर्वे यूयं सन्धारिता मरणात् सैषा जीवितप्रदायिनी सौदामिनी।

(ञ) मालतीति। बाढ़म् अवश्यम् इयमेव सा सौदामिनीत्यर्थः। "अवश्य-भृशयोर्बाढ़म्।" इति हलायुधः। भगवत्याः कामन्दक्या यः सम्बन्धः आत्मनः प्रणयसम्बन्धः, तेन पक्षपातिन्या अस्मत्पक्षावलम्बिन्या अनया। आवसथमाश्रमम्। भगवतीनिर्विशेषं कामन्दकीतुल्यं यथा स्यात्तथा। न केवलमहं रक्षिता अपि त्वन्येऽपीत्याह किञ्चेति। केशरावल्या बकुलमालया साभिज्ञानः सचिह्नः बकुलकुसुममालात्मकाभिज्ञानशालीत्यर्थः हस्तो यस्यास्तया, अनया। सन्धारिता अवस्थापिता रक्षिता इति तात्पर्य्यम्। तथा च बकुलकुसुममालाप्रदर्शनद्वारा माधवमकरन्दयोर्जीवनरक्षणात् युष्माकमपि जीवनं रक्षितम्, अन्यथा तयोः शोकेनापि युष्माकं मरणसम्भव आसीदिति भावः।

(ঝ) মালতী। অবশ্যই। ইনি, ভগবতী কামন্দকীর সম্বন্ধবশতঃ আমার পক্ষপাতিনী হইয়া, কপালকুণ্ডলাকে ভর্ৎসনা করিয়া, আমাকে নিজের আশ্রমে নিয়া, ভগবতী কামন্দকীরই তুল্য আমাকে আশ্বস্ত করিয়াছিলেন। আবার, আমার চিহ্নস্বরূপ বকুলফুলের মালা হাতে লইয়া এখানে আসিয়া, তোমাদের সকলকে মৃত্যু হইতে রক্ষা করিয়াছেন। ইনি সেই জীবনদায়িনী সৌদামিনী।

(१) मं भअवदीणिव्विसेसं इति पाठः क्वचिन्नास्ति।

(२)···मरणादो। सा एसा जीविदप्पदाइणी सौदामिणी इति पाठोऽपि क्वचिन्नास्ति।

मदयन्तिकालवङ्गिके ( १ ) । सुप्पसण्णा णो कणिट्ठा भअवदी । (ञ)

माधवमकरन्दौ । अहोनुखलुभोः ! । (ट)

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते ।
इदं त्वचिन्तितं मन्ये कृतमाश्चर्य्यमार्य्यया ॥२२॥

(ञ) सुप्रसन्ना नः कनिष्ठा भगवती ।

---

(ञ) मदेति । कनिष्ठा भगवती सौदामिनी । कामन्दकी तु ज्येष्ठा भगवतीति भावः । नोऽस्मान् प्रति सुप्रसन्ना स्वयमेव सानुग्रहा जाता । कथमन्यथा स्वयमेवेदृशमनुकम्पेतेति भावः ।

(ट) माधव इति । अहोनुखलुभोरित्येकमेवाव्ययं हर्षाश्चर्य्ये ।

अपीति । चिन्तामणिरपि वाञ्छितफलप्रदो मणिविशेषोऽपि, चिन्तैव परिश्रमस्तम्, चिन्तापूर्वकप्रार्थनाप्रयासमित्यर्थः अपेक्षते फलदान इति शेषः । तु किन्तु आर्य्यया मान्यया अनया सौदामिन्या, अचिन्तितम् अस्माभिरसम्भावितम् अप्रार्थितं कृतं मालत्यादीनामस्माकं रक्षणं विहितम्, इदमाश्चर्य्यं मन्ये ।

अत्रोपमानभूताच्चिन्तामणेरुपमेयायाः सौदामिन्या आधिक्यवर्णनात् व्यतिरेकालङ्कारः, छेकानुप्रासश्चेत्यनयोः संसृष्टिः । तथा च सौदामिन्यलौकिकदयाशक्तिशालिनीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । तथा अक्षरसङ्घातो नाम नाट्यलक्षणम् । तदुक्तं दर्पणे—

"वर्णनाक्षरसङ्घातश्चित्रार्थैरक्षरैर्मितैः ।

"सामर्थ्यसम्पादितवाञ्छितार्थश्चिन्तामणिः स्यान्न कथं हनूमा"निति भट्टिः ॥२२॥

---

(ঞ) মদয়ন্তিকা ও লবঙ্গিকা। কনিষ্ঠা ভগবতী আমাদের প্রতি অত্যন্ত প্রসন্ন হইয়াছেন।

(ট) মাধব ও মকরন্দ। কি আনন্দ !।

(१) इतराः इति क्वचित् पाठः ।

सौदा। स्वगतम्। हन्त! लज्जयति मामत्यन्तसौजन्य-मेतेषाम् (१)। प्रकाशम्। भगवति! एतत् प्रहृष्टनन्दनाभिनन्दितेन राज्ञा पद्मावतीश्वरेण भूरिवसोः प्रत्यक्षमभिलिख्य पत्रमायुष्मतो माधवस्य प्रेषितम्। इति पत्रमर्पयति (२)। (ठ)

काम। गृहीत्वा वाचयति। "स्वस्त्यस्तु वः। परमेश्वरः समाज्ञापयति। यथा—(ड)

(ठ) सौदेति। प्रहृष्टेन भूरिवसोर्जीवनलाभादानन्दितेन, नन्दनेन तदाख्येन राज्ञो नर्मसुहृदा, अभिनन्दितः 'अहो! भाग्यवान् भवान्, येन भूरिवसोर्जीवनस्थितेर्न ब्रह्मवधनिमित्तो जात' एवम्भूतवचनादिना प्रशंसितस्तेन। माधवस्य समीपे।

(ड) कामेति। वाचमाचष्ट इति वाचयति पठति। वो युष्मभ्यं स्वस्ति मङ्गलमस्तु। परमेश्वरो राजा पद्मावतीश्वरः, समाज्ञापयति अवगमयति।

চিন্তামণিও, চিন্তা করার পরিশ্রমের অপেক্ষা করে; কিন্তু ইনি অচিন্তিত ফল দান করিলেন, ইহা আশ্চর্য্য বটে ॥২২॥

(ঠ) সৌদামিনী। (স্বগত) হায়! ইঁহাদের অত্যন্ত সৌজন্য আমাকে লজ্জিত করিতেছে। (প্রকাশ্যে) ভগবতি! নন্দন আনন্দিত হইয়া রাজাকে অভিনন্দিত করিলে, পদ্মাবতীর অধিপতি রাজা, ভূরিবসুর সমক্ষে এই পত্র লিখিয়া আয়ুষ্মান্ মাধবের নিকট পাঠাইয়াছেন। (এই বলিয়া পত্র প্রদান করিলেন।)

(ড) কামন্দকী। (গ্রহণ করিয়া পাঠ করিতে লাগিলেন) "তোমার মঙ্গল হউক। রাজা আদেশ করিতেছেন যে,—

(१)...एवं सौजन्यमेषामिति पाठान्तरम्। (२) लेख्यमर्पयति इति पाठभेदः।

श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्वये च (१) त्वयि-
प्रत्यस्तव्यसने महीयसि परं प्रीतोऽस्मि जामातरि।
तेनेयं मदयन्तिकाद्य भवतः प्रीत्यै तव प्रेयसे
मित्राय प्रथमानुरागघटिताऽप्यस्माभिरुत्सृज्यते ॥२३॥"

श्लाघ्यानामिति। श्लाघ्यानां प्रशस्यानाम्, गुणिनां रूपविद्यादिगुणशालिनां जनानां धुरि अग्रे स्थितवति विद्यमाने, गुणिगणाग्रगण्ये, श्रेष्ठः अन्वयो वंशो यस्य तस्मिन् सद्वंशोत्पन्ने, प्रत्यस्तं शुभादृष्टेनैव निरस्तं व्यसनं विपद्यस्य तस्मिन्। एतेन परमसौभाग्यशालित्वमपि सूचितम्, महीयसि महामात्यपुत्रत्वेन धनवत्त्वादपि परममहति, त्वयि जामातरि दुहितृस्थानपातिन्या मालत्याः पत्यौ सति परं नितान्तं प्रीतः सन्तुष्टोऽस्मि। "कन्या कामयते रूपं माता वित्तं पिता गुणम्। भ्रातरः कुलमिच्छन्ति मिष्टान्नमितरे जनाः॥" इत्युक्तसर्वविधगुणवत्त्वादिति भावः। ननु प्रीतेन किं करणीयमित्याह तेनेति। तेन हेतुना, अस्माभिः भवतः प्रीत्यै तव सन्तोषाय, तव प्रेयसे मित्राय परमप्रियसुहृदे मकरन्दाय, प्रथमात् पूर्वमादेव अनुरागेण आसक्त्या घटितापि संयोजितापि इयं मदयन्तिका उत्सृज्यते प्रदीयते। 'गच्छ, धर्म्मो भविष्यति' इत्युक्त्या अनुसर्त्तुमशक्तस्य तस्करपरित्यागवत् गत्यन्तराभावात् राज्ञः खल्वयमुत्सर्ग इति समालोचनीयम्।

अत्र प्रीतिकार्य्यं प्रति गुणिगणाग्रगण्यत्वादिबहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः। तथा भाषणं नाम निर्वहणसन्ध्यङ्गम्—"सामदानादि भाषण"मिति लक्षणात्। तथा नन्दनाय मालतीदानीयमरूपस्यानुचितस्यानेन मार्ज्जनात् परिहारो नाम नाट्यालङ्कारः। तदुक्तम्—"परिहार इति प्रोक्तः कृतानुचितमार्जनम्।"

शार्दूलविक्रीडितं वृत्तम् ॥२३॥

তুমি ( মাধব ) প্রশংসনীয় গুণবান্‌দিগের অগ্রে অবস্থান করিতেছ, তোমার বংশ উচ্চ, সমস্ত বিপদ বিনষ্ট হইয়াছে এবং অতিশয়-মহান্ তুমি আমাদের জামাতা হইয়াছ ; অতএব আমি তোমার প্রতি অত্যন্ত সন্তুষ্ট হইয়াছি। সেই নিমিত্ত, প্রথম অনুরাগ সম্মিলিত হইলেও, এই

(१) श्रेष्ठान्वयायि इति पाठान्तरम्।

माधवमुद्दिश्य सहर्षम्। वत्स! श्रूयताम्। (ढ)

माधवः। श्रुतम्। इदानीं सर्वथा कृतार्थोऽस्मि। (ण)

मालती। दिट्ठिआ एदं वि दाव अवगदं हिअअस्स सङ्कासल्लं (१)। (त)

लव। सम्पदं णिरवसेसं माहवसिरिणो मालदीए अ समं फलिदा मणोरहा (२)। (थ)

(त) दिष्ट्या एतदपि तावदपगतं हृदयस्य शङ्काशल्यम्।

(थ) साम्प्रतं निरवशेषं श्रीमाधवस्य मालत्याश्च समं फलिता मनोरथाः।

---

(ढ) माधव इति। एतेन सर्वप्रकाराशङ्कानिरासात् कामन्दक्या महानानन्दो व्यज्यते।

(ण) माधव इति। सर्वथा सर्वेण प्रकारेण। कृतार्थोऽस्मि सर्वानुमोदनेन राज्ञोऽपि कोपाशङ्कानिरासादिति भावः। अतोऽयमानन्दादुक्तिरियम्।

(त) मालतीति। दिष्ट्या भाग्येन। शङ्काशल्यम् राजकोपाशङ्कारूपं शल्यम्।

(थ) लवेति। निरवशेषम् सम्पूर्णं यथा स्यात्तथा। समं युगपत्। मकरन्दस्यापि मदयन्तिकालाभात्, सर्वैरेव राज्ञोऽप्यनुमोदनात् तत्कोपाशङ्काभावाच्चेति भावः।

---

মদয়ন্তিকাকে আমি তোমার সন্তোষের জন্যই তোমার প্রিয়সখাকে ( মকরন্দকে ) দান করিলাম” ॥২৩॥

(ঢ) ( মাধবের উদ্দেশে আনন্দের সহিত ) বৎস! শোন।

(ণ) মাধব। শুনিলাম। এখন আমি সর্ব্বপ্রকারে চরিতার্থ হইয়াছি।

(ত) মালতী। ভাগ্যবশতঃ মনের এই আশঙ্কাশল্যও দূরীভূত হইল।

---

(१) दिट्ठिआ दाणिं अवहदं णो हिअअस्स आसङ्कासल्लं इति पाठभेदः।

(२) सम्पदं णिरवसेसं पूरिआ माहवसिरिणो मणोरहा इति क्वचित् पाठः।

मक। पुरोऽवलोक्य। कथमवलोकिताबुद्धरक्षिते कलहंसेन सह सुप्रमोदं नृत्यन्त्याविव एवागच्छतः (१)। (द)

ततः प्रविशतोऽवलोकिताबुद्धरक्षिते कलहंसश्च।

सर्वे विविधं नृत्यं कृत्वा उपसृत्य सप्रणाम कामन्दकीं प्रति। जअ भअवदि ! कज्जणिहाणि !। माधवं प्रति। जअ मअरन्दणन्दण ! माहव ! पुण्णचन्द ! दिट्ठिआ वड्ढसि। (ध)

---

(ध) जय भगवति ! कार्य्यनिधाने !। जय मकरन्दनन्दन ! माधव ! पूर्णचन्द्र ! दिष्ट्या वर्द्धसे।

---

स्मृतमित्यार्य तदन्ते सन्दर्भे आनन्दो नाम निर्वहणसन्धेरङ्गम्। तथा चोक्तम्—

"आनन्दो वाञ्छितागमः।"

प्राकृते पूर्वनिपातनियमाभावात् 'माहवसिरिणो' इत्युक्तिरिति ज्ञेयम्।

(द) मकेति। हर्षे कथंशब्दः। शोभनः प्रमोदो यस्मिन् कर्म्मणि तद्यथा तथा।

(ध) सर्वे इति। सर्वे अवलोकिता-बुद्धरक्षिता-कलहंसाः। कार्य्याणां निधानं स्थापनं यस्यां तत्सम्बोधनम्। महामात्येन भूरिवसुनापि त्वयि मालतीमाधवयो-र्योजनकार्य्यभारस्थापनात् तस्य च सुकौशलेन निष्पादनात् त्वमतीव निपुणासीति भावः। मकरन्दनन्दन ! मकरन्दस्यानन्दजनक ! अलौकिकसौहार्दादिति भावः। एतदुक्त-

---

(থ) লবঙ্গিকা। মাধব ও মালতীর সমস্ত অভিলাষই এখন সম্পূর্ণরূপে একদাই সফল হইল।

(দ) মকরন্দ। ( সম্মুখে দৃষ্টিপাত করিয়া ) কলহংসের সহিত অবলোকিতা ও বুদ্ধরক্ষিতা অত্যন্ত আনন্দে নৃত্য করিতে করিতে এই দিকেই আসিতেছে।

তাহার পর অবলোকিতা, বুদ্ধরক্ষিতা ও কলহংসের প্রবেশ।

(१)···कलहंसश्च दूरतः समागतानस्मान् वीक्ष्य तत्रैव हर्षनिर्भरं नृत्यन्त इव एवा-गच्छन्ति। इति भिन्नः पाठः।

सर्वे सस्मितं पश्यन्ति (१)। (न)

लव। को वा इमस्सिं परिपुरिदसव्वप्पआरमहूसवे ण णच्चदि (२)। (प)

काम। एवमेतत्। अस्ति वा कुतश्चिदेवम्भूतं (३) विचित्र-रमणीयोज्ज्वलं प्रकरणम्? (४)। (फ)

(प) को वा अस्मिन् परिपूरितसर्वप्रकारमहोत्सवे न नृत्यति। विशेषतानुपपत्त्याभावेऽपि प्रमोदमयत्वाद यत्किञ्चिद्विधयाभिहितम्। पूर्णचन्द्र! इवेत्य नाहस्याह्लादजनकत्वादिति भावः।

(न) सर्व इति। सर्वे कामन्दकी-सौदामिनी-मदयन्तिका लवङ्गिका-माधव-मकरन्दाः। पश्यन्ति अवलोकिता-बुद्धरक्षिता-कलहंसानां नृत्यमिति शेषः।

(प) लवेति। को न नृत्यति, अपि तु सर्व एवेत्यर्थः, तेनास्माकमपि नर्त्तितुमिच्छा जायत इति ध्वनितम्।

(फ) कामेति। कुतश्चित् कश्चिच्चिदित्यर्थः। विचित्रमाश्चर्यम्, रमणीयं मनोहरम्,

(ध) (সকলে নানাবিধ নৃত্য করিয়া, নমস্কারপূর্ব্বক কামন্দকীর প্রতি) হে ভগবতি! হে কার্য্যের আশ্রয়! আপনার জয় হউক। (মাধবের প্রতি) হে মকরন্দের আনন্দজনক! মাধব! পূর্ণচন্দ্র! ভাগ্যবশতঃ আপনার অভ্যুদয় হইয়াছে।

(ন) (সকলে হাস্যের সহিত দেখিতে লাগিল।)

(প) লবঙ্গিকা। যাহার সমস্ত অঙ্গ পরিপূর্ণ হইয়াছে, সে মহোৎসবে কে না নৃত্য করে?।

(१) सहर्षं सर्वे सस्मितं पश्यन्तीति पाठान्तरम्।

(२) तदीयकज्ज विश्व एदस्सिं सम्पूरिदं। अदो सव्वप्पआरमहूसवे णच्चदि इति पाठभेदः। (३) एवम्भूतं महाद्भुतमिति क्वचित् पाठः।

(४) महाप्रकरणमिति भिन्नः पाठः।

সৌদা। ইদমত্র রমণীয়ান্তরম্, (১) যদমাত্যয়োর্ভূরিবসু-দেবরাতয়োশ্চিরাৎ পূর্ণোঽয়মিতরেতরাপত্যসম্বন্ধরূপো (২) মনোরথঃ। (ব)

মালতী। স্বগতম্। কহ্নং বিঅ (৩)। (ভ)

(ভ) কথমিব।

---

উজ্জ্বলং বিশদং নির্দ্দোষমিত্যর্থঃ। অত্র কর্ম্মধারয়দ্বয়ম্। প্রকরণং বৃত্তান্তাবলী। অস্তীতি কাকুবশাৎ প্রশ্নপ্রতীতিঃ, তেন অস্তি কিং নাস্ত্যেবেত্যর্থঃ। অত্র চ, এবম্ভূতং ভবভূতিবিরচিতং তন্মালতীমাধবরূপম্, বিচিত্ররমণীয় আশ্চর্য্যমনোহর উজ্জ্বলঃ শৃঙ্গাররসো যত্র তৎ তাদৃশম্, প্রকরণং "ভবেৎ প্রকরণে বৃত্তং লৌকিকং কবিকল্পিত"মিত্যাদ্যুক্তলক্ষণকো রূপকবিশেষঃ, কুতশ্চিদ্ভবভূতিভিন্নাৎ কবেরুৎপন্নমস্তি কিম্ অপি তু নাস্ত্যেবেতি ধ্বনিঃ।

"উজ্জ্বলো দীপ্তশৃঙ্গারবিশদেষু বিকাশিনি।" ইতি মেদিনী।

(ব) সৌদেতি। ইতরেতরাপত্যসম্বন্ধরূপঃ পরস্পরসন্তানয়োর্বিবাহসম্বন্ধনিষ্পাদন-বিষয়কঃ।

(ভ) মালতীতি। কথমিব অয়ং বৃত্তান্ত ইতি শেষঃ।

---

(ফ) কামন্দকী। একথা সত্য বটে। এইরূপ আশ্চর্য্য, মনোহর ও নির্দ্দোষ বৃত্তান্তাবলী, আর কোথাও আছে কি ?। ( ব্যঙ্গ্যার্থে—আশ্চর্য্য ও মনোহর শৃঙ্গাররসসমন্বিত, ভবভূতিপ্রণীত এই মালতীমাধবের ন্যায় অন্য প্রকরণ, অন্য কোন কবি হইতে উৎপন্ন হইয়াছে কি ?। )

(ব) সৌদামিনী। ইহাতে আর একটী মনোহর বিষয় এই যে, সন্তানের পরস্পর বিবাহসম্বন্ধ বিষয়ে অমাত্য ভূরিবসু ও দেবরাতের সেই ইচ্ছা, বহুকালের পর পূর্ণ হইল।

(ভ) মালতী। ( স্বগত ) এ বৃত্তান্ত কি রকম ?।

(১) রামণীয়কমিত্যপি পাঠঃ। (২) ইতরেতরাপত্যসম্বন্ধাদিতি ক্বচিৎ পাঠঃ।

(৩) তং কহ্নং বিঅ ইতি পাঠোঽপি দৃশ্যতে।

**माधवमकरन्दौ।** सकौतुकम्। **भगवति! अन्यथा वस्तु वृत्तम्, अन्यथा वचनमार्य्यायाः (१)। (म)**

**लव।** जनान्तिकम्। **भअवदि! किं एत्थ (२) पड़िवज्जिदव्वं। (य)**

**काम।** स्वगतम्। **सम्प्रति मदयन्तिकासम्बन्धेन नन्दनावग्रहात्**

(य) भगवति! किमत्र प्रतिपत्तव्यम्।

(म) माधव इति। वस्तु घटना, अन्यथा वृत्तम् अन्यप्रकारेण जातम्। आर्य्यायाः सौदामिन्यास्तु वचनं यद्‌मात्ययोरित्यादिवाक्यम् अन्यथा वृत्तमित्यर्थः। तथा च भवभवान् भूरिवसुः स्वयमेव नन्दनाय मालतीं दातुमुद्यत आसीत्; इतस्तु आर्य्या सौदामिनी वदति—भूरिवसुदेवरातयोः परस्परापत्यसम्बन्धकरणाभिलाष आसीदिति; सुतरां कृतघटनया सह सौदामिनीवचनस्यासामञ्जस्यं जातमिति भावः।

(य) लवेति। अत्र माधवमकरन्दयोरसामञ्जस्यप्रदर्शनप्रश्ने, किं प्रतिपत्तव्यं त्वया किमुत्तरं दातव्यम्। एतेनात्मनोऽपि तादृगसामञ्जस्यज्ञानमुत्पन्नमिति सूचितम्।

(र) कामेति। मदयन्तिकायाः सम्बन्धेन विशेषसम्पर्केण, नन्दनावग्रहात् नन्दनकर्त्तृकमनिर्यातनात् प्रत्यस्तशङ्काः तिरोहितातङ्काः, वयम् अहमित्यर्थः। तथा च यद्यहम् 'आवाभ्यामपत्यसम्बन्धः कर्त्तव्य' इति भूरिवसुदेवरातयोः प्रतिज्ञां प्रकाशयामि; तदा लोकपरम्परया नन्दनस्तमाकर्ण्य इत्थं मन्येत, यत्, 'इयं खलु कूटदूती कामन्दकी भूरिवसुदेवरातयोस्तां प्रतिज्ञां जानत्यपि मां न निवेदितवती, प्रत्युत माल्त्याः परिणयायैव प्रकाशभावेन

(म) মাধব ও মকরন্দ। (কৌতুকের সহিত) ভগবতি! ঘটনা ঘটিয়াছে অন্য রকম, আর্য্যা সৌদামিনীর বাক্য অন্য রকম!।

(য) লবঙ্গিকা। (কামন্দকীর প্রতি চুপি চুপি) ভগবতি! এ বিষয়ে কি উত্তর করিবেন?।

(१) अन्यथा वस्तु प्रवृत्तं, अन्यथा वचनपर्य्यायः इति पाठोऽपि दृश्यते।

(२) कुत्रचित् 'एत्थ' इति पाठो नास्ति।

प्रत्यस्तमङ्काः खलु वयम्। प्रकाशम्। वत्सौ! न खल्वन्यथा वस्तुवृत्तम्। यतः श्रावकावस्थायामस्मत्सौदामिनीप्रत्यक्षमनयोर्वृत्तेयं प्रतिज्ञा ‘आवाभ्यामपत्यसम्बन्धः कर्त्तव्य’ इति प्रधानप्रकृतिकोपस्त्वेवं परिहृतः (१)। (र)

मां प्रोत्साहितवती, अथ च गुप्तभावेन माधवेन सह मालतीं योजयितुं प्राणपणेन चेष्टितवती; सुतरामियमेव कामन्दकी ममेष्टक्तिरस्कारलज्जाप्राप्तिमूलम्, अत एवैनां निर्यातयामि’ इति मन्यमानो यदि मां निर्यातयितुमुपक्रमेत, तदा खलु मदयन्तिका मां प्रति स्नेहवशात् भ्रातरं तं नन्दनं निवारयेत्। सुतरामिदानीं तत्प्रतिज्ञाप्रकाशे नास्ति दोष इति भावः सरलार्थं च। वत्सौ! माधवमकरन्दौ!। वस्तु घटना न खल्वन्यथा वृत्तमित्यन्वयः। श्रावकौ गुरुमुखात् शास्त्रार्थश्रोता तदवस्थायां छात्रदशायामित्यर्थः। अनयोर्भूरिवसुदेवरातयोः। वृत्ता भूता। ननु तर्हि “प्रभवति निजस्य कन्यकाजनस्य महाराज” इत्यभिदधानो भूरिवसुर्नन्दनाय मालतीं दातुं कथमङ्गीकृतवानित्याह प्रधानेति। प्रधानप्रकृतेः सप्तविधासु प्रकृतिषु मध्ये स्वामित्वात् प्रधानीभूतायाः प्रकृतेः, राज्ञः, कोपः क्रोधः, एवमनेन प्रकारेण परिहृतः परित्यक्त उत्पत्त्ययोग्यीकृत इत्यर्थः। तथा च नन्दनाय मालतीं दातुं राजा स्वयमनुरोधं कुरुते, तस्य तु स्पष्टतः प्रत्याख्याने राज्ञः कोपो भवेदित्याशङ्कमानो भूरिवसुः “प्रभवति निजस्य कन्यकाजनस्य महाराज” इति श्लिष्टोत्तरेण तदङ्गीकारभङ्ग्या प्रकाश्य-

(র) কামন্দকী। (স্বগত) মদয়ন্তিকার সহিত সম্পর্ক হওয়ায় এখন আমরা নন্দনকর্ত্তৃক নির্যাতন হইতে নিঃশঙ্ক হইয়াছি। (প্রকাশ্যে) বৎস! মাধব! বৎস! মকরন্দ! ঘটনা অন্য রকম ঘটে নাই। যেহেতু, ছাত্র অবস্থায় আমার ও সৌদামিনীর সমক্ষে ভূরিবসু ও দেবরাতের এই প্রতিজ্ঞা হইয়াছিল যে, ‘আমরা সন্তানের সম্বন্ধ করিব’। তাহাতে এইরূপ করায় রাজার কোপের নিবৃত্তি করা হইয়াছে।

(१)···मदयन्तिकासम्बन्धात् नन्दनोपग्रहात्···।···प्रवृत्तम् अन्यथा वचनमस्याः।···अस्मात् सौदामिनीसमक्षं तयोः प्रवृत्तेयम्···इति पाठभेदः।

मालती । अहो ! संवरणम् । (ल)

माधवमकरन्दौ । साश्चर्यम् । जयन्ति खलु महतां विसंवादिन्यः प्रत्यायिन्यः कल्याणिन्यो नीतयः (१) । (व)

(ल) अहो ! सम्वरणम् ।

भावेन राजकमनुरोधं रचितवानिव । मालतीमाधवयोः संयोगे जाते 'परस्परानुरागवशा-दैवायं संयोगो जातः, तन्मया किं करणीयम्, जनान्तरसंयुक्ता च कन्या जनान्तराय न देयेति पुनर्नन्दनाय दातुमपि न शक्ता' इत्थं राजानं ज्ञापयिष्यन्, अन्तरा तु मालती-माधवयोर्योजनायामाग्निर्योजितवान् । इदानीञ्च संवृत्ता तथैव सर्वा घटना, तेन तु राजा प्रत्युत प्रीत एव जात इति सरलार्थो भावार्थश्च ।

अत्र पूर्ववाक्यं नाम निर्वहणसन्ध्यङ्गम्—"पूर्ववाक्यन्तु विज्ञेयं यथोक्तार्थोप-दर्शनम् ।" इति लक्षणात् ।

"स्वाम्यमात्यसुहृत्कोष-राष्ट्र-दुर्ग-बलानि च । राज्याङ्गानि प्रकृतयः···।" इत्यमरः ।

(ल) मालतीति । अहो ! सम्वरणम् आश्चर्यममीषां तत्प्रतिज्ञागोपनमित्यर्थः । एतावतीषु घटनासु जातास्वपि केनापि कुत्रापि तदप्रकाशादिति भावः ।

(व) माधव इति । महतां विद्याबुद्धिचातुर्य्यादिभिः प्रधानीभूतानां जनानां विसंवादिन्यः परस्परविरोधिन्यः, अथ च प्रत्यायिन्यः सर्वेषामेव विश्वासजनिकाः अपि च कल्याणिन्यः परिणामे मङ्गलकारिण्यः । तथा च भूरिवसोरन्यविधा प्रतिज्ञा, अन्यप्रकारश्च मध्ये व्यवहारः ; तथा सा प्रतिज्ञा, मध्ये नन्दनाय मालतीदानोद्यमश्च एतौ द्वावपि सम्भव-परत्वात् लोकानां विश्वासयोग्यौ ; परिणामे च कन्याया योग्यजनाश्रयात् राजनन्दनयोः सन्तोषाच्च मङ्गलकारितेति नीतेर्महानेवोत्कर्ष इति सरलार्थो भावार्थश्च ।

अत्रानुक्तसिद्धिर्नाम नाट्यलक्षणम् । तथा चोक्तं दर्पणे—

"विशेषार्थोऽतिविस्तारोऽनुक्तसिद्धिरुदीर्य्यते ।"

---

(ल) মালতী। কি আশ্চর্য্য গোপন !।

---

(१) जयन्ति महतां विसंष्ठुलाः प्रतीपिन्यः कल्याणिन्यो (कल्याणाः) नीतय इति पाठान्तरम् ।

काम । वत्स ! माधव ! (१)
यत् प्रागेव मनोरथैर्वृतमभूत् कल्याणमायुष्मतो-
स्तत्पुण्यैर्मदुपक्रमैश्च फलितं क्लेशैश्च (२) मच्छिष्ययोः ।
निष्णातश्च समागमोऽपि विहितस्त्वत्प्रेयसः कान्तया
सम्प्रीतौ नृपनन्दनौ, यदपरं (३) श्रेयस्तदप्युच्यताम् ॥२४॥

---

यदिति । प्राक् पूर्वमेव, मनोरथैरस्माकमभिलाषैः आयुष्मतोः प्रशस्तायुःशालिनोः युवयोर्मालतीमाधवयोः, यत् कल्याणं समागमरूपं मङ्गलं वृतं विषयीकृतमभूत् ; तद्युवयोः समागमलक्षणं कल्याणम्, पुण्यैर्युवयोः प्राक्तनधर्म्मैः मदुपक्रमैर्मम चेष्टाभिश्च, मच्छिष्ययोः सौदामिन्यवलोकितयोः क्लेशैस्तत्कार्य्यसाधनकष्टैश्च फलितम् इदानीं निर्विघ्नेन सम्पन्नं जातम् । तथा त्वत्प्रेयसः तव परमप्रियसुहृदो मकरन्दस्य, कान्तया तद्वल्लभया मदयन्तिकया सह, निष्णातः कौशलोपेतः समागमः सम्मेलनमपि विहितः कृतः । तथा नृपनन्दनौ राजा नन्दनश्चेमौ सम्प्रीतौ सन्तुष्टौ जातौ । अनभिप्रेतव्यापारेषु सत्स्वपि युष्माकं गुणयोगादिति भावः । एभ्यः अपरं यत् श्रेयः तव प्रार्थनीयं मङ्गलमस्ति तदप्युच्यतां कथ्यताम् । पूर्ववदेव तदप्यहं सम्पादयामीति भावः ।

अत्र काव्यसंहारो नाम निर्वहणसन्धेरङ्गम्—"वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते ।" इति लक्षणात् । तथा कार्य्यं नामार्थप्रकृतिः, फलाख्या कार्य्यावस्था च समुन्नेया । तयोर्लक्षणन्तु दशमाङ्कारम्भ एवोक्तम् ।

शार्दूलविक्रीड़ितं वृत्तम् ॥२४॥

(ब) माधव ও মকরন্দ। (আশ্চর্য্যের সহিত) প্রধান লোকদিগের পরস্পরবিরোধী, অথ চ বিশ্বাসজনক, আবার পরিণামে মঙ্গলকর নীতিরই জয়।

কামন্দকী। বৎস! মাধব!

(१) क्वचित् 'माधव !' इति पाठो नास्ति ।

(२) क्लेशे च इति पाठभेदः । (३) किमपरं इत्यपि पाठः ।

माधवः। सहर्षम् (१)। भगवति! अतोऽपि परं प्रियमस्ति?। तथापीदमस्तु भगवतीप्रसादात् (२)। (श)

भरतवाक्यम् (३)। (ष)

सन्तः सन्तु निरन्तरं सुकृतिनो विध्वस्तपापोदयाः,
राजानः परिपालयन्तु वसुधां धर्म्मे स्थिताः सर्वदा।

---

(श) माधव इति। अपिशब्दः प्रश्ने। अथवा काकुवशात् प्रश्नप्रतीतिः। अतः परमपि प्रियमस्ति किं नास्त्येवेत्यर्थः। इदानीं मालतीलाभादिनैव प्रीतिः पूरा काष्ठा जातेति भावः। तथापि भगवत्याः प्रसादात् तवानुग्रहात्, इदं वक्ष्यमाणमस्तु।

(ष) भरतेति। नटानामादौ नान्दीवदन्ते च मङ्गलाचरणस्य करणीयत्वात् प्रस्तावनानन्तरञ्च तेषां पुनःप्रवेशवाक्यशरीरसम्भवात् भरतवाक्यमित्युक्तम्।

---

তোমার ও মালতীর অভিলাষ, পূর্ব্বেই যে মঙ্গলকে বিষয় করিয়াছিল; তাহা তোমাদের জন্য, আমার চেষ্টায় ও আমার শিষ্যদ্বয়ের পরিশ্রমে সিদ্ধ হইয়াছে; সুকৌশলে তোমার প্রিয়সুহৃদ মকরন্দেরও প্রিয়তমার সহিত সম্মেলন ঘটাইয়া দিয়াছি এবং রাজা ও নন্দন সন্তুষ্ট হইয়াছেন; এতদ্ব্যতীত আর যে মঙ্গল তোমার প্রার্থনীয় থাকে, তাহাও বল ॥২৪॥

(শ) মাধব। (আনন্দের সহিত) ভগবতি! এই সমস্তের পরও কি আর প্রীতিকর বিষয় আছে?। তথাপি আপনার অনুগ্রহে ইহা হউক—

(য) (নটদিগের উক্তি)

(१) सहर्षं प्रणमति इति क्वचित् पाठः।

(२) अतः परं मम प्रियमस्ति तथापीदमस्तु इति पुस्तकान्तरे पाठः।

(३) भरतवाक्यमिति पाठः पुस्तकान्तरे नास्ति।

काले सन्ततवर्षिणो जलमुचः सन्तु, स्थिराः पुण्यतो
मोदन्तां घनबद्धबान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः (१) ॥२५॥

इति निष्क्रान्ताः सर्वे ।

## इति मालतीमाधवे सम्मेलनं नाम दशमोऽङ्कः ।

### समाप्तञ्चेदं मालतीमाधवप्रकरणम् ॥०॥

माधवस्य भरतानाञ्च प्रार्थनीयमिक एव श्लोकः प्रतिपादयति सन्त इति । सन्तः साधवो जनाः, विध्वस्तो विनष्टः पापोदयः पापोन्नतिः पापसमूहो वा येषां ते तथाभूताः सन्तः, निरन्तरं सर्वदा सुकृतिनः पुण्यवन्तः सन्तु । विषयविशेषे पापवन्तोऽपि विषयान्तरे पुण्यवन्तो भवितुमर्हन्तीति निष्पापाः सन्त एव पुण्यवन्तो भवन्तु इत्यभिप्रायेणोभयपदमुपात्तम् । तथा राजानः सर्वदा धर्म्मे शिष्टानुग्रहदुष्टनिग्रहादिना धर्म्मपथे स्थिताः सन्तो वसुधां पृथिवीं परिपालयन्तु रक्षन्तु । तथा जलमुचो मेघाः, काले उपयुक्तसमये सन्ततवर्षिणः अविरतवर्षणकारिणः सन्तु । तथा प्रजा जनाः, पुण्यतः स्वस्वधर्म्मात्, स्थिराः स्थायिन्यः दीर्घायुषः सत्यः, घनं निविड़ं यथा तथा बद्धः कृतः विवादक्लेशाभावेनैव प्राप्त इत्यर्थः बान्धवसुहृदां सहोदरादिबन्धुजन सुहृज्जनानां गोष्ठीषु समवायेषु, प्रमोद आलापादिजनित आनन्दो याभिस्तास्तथोक्ताः, रोगशोकाद्यभावेन सर्वदानन्दमनुभूय सत्य इत्यर्थः, मोदन्तां हृष्यन्ताम् । इयमेव प्रार्थनेति भावः ।

अत्र वृत्त्यनुप्रासोऽलङ्कारः । तथा चतुर्थपादे आनन्दार्थस्य द्विरुक्तत्वात् पुनरुक्ततादोषः, स च 'मोदन्ता'मित्यत्र 'वर्त्तन्ता'मिति पाठेन समाधेयः । तथा प्रशस्तिनाम निर्वहण-सन्ध्यङ्गम् । तदुक्तं दर्पणे—

"नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ।"

शार्दूलविक्रीडितं वृत्तमिति ॥२५॥

(१) शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु शान्तिं सर्वत्र सुखी भवतु लोकः ॥२५॥

काम । एवमस्तु । ईदृशः पाठभेदः पुस्तकान्तरे दृश्यते ।

जानकीविक्रमं नाम नाटकं वीररौद्रवत्।
नाटिकामुज्ज्वलरसां श्रीविराजसरोजिनीम्॥
वियोगवैभवाख्यानं खण्डकाव्यमनन्तरम्।
नानाबन्धं महाकाव्यं रुक्मिणीहरणाभिधम्॥
स्मृतिचिन्तामणिं नाम संक्षिप्तस्मृतिसंग्रहम्।
उत्तररामचरित-टीकां सर्वार्थबोधिनीम्॥
मालविकाग्निमित्रस्य टीकां सारार्थदीपनीम्।
कृत्वा, कुर्वन् गद्यकाव्यमपूर्वं सरलाभिधम्॥
कोटालिपाड़ोनम्नियानिवासी नवद्वीपुरीयस्य सभाप्रवासी।
सत्काव्यपोऽध्यापनमुख्यकर्म्मा व्यधादिमां श्रीहरिदासशर्म्मा॥
रसाग्निनागेन्दुमिते शकाब्दे रवौ तुलायां दिवसे तृतीये।
टीकाऽसकौ भावमनोहराख्या समाप्तिमाप्ता गिरिशप्रसादात्॥
गुणान्विता दोषनिरासशालिनी-सालङ्कृती रीतिमती रसोज्ज्वला।
सुलक्षणा भावमनोहरा परा चिराय सल्लोचनचुम्बनं क्रियात्॥
इति गङ्गाधरविद्यालङ्कार-भट्टाचार्य्यात्मज-महामहोपाध्याय-श्रीहरिदाससिद्धान्तवागीश-
भट्टाचार्य्यविरचितायां मालतीमाधवटीकायां भावमनोहरायां
दशमाङ्कविवरणं समाप्तम्॥०॥

সজ্জনগণ সর্ব্বদা নিষ্পাপ হইয়া পুণ্যবান্ হউন, রাজারা সর্ব্বদা স্বধর্ম্মে থাকিয়া পৃথিবী পালন করুন, মেঘসমূহ সর্ব্বদা যথাসময়ে বর্ষা করুক এবং প্রজারা পুণ্যের বলে দীর্ঘায়ু হইয়া বন্ধু ও মিত্রবর্গের সহিত নিবিড় উৎসব করিয়া আমোদ অনুভব করুক ॥২৫॥

( ইহার পর সকলের প্রস্থান। )

সম্মেলননামে দশম অঙ্ক সমাপ্ত ॥০॥